# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]




सप्तदशवर्षे १-२, ३-४ अङ्काः

संवत् २०१६

प्रकाशनतिथिः
शारदी पूर्णिमा, सं० २०२०

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

सम्पादकः

श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायः ।




सप्तदशवर्षे १-२, ३-४ अङ्काः

संवत् २०१६

# विषयानुक्रमाणिका

## सप्तदशवर्षीयप्रथमद्वितीयाङ्कयोः

## सप्तदशवर्षीयतृतीयचतुर्थाङ्कयोः

# सारस्वती सुषमा
## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१७ वर्षः } भाद्रपूर्णिमा, संवत् २०१९ { १-२ अङ्कौ

# व्याकरणदर्शनम्

श्रीकालीप्रसादमिश्रः, काशीहिन्दूविश्वविद्यालयीय-

संस्कृतमहाविद्यालयस्य भू० पू० अध्यक्षः ।

नित्यानन्दवपुर्निरन्तरगलत्पञ्चाशदर्णैः क्रमाद्
व्याप्तं येन चराचरमिदं शब्दार्थरूपं जगत् ।
शब्दब्रह्म यदूचिरे सुकृतिनश्चैतन्यमन्तर्गतं
तद्वोऽव्यादनिशं शशाङ्कसदनं वाचामधीशं महः ॥

परमादरणीयाः परिषत्सभापतयः, मान्या मनीषिवर्याः, प्रिया विद्यार्थिनश्च !

सुविदितमेवास्ति समेषां विद्वज्जनानां यच्चिराद् विमतैः शासकजनैरुपेक्षितोऽयं संस्कृत-समाजोऽतिगहनां गभीरामवस्थां गतोऽवर्तत । यत्र प्रायः साधारणसभ्यगणस्य दृष्टिरेव नापतत् । यदि कश्चित्कुतश्चिन्निमित्ताद् द्रष्टुमीहते स्म तदा निरालोकतया न कमपि कार्यक्षमुपायमपश्यदिति विमनायमानोऽतिष्ठत् । इत्यासीदवस्थाऽस्माकं सुरभारतीमाश्रयतां संस्कृतपण्डितानाम्, किन्तु "कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा" इति नियतिनियमाद्भगवतो विश्वनाथस्यानुकम्पया च सन्निहितेऽतीतेऽब्दे विश्वविद्यालयस्यास्य कर्णधारैरधिकारिजनैः प्रतिष्ठापिताया दर्शनपरिषदो-ऽस्याः प्रतिष्ठावसरे प्रतिष्ठापकमहोदयकर्तृकावदातव्याहारेण प्रथितमवितथं तदीयमुद्देश्यं निशम्य

नितान्तं प्रसीदामः । अनेन हि बहोः कालाद्बाल्यात्प्रभृति केनचिदन्तरेण मातरमिवेमां गीर्वाणवाणीं सेवमानानामस्माकं चिरादभिलषितो मनोज्ञो जनानुरागः सुलभो भविष्यति ।

दर्शनमेवास्ति संस्कृतज्ञानां सन्निधौ स्पृहणीयं वस्तु येन लोका मधुकरा इव मकरन्दं सन्निदधते । यद्यपि भाषेयं संस्कृता स्वरूपतोऽपि निखिलानवद्यभाषा अतिशय्य वन्द्यमाना विराजते, तथापि तत्प्रतिपाद्येष्वखिलेष्वभिलषणीयप्रमेयजातेषु दर्शनमतीवान्तरङ्गं जीवातुभूतं दुर्लभतरं कल्याणकरं रत्नतत्त्वम् । एतत्सम्पर्कविरहादेवाद्य जगति मानवा आत्मानमपि विस्मृत्य कर्तव्याकर्तव्यविवेकविधुरा बाह्येन्द्रियपरवशा अप्रियेष्वनर्थकरेष्वपि भौतिकपदार्थेषु परमां प्रीतिं मृगा इव तृषिता मरुमरीचिकास्वपां धारा इव पश्यन्तो भ्राम्यन्ति ।

कुर्वते कर्म भोगाय कर्म कर्तुञ्च भुञ्जते ।
नद्यां कीटा इवावर्त्तादावर्त्तान्तरमाशु ते ॥
व्रजन्तो जन्मनो जन्म लभन्ते नैव निर्वृतिम् ।

अद्यतनैर्देशनायकैः प्रतिदिनमुपदिश्यते भोगसाधनः समतावादः, किन्तु निरालम्ब एवास्ति स विनात्मतत्त्वोपदेशम् । शरीरेन्द्रियमनोबुद्धयो हि प्राकृतिकविकाराः प्रतिप्राणि भिन्नत्वेन भासमाना इति कुत्रास्ति साम्यम् । दर्शनमेवास्ति दिव्यः प्रदीपालोको येन आब्रह्मस्तम्बपर्यन्तमात्मन एकत्वं विभुत्वं स्वप्रकाशत्वञ्च कर्णेहत्य निभाल्य शरीरादिभेदभिन्नतां निरस्य प्रतिशरीरं प्रकाशमानमेकमात्मतत्त्वं श्रवणमननादिभिर्विज्ञाय एकतां समतापरपर्यायां द्रष्टुं बोद्धुं चेशते लोकाः । तदैव चैकत्वं पश्यतां को मोहः कः शोकः कुतो भीतिरिति परमनिर्वृतिसाधनं दिव्यं समुत्पद्यते ज्ञानम् । एतज्ज्ञानस्य कलयाऽपि समुत्पादे सति लोकेषु प्रवर्तमानं विश्लेषणं विघटनं वञ्चनं दैन्यं दारिद्र्यञ्च विद्राव्य संघटनसंश्लेषणादिभिः प्रजाः प्रसादयितुं प्रभवन्ति प्रभवोऽपि ।

दर्शनं चेदमतीव गहनं गुहाहितं विना गुरूपदेशमविज्ञेयमिति मत्वैव निशितातिसूक्ष्मदृष्टिभिः शासकाग्रणीभिः पुरस्तात् संस्थापितोऽयमभिनवो वाराणसेयसंस्कृतविश्वविद्यालयः । योऽयं मन्दार इव विबुधानाम्, मूर्तो मान इव भारतीयायाः संस्कृतेः, सुदृढः सेतुरिवार्यसभ्यतायाः, श्लाघ्योऽभिलाष इव संस्कृतविपश्चिताम्, करावलम्ब इव नैराश्याब्धिनिमज्जतां संस्कृतच्छात्राणाम् । भगवतो भुज इव सुरगवीसेवकजनानां वाभाति । दृढं च विश्वसिमो वयं यदस्य सर्वोन्नयनसाधनसामग्रीकस्य कुन्देन्दुतुषारधवलाया भगवत्याः शारदाया निवासस्यास्य सेवया सर्वं शुभं सम्पादयितुं क्षमेमहि । सम्भूय चेद्वयमसंशयितेन मनसाऽवगाहेमहि संस्कृतवाङ्मयमिमं क्षीराब्धिमखिलानि रत्नानि

सुपर्वाण इवाचिरेणोद्धृत्य लोककल्याणैः समं स्वस्य पूर्वजानाञ्च गौरवं समादरञ्च ध्रुवं साधयेम। उद्यद्दिनेश इवोग्रन्नेवासौ संस्कृतजनान् प्रेरयति कर्मसु, ब्रूते च—अलं विषद्य, धैर्यं बधान, उत्सहस्व, संगृहाण सर्वदर्शनतत्त्वम्, यतस्व चैतस्य प्रचाराय प्ररोचनाय चेति। एतद्विधिवाक्यैर्नियोजितैरेव पुरुषपुङ्गवैरुन्नेतुकामैरुपर्य्युपरि जिगमिषतां प्रथमसोपानमिव संस्थापितेयं सर्वदर्शनपरिषत्, यस्या एकदेशसेवायाः शुभावसरं वयमप्यलप्स्महि। धन्यानां महामहिम्नां प्रतिभावतां भगवती भारती प्रमुष्टपरिमितप्रमातृभावा भवतीति बीभत्समपि रसं शृङ्गारोपमं ग्राहयन्ती दृश्यते। अत एवानर्हमपि मां दार्शनिकशिरोमणिभिरलङ्कार्येऽस्मिन् समुन्नते मानार्हे पदे कथं समारोपयितुं समादिशेत्। यथा तथा वा भवतु, नियोजितेन नियोगो वोढव्य इति यथाशक्ति सभाकार्यं सम्भालयितुं चेष्टमाना वयं तत्र तावत् पण्डितप्रवरान् प्रणम्य व्याकरणदर्शनं प्रस्तोतुमादेशं प्रार्थयामः।

व्याकरणदर्शनमस्ति मदीयलेखस्य भाषणस्य वा विषयः। अत्र दर्शनपदस्यात्मापरोक्षज्ञानमेवास्ति बोध्यत्वेन विषयः, तत्रैव भारतीयदर्शनानां पर्यवसानदर्शनात्। आत्मसाक्षात्कारायैव दर्शनशास्त्रपरिशीलने प्रवृत्तिं पश्यामो विपश्चिजनानाम्, न त्वद्यतनभौतिकविज्ञानाय परोक्षशाब्दज्ञानाय वा। उक्तं हि—"आन्तरं हि तमश्छेत्तुं शाब्दबोधो नहि क्षमः" इति। यद्यपि दर्शनशब्दस्य मुख्यया वृत्त्या चाक्षुषं ज्ञानमेवास्ति विषयः, दृशिर् प्रेक्षण इति व्याकरणात्, तथापि सामान्यवाचकपदानां विशेष एवं विशेषवाचकानां सामान्ये लक्षणया बाहुल्येन प्रयोगो दृश्यत एव। तद्यथा—दुःखासम्भिन्नसुखत्वधानकर्मगोत्वादिविशिष्टवाचकं स्वर्गधेन्वादिपदं केवलसुखत्वगोत्वाद्यवच्छिन्नतात्पर्येण, एवमेव द्रव्यान्तरे गवान्तरे च सत्यपि विशेषधर्मसुवर्णत्वाद्यवच्छिन्नाभावमादाय द्रव्यं नास्ति गौर्नास्तीति प्रयुञ्जानः। एवञ्च दर्शनपदार्थस्यात्मसाक्षात्कारादिविशेषपरतया तत्साधनवेदान्तादिशास्त्रैरेवास्य योगो युज्यते। तत्रैव ह्यात्मसाक्षात्कारोपायाः श्रवणमननादयः। पञ्चकोशविवेकः, सृष्टिप्रलयौ "कोऽहं कथमिदं जातं को वा कर्त्ताऽस्य विद्यते" इत्यादयो विचाराः प्राधान्येन प्रस्तुताः सन्ति, न तु शब्दानां व्याकृत्यात्मना प्रकृतिप्रत्ययादिविश्लेषणपरेण पदसाधुत्वासाधुत्वप्रकाशकेन व्याकरणपदार्थेनेति सन्देहः सन्धुक्षते मनांसि विपश्चिजनानाम्; तथापि यथा "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः", "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः", "आत्मैवेदं सर्वम्", "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिश्रुतिशतैः प्रत्यगात्मसाक्षात्कारस्यैव मुमुक्षवो मोक्षसाधकत्वं वदन्ति, तत्साधनाय वेदान्तशास्त्रमेव परिशीलयन्ति ब्रुवन्ति चोद्घोषमुपनिषद्गम्यस्यैव ब्रह्मणः साक्षात्कारेणापवर्गो भवतीति, न तु तर्कमात्राधिगतस्य तार्किकदर्शनस्य परिशीलनेन लब्धस्य यस्य कस्यचित्। पाश्चात्त्यदर्शनानि प्राय एवं-

भूतान्येव, तानि हि संशयविपर्ययविप्रलिप्सादिसहजदोषवत्पुरुषविशेषोपज्ञानीत्येव न तथा समादरः, न वा दर्शनानां तेषां गुरुशिष्यपरम्परया परिशीलनम्, न वा सम्प्रदायविशेषावष्टम्भेन सूत्रवार्त्तिक-भाष्यटिप्पणादिप्रद्योतितविविधशङ्कासमाधिभाजां ग्रन्थविशेषाणां प्रकाशनम्। यैः कैश्चिन्मतभेदाः प्रकाशिता अपि स्वबुद्धिवैभवप्रकाशनायैव, न तु सिद्धान्तभूततत्त्वनिर्णयाय। भारतीयदर्शनानि तु प्रायः सर्वाण्यपवर्गं लक्ष्यीकृत्यैव प्रवर्तितानि, बहोः कालाच्च बहुभिर्विविधप्रज्ञावद्भिः प्रतिपङ्क्ति निशितधारया समीक्षितानीति निरवद्यानीमान्येव सेवितव्यानि। अत एव पाणिनीया अपौरुषेयो-पनिषदां वाक्तत्त्वं पुरोधाय, तिरोधाय च तार्किकाप्रतिष्ठितसरणिम्, "वाग्वै विश्वा भुवनानि जज्ञे", "नामैवेदं रूपत्वेन ववृते", "ओमित्येकाक्षरमिदं सर्वम्", "एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारः" इत्येवंविधां श्रुतिमाश्रित्य प्रवृत्तं व्याकरणदर्शनमित्यत एव श्रौतं पाणिनीयं दर्शनं श्रौताश्च पाणिनीयदर्शनमन्तारः। अतिपरोक्षेष्वर्थेषु जगत्कारणादिषु श्रुत्यनुसारेण येऽर्थं निश्चिन्वन्ति ते श्रौताः। श्रुतिप्रतिपादितोऽर्थ आपाततो विरुद्धत्वेन प्रतीतोऽपि सत्य एवेति तेषां निश्चयः। नहि वेदप्रतिपादितेऽर्थेऽनुपपन्नतया प्रतीतेऽपि तेषां बुद्धिः खिद्यते, अपि तु तदुपपादनमार्गमेव चिन्तयति। अत एव पाणिनीयनयमाश्रित्य प्रवर्तमानो भगवान् भर्तृहरिराह—

चैतन्यमिव यश्चायमविच्छेदेन वर्तते।
आगमस्तमुपासीनो हेतुवादैर्न बाध्यते॥
यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते॥
अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा।
ये भावान् वचनं तेषां नानुमानेन बाध्यते॥
धर्मस्य चाव्यवच्छिन्नाः पन्थानो ये व्यवस्थिताः।
न तान् लोकप्रसिद्धत्वात् कश्चित्तर्केण बाधते॥

पाणिनीयाश्च परमाणूनामप्यनित्यत्वं मन्यमानाः पृथिव्यप्तेजोवाय्वाकाशानां मध्ये पूर्वपूर्वस्योत्तरोत्तरं कारणं वदन्ति। आकाशमप्यनित्यमेव। तस्य कारणं शब्दः। शब्द एवाखिलस्य जगतः कारणम्। आह च भर्तृहरिरपि—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ इति।

## व्याकरणदर्शनम्

भर्तृहरिदृष्टः शब्दाद्वैतवादः प्रथमं प्रसिद्धः, ब्रह्माद्वैतवादस्तु तस्य पश्चात् प्रसिद्धिं गत इत्यस्ति बहूनां दार्शनिकानां मतम्। शुक्लयजुर्वेदस्य सप्तदशेऽध्याये—

चत्वारि शृङ्गास्त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश ॥

इति मन्त्रस्य व्याख्यानेन उव्वटमहीधराभ्यां प्रकाशितः शब्दाद्वैतवादः। भगवान् पतञ्जलिरपि तथैवानुमोदितवान्। अत्र महानित्यस्य परब्रह्मरूपो देवोऽन्तर्यामी विवक्षितः, मर्त्या मरणधर्माणो मनुष्याः। यद्यप्यन्ये जीवा मरणधर्माणः, किन्त्वात्मज्ञाने तेषामनधिकारान्मनुष्या एव गृहीताः। साम्यं सायुज्यम्। अन्यत्र—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

इत्यपि श्रुतिः शब्दब्रह्मपरैव। एवमेव हरिरप्याह—

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् ॥

अत्र परा वाङ् न निर्दिष्टा। प्रकृतिप्रत्ययविभागावगतिर्योगिनामप्येतास्वेव, परायान्तु तेषामपि नेति त्रय्या इत्युक्तम्।

स्वरूपज्योतिरेवान्तः परा वागनपायिनी ।
तस्यां दृष्टस्वरूपायामधिकारो निवर्तते ॥ इति ।

एवंविधश्रुतिवाक्यैः शब्दब्रह्मणः प्रपञ्चस्य विवर्त्तोपादानत्वे व्यवस्थापिते "अर्थाः प्रतीयमाना नामधेयैरुपेताः" इत्यादीन्याप्तवाक्यान्यादायापि पण्डिताः प्रपञ्चस्य कारणतायां शब्दपूर्वकत्वं व्यवजह्रुः।

सांख्या यथा कार्यजातस्य सुखादिमत्तया वदन्ति तदीयमूलकारणप्रकृतेरपि तदात्मकत्वम्, एवमेव वैशेषिका अपि कार्येषु घटादिषु पृथिवीमयत्वात् तन्मूलकारणपरमाणुष्वपि पृथिवीत्वं निर्दिशन्ति। अत्र केचित् प्रत्यवतिष्ठन्ते—अर्थज्ञानोपायतया शब्दसामानाधिकरण्यमर्थस्य न तु विवर्तोपादानतयेति, तन्न शुभं भाति, इन्द्रियाणां शब्दस्पर्शादिज्ञानकारणत्वेऽपि चक्षू रूपं श्रोत्रं शब्द इति सामानाधिकरण्यादर्शनात्। न चेन्द्रियापेक्षया अर्थज्ञानोपायभूते शब्देऽस्ति विशेषः,

शब्दो ज्ञातः सन्नर्थं प्रत्याययति, संकेतसम्बन्धेनैकसम्बन्धिज्ञानविधयेन्द्रियाणि त्वज्ञातान्येवार्थं प्रत्याययन्तीति तेषामर्थसामानाधिकरण्याभावे निमित्तमिति वाच्यम् , तथा सति वह्नयाद्यनुमिते- हेतुभूते धूमेऽपि सामानाधिकरण्यं स्यात् । नन्वेवमपि यदि सामानाधिकरण्यं तादात्म्यं प्रत्याययितुं प्रभवति तदेदं रजतमिति पुरोवर्त्तिनो रजतस्य सामानाधिकरण्यदर्शनाच्छुक्तिरजतयोरपि तादात्म्यं स्वीकृतं भवेदिति चेन्न; अविसंवादिसामानाधिकरण्यप्रत्ययस्यैव तथा सामर्थ्यावगतेः । व्याकरणदर्श- नस्यायमपि विशेषो यदेते चाक्षुषादिज्ञानेऽपि शब्दस्यापि विषयतया भानं वदन्ति । अन्यथा घटघटत्वयोरुभयोरपि संयोगसंयुक्तसमवायादिना जायमाने प्रत्यक्षे किमिति घटत्वप्रकारकमेव प्रत्यक्षं जायते न जातुचिद् घटप्रकारकमपि । मम तु यज्ज्ञानं यत्पदविषयकं तत्तज्जन्यबोधविषयता- समानविषयताकमिति नियमेन प्रत्यक्षे घटो विषयो भवति घटपदञ्चेति । घटपदजन्यबोधे च घटो विशेष्यतया घटत्वं प्रकारतया तथैव शक्तिग्रहाद् भासत इति प्रत्यक्षीयविषयताऽपि तादृ- श्येवेति न कश्चिद्दोषः । एवमेव घटो रूपवानिति प्रत्यक्षेऽपि घटो रूपवानिति वाक्यस्यापि विषयतया भानाच्छाब्दबोधविषयतासदृशी प्रत्यक्षीया विषयता भासते ।

ननु प्रत्यक्षे यथा संयोगसंयुक्तसमवायसंयुक्तसमवेतसमवायादिभिर्घटरूपरूपत्वादीनां भानं भवति, तथा तन्निष्ठविषयताया अपि भानं सेत्स्यति, अतो न शब्दस्य भानमादाय तज्जन्य- बोधीयविषयतासमानविषयताकत्वादिनियम इति वाच्यम् ; एकेनैव सन्निकर्षेण कदाचिद्विशेष्यतया कदाचिद्विशेषणतया घटस्य रूपं घटो रूपवानिति विषयताभेददर्शनात् सन्निकर्षनिमित्तको विशेषणविशेष्यभाव इति न वक्तुं शक्य इति सिद्धान्तात् । नापि विशिष्टबुद्धौ विशेषणज्ञानस्य कारणतया प्रत्यक्षात् पूर्वमेव विशेषणज्ञानस्य जाततया यस्य ज्ञानं संस्कारो वा पूर्वं तस्य विशेषणता यस्य पश्चात्तस्य विशेष्यतेति नियमेनापि सामञ्जस्यम् । विशिष्टबुद्धौ विशेषणज्ञानस्येव विशेष्य- ज्ञानस्यापि कारणता, अन्यथा विशेष्यतावच्छेदकरूपेण विशेष्याग्रहदशायां तदनुत्पत्तौ किञ्चिद्रूपव- दित्येव स्यान्न तु घट इति ।

स्वं रूपमिति सूत्रेऽपि भाष्ये स्पष्टमुक्तं शब्दपूर्वको ह्यर्थसम्प्रत्यय इति । तत्राह—"न वा एतद्वक्तव्यम् , किं कारणम् ? शब्दपूर्वको ह्यर्थसंप्रत्ययः" इति । अतश्च शब्दपूर्वक इति योऽपि ह्यसौ नाम्नाहूयते नाम च यदाऽनेन नोपलभ्यते तदा पृच्छति किं भवानाहेति । अत्र हि शब्द- प्रयोगः प्रसिद्धिं द्योतयति । "अथ गौरित्यत्र कः शब्दः" इति भाष्येणापि सर्वत्र ज्ञाने शब्दभान- मिति सूचितम् । तथा हि—गौरित्युच्चारिते प्रतिभासमानेषु वस्तुषु कः शब्दशब्दार्थ इति । यदि शब्दस्तज्जन्यबोधे न भासेत तदा कथंकारं सन्देहः समुदितो भवेदिति । अथेदं विचार्यते शब्देन

चक्षुरादिना सन्निकर्षाभावाद् व्याप्तिज्ञानाभावाच्च प्रत्यक्षानुमित्यादिषु सर्वत्र शब्दभानमित्यत्र कः प्रकार इति चेच्छृणुत—प्रत्यक्षादौ सर्वत्र शब्दो निर्विकल्पके घटत्वघटयोर्यथा विशकलितयोर्भानं भवति पश्चाद्विशिष्टस्य, एवमेव आनुपूर्व्याः शब्दस्य च विशकलितभानानन्तरं पश्चाद् घटशब्दवाच्यो घट इति विशिष्टवैशिष्ट्यावगाहि ज्ञानं जायते। न चानुपूर्व्या शब्देन च सन्निकर्षाभाव इति वाच्यम्, इन्द्रियसम्बद्धविशेषणतायास्तत्सम्बद्धतादात्म्यस्य वा सन्निकर्षस्योभयत्र दर्शनात्, न चैवं तद्वाचकस्य सर्वस्य कुम्भकलशादेरपि भानं भवेदिति वाच्यम्, घटत्वस्य निर्विकल्पकज्ञानकाले द्रव्यत्वादेर्भानवारणाय यथाऽदृष्टविशेषस्य कालविशेषस्य वा कारणतामन्ये वदन्ति, तथैव ममापि कल्पनासम्भवात्, एवं संज्ञासंज्ञिनोर्वृद्धिरादैजित्यादौ सामानाधिकरण्यदर्शनात्, तथा लोकेऽपि कोऽयमिति प्रश्ने गौरयमिति सामानाधिकरण्येन प्रयोगदर्शनाच्च, "ओमित्येकाक्षरं ब्रह्म," "रामेति द्व्यक्षरं नाम मानभङ्गः" इत्यादौ नामरूपयोश्च तद्दर्शनाच्छब्दार्थयोस्तादात्म्येऽवगतेऽर्थनिरूपितव्याप्यत्वावगाहिपरामर्शस्यैव शब्दविषयकविशेषणतया शब्दविषयकानुमितौ कारणत्वसम्भवात्। तादात्म्यञ्च भेदाभेदघटितमिति कस्यचिद् वास्तविकत्वेऽपि कस्यचिदारोपः। न च पदज्ञानस्य सम्बन्धिज्ञानविधयाऽर्थस्मारकत्वेनार्थस्मृतौ पदज्ञानासम्भवो न भवति, हस्तिदर्शनेन हस्तिपकस्मृतौ हस्तिनोऽपि स्मरणमिति वाच्यम्; हस्तिपकस्मृतौ हस्तिस्मरणं न भवतीत्यत्र मानाभावात्। एवमेव भिन्नविषयकानुमितिसामग्रीसमये घटशाब्दबोधो जायतामिति या इच्छा तस्याः शब्दविषयकत्वमपीति न सा शाब्दबोधे शब्दज्ञानप्रतिबन्धिकेति ज्ञानमात्रे शब्दस्य भानमित्यत्र न कश्चिद्विरोध इति वैयाकरणदर्शनस्यैको मुख्यो विषयः।

अथेदानीं स्फोटपदाभिधेयमभिधातुं प्रक्रमामहे। तत्र तावद्वर्णानां नित्यत्वविभुत्वैकत्ववादितया स्फोटान्तिकमुपयतां वाक्यार्थविवेचनपटीयसां मीमांसकानां मतमेव प्रधानमल्लनिबर्हणन्यायेन निरस्य स्फोटं स्थापयितुं प्रयस्यामः। अपि जानन्ति भवन्तः प्रमाणप्रमेयत्वेन व्यवस्थिते निखिलेऽस्मिन् भूतभौतिकमये प्रपञ्चे भूतज्ञानं तदीयगुणज्ञानं चेन्द्रियाधीनम्। इन्द्रियाणि च चक्षुरादीनि। तानि सर्वाण्यतिशय्य वर्तमानमिदं श्रोत्रेन्द्रियम्। यत्र हि चक्षुरादीनि न प्रभवन्ति विषयग्रहणाय तत्रापि निरालोके विप्रकृष्टे सन्तमसेऽपि निशीथे विना बाधं स्वं विषयं ग्राहयति, बहुविधे च व्यवहारे प्रवर्तयितुं क्षमते लोकान्। व्यवहाराः प्रायः प्रवृत्तिनिवृत्तिमयाः शब्दाधीना एव। स च शब्दः किंस्वरूप इति जिज्ञासायां तदनुसन्धानाय प्रवृत्ताः प्रायः सर्वे दार्शनिकाः। तेषु च श्रौतदार्शनिकमूर्धन्या भाट्टमतावलम्बिनः सामान्यभिन्नश्रोत्रेन्द्रियग्राह्यभावस्य शब्दतां वर्णयन्तः कण्ठताल्वाद्यभिघातजन्याभिव्यक्तिमतो वर्णानेव श्रोत्रग्राह्यतया शब्दं वदन्ति, तेषाञ्च

दिनान्तरानुभूतानामिदानीमप्यनुभवविषयतया सोऽयमिति प्रत्यभिज्ञया च तावत्कालं स्थिरत्वे सिद्धे "तावत्कालं स्थिरञ्चैनं कः पश्चान्नाशयिष्यति" इति न्यायेन नित्यत्वं सर्वत्रोपलभ्यमानत्वाच्च विभुत्वं लाघवाच्चैकत्वं ब्रुवाणाः समुदायभावमापन्नानां पदव्यपदेशभाजां तेषामेव वाचकत्वं निरदीधरन्, व्यवहरन्ति च वर्णत्वं शब्दत्वञ्च पञ्चाशति वर्णेष्वेव निहितं "तद्धि शब्दत्ववर्णत्वं पञ्चाशद्व्यक्तिबन्धनम्" इति ।

अत्र पृच्छ्यते—द्वेधा हि हेतवो दृश्यन्ते । प्रत्येकम्—यथा नागदन्तः शिक्यावलम्बनम् । सम्भूय च यथा रथाङ्गम् । तत्र न तावत् प्रत्येकम्, तथा अदर्शनात्, द्वितीयादिवर्णोच्चारणवैयर्थ्याच्च, प्रत्येकस्य बहुत्र सत्त्वेन तत्तद्वाचकव्यवस्थानापत्तेश्च । नापि सम्भूय, यौगपद्यविरहात् । एकदेशकालवृत्तित्वं हि यौगपद्यम्, न चैवमेककालादिवृत्तित्वं सम्भवति । ज्ञाता हि वर्णा वाचका इति हि भवतां मतम् । अन्यथा तेषां नित्यतया सर्वदा सर्वत्रार्थापत्तिः स्यात् । ज्ञानञ्चाभिव्यक्त्यन्तरम्, अभिव्यञ्जकाश्च कण्ठताल्वाद्यभिघातजा वायवस्तद्गुणा ध्वनयो वा । ते च क्रमवन्तः, तत्सम्पादकस्थानकरणादीनां यौगपद्याभावेन साहित्याभावात् । न च आभ्यामन्यः प्रकार उपलब्धिविषयो भवति । तस्मान्न वाचकत्वं वर्णानां सम्भवतीति चेन्न, यथा दर्शपूर्णमासादयः क्रमवन्तोऽपि प्रत्येकमवान्तरापूर्वं स्थायि कल्पयित्वा तद्द्वारा यागजं परमापूर्वमेकं कार्यं जनयन्ति, तथा वर्णा अपि क्रमेणानुभूयमानाः प्रत्येकं संस्कारं स्थायिनं समुत्पाद्य तद्द्वाराऽभिधेयावबोधरूपमेकं कार्यं जनयेयुरिति । यदाहुः—पूर्वपूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायक इति व्यवस्थासम्भवात् । तदपि न शोभनम्, यद्वस्तूपलम्भसम्भावितात्मानः संस्कारास्तत्रैव नियतनिमित्तलब्धप्रतिबोधास्तद्धियमाविर्भावयन्ति, नार्थान्तरस्य । नहि जातु गवाकारज्ञानजनिताः संस्कारा अश्वस्मरणं कल्पयन्ति, किमुताभिधेयावबोधं जनयितुं प्रभवेयुः । भवति चात्रानुमानप्रयोगोऽपि वर्णानुभवजनितः संस्कारो नार्थप्रत्ययनिमित्ततां भजते, अतद्विषयज्ञानजन्यत्वात्, गवाकारज्ञानजनितो यथा नाश्वप्रत्ययस्येति । न चानुमानमिदमर्थप्रतीत्यन्यथानुपपत्तिप्रसूताऽर्थापत्तिर्बाधितुं प्रभवति, अर्थप्रतीतेरुपायस्य वक्ष्यमाणत्वात् । तदुक्तम्—

संस्कारा खलु यद्वस्तुरूपप्रख्याप्रभाविताः ।
विज्ञानहेतवस्तत्र ततोऽर्थे धीर्न कल्प्यते ॥

ननु यथा संस्कारे स्मृतिजनकतामनुभूय तत्र स्मृतिजननक्षमा शक्तिः कल्पिताऽस्ति, तथैव संस्कारसहितान्त्यवर्णेनाभिधेयावबोधदर्शनात् संस्कारेऽपरापि शक्तिः कल्प्यताम्, किमर्थमदृष्टश्रुतपूर्वस्य स्फोटस्य कल्पना क्रियते, "धर्मिकल्पनातो हि वरं धर्मकल्पना" इति न्यायोऽप्यत्रानुकूलः ।

न त्वेतावता घटानुभवजनितात् संस्कारात् पटस्मरणातिप्रसङ्गः सम्भवति, कार्यदर्शनाद्धि शक्तिः कल्पिता भवति। यत्र न दृश्यते तत्र न कल्प्यते। न दृश्यते घटानुभवजनितात् संस्कारात् पटस्मरणमिति दर्शनाऽदर्शनाभ्यां शक्तिकल्पनया व्यवस्थासम्भवादिति। तथा चाहुः—

यद्यपि स्मृतिहेतुत्वं संस्कारेषु व्यवस्थितम्।
अर्थान्तरेऽपि सामर्थ्यं न तत्र प्रतिषिध्यते॥

इति चेन्न, स्मृतिरूपकार्यदर्शनात् संस्कारे सामर्थ्यरूपशक्तिः कल्प्यते। सत्यम्, किन्तु समर्थस्य भावः सामर्थ्यम्, न च भावस्य भावान्तरयोगः सम्भवतीति प्रसिद्धतरमेतत्तस्मादनवस्थाभयाद्धर्मकल्पनाया असम्भवात्। तथा च संस्काराणां स्मृतिमात्रजनकत्वम्, न त्वर्थान्तरबोधप्रभवत्वमिति सिद्धम्।

अत्र केचित् प्रत्येकवर्णानुभवजन्यो भावनासमूहः स्मृतिमेकामुपजनयतीति। तस्यां च स्मृतौ सर्वे वर्णा विषयतां यौगपद्येन यान्तीति तेषामेव वाचकत्वमिति न काप्यनुपपत्तिरिति। ननु तद्विशेष्यकतत्प्रकारकस्मृतिं प्रति तद्विशेष्यकतत्प्रकारकसंस्कारत्वेन जनकत्वात् कथं प्रत्येकपदसंस्कारैर्नानापदविशेष्यकस्मरणं भिन्नविषयकत्वादिति चेन्न, नानासन्निकर्षैरेकप्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोपपत्तेरपि सम्भवात्। यदाहुः—

यद्वा प्रत्यक्षतः पूर्वं क्रमज्ञातेषु यत्परम्।
समस्तवर्णविषयं तदर्थज्ञानकारणम्॥ इति।

नावश्यमनुभवविषयस्यैव यौगपद्यस्यार्थकरत्वम्, किन्तु स्मृतिगोचरस्यापीति। परन्तु पदार्था येन क्रमेणानुभूतास्तेनैव क्रमेण स्मर्यन्त इत्यत्र न मानम्, दृश्यते हि प्रपूर्वेद्युरनुभूतानां पूर्वेद्युरनुभूतानाञ्च न क्रमेणैव स्मरणमिति क्रमेण स्मरणाभावान्नैतन्मतं मनोज्ञमिति।

नैयायिकास्तु—उत्पन्नः को विनष्टः क इति प्रतीतेर्वर्णा अनित्याः, समुदितानां पदभावमापन्नानां वाचकत्वमित्याहुः। यथोक्तम्—वाक्यस्थेषु खलु वर्णेषूच्चरत्सु प्रतिवर्णं तावच्छ्रवणं भवति, श्रुतं वर्णमेकमनेकं वा लोकः प्रतिसंधत्ते, प्रतिसंधाय च पदं व्यवस्यति। उक्तञ्चान्यत्रापि—किम्पुनरिदं पदम्? किञ्च वाक्यम्? वर्णसमूहः पदम्, पदसमूहो वाक्यमिति। एतन्मते गकारादिव्यक्तयो भिन्नाः। तथा हि—देवदत्तयज्ञदत्तविष्णुमित्रा युगपदेव गकारादीन् भिन्नभिन्नेषु प्रदेशेषूच्चारयन्ति, नहि गकारस्यैकत्वे तत्सम्भवति। ननु यथा आदित्यमेकं भिन्नभिन्नपुरुषा भिन्नभिन्नप्रदेशेषु युगपत्पश्यन्ति, तथैकमेव युगपदुच्चारयन्तीति चेन्न, आदित्यो हि स्थायी महच्च

द्रव्यं भवतीति युक्तं तस्य बहुत्र बहुभिर्युगपद्दर्शनम्। गकारस्तु न महद् द्रव्यमिति न शक्यं तथोपगन्तुमिति गकारादिव्यक्तीनां परस्परं भेदोऽभ्युपेय एव। यदि व्यञ्जकभेदकृतो व्यङ्ग्यभेद इति परमतं तर्हि यरलवादिष्वपि भेदो न स्यात्। तस्मान्न ध्वनिनिमित्तो भेदोऽपि तु स्वरूप-निबन्धन इति।

ननु सोऽयं गकार इति प्रत्यभिज्ञायाः का गतिः? जातिनिबन्धनायाः प्रत्यभिज्ञायाः सम्भवात्। न च प्रत्यभिज्ञाया जातिनिबन्धनत्वे नीलपीतादिषु तेष्वेकस्या एव घटत्वादेः सर्वमतत्वेन पूर्वेद्युर्दृष्टो नीलो घटः परेद्युश्च पीतेऽपि सोऽयमिति जातिनिबन्धनप्रत्यभिज्ञाया दुर्वारत्वान्नैतच्च भवति, सादृश्यनिबन्धनायां प्रत्यभिज्ञायां स्वीकृतायां दोषाभावात्। न च नीलपीतयोः सादृश्यं सम्भवति, प्रतियोगितावच्छेदकस्य नीलत्वसमानाधिकरणघटत्वस्य पीतत्वसमानाधिकरणे तस्मिन्न-भावात्, नीलत्वपीतत्वयोः परस्परं भेदात्। तस्मात् प्रत्यभिज्ञानिमित्तको न वक्तुं शक्यो वर्णानाम-भेदः। किञ्चोदात्तत्वादिविरुद्धधर्मणामकारादीनामेकत्वकथनमनुपपन्नमेव।

ननु स भेदो ध्वनिरूपोपाधिनिबन्धनः स्फटिके रक्ततावदिति चेन्न, वैधर्म्यात्। स्फटिकः शुद्धः पृथग् दृष्टोऽस्ति। तत्र यदि रक्तता असहजा दृष्टा भवति, तत्र औपाधिकत्वकल्पनं सम्मतं भवेत्, न तथाऽत्र। अकारादयस्तु नियतमुदात्तत्वादिधर्मवदन्यतमत्वेन दृश्यन्ते, न तु कदापि शुद्धाः। अतोऽत्र औपाधिकत्वकल्पनं निरालम्बनम्। यथा बुद्धिर्विना विषयं न दृश्यतेऽतस्तस्या नानात्वम्, तथा वर्णा अपि विना भिन्नधर्ममुदात्तत्वादिकं नोपलभ्यन्ते, अतस्तेषां नानात्वं दुष्परिहरम्।

नन्वेवमनित्यानां भिन्नानाञ्च वर्णानां समुदायाभावाद्वाचकताश्रयत्वेन को निश्चीयते? तदीयसंस्काराणां कार्याव्यवहितत्वेन कारणतया तद्द्वारा कार्यात् प्रागविद्यमानानामपि कारणतया कारणतावच्छेदकशक्तेर्वाचकताया आश्रयत्वस्य वक्तुं शक्यत्वात्। यथा क्रमोत्पन्ना अपि प्रत्येकग्रासा युगपदवर्तमाना अपि प्रत्येकजन्यस्थायितत्त्वान्तरद्वारा तृप्तिरूपमेकं कार्यं जनयन्ति; तथा वर्णा अपि स्वज्ञानजन्यसंस्कारद्वारा अभिधेयाभिधानरूपमेकं कार्यं जनयिष्यन्त एव, अथवा मास्तु संस्काराणां कार्यजनकत्वम्, तुष्यन्तु भवन्तः—संस्काराः खलु यद्वस्तुरूपप्रख्याप्रभाविताः फलं तत्रैव जनयन्ति, ततोऽन्यत्र धीर्न कल्प्यत इति वादिनः पूज्यपादाः। संस्कारसचिवैरन्त्यवर्णबुद्धिभि-रभिधेयाभिधानरूपमेकं कार्यं सेत्स्यति। एतेन जायमानस्य बोधस्य शब्दकरणकत्वेन प्रमात्वं शाब्दत्वं सिद्ध्यतः। परन्तु संस्काराणां नियतक्रमवत्त्वे प्रमाणाभावान्नैष पक्षोऽप्यतीव शोभनः। अन्त्यवर्णज्ञानजन्यसंस्कारजन्यामेकां समूहालम्बनात्मिकां स्मृतिं कल्पयित्वा तद्विषयतां गतान् वर्णान-

वाचकत्वेन कल्पयाम; किन्तु स्मृतिकरणकशाब्दबोधे प्रमात्वं संशयितं स्यात्, प्रमाणजन्यत्वाभावात्। प्रमाणानि हि प्रत्यक्षम्, व्याप्तिज्ञानम्, सादृश्यज्ञानम्, शब्दज्ञानमिति। स्मृतिजन्ये परम्परया शाब्दत्वेऽपि प्रमात्वाभावः, "करणज्ञानजन्यत्वाभावात्", "स्मरणं क्रमपूर्वकमेव" इति नियमाभावाच्चेति वेदान्तिनस्त्वापि समुदायभावमापन्नानां वर्णानामेव वाचकत्वं वदन्ति। एषामपि प्रकारः स एव। वर्णानुभवजन्यसंस्कारोत्पन्नायां स्मृतौ सर्वे वर्णा रूढा भवन्ति, त एव वाचकाः; अथवा वर्णविषयिका स्मृतिर्वाचिकेति। यदाहुः—

वर्णाः स्वज्ञानसंस्कारैः सम्भूय स्मृतिकारिभिः।
क्रमेणैकस्मृतौ रूढा बोधयन्त्यर्थमञ्जसा॥

स्मृतौ वर्णाः क्रमेणारोहन्ति। यथा क्रमानुरोधिन्य एव पिपीलिकाः पङ्क्तिबुद्धिमारोहन्ति; एवं क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोहन्ति। वर्णानां नित्यत्वं विभुत्वञ्च मीमांसकमतवत्।

एवं सांख्या अपि कार्याणां वर्णानामेव वाचकत्वं वदन्तः—"प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः" इति स्फोटखण्डन एव विविधं प्रयासं चक्रुः। पातञ्जला यौगास्तु पदस्य वाक्यस्य च स्फोटात्मकस्यैव वाचकत्वं वदन्ति।

अत्र वैयाकरणास्तु वर्णानां वाचकत्वस्यासम्भवं निर्धार्य्य स्फोटस्यैव वाचकत्वं दृढं प्रतिजानते। तथा हि—व्यस्तवर्णानां वाचकत्वञ्च निरस्तपूर्वम्, तथापि यदि कश्चिदभिदध्याद् व्यस्ताः सर्वे वाचकाः, किन्तु प्रथमवर्णश्रवणेऽस्पष्टं प्रतीतोऽर्थो द्वितीयश्रवणे स्पष्टं तृतीयश्रवणे स्पष्टतरम्। यथा रत्नपरीक्षका न प्रथममेव निरवद्यं रत्नं परीक्षन्ते, किन्त्वसकृद्दर्शनेन चरमे दर्शने स्फुटं रत्नतत्त्वं निश्चिन्वन्ति, तथा चरमवर्णश्रवणकाले स्पष्टं प्रतिभासाय सर्वान् वर्णानुच्चारयन्तीति। तन्न समीचीनम्; एवं सति कूपयूपसूपादिशब्देषु समानार्थता भवेत्। ककारेणास्पष्टं प्रतीयमानमेवार्थमुकारयकाराकारा भासयन्ति चेत्तेषां सूपशब्देऽपि वर्त्तमानतयाऽन्धुबोधकतां को निवारयितुं प्रभवेत्। तस्मान्न व्यस्तानां वाचकत्वं कथमपि सेद्धुमर्हति, समस्तानान्तु सामस्त्यमेव दुर्घटम्। तथा हि—वर्णानित्यत्ववादिनैयायिकसांख्यादिमते आशु विनाशशीलतया नित्यत्ववादिमीमांसकादिमते च सर्वदार्थप्रतीतिभिया गृहीतानामेवार्थप्रत्यायकत्वस्वीकारस्यावश्यकतया ज्ञानं हि तेषां प्रयत्नस्थानकरणैः क्रमेणैव स्थानकरणादीनां परस्परं भिन्नत्वाद् एकेन प्रयत्नेनैकस्मिन् वर्णे उच्चारिते विनष्टे तस्मिन्नन्येन प्रयत्नेनान्येषामुच्चारणं सम्भवतीति समस्तवर्णस्य तेषां ज्ञानस्य च यौगपद्याभावात् सामस्त्यं दुर्घटमेव। तदुक्तम् 'एकहलादौ' इति सूत्रे भाष्ये—एकैव वर्णवर्त्तिनी

वाक्, यावद्वाग्गकारे न तावदौकारे, यावदौकारे न तावद्विसर्गे, उच्चरितप्रध्वंसित्वञ्च वर्णानाम्। पूर्वपूर्ववर्णज्ञानजनितसंस्कारसचिवोऽन्त्यवर्णग्रहः प्रत्यायक इत्यप्यसकृत् खण्डितमेव, संस्कारो यदनुभवजनितस्तद्विषयकं स्मरणमात्रं जनयितुं प्रभवतीत्यादिना। यद्यपि स्मृतिहेतुत्वं संस्कारेषु व्यवस्थितमर्थान्तरेऽपि सामर्थ्यं न तस्य प्रतिषिध्यत इत्यपि न वाच्यम्, प्रसिद्धिविरोधात्। प्रतिषेधाभावमात्रेणार्थस्यापि प्रत्यायकत्वं मन्यसे चेत्, अग्नौ शैत्यस्य प्रतिषेधाभावदर्शनेन शैत्यस्यापि स्वीकार्यतापत्तेः। एवमेव पूर्ववर्णस्मृतिसहितस्यान्त्यवर्णानुभवस्यापि न प्रत्यायकत्वम्, स्मृत्यनुभवयोर्यौगपद्याभावात्, पूर्ववर्णसंस्कारैः स्मृतिजननसमयेऽन्त्यवर्णग्रहस्योपरमात्। न वा संस्कारप्रत्यक्षाभ्यामेकं सदसद्वर्णविषयकं ज्ञानं जनयितुं शक्यम्। इन्द्रियाणि हि सद्वस्तु ग्रहीतुं शक्नुवन्ति, संस्काराश्चातीतमिति न मिलित्वा इन्द्रियसंस्कारौ एकं ज्ञानं जनयितुं प्रभवतः। नापि प्रतिवादिभिर्बहुभिरसकृदुपस्थापितायां समस्तवर्णानुभवजनितसंस्कारोत्पन्नायामेकस्यां स्मृतौ प्रतिभाताः सर्वे वर्णाः प्रत्यायका इति सिद्धान्तोऽपि मनोहरः, प्रतीतिविरोधात्। गौरिति पदश्रवणसमनन्तरमेव पदार्थावगमो भवति, न तु मध्ये संस्कारोद्भवस्तन्मूला स्मृतिस्ततो गोपदार्थावगतिरिति विलम्बोऽनुभूयते। नापि वर्णेषु काल्पनिकः समूहः कल्पनीयः, परस्पराश्रयप्रसङ्गात्। एकार्थप्रत्यायकत्वसिद्धौ तदुपाधिना वर्णेषु पदत्वप्रतीतिस्तत्सिद्धावेकार्थप्रत्यायकत्वसिद्धिरिति। तस्माद्वर्णानां वाचकत्वासम्भवात् स्फोटः स्वीकार्य एव।

ननु स्फोटव्यञ्जकतापक्षेऽपि किमविभक्ता वर्णा द्योतका विभक्ता वेति प्रागुक्तविकल्पप्रसर एवेति चेन्न, वैषम्यात्। तथा हि—अभिव्यञ्जकोऽपि प्रथमो वर्णः स्फोटमस्फुटं व्यनक्ति, उत्तरोत्तराभिव्यञ्जकक्रमेण स्फुटं स्फुटतरं स्फुटतमम्। यथा स्वाध्यायः सकृत् पठ्यमानो नावधार्यते, अभ्यासेन तु स्फुटावभासः; यथा वा रजतत्वं प्रथमप्रतीतौ स्फुटं न चकास्ति, चरमे चेतसि यथावदभिव्यज्यते।

नादैराहितबीजायामन्त्येन ध्वनिना सह।
आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवधार्यते॥

इति प्रत्यायकत्वानुपपत्तेः स्फोटः स्वीकार्यः। अथ च 'शब्दादर्थं प्रतिपद्यामहे' इति व्यवहारवशाच्च स्फोटः स्वीकार्यः। यदि वर्णानां वाचकत्वं स्यात्तदा वर्णेभ्य इति बहुवचनं प्रयोक्तव्यं भवेत्। अन्यच्च, एकं पदमिति प्रतीतिरपि स्फोटं गमयति। न चैकसुप्तिङन्तत्वावच्छेदेन तत्संभवति, सुप्तिङन्तयोरनुगतस्यैकस्य पदगतविषयतावच्छेदकस्याभावात्। एकत्वविषयकबुद्धेरौपाधिकत्व

उपाधिर्वक्तव्यः स्यात् । न च वर्णानां घकारटकारादीनां भेदेऽप्येकार्थबोधकपदघटकविषयकत्वेनैक-जातीयत्वादेकत्वव्यवहारः ।

यद्वा बुद्धिनिरूपितविषयतागतैकत्वादेकत्वव्यवहार इति वाच्यम्, घटत्वस्य प्रवृत्तिनिमित्त-तामादाय घटोऽयमिति व्यवहारवज्जातिगतैकत्वस्य भाने जातेः प्रवृत्तिनिमित्तत्वेन तज्जातीयोऽ-यमिति व्यवहारस्य दुर्वारत्वात् । तस्य चादर्शनात् स्फोटः सिद्ध्यति । स चायं पदार्थानां भावा-भावाभ्यां द्वेधा विभागेन भावरूपः । स एव सद्रूपो नित्योऽनादिनिधनो ब्रह्मकाण्डे भगवता भर्तृहरिणा विविधरूपेण "वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते" इत्यादिना विबोधितः । एतत्साक्षात्कारो-पायाः शैवादिदर्शनेष्वागमेषु बहुधा वर्णिताः सन्तीति प्रत्यायकैर्विबोधितः प्रत्याय्यमानोऽपि स एवेति शब्दाद्वैतवादः स्फुटतीति प्रत्याय्यमानाः पदार्थाः सत्तैव परमार्थसंविद्रूपा ।

अथ स्फोटेन प्रकाश्यमानस्तद्विवर्तो रूपादिपदव्यपदेश्यो विचार्यते । तत्र परमार्थ-संविल्लक्षणा सत्ता जातिरेव सर्वेषां शब्दानामर्थः । यदि सत्तैव सर्वेषां पदानामर्थस्तर्हि सर्वेषां शब्दानां पर्यायता स्यात् । तथा च पर्यायशब्दानां यौगपद्येन प्रयोगस्य वैयर्थ्यात् क्वचिदपि त्रिचतुरादिपदप्रयोगाभावः । तदुक्तम्—

पर्यायाणां प्रयोगो हि यौगपद्येन नेष्यते ।
पर्यायेणैव ते यस्मात् वदन्त्यर्थं न संहताः ॥

किन्तु सत्ता तु नीललोहितपीताद्युपरञ्जकद्रव्यभेदेन स्फटिकमणेरिव सम्बन्धिभेदात् सत्तायास्तदात्मना भेदेन प्रतिपत्तिसिद्धौ गोसत्तादिरूपगोत्वादिभेदनिबन्धनव्यवहारवैलक्षण्यो-पपत्तेः । तथा चाप्तवाक्यम्—

स्फटिकं विमलं द्रव्यं यथा युक्तं पृथक् पृथक् ।
नीललोहितपीताद्यैस्तद्वर्णमुपलभ्यते ॥

तथा हरिणाऽप्युक्तम्—

सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥
तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते ।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ॥

आश्रयभूतैः सम्बन्धिभिर्भिद्यमाना कल्पितभेदा गवाश्वादिषु सत्तैव महासामान्यमेव जातिः । गोत्वादिकमपरं सामान्यं परमार्थतस्ततो भिन्नं न भवति गोसत्तैव गोत्वम्, अश्वसत्तैवाश्वत्वम् ।

तस्यामेव सत्तायां गवादिभेदभिन्नायां सर्वे गोशब्दादयो वाचकत्वेन व्यवस्थिताः, प्रातिपदिकार्थश्च सत्तेति प्रसिद्धम्। भाववचनो धातुरिति पक्षे भावः सत्तैव, क्रियावचनो धातुरिति पक्षेऽपि—"जाति-मन्ये क्रियामाहुरनेकव्यक्तिवर्तिनीम्" इति क्रियाया जातिरूपत्वाद् धात्वर्थः सत्तैव सकलपाचक-व्यक्तिवर्तिनी, पाचकत्वजातिरेव पाकक्रियेति भावः। तस्य भाव इति सूत्रेण भावे त्वतलोर्विधानात् तयोः सत्तावाचित्वं युक्तम्।

सत्ता चानादिनिधनतया नित्या, सर्वस्य प्रपञ्चस्य तद्विवर्त्ततया देशतः कालतो वस्तुतश्च परिच्छेदराहित्यात्। सा सत्ता महानात्मा व्यापकं वस्तु न देशतः परिच्छिद्यते, सर्वत्र सत्त्वात्। नित्यं वस्तु न कालतः परिच्छिद्यते, सदा विद्यमानत्वात्। सर्वाधिष्ठानभूतं वस्तु न वस्तुतः परिच्छिद्यते, भेदाभावात्। यतश्च महानयमनादिरखिलः प्रपञ्चः सत्तायामवभासते, ततः सा सत्ता त्रिविधपरिच्छेदशून्या ब्रह्मरूपैव। एवं जातिपदार्थवादिनये जातेः सत्तातोऽनतिरेकात् परमार्थसंविद्रूपा सत्तैव सर्वेषां शब्दानामर्थ इति प्रसाध्य व्यक्तिपदार्थवादिनयेऽपि स एवार्थ इति द्रव्यपदार्थवादिव्याडिमतेऽपि संविल्लक्षणं तत्त्वमेव सर्वशब्दार्थ इत्यत आह—

सत्यं वस्तु तदाकारैरसत्यैरवधार्यते।
असत्योपाधिभिः शब्दैः सत्यमेवाभिधीयते॥
अध्रुवेण निमित्तेन देवदत्तगृहं यथा।
गृहीतं गृहशब्देन शुद्धमेवाभिधीयते॥ इति।

भाष्यकारेणापि 'सिद्धे शब्दार्थसम्बन्धे' इत्येतद्वार्त्तिकव्याख्यानावसरे द्रव्यं नित्यमित्यनेनासत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यं सर्वशब्दार्थ इति निरूपितम्। सर्वपदार्थवादिसम्यसाधारणं व्याकरणमिति भगवान् पाणिनिर्जातिपक्षमादाय 'जात्याख्यायाम्' इति, व्यक्तिपक्षमादाय 'सरूपाणाम्' इति मतद्वयमादृतवान्। तथा चाद्वयं सत्यं परं ब्रह्मैव वाच्यवाचकरूपमिति स्थितम्। तदुक्तम्—

यत्र द्रष्टा च दृश्यं च दर्शनं चाविकल्पितम्।
तस्यैवार्थस्य सत्यत्वमाहुस्त्रय्यन्तवेदिनः॥ इति।

अयं द्रष्टा, इदं दृश्यम्, इदं दर्शनम्—इदं त्रिपुटीकल्पनं यत्र नास्ति तस्यैवात्मरूपैकार्थस्य वेदान्तशास्त्रज्ञाः सत्यत्वमाहुरिति ब्रह्मतत्त्वं सर्वेषां शब्दानां वाच्यम्, वाचकश्च स्फोटरूपः शब्दोऽपि न ततः पृथक्। एवं वाच्यवाचकयोरभेदेऽपि तयोः सम्बन्धस्य कल्पनमेव। यथा जीवपरमा-

त्मनोरैक्येऽपि कल्पनावशाद् व्यवहारदशायां नियम्यनियामकभावः सम्बन्धस्तयोर्भासते, स्वप्नावस्थायामिव जाग्रदवस्थायामपि कल्पनामूलक एवायमखिलः प्रपञ्चः। तदुक्तम्—

यथा स्वप्नप्रपञ्चोऽयं मयि मायाविजृम्भितः।
एवं जाग्रत्प्रपञ्चोऽपि मयि मायाविजृम्भितः॥

तदित्थं कूटस्थे परस्मिन् ब्रह्मणि सच्चिदानन्दरूपे प्रत्यगभिन्नेऽवगतेऽनाद्यविद्यानिवृत्तौ तादृग् ब्रह्मात्मनावस्थानलक्षणं निःश्रेयसं सेत्स्यतीति। तदुक्तम्—

तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते॥
इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः॥ इति।

अथेदानीं दार्शनिका यया दृष्ट्या दृश्यं दर्शं दर्शं सिद्धान्तं निर्धारयन्ति प्रमाणपदव्यपदेश्यायास्तस्या विवेचनाय प्रयतामहे। प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धीनां प्रामाण्यं प्रायः प्रचलत्यास्तिकनास्तिकदार्शनिकेषु। तत्र चार्वाकबौद्धजैनादिनास्तिकेष्वपि चार्वाकोऽतीव स्थूलदृश्वा। अनुमानप्रमाणं विना प्राणिनां दैनिकव्यवहार एव न भवितुमर्हति। वर्तमानातीतपथसाम्येनानागते पथि चार्वाको दृश्यत एव, किन्त्वनुमानं प्रमाणं न भवतीति ब्रुवाण उपहसनीय एवेति न स विचारार्हः। प्रत्यक्षानुमानप्रमाणद्वयवादिनो वैशेषिका यद्यपि शब्दप्रमाणं न मन्यन्ते, तथापि शब्दप्रमाणेन नैयायिकैः साधितेऽर्थे सत्यता न केवलशब्दप्रमाणमूलिका, अपि त्वनुमानप्रमाणमूलाऽपीति मत्वा न तत्र विवदन्ते। एवमेवार्थापत्तिप्रमाणमङ्गीकुर्वद्भिर्मीमांसकैर्वेदान्तिभिश्च प्रमेयत्वेन दिवाऽभुञ्जानस्य देवदत्तस्य रात्रिभोजनरूपेऽर्थे सत्यतया निश्चिते नैयायिकास्तां सत्यतामनुमानप्रमाणस्य प्रमेयत्वेनाङ्गीकुर्वते, न तत्र विवदन्ते; एवमेवानुपलब्धिप्रमाणमङ्गीकृतवद्भिर्वेदान्त्यादिभिरनुपलब्धिप्रमाणस्य प्रमेयत्वेन सत्यतया निश्चिते घटाद्यभावरूपेऽर्थे वैशेषिकादिभिः प्रत्यक्षप्रमाणस्य प्रमेयत्वेन सत्यता निश्चीयते। तथा च प्रमाणसंख्याविषय एव विवाद आस्तिकदर्शनेषु दृश्यते, न तु वस्तुसत्यतायाम्। अतः शुष्कमिमं विचारमुपेक्ष्य वैयाकरणा दार्शनिका उदासीना इति प्रतिभाति। तथापि प्रत्यक्षानुमानशब्दार्थापत्तिप्रमाणवादिन एते। उपमानानुपलब्ध्योः प्रामाण्ये प्रमाणं न पश्यामः, प्रत्युत निषेधमेव। तथा हि—"उपमानानि सामान्यवचनैः" इति सूत्रे भाष्ये मानं हि नाम निर्ज्ञातज्ञानार्थमुपादीयते। तत्समीपे यन्नात्यन्ताय मिमीते तदुपमानम्,

मानाद्धीनमित्यर्थः। उपोऽत्र हीने। अत एव कर्मधारयेण बहुवचनम्। अव्ययीभावे तन्न स्यात्। तस्मादुपमानं न प्रमाणमिति निश्चितम्। अनुपलब्धिरपि न प्रमाणम्। तथा हि—'स्त्रियाम्' इति सूत्रे भाष्ये लौकिकलिङ्गाश्रयणे खट्वा-वृक्षयोस्त्रीत्वपुंस्त्वकार्यं न स्यादित्याक्षेपे टापं नत्वं च कार्यं दृष्ट्वानुमानेन ज्ञायते तत्र सल्लिङ्गं वस्त्रान्तरवन्नोपलभ्यत इति समाधाने भाष्यकृता उक्तम्—"प्रत्यक्षेण विरुध्यते" इति। अर्थादनुमानं प्रत्यक्षेण बाध्यते, प्रत्यक्षेण दृश्यते लिङ्गाभाव इत्यभावज्ञाने प्रत्यक्षं कारणं पश्याम इत्यनयोः प्रामाण्याभाव एवैतन्मते। अन्याश्च प्रत्यक्षानुमान-शब्दार्थापत्तयः प्रमाणत्वेन सम्मता एवेति नात्र प्रयत्यते॥

दिश दिशेति दिश्यान्मे श्रेयश्चरणपङ्कजम्।
गुरोराराध्यमानस्य श्रौतस्मार्तक्रियाजुषः॥

*****

# वैष्णवदर्शनपरिचयः

मध्वसिद्धान्ताचार्यपण्डितश्रीनृसिंहाचार्यवरखेडः, वैष्णवमठः, पण्ढरपुरम् ।

स बिन्दुमाधवः पायाद्विभोर्यस्य निरीक्षणात् ।
अपारोऽपि हि संसारसिन्धुर्बिन्दुत्वमश्नुते ॥
श्रीशपादाम्बुजासक्तः करुणापूरशीतलः ।
मध्वाख्यो मरुदंशो मे सन्तापान् हन्तु सन्ततम् ॥
अङ्गानुषङ्गतभुजङ्गमतुङ्गभोगं गङ्गातरङ्गकृतमङ्गलमौलिभागम् ।
संगीतलोल्यति पुङ्गवगीतगाथं तं गौर्यपाङ्गरसमाश्रयविश्वनाथम् ॥
आनन्दकानने विद्याक्षेत्रे वाराणसीपुरे ।
मह्यं विद्यामदुर्ये तान् सत्यध्यानगुरून् भजे ॥

माननीया दर्शनपरिषदध्यक्षाः, कुलपतिमहोदयाः, विद्वत्प्रवराः, अन्ये च समास्ताराः !

महदिदं प्रमोदस्थानं यदद्य वाराणसेयसंस्कृतविश्वविद्यालयदर्शनपरिषदो विशिष्टाधिवेशनप्रसङ्गे वैष्णवदर्शनपरिषदायोजनाय सम्मिलिता वयमिति । यत्र वयमिदानीं सम्मिलिताः स्मः, तत्स्थानं न यादृशतादृशम् ; किन्तु पुराणप्रथितम् असीवरुणयोरन्तराले स्थितमानन्दकाननं नाम विद्याक्षेत्रम् । यत्र च "ईश्वराज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनात्" इति पुराणप्रसिद्धो ज्ञानप्रदाता लोकगुरुस्तारकमन्त्रोपदेशाय ज्ञानदानाय च नित्यं सन्निहितः । तदिदमानन्दरामायणगतेन—

अहं भवन्नाम गृणन् कृतार्थः वसामि काश्यामनिशं भवान्या ।
मुमूर्षमाणस्य विमुक्तयेऽहं दिशामि मन्त्रं तव रामनाम ॥

इति प्रमाणेनावगम्यते । कालश्च "मासानां मार्गशीर्षोऽहम्" इति गीताचार्येण प्रशंसितः । यस्मै कार्याय सम्मिलितास्तत्कार्यं च दर्शनपरिषद्रूपम् । येषामाध्यक्ष्ये कार्यमारब्धं ते च कुलपतिमहोदयाः । परिषदपि महाविद्वज्जनभूयिष्ठतया—

ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च ।
त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये ॥

इति मनुस्मृत्युक्तरीत्याऽन्वर्थाभिधाना। यत्र एकैकमपि संप्रार्थ्यं भाग्यलभ्यं च, तत्सर्वमप्येकदैव सम्मिलितमिति रत्नकाञ्चनयोग इव पराकाष्ठा प्रमोदस्य।

किञ्च, योऽहमद्य वैष्णवदर्शनपरिषदध्यक्षपदे भवद्भिः सर्वैः स्नेहानुबन्धेन नियोजितः, सोऽपि बहुकालमस्मिन्नेव महाविद्यालये पूर्वं वैष्णवदर्शनप्राध्यापकपदेऽवस्थित आसमिति प्रायो नाऽपरिचितः श्रीमतामिति। तदिदं नियोजनं विश्वविद्यालयतामापन्नेऽस्मिन् महाविद्यालये द्वादशवर्षपर्यन्तं कृतस्य वैष्णवदर्शनप्रवचनस्य फलमेवेति मन्ये। ये च मया सह प्राध्यापकपदमलमकार्षुस्तदानीम्, ये च तदानीमन्यान्यविद्यालयेषु प्राध्यापका आसन् वर्तन्ते च, ये च भारते तत्र तत्र प्रान्तेषु दर्शनविद्याप्रवचनादिपरायणा उपस्थिता विद्वांसः, तेषां सर्वेषां पुनर्दर्शनसंभाषणावसरो लब्ध इति सत्यं यं प्रमोदमनुभवामि न तं लेखिन्या बहिराविष्कर्तुं शक्नोमि।

मान्याः! वैष्णवदर्शनपरिषच्छब्दार्थं तावदीषद्विचारयामः। तत्र मनुना—"अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्। सहस्रशः समेतानां परिषत्त्वं न विद्यते॥" इति सदाचारहीनानां मन्त्रज्ञानहीनानां परिषत्त्वनिषेधेन सदाचारवतां मन्त्रज्ञानां विदुषां सभैव परिषदिति सूचितम्। तेन च विद्वत्सभा परिषच्छब्दार्थः। सभा च तत्त्वनिर्णयार्थमेकत्र सम्मिलितः जनसमुदायः। दर्शनपरिषदित्यत्र दर्शनशब्दो न चाक्षुषप्रत्यक्षस्य तत्करणस्य वा वाचकः, किन्त्वात्मतत्त्वसाक्षात्कारप्रयोजकशास्त्रपरो ल्युडन्तो विवक्षितः। तत्र ल्युट्प्रकृतिभूतदृशिधातोः "आत्मा वा अरे द्रष्टव्यः" इति श्रुतिघटकदृशिसमानार्थकत्वे साक्षात्कारोऽर्थः। स च मतभेदेन यथायथं मानसप्रत्यक्षरूपः साक्षिप्रत्यक्षरूपो वा ग्राह्यः। ल्युटस्तु न कारणविशेषरूपकरणार्थकत्वम्, किन्तु प्रयोजकार्थकत्वम्। प्रयोजकत्वं च साक्षात्कारजनकनिदिध्यासनजनकशाब्दबोधजनकत्वरूपं मन्तव्यम्। ल्युटः कारणविशेषरूपकरणार्थत्वे श्रौतश्रुञ्धातुसमानार्थकत्वं बोध्यम्। श्रुञ्धातुर्न श्रावणप्रत्यक्षवाची, आत्मनोऽश्रावणत्वात्; किन्तु "श्रोतव्यः श्रुतिवाक्येभ्यः", "श्रवणं शब्दजं ज्ञानम्" इत्यादिवचनानुसारेण शाब्दबोधवाची। शाब्दबोधस्य उक्तरीत्या साक्षात्कारप्रयोजकत्वात् साक्षात्कारार्थकदृशिधातुना विवक्षोपपत्तेः।

वैष्णवदर्शनमित्यत्र कर्मधारयविवक्षायां प्रकृते दर्शनशब्दस्य साक्षात्कारप्रयोजकशाब्दबोधजनकं शास्त्रमित्येवार्थः। वैष्णवशब्दश्च विष्णुसंबन्धिवाची। संबन्धश्च विषयित्वम्। तथा च विष्णुविषयकसाक्षात्कारप्रयोजकशाब्दबोधजनकशास्त्रज्ञविद्वत्सभा इत्येकोऽर्थः। वैष्णवानां दर्शनमिति षष्ठीतत्पुरुषविवक्षायां तु "आत्मा वा अरे द्रष्टव्यः" इति श्रुतिगतात्मशब्दस्य श्रवणादिनिरपेक्षप्रत्यक्षविषयजीवबोधकत्वायोगेन "दत्तं दुर्वाससं सोममात्मेशब्रह्मसंभवान्" इति रूढ्या

विष्णुवाचकत्वम्, तथा श्रीमद्भागवतगतैः "मनुरुवाच—आत्मावास्यमिदं सर्वम्" इत्यारभ्य "शासत्त्रिविष्टपम्" इत्यन्तैः श्लोकैरीशावास्योपनिषदर्थानुवादप्रसङ्गे मनुना ईशपदस्यात्मपदेनानुवादाद् योगेन जगन्नियामकत्वविशिष्टबोधकत्वं च बोध्यम्। तथा च पङ्कजशब्दवद्योगरूढिभ्यां विष्णुविशेष्यकजगन्नियामकत्वप्रकारकज्ञानजनकत्वमात्मशब्दस्य सिद्धम्। तेन च दर्शनशब्देनैव विष्णुतत्त्वविषयकसाक्षात्कारप्रयोजकशाब्दबोधजनकशास्त्रलाभः। वैष्णवशब्देन भक्तत्वरूपसंबन्धविवक्षया विष्णुभक्ता विवक्षिताः। षष्ठ्या च परिगृहीतत्वं प्रवर्तितत्वं वा बोध्यते। तथा च विष्णुभक्तैः प्रवर्तितानामुक्तदर्शनानां परिषदिति वैष्णवदर्शनपरिषच्छब्दस्य निर्गलितोऽर्थः।

## षड्विधं वैष्णवदर्शनम्

वैष्णवदर्शनानि च षट्प्रकारकाणि वर्तन्ते। तत्र प्रथमं ब्राह्मवैष्णवदर्शनम्। द्वितीयं शाम्भववैष्णवदर्शनम्। तृतीयं रामानुजवैष्णवदर्शनम्। चतुर्थं वाल्लभवैष्णवदर्शनम्। पञ्चमं निम्बार्कवैष्णवदर्शनम्। षष्ठं चैतन्यवैष्णवदर्शनम्। इतरेषां वैष्णवदर्शनानामेतेष्वेवान्तर्भावात् प्राधान्येनैतेषां षट्त्वमेव।

## ब्राह्मवैष्णवदर्शनम्

तत्र प्रथमं ब्राह्मवैष्णवदर्शनं तु श्रीमद्भागवते सुदर्शनास्त्राद्भीतेन दुर्वाससा प्रार्थितेन चतुर्मुखब्रह्मणा प्रतिपादितम्। तथा हि—

स्थानं मदीयं सह विश्वमेतत्क्रीडावसाने द्विपरार्धसंज्ञे।
भ्रूभङ्गमात्रेण हि सन्दिधक्षोः कालात्मनो यस्य तिरोभविष्यति॥
अहं भवो दक्षभृगुप्रधानाः प्रजेशभूतेशसुरेशमुख्याः।
सर्वे वयं यन्नियमं प्रपन्ना मूर्ध्न्यर्पितं लोकहितं वहामः॥ इति।

(श्रीमद्भागवते ९।४।५४-५५)

अत्र हि ब्रह्मरुद्रादिसर्वदेवनियामकत्वं विष्णोरुक्तम्। तस्य च निमित्तकारणत्वम्। निमित्तकारणत्वमपि न स्थितिमात्रकारणत्वम्, किन्तु सृष्टिस्थितिसंहारत्रितयकारणत्वम्। सृष्ट्यादिकमपि तस्य लीलामात्रम्। सृष्ट्यादिकारणत्वमपि न कतिपयसृष्ट्यादिकारणत्वम्, किन्तु सर्वसृष्ट्यादिकारणत्वम्। ब्रह्मरुद्रादीनां भगवदाज्ञया भगवदनुग्रहेण च कतिपयसृष्टिसंहारकर्तृत्वम्, जीवानां तारतम्यम्, विष्णोर्ब्रह्मरुद्रादिसकलजीवोत्तमत्वम्, अत एव च सकलजीवभिन्नत्वं जगतः सत्यत्वं चोपवर्णितम्। एतेन प्रामुख्येनेमानि ब्राह्मवैष्णवदर्शनस्य

इति मनुस्मृत्युक्तरीत्याऽन्वर्थाभिधाना। यत्र एकैकमपि संप्रार्थ्यं भाग्यलभ्यं च, तत्सर्वमप्येकदैव सम्मिलितमिति रत्नकाञ्चनयोग इव पराकाष्ठा प्रमोदस्य।

किञ्च, योऽहमद्य वैष्णवदर्शनपरिषदध्यक्षपदे भवद्भिः सर्वैः स्नेहानुबन्धेन नियोजितः, सोऽपि बहुकालमस्मिन्नेव महाविद्यालये पूर्वं वैष्णवदर्शनप्राध्यापकपदेऽवस्थित आसमिति प्रायो नाऽपरिचितः श्रीमतामिति। तदिदं नियोजनं विश्वविद्यालयतामापन्नेऽस्मिन् महाविद्यालये द्वादशवर्षपर्यन्तं कृतस्य वैष्णवदर्शनप्रवचनस्य फलमेवेति मन्ये। ये च मया सह प्राध्यापकपदमलमकार्षुस्तदानीम्, ये च तदानीमन्यान्यविद्यालयेषु प्राध्यापका आसन् वर्तन्ते च, ये च भारते तत्र तत्र प्रान्तेषु दर्शनविद्याप्रवचनादिपरायणा उपस्थिता विद्वांसः, तेषां सर्वेषां पुनर्दर्शनसंभाषणावसरो लब्ध इति सत्यं यं प्रमोदमनुभवामि न तं लेखिन्या बहिराविष्कर्तुं शक्नोमि।

मान्याः! वैष्णवदर्शनपरिषच्छब्दार्थं तावदीषद्विचारयामः। तत्र मनुना—"अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्। सहस्रशः समेतानां परिषत्त्वं न विद्यते॥" इति सदाचारहीनानां मन्त्रज्ञानहीनानां परिषत्त्वनिषेधेन सदाचारवतां मन्त्रज्ञानां विदुषां सभैव परिषदिति सूचितम्। तेन च विद्वत्सभा परिषच्छब्दार्थः। सभा च तत्त्वनिर्णयार्थमेकत्र सम्मिलितः जनसमुदायः। दर्शनपरिषदित्यत्र दर्शनशब्दो न चाक्षुषप्रत्यक्षस्य तत्करणस्य वा वाचकः, किन्त्वात्मतत्त्वसाक्षात्कारप्रयोजकशास्त्रपरो ल्युडन्तो विवक्षितः। तत्र ल्युट्प्रकृतिभूतदृशिधातोः "आत्मा वा अरे द्रष्टव्यः" इति श्रुतिघटकदृशिसमानार्थकत्वे साक्षात्कारोऽर्थः। स च मतभेदेन यथायथं मानसप्रत्यक्षरूपः साक्षिप्रत्यक्षरूपो वा ग्राह्यः। ल्युटस्तु न कारणविशेषरूपकरणार्थकत्वम्, किन्तु प्रयोजकार्थकत्वम्। प्रयोजकत्वं च साक्षात्कारजनकनिदिध्यासनजनकशाब्दबोधजनकत्वरूपं मन्तव्यम्। ल्युटः कारणविशेषरूपकरणार्थत्वे श्रौतश्रूञ्धातुसमानार्थकत्वं बोध्यम्। श्रूञ्धातुर्न श्रावणप्रत्यक्षवाची, आत्मनोऽश्रावणत्वात्; किन्तु "श्रोतव्यः श्रुतिवाक्येभ्यः", "श्रवणं शाब्दजं ज्ञानम्" इत्यादिवचनानुसारेण शाब्दबोधवाची। शाब्दबोधस्य उक्तरीत्या साक्षात्कारप्रयोजकत्वात् साक्षात्कारार्थकदृशिधातुना विवक्षोपपत्तेः।

वैष्णवदर्शनमित्यत्र कर्मधारयविवक्षायां प्रकृते दर्शनशब्दस्य साक्षात्कारप्रयोजकशाब्दबोधजनकं शास्त्रमित्येवार्थः। वैष्णवशब्दश्च विष्णुसंबन्धिवाची। संबन्धश्च विषयित्वम्। तथा च विष्णुविषयकसाक्षात्कारप्रयोजकशाब्दबोधजनकशास्त्रज्ञविद्वत्सभा इत्येकोऽर्थः। वैष्णवानां दर्शनमिति षष्ठीतत्पुरुषविवक्षायां तु "आत्मा वा अरे द्रष्टव्यः" इति श्रुतिगतात्मशब्दस्य श्रवणादिनिरपेक्षप्रत्यक्षविषयजीवबोधकत्वायोगेन "दत्तं दुर्वाससं सोममात्मेशब्रह्मसंभवान्" इति रूढ्या

## वैष्णवदर्शनपरिचयः

विष्णुवाचकत्वम्, तथा श्रीमद्भागवतगतैः "मनुरुवाच—आत्मावास्यमिदं सर्वम्" इत्यारभ्य "शासत्त्रिविष्टपम्" इत्यन्तैः श्लोकैरीशावास्योपनिषदर्थानुवादप्रसङ्गे मनुना ईशपदस्यात्मपदेनानुवादाद् योगेन जगन्नियामकत्वविशिष्टबोधकत्वं च बोध्यम्। तथा च पङ्कजशब्दवद्योगरूढिभ्यां विष्णुविशेष्यकजगन्नियामकत्वप्रकारकज्ञानजनकत्वमात्मशब्दस्य सिद्धम्। तेन च दर्शनशब्देनैव विष्णुतत्त्वविषयकसाक्षात्कारप्रयोजकशाब्दबोधजनकशास्त्रलाभः। वैष्णवशब्देन भक्तत्वरूपसंबन्धविवक्षया विष्णुभक्ता विवक्षिताः। षष्ठ्या च परिगृहीतत्वं प्रवर्तितत्वं वा बोध्यते। तथा च विष्णुभक्तैः प्रवर्तितानामुक्तदर्शनानां परिग्रदिति वैष्णवदर्शनपरिषच्छब्दस्य निर्गलितोऽर्थः।

## षड्विधं वैष्णवदर्शनम्

वैष्णवदर्शनानि च षट्प्रकारकाणि वर्तन्ते। तत्र प्रथमं ब्राह्मवैष्णवदर्शनम्। द्वितीयं शाम्भववैष्णवदर्शनम्। तृतीयं रामानुजवैष्णवदर्शनम्। चतुर्थं वाल्लभवैष्णवदर्शनम्। पञ्चमं निम्बार्कवैष्णवदर्शनम्। षष्ठं चैतन्यवैष्णवदर्शनम्। इतरेषां वैष्णवदर्शनानामेतेष्वेवान्तर्भावात् प्राधान्येनैतेषां षट्त्वमेव।

## ब्राह्मवैष्णवदर्शनम्

तत्र प्रथमं ब्राह्मवैष्णवदर्शनं तु श्रीमद्भागवते सुदर्शनास्त्राद्भीतेन दुर्वाससा प्रार्थितेन चतुर्मुखब्रह्मणा प्रतिपादितम्। तथा हि—

स्थानं मदीयं सह विश्वमेतत्क्रीडावसाने द्विपरार्धसंज्ञे।
भ्रूभङ्गमात्रेण हि सन्दिधक्षोः कालात्मनो यस्य तिरोभविष्यति॥
अहं भवो दक्षभृगुप्रधानाः प्रजेशभूतेशसुरेशमुख्याः।
सर्वे वयं यन्नियमं प्रपन्ना मूर्ध्न्यर्पितं लोकहितं वहामः॥ इति।

(श्रीमद्भागवते ९।४।५४-५५)

अत्र हि ब्रह्मरुद्रादिसर्वदेवनियामकत्वं विष्णोरुक्तम्। तस्य च निमित्तकारणत्वम्। निमित्तकारणत्वमपि न स्थितिमात्रकारणत्वम्, किन्तु सृष्टिस्थितिसंहारत्रितयकारणत्वम्। सृष्ट्यादिकमपि तस्य लीलामात्रम्। सृष्ट्यादिकारणत्वमपि न कतिपयसृष्ट्यादिकारणत्वम्, किन्तु सर्वसृष्ट्यादिकारणत्वम्। ब्रह्मरुद्रादीनां भगवदाज्ञया भगवदनुग्रहेण च कतिपयसृष्टिसंहारकर्तृत्वम्, जीवानां तारतम्यम्, विष्णोर्ब्रह्मरुद्रादिसकलजीवोत्तमत्वम्, अत एव च सकलजीवभिन्नत्वं जगतः सत्यत्वं चोपवर्णितम्। एतेन प्रामुख्येनेमानि ब्राह्मवैष्णवदर्शनस्य

तत्त्वानीति विज्ञायते। इदं ब्राह्मवैष्णवदर्शनमेव श्रीमन्मध्वाचार्यप्रवर्तितं वैष्णवदर्शनम्। अत्र विष्णुसर्वोत्तमत्वविरोधिनोंऽशाः सर्वथा नोपलभ्यन्त इति वैष्णवदर्शनेष्वस्य मुख्यत्वम्। अत एव तदिदं विषयविवेचनानुकूल्येनान्ते प्रपञ्च्यते।

## शाम्भववैष्णवदर्शनम्

द्वितीयं तु "वैष्णवानां यथा शम्भुः पुराणानामिदं तथा" इति भागवतोक्त्यनुसारेण चतुर्मुखेतरविष्णुभक्तेषु श्रेष्ठत्वेन प्रशंसितस्य शम्भोर्वैष्णवदर्शनम्। तच्च विष्णुचक्रोपतापितं शरणागतं दुर्वाससं प्रति कैलासवासिना श्रीशङ्करेण प्रतिपादितम्। तथा हि—

श्रीरुद्र उवाच

वयं न तात प्रभवाम भूम्नि यस्मिन् परेऽन्येऽप्यजजीवकोशाः।
भवन्ति काले न भवन्ति हीदृशाः सहस्रशो यत्र वयं भ्रमामः॥
विदाम न वयं सर्वे यन्मायां माययावृताः।
तस्य विश्वेश्वरस्येदं शास्त्रं दुर्विषहं हि नः॥
तमेव शरणं याहि हरिस्ते शं विधास्यति।

अत्र हि हरेर्विश्वेश्वरत्वमुपवर्णितम्। तथोपरितनश्लोकेषु विष्णोर्भूमशब्देन निर्देशाद्विष्णोः पूर्णसुखत्वम्, प्राणाद्यपेक्षया उत्तमत्वम्, जीवानां तारतम्यम्, स्वस्य विष्णुविषये सामर्थ्याभावः, ब्रह्मणो जीवत्वम्, अकारवाच्याद्विष्णोः सकाशादुत्पन्नत्वम्, ब्रह्माण्डस्य ब्रह्मविग्रहरूपत्वम्, जीवानां शरीरसंबन्ध एवोत्पत्तिः, शरीरनाश एव नाशः, सृष्टिकाले ब्रह्माण्डस्योत्पत्तिः संहारकाले च तस्य नाशः, ब्रह्मपदयोग्यानां रुद्रपदयोग्यानां जीवानां चानेकत्वम्, रुद्रादिजीवानां पराधानमनेकशरीरग्रहणरूपं भ्रमणं चाभिहितम्। "मायया भ्रमामः" इत्यादिशब्दप्रयोगेण तच्छब्दस्य भ्रान्तिरूपान्यथाज्ञानार्थकत्वं गृहीत्वा विरुद्धार्थप्रतिपत्त्या "विमुह्येयुरिमाः प्रजाः" इति मोहोद्देश्यकत्वेनास्य ब्राह्मवैष्णवदर्शनाद्विशेषः। तदिदं शाम्भवं वैष्णवदर्शनमेव श्रीशङ्कराचार्यप्रवर्तितं वैष्णवदर्शनमिति।

## श्रीशङ्कराचार्यप्रवर्तितवैष्णवदर्शनसंग्रहः

नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम्।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी॥

इति गीताभाष्यमङ्गलपद्ये रमाब्रह्मादिसकलचेतनोत्तमत्वं तदभिमन्यमानसकलाचेतनोत्तमत्वं

च नारायणस्य प्रतिपादितम्। तेन "इन्द्रियेभ्यः परा ह्यर्थाः" इत्यारभ्य 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' इति काठकोपनिषद्युत्तमत्वतारतम्यसीमात्वेनोक्तः पुरुषो नारायण एवेति समर्थितं भवति। सीमात्वं चास्याऽपकर्षासमानाधिकरणोत्तमत्वरूपं सर्वोत्तमत्वमेव। एतेनाव्यक्तशब्दबोध्याया महालक्ष्म्या महच्छब्दवाच्यचतुर्मुखब्रह्मापेक्षयोत्तमत्वम्, तथा चतुर्मुखब्रह्मणश्च बुध्यभिमानिसरस्वत्यपेक्षयोत्तमत्वम्, सरस्वत्याश्च मनोभिमानिरुद्रापेक्षयोत्तमत्वं निरूपितं भवति। तदिदं नारायणस्य सर्वोत्तमत्वं नारायणशब्देनैव प्रकटीकृतं भवतीत्यानन्दगिरिटीकाकारो मनुते। तथा हि—

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः॥" इति स्मृतिसिद्धः स्थूलदृशां नारायणशब्दार्थः। सूक्ष्मदर्शिनः पुनराचक्षते—नरशब्देन चराचरात्मकं शरीरजातमुच्यते। तत्र नित्यसन्निहिताश्चिदाभासा जीवा नारा इत्युच्यन्ते। तेषामयनमाश्रयो नियामकोऽन्तर्यामी नारायण इति। यमधिकृत्यान्तर्यामिब्राह्मणं श्रीनारायणाख्यं मन्त्राम्नायं चाधीयते। तदनेन शास्त्रप्रतिपाद्यं विशिष्टं तत्त्वमादिष्टं भवति" इत्यानन्दगिरिवाक्यम्। अत्र रूढ्या नारायणशब्दवाच्ये विष्णौ योगेन सकलजडजीवनियामकत्वमभिहितम्। तेन च तस्य सर्वोत्तमत्वं सिद्ध्यति।

किञ्च, "आध्यानाय प्रयोजनाभावात्" (ब्र० सू० ३।३।१४) "आत्मशब्दाच्च" (ब्र० सू० ३।३।१५) इति ब्रह्मसूत्रभाष्ये "इन्द्रियेभ्यः परा ह्यर्थाः···'पुरुषान्न परं किञ्चित्·····" इत्यत्र सर्वोत्तमत्वेन प्रतिपादितः क इत्याकाङ्क्षायां "तद्विष्णोः परमं पदम्", "पुरुषान्न परं किञ्चित्" इत्युपक्रमोपसंहारयोरैकरूप्यादेकपुरुषपरत्वेनैकवाक्यत्वनिश्चये वाक्यभेदकल्पना न युक्तेत्यभिप्रायेण श्रीशङ्कराचार्यैः—"अपि च सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमित्युक्ते किं तदध्वनः पारं विष्णोः परमं पदमित्यस्यामाकाङ्क्षायामयमायास इत्यवसीयते" इति प्रतिपादनादुपक्रमवाक्योक्तो विष्णुरेवोपसंहारवाक्यस्थपुरुषशब्दवाच्य इति सोपपत्तिकमुपदर्शितम्।

अपि च, कार्यं ब्रह्म सगुणं सत्त्वरजस्तमोगुणबद्धमत एवापरं ब्रह्म। परं ब्रह्म निर्गुणं सत्त्वरजस्तमोगुणबन्धशून्यमत एव परं ब्रह्मेति सर्वसम्मतम्। तत्र कार्यं ब्रह्म हिरण्यगर्भः, परं ब्रह्म विष्णुरिति च "कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्" इत्येतत्सूत्रभाष्ये समर्थितम्। तथा हि—"कार्यब्रह्मप्रलयप्रत्युपस्थाने सति तत्रैवोत्पन्नसम्यग्दर्शनाः सन्तस्तदध्यक्षेण हिरण्यगर्भेण सहातः परं परिशुद्धं विष्णोः परमं पदं प्रतिपद्यन्ते" इति। स्मृतिरप्येतमर्थमनुजानाति—"ब्रह्मणा

सह ते सर्वे संप्राप्ते प्रतिसञ्चरे। परस्यान्ते परात्मानः प्रविशन्ति परं पदम् ॥" इत्यनेन वाक्येन विष्णोर्ब्रह्माद्युत्तमत्वं साधितं भवति।

किञ्च, आर्तिसमये क्रियमाणप्रार्थनायाः स्तोत्रस्य चाविद्यमानविषयकत्वासंभवेन स्वशरीरदाहकालीनप्रार्थनापद्ये नरसिंहापरावतारभूतस्य श्रीहरेः प्रार्थना कृता श्रीशङ्कराचार्यैः। तत्र हि— "श्रीब्रह्मरुद्रमरुदर्ककिरीटकोटिसंघट्टिताङ्घ्रिकमलामलकान्तिकान्त। लक्ष्मीलसत्कुचसरोरुहराजहंस लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥" इत्यादीनि नरसिंहस्तोत्रभूतानि पद्यानि वर्तन्ते। तैश्च लक्ष्मीब्रह्मादिसर्वदेवोत्तमत्वं विष्णोः सिध्यति। सोऽयं श्लोकः शङ्करविजये नृसिंहस्तोत्रे वर्तते। एवमेव प्रबोधसुधाकरे—"कृपापात्रं यस्य त्रिपुररिपुरम्भोजवसतिः सुता जह्नोः पूता चरणनखनिर्णेजनजलम्। प्रदानं वा यस्य त्रिभुवनपतित्वं विभुरपि निदानं सोऽस्माकं जयति कुलदेवो यदुपतिः ॥" इति श्लोकेन ब्रह्मादीनां भगवत्कृपापात्रत्वादिकमभिधाय यदुपतेः श्रीकृष्णस्य विष्णोः स्वकुलदेवत्वं प्रतिपादितम्। अन्यत्रापि श्रीशङ्करावतारभूतैः श्रीशुकाचार्यैर्भगवच्छब्दार्थनिरूपणप्रसङ्गे—"अथापि यत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः। सेशं पुनात्यन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थः ॥" इत्यभिहितम्। तेन हि युक्त्या मुकुन्दादन्यस्य भगवच्छब्दवाच्यत्वं प्रतिषिध्य विष्णवपरनामधेयस्य भगवतो मुकुन्दस्यैव भगवच्छब्दवाच्यत्वं समर्थितम्। तथैव भगवच्छब्दबोध्यं समग्रैश्वर्यरूपं सर्वेश्वरत्वं ब्रह्मरुद्रयोर्विष्णुसेवकत्वेन निषिध्य ब्रह्मादिसेव्यस्य विष्णोरेव तद्युक्तमित्युक्तम्। अत एतावता प्रबन्धेन विष्णोः सर्वोत्तमत्वं सर्वेश्वरत्वं च वैष्णवदर्शनसर्वस्वभूतमुपवर्णितम्।

## भगवत्पदार्थविचारः

इतः परं मुकुन्दस्य नारायणस्य भगवच्छब्दवाच्यत्वं कथमिति विचारयामः। "आदिकर्ता नारायणाख्यो विष्णुर्देवक्यां वसुदेवादंशेन किल संबभूव'.....'स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा सम्पन्नः'..'उपदिदेश'..''इति''परमार्थतत्त्वं च वासुदेवाख्यं परब्रह्माभिधेयभूतं विशेषतोऽभिव्यञ्जयद्गीताशास्त्रम्'....." इति च गीताभाष्ये श्रीशङ्कराचार्यैर्नारायण-विष्णु-वासुदेव-कृष्णशब्दैर्विष्णुं निर्दिश्य "स च भगवान् ज्ञानैश्वर्यबलवीर्यतेजोभिः सदा सम्पन्नः" इत्यनेन तस्येश्वरत्वमभिहितम्। तदापीश्वरत्वं नेतरेषामिवेशितव्यत्वसमानाधिकरणम्, न वा कतिपयमात्रनिरूपितम्, किन्तु नियम्यत्वासमानाधिकरणं स्वेतरत्वव्यापकनियम्यतारूपितं च। "श्रीभगवानुवाच" (गीता ३।३७) इत्यत्र भगवच्छब्दव्याख्यानावसरे "ऐश्वर्यस्य समग्रस्य

वीर्यस्य यशसः श्रियः। वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गना॥" (विष्णुपुराणे, ६।५।७४) इति विष्णुपुराणगतश्लोकमुद्धृत्य श्रीशङ्कराचार्यैः—"ऐश्वर्यादिषट्कं यस्मिन् वासुदेवे नित्यमप्रतिबद्धत्वेन सामस्त्येन च वर्तते, स वासुदेवो वाच्यो भगवानिति" इति भाष्येण विष्णोर्नियम्यत्वासमानाधिकरणं स्वेतरत्वव्यापकनियम्यतानिरूपितं चेश्वरत्वमिति सुस्पष्टं प्रतिपादितम्। इदमेवैश्वर्यस्य समग्रत्वं नामेत्यभिप्रेत्य सामस्त्येनेत्युक्तम्। तदैश्वर्यस्य केनचित्प्रतिबद्धत्वे येन प्रतिबद्धं तन्निरूपितैश्वर्यासंभवेन सामस्त्यासंभवः स्यादतः केनाऽपि तन्न प्रतिबद्धुं शक्यमिति सूचयितुमप्रतिबद्धत्वेन वर्तत इत्युक्तम्। 'नित्यं वर्तते', 'सदा सम्पन्नः' इति वाक्याभ्यां विशेषणीभूतैश्वर्यादिषट्कस्य विशेष्यभूतवासुदेवस्य च त्रैकालिकनिषेधाप्रतियोगित्वरूपं परमार्थसत्त्वमभिहितम्। तदेव पुनरुपसंहारवाक्ये "परमार्थतत्त्वं च वासुदेवाख्यं परब्रह्माभिधेयभूतम्" इत्यादिना स्फुटीकृतम्। तेन ईश्वरस्य ईश्वरत्वस्य मिथ्यात्ववादः प्रतिक्षिप्तः।

"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इति गीताया भाष्ये—"नित्येश्वरत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम्" इति वाक्येन जडजीवयोरपि त्रैकालिकनिषेधाप्रतियोगित्वमुक्तम्। तथा तत्रैव—"प्राक्प्रकृतिपुरुषयोरुत्पत्तेरीशितव्याभावादीश्वरस्यानीश्वरत्वप्रसङ्गात्। नित्यत्वे पुनरीश्वरस्य प्रकृत्योः सर्वमेतदुपपन्नम्" इत्यादिना जडजीवयोर्नित्यत्वमन्यथाऽनुपपत्त्या च समर्थितम्। तेन जडजीवेश्वराणां त्रयाणामप्यबाध्यत्वरूपं पारमार्थिकसत्यत्वं विष्णोरेवेश्वरत्वं च श्रीशङ्कराचार्याभिप्रेतमिति स्थितम्। यच्च क्वचित् षड्गुणैश्वर्यसम्पन्नस्य भगवतः श्रुतिपुराणादिषु निर्गुणत्ववचनं तत् सत्त्वरजस्तमोरूपगुणत्रयराहित्यबोधकम्, न तु निर्धर्मकत्वार्थकं निर्विशेषत्वार्थकं वा। अत एव "निर्गुणं गुणभोक्तृ च" इत्यस्य व्याख्यानावसरे निर्गुणशब्दस्य "सत्त्वरजस्तमांसि गुणाः, तैर्वर्जितमित्यर्थः" इति प्रतिपादितं तैः।

किञ्च, निराकारत्ववचनमपि प्राकृतगुणराहित्येन प्राकृताकारराहित्यपरम्, न तु सर्वथा आकारवर्जितत्वार्थकम्। तदिदम्—"पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः। नानाविधानि दिव्यानि नानावर्णाकृतीनि च॥" इत्यस्य भाष्ये दिव्यपदेनाप्राकृतरूपाणामप्राकृताकाराणां च सत्त्वकथनाद्युक्तमेव।

तदिदं शाम्भववैष्णवदर्शनं श्रीशङ्कराचार्योक्तं तच्छिष्यास्तदाज्ञया प्रचारयामासुरित्यानन्दगिरिकृतशङ्करविजयतोऽवगम्यते। तत्र ह्येकदा श्रीशङ्कराचार्यैः स्वान्तरङ्गशिष्यं हस्तामलकाचार्यमाहूय मदुपदिष्टसिद्धान्तेषु कतमस्तुभ्यं रोचत इति पृष्टम्। तदा हस्तामलकाचार्यैर्वैष्णवसिद्धान्त

एव सहस्रप्रमाणसिद्धो रोचते मह्यमिति प्रतिपादितम्। तदा सम्यग्गृहीतवानसीति तान् प्रशस्य वैष्णवसिद्धान्तप्रचाराय आज्ञापयामासुः श्रीशङ्कराचार्याः। तदग्रे च तत्परम्परायां समुद्भूता अधुनातना महाशैवमर्दनशाङ्करभाष्यभावगाम्भीर्यनिर्णयाद्यनेकग्रन्थकर्तारो रामसुब्रशास्त्रिण-स्तमेतं वैष्णवसिद्धान्तं प्रचारयामासुः।

शास्त्राणां भेद एव श्रुतिशिखरगिरामागमानां च निष्ठा
साकं सर्वैः प्रमाणैः स्मृतिनिकरमहाभारतादिप्रबन्धैः।
तत्रैव व्याससूत्राण्यकुटिलविधया भान्ति तात्पर्यवन्ति
प्रत्नैराचार्यरत्नैरपि परिजगृहे शङ्करार्यैः स एव॥

इति श्लोकेन रामसुब्रशास्त्रिभिर्विष्णुसर्वोत्तमत्वोपयोगितया भेदस्य श्रुत्यादितात्पर्यविषयत्वं तस्य च शङ्कराचार्याभिप्रेतत्वं च सुस्पष्टमुपवर्णितम्। प्रपञ्चितं चैतत् शाङ्करभाष्यभावगाम्भीर्य-निर्णयमहाशैवमर्दनादिग्रन्थेषु। यच्च शाङ्करग्रन्थेषु तत्र तत्राद्वैतवर्णनं दृश्यते तत् कांश्चिद् विनेयान् मोहयितुं क्रमेण वैष्णवदर्शनेऽवतारयितुं वेति तेषामाशयः। शाङ्करवैष्णवदर्शनग्रन्थेषु—"मन्मया मामुपाश्रिताः, क्षेत्रज्ञं चापि मां विद्धि" इत्यादौ जीवेश्वरयोरभेदकथनात्तस्य च विष्णुसर्वोत्तमत्वविरोधितया ब्राह्मवैष्णवदर्शनादपकृष्टत्वमस्य शाम्भव( शाङ्कर )वैष्णवदर्शनस्येति युक्तमुत्पश्यामः।

## रामानुजवैष्णवदर्शनम्

स्वधर्मज्ञानवैराग्यसाध्यभक्त्यैकगोचरः।
नारायणः परं ब्रह्म गीताशास्त्रे समीरितः॥

इति श्रीरामानुजाचार्यगुरुभिः श्रीयामुनाचार्यैर्नारायणस्य परब्रह्मत्वं गीतादिसकल-शास्त्रप्रतिपाद्यमित्युक्तम्। एतेषां मतेऽपि भगवान् विष्णुः सर्वोत्तमः। स च श्रियः पतिः स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यसंख्येयकल्याणगुणगणमहोदधिर्दिव्यरूपो वाङ्मनसापरिच्छेद्यस्वरूपस्वभावो वर्तते। विष्णुसर्वोत्तमत्ववज्जीवानामपि परस्परं भेदः पार-मार्थिको जीवजडात्मकप्रपञ्चश्च परमार्थसत्यभूत इति तेषां मतम्। किञ्च, ईश्वरश्चिदचिच्चेति पदार्थानां त्रित्वम्। तस्यात्र संक्षेपेण संग्रहः क्रियते। तथा हि—

ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः।
ईश्वरश्चिदिति प्रोक्ता जीवा अचिदिदं जगत्॥

# वैष्णवदर्शनपरिचयः

ईश्वर-चित्-अचिदिति पदार्थत्रये हरिर्नारायण ईश्वरः, चित् जीवाः, अचिच्च जगदित्याचक्षत इति योजना। नन्वत्र पदार्थानामनन्तत्वेन त्रित्वकथनायोगः। शते पञ्चाशन्न्यायेन त्रित्वोपपत्त्यङ्गीकारे चैतन्न्यायेन त्रित्वेतरसंख्यानामप्युपपत्तेर्विशिष्य त्रित्वोक्त्ययोगः। अस्य वाक्यस्य विभागवाक्यत्वं मत्वा त्रितयमित्यस्य त्रिविधमित्यर्थकथनमपि न युक्तम्, त्रिविधशब्दस्य त्रित्वसंख्याविशिष्टविभाजकधर्मवदर्थकतया ईश्वरत्वचित्त्वाचित्त्वधर्माणां त्रित्वेऽपि तेषां विभाजकत्वासंभवात्, सामान्यधर्मव्याप्यानां परस्परासमानाधिकरणधर्माणामेव विभाजकधर्मत्वात्; त्रित्वस्येश्वरेऽपि सत्त्वेन चित्त्वेश्वरत्वयोः परस्परसमानाधिकरणत्वादिति चेदत्र ब्रूमः—कुरुपाण्डवन्यायेनात्र चिच्छब्द ईश्वरातिरिक्तचित्परः। तथा च ईश्वरत्वम्, ईश्वरभिन्नचित्त्वम्, जीवेश्वरभिन्नत्वं चेति त्रयोऽपि धर्माः परस्परासमानाधिकरणतया विभाजकधर्मा भवन्त्येव। एतदभिप्रायेणोत्तरवाक्ये हरिरीश्वरः, चिदिति प्रोक्ता जीवाः, अचिदिदं जगदिति प्रपञ्चितम्। तेन जडेश्वरयोर्जीवेश्वरयोर्जडजीवयोश्च भेदसिद्धिः। जीवा इति बहुवचनेन जीवानां मिथो भेदः, जगच्छब्दस्य सकलजडसमुदायपरतया जडानां मिथो भेदश्च सिद्ध्यतीति द्रष्टव्यम्। तथा हरेरेवेश्वरत्वोक्त्या ब्रह्मरुद्रादीनां जीवत्वमेवेति सूचितम्। एतानि हि तत्त्वानि प्रामुख्येन रामानुजदर्शनस्य भवन्ति।

किञ्च, तेषां मते चेतनाचेतनात्मकं सर्वं जगद् भगवच्छरीरम्, ईश्वरश्च शरीरीति वर्तते। "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः" इति, तथा—"य आत्मनि तिष्ठन् यस्यात्मा शरीरं य आत्मानमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः" इत्यन्तर्यामिब्राह्मणे चितां जीवानामचितां जडानां च शरीरत्वं नारायणस्य च शरीरित्वं वर्णितम्। शरीरित्वं च अन्तःस्थत्वसमानाधिकरणनियामकत्वम्, शरीरत्वं च अन्तःस्थत्वसमानाधिकरणनियामकतानिरूपितनियम्यत्वरूपं सकलवेदान्तिसम्मतम्। एतादृशशरीरशरीरिभावाभिप्रायमेव जीवेश्वरवाचकपदयोर्जडेश्वरवाचकपदयोश्च सामानाधिकरण्यम्, नाभेदाभिप्रायं न वाऽध्यारोपापवादाभिप्रायमिति।

रामानुजानां श्रीवैष्णवा इत्यपरं नाम प्रसिद्धमिति रामानुजदर्शनस्य श्रीवैष्णवदर्शनमित्येकं नाम। तस्य चोपपत्तिं केचनैवं वर्णयन्ति—"ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्" इति लक्ष्मीसूक्ते लक्ष्मीः सर्वभूतानां ब्रह्मादिस्तम्बपर्यन्तानामीश्वरीति लक्ष्म्याः सर्वजडजीवनियामकत्वं समुपवर्णितम्। तथा—"अस्येशाना जगतो विष्णुपत्नी" इति तैत्तिरीयश्रुतौ जगदीशानाया लक्ष्म्या विष्णुपत्नीत्वमभिहितम्। तथा—"यं कामये तं तमुग्रं कृणोमि" इत्यंभ्रणीसूक्ते अंभ्रण्याख्यया लक्ष्म्या

स्वस्य ब्रह्मरुद्रादिपदप्रदानसामर्थ्यमभिधाय स्वाश्रयस्य श्रीनिवासस्य समुद्रशायित्वमुपवर्णितम्। तेन ब्रह्मादिनियामक-लक्ष्मीनियामकत्वेन नारायणस्य सर्वोत्तमत्वं श्रीदेवीप्रोक्तमिति तद्दर्शनं श्रीवैष्णवदर्शनमित्याचक्षत इति वदन्ति साम्प्रदायिकाः। तथा च तस्य चायं संग्रहः—

ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः।
ईश्वरश्चिदिति प्रोक्ता जीवा अचिदिदं जगत्॥ इति।

एतन्मते मुक्तजीवानामीश्वरसाम्यकथनेन तदभिप्रायेण च भगवतः "नित्यनिरवद्य-निरतिशयज्ञानक्रियैश्वर्याद्यनन्तगुणापरिमितसूरिभिरनवरताभिष्टुतचरणयुगलः" इति विशेषणदानेन, तेन च निरतिशयैश्वर्यशालिनामन्येषां सत्त्वकथनेन, तस्य चोपदर्शितविष्णुनिष्ठस्वेतरत्वव्यापक-नियम्यतानिरूपितनियामकत्वरूपसमग्रैश्वर्यविरुद्धतया, "एतावतालं ननु सूचितेन गुणैरसाम्यानति-शायिनेऽस्य। हित्वेतरान् प्रार्थयतो विभूतिर्यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सोः॥" इति शुकप्रदर्शित-श्रीवैष्णवदर्शनविरुद्धतया च ब्राह्मवैष्णवदर्शनादपकृष्टत्वमित्यलम्।

## वाल्लभवैष्णवदर्शनम्

विशेषैः प्राकृतैः शून्यमप्राकृतविशेषवत्।
अशेषोपनिषद्वेद्यं परं ब्रह्म वयं स्तुमः॥

श्रीवल्लभाचार्याणां दर्शने श्रीकृष्णाभिधो विष्णुः सर्वोत्तमः। स च परब्रह्मस्वरूपः। यतः स लोकत्रयं गुणात्मकमाविश्यान्तर्यामिरूपो भूत्वा बिभर्तीति स पुरुषोत्तम इत्युदाहृतः। कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वात्तस्य ईश्वरत्वम्। क्षराक्षरभेदेन पुरुषौ द्वौ। तौ च सर्वपदार्थ-भोक्तारावाधिभौतिकाध्यात्मरूपौ। तावेव क्षराक्षरशब्देन बोध्येते। क्षरपुरुषस्तु भूतात्मको ब्रह्मादि-स्थावरान्तशरीररूपः। पुरुषांशरूपत्वात्तस्य पुरुषत्वम्। अक्षरस्तु पुरुषः सकलपदार्थान्तर्यामी नाशरहितो भोक्ता चेतनात्मकः। पुरुषोत्तमस्तु पूर्वोक्तक्षराक्षरेभ्योऽन्यः सर्वोत्तमः, यस्य परमा-त्मेत्यपरं नाम। स हि सर्वकारणकारणभूतो विकाररहितोऽव्ययोऽद्भुतैश्वर्य इति। तदिदं तत्त्वं वाल्लभमतीयया अमृततरङ्गिणीटीकया विज्ञायते। तथा हि—

"लोके प्रपञ्चस्थिते सर्वत्र द्वाविमावेव पुरुषौ सर्वपदार्थभोक्तारावाधिभौतिकाध्यात्म-रूपौ क्षरोऽक्षरश्च। क्षरः पुरुषः सर्वाणि भूतानि ब्रह्मादिस्थावरान्तानि शरीराणि नानाविधानि लीलौपयिकलीलात्मकत्वेनानेकरूपाणि क्षरशब्दवाच्यः पुरुषांशरूपः पुरुष इत्यर्थः। कूटः शिलासमूहः पर्वतस्तद्वत् सर्वपदार्थेषु शरीरादिषु विनश्यत्स्वपि तत्समूहस्थोऽविनाशी भोक्ता मच्चरणात्मको यः

स अक्षरपुरुष उत्तमः पुरुषः सर्वव्यतिरिक्तः परमात्मेत्युदाहृतः। परमश्चासावात्मेति परमः सर्वोत्कृष्ट आत्मा अविकृतः" इति। (गीता-अमृततरङ्गिणी, १५।१७)

एतेषां मते प्रपञ्चो भगवत्स्वरूपः। भगवांश्च मायया सर्वस्वरूपो भवति। माया हि भगवतः सर्वभवनसामर्थ्यम्। सृष्टिप्रवाहश्च तादृशमायाकरणकः। जीवब्रह्मणोरभेद एव। परं स तु सृष्टिपूर्वदशायामेव। सृष्टिदशायां तु भेदः। स च यावत्सृष्टि सत्यः। तत्त्वमसीत्यादौ प्रतीयमानोऽभेद औपचारिक एव। तदिदं तत्त्वं श्रीपुरुषोत्तमगोस्वामिविरचिते भेदाभेदस्वरूपनिर्णये व्यक्तम्। तथा हि तत्र—"यद्वा 'एकमेवाद्वितीयम्' इत्यादिश्रुतौ द्वितीयनिषेधेन प्रतिपाद्यमानमेकत्वमभेद एव पर्यवस्यति। स च सृष्टिपूर्वदशायामेव। सृष्टिदशायां तु "आत्मा वा अरे श्रोतव्यः" इत्यादौ जीवब्रह्मणोः श्रवणादिकर्तृकर्मत्वबोधनाद्भेद एव। अत एव "अधिकं तु भेदनिर्देशात्" इत्यत्र व्यासचरणैर्भेदः प्रतिपादितः। एवं जगतोऽपि भेद एव। स च यावत्सृष्टि सत्यः। यत्तावत् "तत्त्वमसि", "अयमात्मा ब्रह्म" इत्यादौ जगतो ब्रह्मत्वश्रवणम्, तत्तु "तद्गुणसारत्वात्तद्व्यपदेशः" इति सूत्रात्, "तजलान्" इति श्रुत्युक्तयुक्तेश्चौपचारिकम्, तस्मात् सृष्टिदशायामभेद औपचारिक एव" इति।

वाल्लभवैष्णवदर्शनेऽस्मिन् जीवेश्वरैक्यस्य शुद्धाद्वैतस्य प्रतिपादनात् तस्य च विष्णुसर्वोत्तमत्वविरोधितया विष्णोर्नित्यैश्वर्यविरोधितया "एष नित्यो महिमा ब्राह्मणस्य" इत्यादिश्रुतिविरोधितया च ब्राह्म-शाम्भव-रामानुजवैष्णवदर्शनादपकृष्टत्वम्।

## निम्बार्काचार्यप्रवर्तितवैष्णवदर्शनम्

शोभाया गुणदोषलेशरहितः स्वाभाविकैः सद्गुणैः
स्वातन्त्र्याखिलविज्ञताद्यगणितैर्युक्तोऽब्जजादिस्तुतः।
भक्ताभीष्टप्रदो रमैकरमणो वेदैकगम्यो हि य-
स्तं वन्दे मनसा गिरा च शिरसा गोपीप्रियं श्रीहरिम्॥

एतन्मते आत्मानात्मकभेदेन तत्त्वं द्विविधम्। प्रकृतिस्तत्कार्यदेहादिकं चानात्मद्रव्यम्। आत्मा च जीवात्मा परमात्मा चेति द्विविधः। तत्र जीवो ज्ञानस्वरूपः, ज्ञातृत्वादिधर्माधारः, सर्वदा परतन्त्रः, अणुपरिमाणः, प्रतिशरीरं भिन्नः, बन्धमोक्षयोग्यश्च। ईश्वरस्तु सर्वज्ञः सर्वशक्तिः प्रकृतिपुरुषकालकर्मादिनियन्ता अतिशयसाम्यवर्जितः परब्रह्मभूतो भगवान् वासुदेवः। तस्य सर्वसंहारकत्वात् सर्वोत्तमत्वम्, अत एव तस्य जनार्दन इति हरिरिति चान्वर्थाभिधानम्। तत्र "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः। मृत्युर्यस्योपसेचनम्" इति श्रुतिः, "ब्रह्माणमिन्द्रं रुद्रं च यमं

वरुणमेव च। प्रसह्य हरते यस्मात्तस्माद्धरिरिहोच्यते ॥" (उ. २२७।८७) इति पद्मपुराणम्, "अत्ता चराचरग्रहणात्" इति सूत्रं च प्रमाणम्।

एतस्मिन् मते प्रायो माध्ववैष्णवदर्शनविषया माध्वग्रन्थोदाहृतप्रमाणानि च बहुलमुपलभ्यन्ते। तथापि—

श्रुतीनां सूत्राणां स्मृतिनिखिलवेदानुवचसां
परं हार्दं युक्तं ह्यखिलचिदचिद्भिन्नमपि च।
अभिन्नं स्वाभाव्याद् गुणि च परमं ब्रह्मकमिदं
समादिष्टं यैस्तानपि सततमीडे गुरुवरान्॥

इति वदन्तः "एकत्वेन पृथक्त्वेन" इति गीताव्याख्याने सर्वाभेदेन सर्वभेदेन चेत्यर्थः, "सर्वं खल्विदं ब्रह्म", "आत्मैवेदं सर्वम्", "वासुदेवः सर्वम्" इत्यादिश्रुतिस्मृत्यभिहितसर्वचेतनाचेतनजगदात्मकत्वं परमात्मनः प्रतिपादयन्ति। इदं च सर्वेश्वरत्वसर्वोत्तमत्वयोर्विरोधीति भगवदैश्वर्यविरोध्यर्थप्रतिपादकत्वादिदमपि ब्राह्मवैष्णवदर्शनादपकृष्टमिति बोध्यम्।

## माध्ववैष्णवदर्शनम्

इतः परं ब्राह्मवैष्णवदर्शनप्रतिपादनावसरे प्रतिज्ञातं माध्व(ब्राह्म,वैष्णवदर्शनं प्रपञ्चयामः।

श्रीमत्सत्यध्यानतीर्थगुरून् नत्वा तदीरितम्।
यथाशक्ति प्रवक्ष्यामि माध्ववैष्णवदर्शनम्॥

मान्याः! श्रीमद्व्यासतीर्थश्रीमच्चरणैर्माध्वदर्शनस्य संग्रहोऽग्रिमश्लोकेन कृतः—

श्रीमन्मध्वमते हरिः परतरः सत्यं जगत्तत्त्वतो
भिन्ना जीवगणा हरेरनुचरा नीचोच्चभावं गताः।
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनं
ह्यक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः॥ इति।

एतेन—१ हरेः सर्वोत्तमत्वम्, २ जगतः सत्यत्वम्, ३ जीवानां तात्त्विकभेदवत्त्वम्, ४ जीवानां हर्यनुचरत्वम्, ५ जीवानां तारतम्यम्, ६ स्वरूपसुखानुभवस्य मुक्तित्वम्, ७ निर्दुष्टभक्तेर्मुक्तिसाधनत्वम्, ८ प्रमाणानां त्रित्वम्, ९ हरेः सकलवेदमुख्यवेद्यत्वमिति नवसंख्याकानि तत्त्वानि प्रतिपादितानि। हरिः परतर इत्यत्र हरिरित्युद्देश्यवाचकं पदम्। तच्च रूढ्या विष्णु-

वाचकं सद् योगेन "ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च। निगृह्य हरते यस्मात्तस्माद्धरिरिति स्मृतः॥" इति पद्मपुराणगतेन हरिनामनिर्वचनपरपद्यप्रदर्शितेन विष्णोर्ब्रह्मरुद्रादिसर्वसंहारकत्वप्रतिपादकम्। ततश्च हरिः परतर इत्यत्र हरिपदार्थीभूतब्रह्मादिसर्वसंहारकत्वमुद्देश्यतावच्छेदकं परतरत्वं च विधेयम्। उद्देश्यतावच्छेदकस्य विधेयप्रयोजकताया धनवान् सुखीत्यादौ दर्शनेन प्रकृते ब्रह्मादिसर्वसंहारकत्वस्य परतरत्वप्रयोजकत्वमुपदर्शितम्। प्रयोजकत्वं चात्र धूमवान् वह्निमानित्यादाविव ज्ञापकत्वं विवक्षितम्। तदिदं हरेः परतरत्वम्—

लक्ष्मीकान्त समन्ततो विकलयन्नैवेशितुस्ते समं
पश्याम्युत्तमवस्तु दूरतरतोऽपास्तं रसो योऽष्टमः।
यद्रोषोत्करदक्षनेत्रकुटिलप्रान्तोत्थिताग्निस्फुरत्
खद्योतोपमविस्फुलिङ्गभसिता ब्रह्मेशशक्रोत्कराः॥

इति पद्यात्मके नरसिंहनखस्तुतिनामके स्वग्रन्थे श्रीमन्मध्वाचार्यैर्युक्त्या प्रदर्शितम्। सोऽयं श्लोकः पूर्वप्रदर्शितब्राह्मवैष्णवदर्शनश्लोकस्य संक्षिप्तव्याख्यानरूप एवेति प्रतिभाति। तथा हि—

ब्रह्मोवाच

स्थानं मदीयं सह विश्वमेतत् क्रीडावसाने द्विपरार्धसंज्ञे।
भ्रूभङ्गमात्रेण हि सन्दिधक्षोः कालात्मनो यस्य तिरोभविष्यति॥
अहं भवो दक्षभृगुप्रधानाः प्रजेशभूतेशसुरेशमुख्याः।
सर्वे वयं यन्नियमं प्रपन्ना मूर्ध्न्यर्पितं लोकहितं वहामः॥

यद्यप्यत्र हरेः परतरत्वं शब्दतः सुस्पष्टं न प्रतीयते, तथापि वाक्यार्थपर्यालोचनया तत्स्फुटीभवति। तद्यथा—'स्थानम्' इत्याद्यपद्ये ब्रह्मणा सर्वसंहारकत्वरूपो व्याप्यधर्मः कथितः। तत्र तथा व्याप्यधर्मबोधकस्य 'धूमोऽस्ति' इति वाक्यस्य व्याप्यो धूमः शाब्दोऽर्थः, व्यापको वह्निरार्थिकोऽर्थः, तथा 'स्थानम्' इत्यादिब्रह्मवाक्यस्य सर्वसंहारकत्वरूपो व्याप्यधर्मः शाब्दोऽर्थः, व्यापकं सर्वोत्तमत्वं चार्थिकोऽर्थः। तत्र नखस्तुतौ श्रीमन्मध्वाचार्यैः प्रतियोग्यनुपलब्धिसहकृतस्वप्रत्यक्षसिद्धं "वासुदेवात् परो ब्रह्मन्नैवान्योऽर्थोऽस्ति तत्त्वतः" (भाग० २।१४) इति ब्राह्मवैष्णवदर्शनसर्वस्वं समाभ्यधिकराहित्यरूपं सर्वोत्तमत्वं व्यापकत्वेन साध्यतया ब्रह्माभिप्रेतमिति "लक्ष्मीकान्त समन्ततो विकलयन्नैवेशितुस्ते समं पश्याम्युत्तमवस्तु दूरतरतोऽपास्तं रसो योऽष्टमः" इति प्रथमार्धेन प्रदर्शितम्। "यद्रोषोत्करदक्षनेत्रकुटिलप्रान्तोत्थिताग्निस्फुरत्खद्योतोपमविस्फुलिङ्गभसिता

ब्रह्मेशशक्रोत्कराः" इति द्वितीयार्धेन च "स्थानं मदीयम्" इत्यादिना ब्रह्मोक्तं सर्वसंहारकत्वरूपं व्याप्यं प्रदर्शितम् ।

अत्र हि 'यो यत्संहारकः स तदुत्तमः' इति सामान्यव्याप्तिर्विवक्षिता । यद्यपि सा 'सन्दिधक्षोः' इति पदेन न लभ्यते, तेन हि दाहेच्छुत्वरूपं संहारेच्छुत्वमेवोक्तम् , तेन च यो यत्संहारेच्छुः स तदुत्तम इति व्याप्तिरेव लभ्यते । सा च न युज्यते, तथा सति विष्णुसंहारेच्छूनामसुराणां विष्णूत्तमत्वापातेन बहुविप्लवापातः; तथापि 'कालात्मनः' इत्यत्र कालशब्देन संहारकत्वोक्तेरुक्तसामान्यव्याप्तिलाभो भवत्येव ।

नरसिंहनखस्तुतौ 'भसिताः' इति व्याप्यप्रदर्शनार्थम् । अत्र 'संहृताः' इत्यनुक्त्या 'भसिताः' इति निर्देशेन विष्णोः संहारकत्वं शरीरवियोगानुकूलव्यापारवत्त्वम् , न तु नाशकारणत्वम् ; मुद्गरप्रहारादिना घटनाशके घटसंहारकत्वाप्रयोगात्, ब्रह्मादिजीवानां स्वरूपतो नित्यत्वेन नाशासंभवाच्च । शरीरवियोगोऽपि शरीरेऽविनष्टेऽपि परकायप्रवेशादिना भवन्न संहाररूपः, किन्तु शरीरनाशप्रयुक्तः शरीरसंयोगनाश एव । शरीरनाशोऽपि न यत्किञ्चिदवयवनाशरूपः, अवयवोच्छेदेऽपि जीवनदर्शनादित्यभिप्रायेण ब्रह्मोक्तसन्दिधक्षुपदसूचितं दहनकर्मत्वं न पूर्वरूपपरावृत्त्यादिमात्रम्, किन्तु भस्मीभवनरूपमेवेति सूचितम् । किञ्चात्र शस्त्रास्त्रादिजडसाहाय्येन सैन्यादिचेतनसहकारेण वेतरसंहारकत्वं न उत्तमत्वसाधकम्, नतरां सर्वोत्तमत्वसाधकम्, अत इतरानपेक्षसंहारहेतुत्वं हरेरिति ज्ञापयितुं ब्रह्मणा 'भ्रूभङ्गमात्रेण' इत्युक्तम् । तदर्थकथनं "यद्रोषोत्करदक्षनेत्रकुटिलप्रान्तोत्थिताग्निस्फुरत्खद्योतोपमविस्फुलिङ्गभसिताः" इति । अत्र ब्रह्माण्डभस्मीभावप्रयोजकखद्योतोपमविस्फुलिङ्गयुक्ताग्न्युत्थानस्थानभूतनेत्रप्रान्तकुटिलीभावप्रयोजकत्वं भ्रूभङ्गस्य सूचितम् । तेन हरेर्ब्रह्माण्डभस्मीकरणसामर्थ्यकथनं 'बुद्ध्यर्थः पादवत्' इति सूत्रोक्तदिशेतरेषां बुद्ध्यारोहणार्थमेव । वस्तुतो भगवत्सामर्थ्यमितोऽप्यनन्तगुणितमिति ज्ञापितम् ।

ब्रह्मवाक्ये यत् 'कालात्मना' इत्युक्तम्, तस्य "कल संहरणे" इति धातुपाठात् कालशब्दस्य संहारार्थकत्वेन आत्मशब्दस्य च "आत्मेशब्रह्मसंभवान्" इति भागवतोक्तदिशा रूढ्या विष्णुवाचकत्वेन "कालोऽस्मि लोकक्षयकृत्प्रवृद्धः" इति भगवदुक्त्या च सर्वसंहारकस्य विष्णोरित्यर्थः । तेनात्र विष्णुवाचकपदाभावः संहारकत्वस्य स्फुटप्रतीत्यभावश्च न शङ्कनीयः । अस्मिन् आत्मशब्दस्य रूढत्वपक्षे कालश्चासावात्मा चेति कर्मधारयो मन्तव्यः ।

किञ्चात्र आत्मशब्दस्य 'भृत्यनादत्ते इत्यात्मा' इति योगेन "ईशावास्यम्" इति मन्त्रव्याख्यानभूतमनूक्त—'आत्मावास्यम्' इत्येतद्रूपवाक्यसूचितेन स्वामीत्यर्थः। अत्र अवधिविशेषानुक्तेः सर्वेश्वरत्वरूपं स्वामित्वमेव विवक्षितम्। तथा च विष्णुः सर्वोत्तमः सर्वेश्वरत्वादित्यनुमानं सूचितम्। तदेतत् "ईशितुस्ते समं न पश्यामि" इति वाक्येन श्रीमन्मध्वाचार्यैः सूचितम्। अस्मिन् योगपक्षेऽपि कर्मधारय एव।

'कालस्यात्मा कालात्मा' इति तत्पुरुषविवक्षायां तु "कालमाये च महालक्ष्मीस्वरूपाणि" इति मन्त्रशास्त्रे कालशब्दस्य लक्ष्मीवाचकत्वादात्मशब्दस्य च पतिवाचकत्वात् कालात्मन इत्यस्य लक्ष्मीपतेरित्यर्थः। तेन विष्णुः सर्वोत्तमो लक्ष्मीपतित्वादिति युक्त्यन्तरं सूचितम्। श्रीमदाचार्यैस्तु 'लक्ष्मीकान्त' इति पदेन तत्संग्रहः कृतः। एतेन "चन्द्रां हिरण्मयीं लक्ष्मीम्" इत्युपक्रम्य प्रतिपादिते "ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्" इति वाक्ये लक्ष्म्याः सर्वेश्वरत्वकथनात् "अस्येशाना जगतो विष्णुपत्नी" इति तैत्तिरीयश्रुतौ तस्या विष्णुपत्नीत्वकथनाच्च विष्णोर्ब्रह्मादिसर्वभूतेश्वरलक्ष्मीश्वरत्वप्राप्त्या यो यदीश्वरेश्वरः स तदीश्वर इति व्याप्त्या ब्रह्मादीश्वरत्वसिद्धेर्ब्रह्माद्युत्तमत्वसिद्धिः। अत्र सर्वसंहारकत्वम्—

वासुदेवात् परो ब्रह्मन्नैवान्योऽर्थोऽस्ति तत्त्वतः।...
तस्यापि द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः॥
सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः।...
सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः॥
सर्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्।...
स एष भगवान् लिङ्गैस्त्रिभिरेतैरधोक्षजः॥
स्वलक्षितगतिर्ब्रह्मन् सर्वेषां मम चेश्वरः।

(भाग० २।५।१४...)

इति नारदोपदिष्टब्राह्मदर्शनानुसारेण सर्वस्रष्टृत्व-सर्वपालकत्वयोरुपलक्षकम्। तेन च विष्णुः सर्वोत्तमः सर्वस्रष्टृत्वात्, सर्वपालकत्वात्, सर्वसंहारकत्वादिति हेतुत्रयेण सर्वेश्वरत्वसिद्ध्या सर्वोत्तमत्वसिद्धिरिति ज्ञेयम्।

एवं "प्रणवः सर्ववेदेषु" इति सर्ववेदश्रेष्ठत्वेनोक्तोङ्कारस्य "ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्" इति गीतावाक्येन "ओमित्येव सदा विप्राः पठत ध्यात केशवम्" इति हरिवंश-

गतश्रीरुद्रवचनेन च विष्णुवाचकत्वमुक्तम्। नृसिंहतापिनीयोपनिषदि च ओङ्कारघटकोकारव्याख्यानपरेण "अथैष उकार उत्कृष्टतमार्थः परे देवे नृसिंहे वर्तते" इति वचनेन परतरत्वरूपमुत्कृष्टत्वं हरेरुक्तम्। तदिदं सर्ववेदसारसंग्रहरूपेण "अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः" इत्यैतरेयब्राह्मणगतोपक्रमवाक्येन सुविशदमुपपादितम्। इत्थं च हरिपरतरत्वरूपप्रथमप्रमेयसिद्धिर्निराबाधा सकलप्रमाणप्रमिता चेति सिद्धम्।

स्रष्टृत्वपालकत्वसंहारकत्वानां सृष्टिपालनसंहारानुकूलप्रयत्नवत्त्वरूपाणां घटपरिणामिकारणे मृदादौ भ्रमाधिष्ठाने शुक्त्यादौ चाभावेन तत्र स्रष्टृत्वादिव्यवहाराभावेन च सृष्ट्यादिकर्तुर्हरेः सर्वनिमित्तकारणत्वमेव नोपादानकारणत्वमिति ज्ञेयम्। किञ्चात्र 'क्रीडावसाने' इति कथनेन भगवतो जगत्सर्जनादिकं क्रीडारूपमेव, न प्रयोजनार्थमिति ज्ञापितम्। तदेतत् "लोकवत्तु लीलाकैवल्यम्" इति सूत्रभाष्ये भारततात्पर्यनिर्णयादिग्रन्थेषु श्रीमदाचार्यैः प्रपञ्चितम्।

"सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः" इति ब्रह्मणः सृष्टत्वस्रष्टृत्वयोरुभयोः कथनेन सृष्टत्वाऽसमानाधिकरणस्रष्टृत्वरूपसर्वस्रष्टृत्वस्य, पाल्यत्वासमानाधिकरणपालकत्वस्य, संहार्यत्वासमानाधिकरणसंहर्तृत्वस्य च विष्ण्वितरेष्वभावेनेतरेषु यथायथं कतिपयस्रष्टृत्वादिसत्त्वेऽपि सर्वस्रष्टृत्वाभावादितरप्रेरणानधीनत्वाभावाच्च न मुख्यं सर्वस्रष्टृत्वम्। विष्णोस्तु स्रष्टृत्वादीनां सृष्टत्वाद्यसमानाधिकरणत्वादितरप्रेरणानधीनत्वाच्च मुख्यमेव सर्वसृष्ट्यादिहेतुत्वम्, अतस्तस्य सर्वोत्तमत्वमिति स्थितम्।

जगतः सृज्यत्वात् पाल्यत्वात् संहार्यत्वाच्च सृष्ट्युत्तरकाले संहारपूर्वकाले च सत्त्वसिद्ध्या त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वाभावसिद्धिरिति जगत्सत्यत्वमपि ब्राह्मवैष्णवदर्शने प्रतिपादितम्। तदेतज्जगत्सत्यत्वं श्रीमदाचार्यैः "विश्वं सत्यं वशे विष्णोर्नित्यमेव प्रवाहतः", "विश्वं सत्यं मघवाना युवोः", "यच्चिकेत सत्यमित्तन्न मोघम्" इत्याद्यनेकप्रमाणोपन्यासपूर्वकं समर्थितं तत्र तत्र। तथा "नाभाव उपलब्धेः" इति सूत्रभाष्ये विश्वं मिथ्या न भवति प्रमाणदृष्टत्वादित्यादियुक्तिप्रदर्शनद्वारा च समर्थितं जगत्सत्यत्वमिति द्वितीयप्रमेयसिद्धिर्निष्प्रत्यूहा।

एवं "अहं भवो दक्षभृगुप्रधानाः प्रजेशभूतेशसुरेशमुख्याः" इत्यत्र ब्रह्मरुद्रदक्षभृगुप्रभृतीनां प्रजेशत्व-भूतेशत्व-सुरेशत्वादिभिन्नभिन्नधर्मप्रतिपादनेन बहुवचनेन च जीवानां भेदवत्त्वम्। तस्य च "नित्यो नित्यानाम्" इति श्रुतौ नित्यानां बहूनां चेतनानां "य एको नित्यश्चेतनः कामान् विदधाति" इत्युक्त्या "इमं मानवमावर्तं नावर्तन्ते" इति श्रुत्यर्थनिर्णायकेन "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" इति सूत्रेण मुक्तिदशायामपि जीवानां भेदप्रतिपादनात्, तथा "इदं ज्ञानमुपा-

श्रित्य मम साधर्म्यमागताः" इत्यादिगीतावचनाच्च जीवानां तात्त्विकभेदवत्त्वसिद्धिरिति तृतीयप्रमेयसिद्धिर्निष्प्रत्यूहा ।

"सर्वे वयं यन्नियमं प्रपन्ना मूर्ध्न्यर्पितं लोकहितं वहामः" इति वाक्येन सूचितं जीवानां हर्यनुचरत्वरूपं प्रमेयमोङ्कारेण प्रतिपादितमिति—"अकारेणोच्यते विष्णुः श्रीरुकारेण चोच्यते । मकारेण तयोर्दासा ब्रह्माद्याः परिकीर्तिताः ॥" इति पद्मपुराणे वृद्धहारीतस्मृतौ निरूपितम् । तथा श्रीमद्भागवते—"न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः" ( भाग० २।९।१० ) इत्यादौ च मुक्तानामपि हर्यनुचरत्वं प्रतिपादितम् । तदनेन जीवानां हर्यनुचरत्वरूपं चतुर्थं प्रमेयं निष्कण्टकं सिद्ध्यति ।

प्रजेश-भूतेश-सुरेश इति शब्दैस्तत्रापि सुरेशमुख्यैरित्युक्त्या भृगुप्रधाना इत्युक्त्या च जीवानां नीचोच्चभावरूपं तारतम्यं प्रतिपादितम् । तदेतत् "अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः" इति श्रुत्या, "यावदधिकारमवस्थितिराधिकारिकाणाम्" इति सूत्रेण, "यथा यथाऽधिकारो विशिष्यते एवं मुक्तावानन्दो विशिष्यते" इत्युक्तेः, तथा "देवासुरेभ्यो मघवान् प्रधानो दक्षादयो ब्रह्मसुतास्तु तेषाम्" ( भाग० ५।५।२२ ), "जीवाः श्रेष्ठा ह्यजीवानाम्" इत्यादिप्रमाणाच्च जीवानां तारतम्यरूपं पञ्चमप्रमेयं सुस्थम् ।

नैजसुखानुभूतिरूपा मुक्तिरपि प्रमाणप्रमितैव । "सम्पद्याविर्भावः स्वेनशब्दात्" इति सूत्रे तद्विषयवाक्यभूते "स एष संप्रसादोऽस्माच्छरीरात् समुत्थाय स्वेन रूपेणाभिनिष्पद्यते" इति मुक्तिस्वरूपनिरूपणपरे विषयवाक्ये स्वरूपसुखानुभवो मुक्तिरिति प्रदर्शितम् । तस्यैव विवरणं "मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः" इति भागवते कृतमिति षष्ठं प्रमेयमपि सुसाधितम् ।

एवंविधा मुक्तिः केन वा साधनेन लभ्यत इति चेत् ? "भक्तिश्च तत्साधनम्" इति कथितम् । सा च भक्तिर्निरवधिकानन्तानवद्यकल्याणगुणत्वज्ञानपूर्वकः स्वात्मात्मीयसमस्तवस्तुभ्योऽनेकगुणाधिकोऽन्तरायसहस्रेणाप्यप्रतिबद्धो निरन्तरप्रेमप्रवाहः । सा च दोषरहितैव मुक्तिसाधनम् । तत्र "भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषः भक्तिरेव भूयसी" इति माठरश्रुतिः, "अम्बुवदग्रहणात्तु न तथात्वम्" इति सूत्रम्, तथा—"महत्त्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाऽभिधीयते । तयैव व्यज्यते सम्यग् जीवरूपं सुखादिकम् ॥" इति पद्मपुराणं च प्रमाणम् । तेन—"भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥" इत्यादिगीतावचनैश्च निर्दुष्टभक्तेर्मुक्तिसाधनत्वं सिद्ध्यति । अतः सप्तमं प्रमेयमपि निष्कलङ्कम् ।

एतत्सर्वप्रमेयजातस्य प्रमाणाधीनसिद्धिकत्वेन प्रमाणानि कानि कानीत्याशङ्कायामुक्तम्— "अक्षादित्रितयं प्रमाणम्" इति। तथा च प्रत्यक्षमनुमानमागमश्चेति त्रीणि प्रमाणानि। इतरेषामर्थापत्त्यादीनामेतेष्वेवान्तर्भावः। "यद्वै किञ्चन मनुरब्रवीत्तद्भेषजम्" इति तैत्तिरीयश्रुत्या प्रशंसितेन मनुना—"प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्। प्रमाणमिति विज्ञेयं धर्मशुद्धिमभीप्सता॥" इति श्लोकेन प्रमाणत्रित्वस्यैव प्रतिपादनादक्षादित्रितयस्यैव प्रमाणत्वरूपाष्टमप्रमेयं दृढीभवति। ततश्च प्रमाणत्रित्वसिद्धिः।

इतः परं नवममन्तिमं प्रमेयं प्रपञ्चयामः। तथा हि—"सर्वे वेदा यत्पदमामनन्ति···" इत्युपक्रम्य "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्युपसंहारात् काठकोपनिषदनुसारेण विष्णोः सकलवेदमुख्यवेद्यत्वं सिद्ध्यति। श्रीमद्भगवद्गीतायामपि "वेदैश्च सर्वैरहमेव वेद्यः" इति प्रतिपादनात् तथा शौनकोक्ते ऋग्विधाने—"वेदाक्षराणि यावन्ति कथितानि द्विजातिभिः। तावन्ति हरिनामानि कीर्तितानि न संशयः॥" इति कथनाच्च सकलवेदमुख्यवेद्यत्वरूपं नवमं प्रमेयमपि निरवद्यमिति।

## श्रीकृष्णचैतन्यप्रवर्तितवैष्णवदर्शनम्

एतत्सम्प्रदायप्रधानाचार्यैः प्राचीनैः—

श्रीमन्मध्वमते हरिः परतरः सत्यं जगत्तत्त्वतो
भिन्ना जीवगणा हरेरनुचरा नीचोच्चभावं गताः।
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनं
ह्यक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः॥

इति पद्यं यथावद्व्याख्याय प्रमेयनवरत्नमालिकानाम्ना तद्व्याख्यानं प्रख्यापितम्। तथा हि—

श्रीमध्वः प्राह विष्णुं परतममखिलाम्नायवेद्यं च विश्वं
सत्यं भिन्नाश्च जीवा हरिचरणजुषस्तारतम्यं च तेषाम्।
मोक्षं हर्यङ्घ्रिलाभं तदमलभजनं तस्य हेतुं प्रमाणं
प्रत्यक्षादित्रयं चेत्युपदिशति हरिः कृष्णचैतन्यचन्द्रः॥

अनेन मध्वमतमेव मन्मतमिति स्थापयितुमेव भगवान् कृष्णश्चैतन्यरूपेण पुनरवतीर्य मध्वमतमेव प्रवर्तयामासेति निरूपितम्। आधुनिकैः पुनः कैश्चन तस्य न्यूनत्वाशङ्कया स्वतन्त्रमतप्रवर्तकत्वस्थापनाय तत्र तत्रेषत्परिवर्तनमकारि। तच्चापसिद्धान्तरूपत्वादुपदर्शितदर्शनेभ्योऽपकृष्टमिति ज्ञेयम्।

## वैष्णवदर्शनपरिचयः

### विष्णोः सर्वोत्तमत्वम्

एतावता प्रबन्धेन सामान्यतः सर्ववैष्णवदर्शनानां संक्षेपेण विवेचनं विहितम्। इदं पुनरवशिष्यते यत्पूर्वोक्तवैष्णवदर्शनानाम् "एको रुद्रो न द्वितीयोऽवतस्थे", "हिरण्यगर्भः समवर्तताग्रे" इत्यादिवचनैर्विष्ण्वितरदेवतानां सर्वोत्तमत्वस्य प्रतिपादनात्, "सर्वं खल्विदं ब्रह्म", "तत्त्वमसि" इत्यादिश्रुतिभ्यो जीवेश्वरैक्यप्रतिपादनाच्च प्रदर्शितश्रुत्यादिविरोधः स्यादिति तत्परिहारप्रकारप्रदर्शनमावश्यकमिति। तत्रेदं समाधानम्—छान्दोग्योपनिषदि सत्यकामशब्दव्याख्यानवेलायां "कामोऽस्मि भरतर्षभ" इति गीतावाक्यस्य "कामस्वामी अस्मि" इति श्रीशङ्कराचार्यैरर्थकरणात्, तथा "सर्वः शर्वः शिवः स्थाणुः" इति विष्णुसहस्रनाम्नो भाष्ये—"असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात्। सर्वस्य च सदा ज्ञानात् सर्वमेनं प्रचक्षते॥" इति भारतवचनमुदाहृत्य सर्वोत्पादकत्वात्, सर्वसंहारकत्वात्, सर्वज्ञत्वात्, सर्वस्वामित्वाच्च सर्व इति सर्वशब्दव्युत्पत्तेः प्रदर्शनात्, "सर्वं खल्विदं ब्रह्म" इत्यादौ सर्वोत्पादकं सर्वसंहारकं सर्वज्ञं सर्वस्वामि च ब्रह्मेत्यर्थलाभः। तथा—"त एव तस्यैव सर्वे रूपमभवन्" (बृह० उ०१।५।२१) इतिश्रुतौ "एतस्य प्राणस्यैव सर्वे इन्द्रियाभिमानिनो देवा रूपमभवन् अभिन्ना अभवन्नित्यनेनेन्द्रियाणां प्राणस्य चाभेदमाशङ्क्य "अयं वै नः श्रेष्ठः" इति प्राणस्येन्द्रियापेक्षया श्रेष्ठत्वावधारणात्तदविरोधेन वागादिषु परिस्पन्दलाभस्य प्राणायत्तत्वं तद्रूपभवनं वागादीनामिति मन्तव्यं न तादात्म्यम्" इति श्रीशङ्कराचार्यैर्व्याख्यातत्वात् 'तत्त्वमसि' इत्यादावपि त्वं तदायत्तस्तदधीनोऽसीत्यर्थलाभः। किञ्च, पूर्वप्रदर्शितन्यायेन सर्वशब्दानां विष्णुवाचकत्वाद् हिरण्यगर्भ-रुद्रादिपदानामपि विष्णुवाचकत्वम्। "वासुदेवो वा इदमग्र आसीन्न ब्रह्मा नेशानो नाग्नीषोमौ" इति विशिष्य रुद्रादिनिषेधकवाक्यवद्विशिष्य विष्णुनिषेधकवाक्यस्य वेदेऽनुपलम्भात् "न द्वितीयोऽवतस्थे" इत्यस्य विष्णुब्रह्मरुद्रभिन्नो नावतस्थ इति वाऽर्थलाभः।

### भक्तिरेव तत्त्वज्ञानाय प्रधानं साधनम्

मान्या विद्वांसः सभ्याश्च! परिषदः किल मुख्यमुद्देश्यं भगवत्प्राप्तिसाधनतत्त्वज्ञानावाप्तिः। परिषदप्युक्तदिशा भगवन्माहात्म्यविदां विदुषां समवाय एव। विद्वांसो ह्येकत्र मिलिताः परस्परं स्वाज्ञातविषयान् पृच्छन्ति स्वज्ञातविषयांश्च बोधयन्ति। तेन चैतेषामन्येषां च भगवद्भक्तिरभिवर्धते। विद्वांसो हि न भवन्ति मत्सरिणो न वा दुराग्रहग्रहिला नाप्यतिमानिनः। ते च प्रीतिपूर्वकमेव परस्परं बोधयन्ति। भगवद्भक्तिरेव हि भगवत्तत्त्वज्ञानाय प्रधानं साधनम्। यथाह भगवान् गीताचार्यः—

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ इति,
भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः । इति च ।

मन्ये च मया प्राचीनैरनुक्तं श्रीमद्भिरनधिगतं न किमप्यभिहितम्, तथापि केषाञ्चिद् विक्षिप्य वर्णितानां विषयाणां संग्रहः, अपरेषामुक्तानामपि विशेषेणोपपादनं क्वचित् कण्ठतोऽनुक्तानां सूचितानां स्पष्टकथनं चाकारि । अतः—

विक्षिप्तसंग्रहात् क्वापि क्वाप्युक्तस्योपपादनात् ।
अनुक्तकथनात् क्वापि सफलोऽयं श्रमो मम ॥

इत्यभियुक्तोक्त्यनुसारेण मदीयोऽयमध्यक्षकार्यभारोद्वहनप्रयासः सफलः स्यादिति ।

किञ्च, "य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति । भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।" इति भगवद्गीतोक्त्यनुसारेण भगवद्भक्तेषु भगवन्माहात्म्यवर्णनं हि भगवत्प्रीतेर्मुख्यसाधनं भाग्यलभ्यं च । श्रीमद्भिः सर्वैरेतत्कार्यसम्पादनायावसरप्रदानेन योऽयं महानुपकारः कृतस्तं न मनागपि शक्नोमि विस्मर्तुम् । अतः प्रेष्ठाः श्रीमत्सु सर्वदा कृतज्ञतामुद्वहन् परःसहस्रान् धन्यवादान् वितरामि ।

एतद्विश्वविद्यालयद्वारा क्रियमाणमिदं परिषदायोजनमतीव श्लाघ्यतरम्, इतरैरनुकरणीयं च । अनेन च तत्तद्दर्शनमर्मविदुषां विदुषामेकत्र मेलनेन तत्त्वज्ञानप्रसारो यथावत्सम्पादितो भवति भविष्यति च । अतः परिषत्कार्यसंचालकेभ्योऽधिकारिभ्यश्चेतोऽप्यधिकमुत्साहं सर्वाङ्गीणं सामर्थ्यं च प्रदाय समनुगृह्णातु गङ्गाधरो विश्वनाथो बिन्दुमाधवश्चेति प्रार्थयामि । अन्ते च 'यत्करोषि' इति भगवदुक्तिमनुस्मरन् तदेतदस्मद्गुरुहृत्कञ्जनिवासिने श्रीकृष्णाय समर्पयामि ।

जयति जगति जन्मस्थेमसंहारकर्ता
चिदचिदखिलयन्ता यः स्वतन्त्रोऽखिलज्ञः ।
विततविमलशक्तिः पूर्णषाड्गुण्यरूपः
श्रुतिततिमतमुक्तामुक्तभेदो रमेशः ॥

॥ इति शम् ॥

***

# स्वागताध्यक्ष-भाषणम्

**वाराणसेयसंस्कृतविश्वविद्यालयोपकुलपतीनां श्रीसुरतिनारायणमणित्रिपाठिमहोदयानाम् ।**

अस्य दर्शनपरिषदोऽधिवेशनस्य दार्शनिकप्रवरा अध्यक्षमहोदयाः, तत्तच्छास्त्रपारावारपारीणाः परिषदोऽस्या विभागीयाध्यक्षा, शास्त्रपरिशीलनपरिपूतमानसा निबन्धनिबन्धका विद्वांसः, तत्तत्प्रदेशागता अप्रतिमप्रतिभासम्पन्ना विद्वन्मानसमरालाः प्रतिनिधिमहाभागाः, दर्शनशास्त्ररसिका नागरिकाः, प्रेष्ठा अन्तेवासिनश्च !

भगवतो भूतभावनस्य पादपङ्कजपरिपूतायां पुर्यामस्यां विविधविद्याविद्योतितान्तःकरणानां सततपरिशीलितदर्शनशास्त्राणां तत्रभवतां भवतां स्वागतं व्याहरतो मोमुदीति मे मानसम् । त्रिभुवनललामभूतेयं काशी नगरी विविधदर्शनाचार्याणां धर्मप्रचारकाणां च उद्गमभूमिरस्ति । एतदेव कारणमस्ति यद् भारतवर्षस्यास्य प्रायः समेषां सम्प्रदायसिद्धान्तानां प्रामाण्ये वाराणसेयानां विदुषां स्वीकृतिरनिवार्यत्वेन मन्यते । अतिपुरातनकालादेवात्र भारतीयगम्भीरविचाराणां श्रवणस्य, मननस्य, अध्ययनस्य चाविच्छिन्नाक्षुण्णा च परम्परा प्रवहन्ती दृश्यते । काशी नगरी वस्तुतो भारतीयानां धर्माणां विचाराणां च एकतायाः संगमस्थानमस्ति । एवं चेयं नगरी निखिलानां भारतीयानां विद्यायाः, विशालायाः संस्कृतेः, उदारस्य च धर्मस्य राजधानी अस्तीति नास्ति परोक्षं प्रेक्षावताम् ।

महनीया विद्वांसः ! जानन्त्येव भवन्तो यदस्यां दीर्घतमायां परम्परायां संस्कृतसमाजस्य पुञ्जीभूतस्य पुण्यस्य मूर्तरूपस्यास्य वाराणसेयसंस्कृतविश्वविद्यालयस्य किमपि विशिष्टं स्थानमस्ति । अनया संस्थया सम्प्रति विश्वविद्यालयरूपेण, इतः पूर्वं काशिकराजकीयसंस्कृतमहाविद्यालयरूपेण च विगतशताब्दीद्वयतः सुरभारती सततं यत् समुपासिता, तत् केषां गौरवाय न कल्पेत ।

अस्याः संस्थाया विद्याराधनधारायां दर्शनपरिषदपि वस्तुतः किमपि विशिष्टं स्थानमावहति । परिषदियं पञ्चपञ्चाशदुत्तरैकोनविंशतितमे ( १९५५ ई० ) खिस्ताब्दे तदानीन्तनमुत्तरप्रदेशीयमुख्यमन्त्रिपदमलङ्कृतवद्भिर्दार्शनिकशिरोमणिभिः डाक्टरसम्पूर्णानन्दमहोदयैः स्थापिता आसीत् । परिषदा अनया संस्कृतपाण्डित्यस्य प्रौढपरम्परायामखिलभारतीयप्राच्यविद्यासम्मेलनेन इव, अखिलभारतीयदर्शनसम्मेलनेन इव वा विपुलतया कार्यं सम्पादनीयमस्ति । महत्त्वपूर्णस्यास्य

कार्यस्य सिद्धये सम्प्रति अल्पीयसा आडम्बरेण, अपि तु उत्तरोत्तरमुन्नतिशीलक्रमेण परिषदियं कार्यं सम्पादयति। वस्तुतो दर्शनशास्त्रीयविचारा निखिलानामन्येषां भारतीयशास्त्रप्रासादानां मूलतलायन्ते। दर्शनशास्त्राणां मननेन, चिन्तनेन, अनुसन्धानेन चावगाहनविशेषेण शास्त्रान्तराणामपि साक्षात् परम्परया वा परिपोषणं गौरवाभिवर्द्धनं च संस्कृतविश्वविद्यालयस्यानिवार्यं परमं साध्यमस्ति। किन्तु महतोऽस्य विधेयस्य साफल्यं देशस्य सर्वेषां साहाय्येनैव सम्भवति। विश्वविद्यालयस्यास्य ईदृशे महत्त्वपूर्णे कार्ये प्रधानकेन्द्रत्वं स्वाभाविकमेव। उद्देश्यस्यास्य सिद्धिप्रसङ्गे एकषष्ट्युत्तरैकोनविंशतितमे (१९६१ ई०) खिस्ताब्दे देशस्य विविधानां विबुधानां सहयोगेन एकमधिवेशनमधिवेशितमासीत्।

इदं नाम द्वितीयमधिवेशनम्; यत् सफलयितुं साम्प्रतिक्यामननुकूलायां स्थितावप्यनेकानायासान् सोढ्वा भवन्तो यदत्र समवयन्ति, तदर्थं विश्वविद्यालयोऽयम्, निखिला वाराणसेया विद्वांसः, अन्तेवासिनः, वयं च तत्रभवतां भवतां कृतज्ञतां प्रकाशयामः।

सम्प्रति देशस्यास्यां भीषणतमायां परिस्थितौ महानुभावानां भवतां योग्यतानुकूला यादृशी सपर्याऽपेक्ष्यते, तादृशी यद्यपि विधातुं न शक्यते, तथापि मम हार्दिकं प्रेम, हार्दिकीं श्रद्धां च अनुभावमनुभावं सहजदयालुभिर्विद्वद्भिर्भवद्भिरातिथ्यसम्बन्धिन्यः सकलास्त्रुटयः क्षन्तव्या भविष्यन्तीत्यहं विश्वसिमि।

इदानीं मानुषसुलभसौमनस्यसौहार्दपराचीनचीनविश्वासनिरासजघन्याभियानकृत्यैः भुवनमण्डलविनिन्दितैः सकलभारतीयजनमानसं विक्षुब्धमिवास्ति। स्वर्गादपि गरीयस्या जन्मभूमेर्देवतात्मनो हिमालयस्य च सम्मानं संरक्षितुं सर्वेऽपि भारतीया दृढप्रतिज्ञा दृश्यन्ते। उचितमेवैतत्, यतो हि—"अपि स्वर्णमयी लङ्का न मे लक्ष्मण रोचते। जननी जन्मभूमिश्च स्वर्गादपि गरीयसी॥" सिद्धान्तममुं भारतीयाः सततं शिरसा वहन्ति, पालयन्ति च। एतादृश्यां विषमायां परिस्थितौ न केवलमस्माकं भारतभूमिर्भारतीया संस्कृतिश्च विपन्ना, अपि तु सकलाऽपि मानवसंस्कृतिर्नीतिधर्मांश्च विपन्ना इव दृष्टिगोचरीभवन्ति। इदं च भारतवर्षं स्वराज्यं समवाप्य स्वीयां स्वाभाविकीं परम्परागतां दार्शनिकभावनां समाश्रित्य हिंसामार्गमपहाय मध्यममार्गेण प्रवर्तमानं यावत् समेदिधिषते, तावदेवेदं देशदौर्भाग्यवशतः सुमहत्समरसङ्कटं सम्प्राप्तम्—

रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः।
इत्थं विचिन्तयति कोशगते द्विरेफे हा! हन्त हन्त!! नलिनीं गज उज्जहार॥

## स्वागताध्यक्ष-भाषणम्

माननीयाः सभास्ताराः ! करालस्य कालस्यैवायं प्रभावः । अस्मिन् समये धैर्यमवलम्ब्य एतादृशदर्शनपरिषद्द्वारा मानवजीवनस्य चरमोद्देश्यस्य परमपुरुषार्थस्य प्राप्तेरुपायानां चिन्तनम्, त्रिविधतापपरितप्तानां प्राणिनां तत्प्राप्तौ समापतितान् विघ्नानपास्य मार्गप्रदर्शनम्, धीधनानां सुधियां परमं कर्तव्यमस्ति । वस्तुतः कस्यापि सङ्कटस्य मूलभूतं कारणं भवति—जीवनलक्ष्यस्य अस्थैर्यम्, तदधिगतौ मनसोऽनभ्युत्साहः, भीतिः, अधृतिश्चेति । अत एतेषां दोषाणां निरासः प्रथमकर्तव्यत्वेन आपतति । तत्राप्यधृतेः समूलोन्मूलनस्य प्राथम्यमेव । यतो हि—विविधानां विपदामेषैव प्रसवित्री । तथा चोक्तं नीतिशास्त्रे—"त्याज्यं न धैर्यं विधुरेऽपि काले" इत्यादि ।

वस्तुतोऽन्तर्द्रष्टुः सूक्ष्मा दृष्टिरेव दर्शनमस्ति । जीवनस्य आकाङ्क्षाणां धर्मरूपेण समन्वयः, तस्य जिज्ञासानां तथा नूतनासु परिस्थितिषु प्रादुर्भूतानां नवनवानां जिज्ञासानां तात्त्विक-दृष्ट्या नूतनानि समाधानानि दार्शनिकानां परमं पवित्रं कर्तव्यमस्ति । प्राचीने भारतेऽस्मदीयाः पूर्वजा महर्षय एतन्महत्त्वपूर्णं कार्यं विदधति स्म । तैर्वैयक्तिक-सामाजिक-जीवनस्य परस्परविरोधिनां विचाराणामाचाराणां च संघर्षे सर्वदैव समन्वयो विहितः, जनसाधारणस्य कृते एको नवीनः पन्थाश्च प्रदर्शितः । किं बहुना, प्राचीनेऽपि भारते कदाचिदतिभीषणविप्लवात्मिकया विपत्त्या संकुलितायां जीवनपद्धतावपि ततः समुद्धाराय तदानीन्तनैः पारदृश्वभिर्ब्रह्मविद्भिर्दार्शनिकैः सुनिश्चितार्थाः केचन उपायाः प्रदर्शिता एव । नृत्यन्त्यां सत्यामपि रणचण्ड्यां महाभारत आविष्कृतदार्शनिक-सिद्धान्ता गीतोपनिषद् गीता भगवता योगासनासीनेन कंसरिपुणा कृष्णेन, निबद्धा च कृष्णद्वैपा-यनेन । विश्वासघातिप्रातिवेशिकदुश्चेतश्चीनकृतसंकटसंकुलिते सम्प्रति भारते यदेतद् दर्शनपरिषद-धिवेशनमधिवेश्यते, तदत्रापि समवेतैस्तत्रभवद्भिर्दार्शनिकप्रवरैस्तादृशमेव किञ्चिद् विशिष्टं उद्देश्यं सकलोऽपि समाजः प्रापणीयः ।

वर्तमाने युगे मनुष्याणां पुरो भौतिकविज्ञानमुत्तरोत्तरं नवीनतमं संकटं समुत्पादयति । विज्ञानाविष्कारस्य गतिर्यथा तीव्राऽस्ति, तथैव अहिंसा मानवमानसं तेन साकं श्रेयस्करं समन्वयं स्थापयितुं नालं भवति । एतत् कर्म विश्वस्य विश्वैर्दार्शनिकैः सम्पादनीयमस्ति । भारतीयानां दार्शनिकानां विशेषतोऽत्र उत्तरदायित्वमस्ति । भारतीयं दर्शनं जीवनस्य शाश्वतं मूल्यं निर्धारयति । भारतीयदार्शनिकैः प्रतिपादितानां जीवनस्य तेषां शाश्वतिकमूल्यानां प्राप्तये विश्वस्य नवीनासु परि-स्थितिषु समाजः कश्चन नवीनं मार्गं प्रापणीयः । कार्यमेतद् दार्शनिकान् विहाय केऽन्ये कर्तुं पारयेयुः ?

अस्माकं दर्शनानि सत्स्वप्यवान्तरभेदेषु सामान्यतो वर्गत्रयेण प्रविभक्तानि—अद्वैतिनां दर्शनम्, द्वैतिनां दर्शनम्, द्वैताद्वैतिनां दर्शनमिति । इमानि च दर्शनानि बाह्याबाह्यभेदेन द्वैविध्येनापि शास्त्रेषु

दृश्यन्ते। अत्र बहिर्भावस्यावधिर्वेद एव। यद्यपि सर्वाण्यपि दर्शनानि सृष्टिविषये का इयम्? कुत इयम्? कथमियम्? कदा इयम्? इत्यादिजिज्ञासानाम्; आत्मविषये कोऽहम्? कीदृशोऽहम्? इत्यादीनां च शान्तस्वान्तसमुत्थितानां प्रश्नानां समाधानाय प्रवृत्तानि मोक्षैकफलानि, तथापि व्यवहारेऽप्येषां संभवन् सुविपुल उपयोगो न वारयितुं पार्यते। किञ्च, व्यवहारे यद्यद्वैतिनां मतं समाद्रियते, तदा कः कलहस्यावसरः। तदुक्तं गीतासु—

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम्।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्॥

अस्ति च आत्मदर्शनसाधनानां सत्य-अहिंसा-अस्तेय-ब्रह्मचर्य-शम-दमानामात्मदर्शने योगिन इव व्यवहारे राज्ञोऽप्युपयोगः। तथा हि—असत्यभाषिणो वचः कः श्रद्दधीत? हिंसके कः स्निह्यात्? स्तेने परस्वापहारिणि को विश्वसेत्? वर्चोहीनस्य दुर्बलस्य राज्यं प्रच्यवेत, अशान्तस्य कुतः सुखम्? अदान्तस्य च अवशीकृतेन्द्रियस्य नित्यं भोगप्रसक्तस्य सुलभ एव राज्यभ्रंशः। करुणामैत्रीमुदितोपेक्षाणां भावनातश्चित्तप्रसादनं दृष्टमेव फलमुक्तं शास्त्रेषु। तस्मादस्ति व्यवहारेष्वपि दर्शनानां सुमहत् प्रयोजनम्।

एतदुद्देश्यसिद्धौ दार्शनिकानां विदुषां प्रचारणप्रसारणाभ्यां लेखसम्भाषणाभ्यामन्यैश्चोपायैः सुचिन्तितैरत्यन्तं साहाय्यमपेक्ष्यते। इदं तु सुनिश्चितं यद् भारतीयदर्शनानामध्ययनाध्यापनयोर्बहोः कालाद् ह्रसतोः सुव्यवस्थैव उद्देश्यसिद्धौ क्षमा। भारतीयदर्शनानां च ह्रसतां समुद्धारविषये पुराविद्भिर्भर्तृहरि-उदयन-वाचस्पत्यादिभिर्बद्धपरिकरैः प्रयतितम्, तथा भवतामपि साम्प्रतमेष भारः शिरसि समापतितः। तथा च हरिवाक्यम्—

पुरा विद्वत्तासीदुपशमवतां क्लेशहतये
गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम्।
इदानीं संप्रेक्ष्य क्षितितलभुजः शास्त्रविमुखान्
अहो! कष्टं साऽपि प्रतिदिनमधोऽधः प्रविशति॥

उदयनोऽपि—

"ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम्" इति।

इदं तु सुभृशमाशास्यते—अस्याधिवेशनस्य विभिन्नासु परिषत्सु शास्त्राचार्योपदेशसंस्कृत-प्रतिभाभ्यासप्रगल्भा विद्वांसो विशिष्टान् परिषदावर्जनकृतो निबन्धान् पठिष्यन्ति, येष्वाधुनिकीनां मानवसमाजस्य विषमसमस्यानाम्, प्रवर्तमानस्य कलहस्य, प्रवर्धमानस्यार्थसंकटस्य, व्यश्नुवानायाश्च

एधमानजनताजीविकाचिन्तायाः, अहमहमिकया च प्रवर्त्यमानयोरात्यन्तिकयोरर्थवैषम्यार्थसाम्ययोः, समुपस्थितस्य च विश्वविनाशस्य समाधानं भविष्यतीति ।

एतावदेव च परिमितं व्याहृत्य अनल्पजल्पाद् विरमन्तो भवतां सौवागतिका वयमन्ते भूयो भूयः स्वागतवचांसि व्याहरामः, नाथामश्चानल्पस्य सपर्याऽसौविध्यसमुद्भूतक्लेशजातस्य कृते पौनः पुन्येन क्षमाम् । एतदवसाने च नाथामहेऽविमुक्तपतिं भूतानां विमुक्तिदं भावगम्यं भवानीपतिम्—

विद्वेषो विलयं व्रजत्वविरतं सौहार्दमत्याश्रिता
विश्वस्मिन् जनता सुनिर्वृतिमिता सौजन्यमालम्बताम् ।
मार्गं साम्यमसाम्यमप्यनुचितं हित्वा द्वयोरान्तरं
सन्मार्गं समुपाश्रितस्य विजयो देशस्य संजायताम् ॥

॥ शिवमस्तु ॥

# सभापतिभाषणम्

**प्राध्यापक-श्रीको०अ०सुब्रह्मण्य-अय्यरमहोदयानाम्।**

अद्य खल्वेतस्मिन् सदसि सन्निहितानां तत्तच्छास्त्रनिरन्तरपरिशीलनपरिष्कृतमानसानां काश्यामन्यत्र वा लब्धप्रतिष्ठानां विदुषां पुरतः समुपस्थितेन मया साध्वससंमिश्रो महान् हर्षः समनुभूयते। वाराणसेयसंस्कृतविश्वविद्यालयान्तर्गतदर्शनपरिषदधिकारिभिः सौहार्दप्रेरितैर्योग्यतानिरपेक्षमस्याः परिषदः साम्प्रतिकाधिवेशनस्य साभापत्यं यन्मयि समारोपितं तस्याविचार्य स्वीकरणेन मया महत् साहसमाचरितम्। पूर्वपरिचितानां मयि प्रदर्शितसुहृद्भावानां विदुषां पुनर्दर्शनस्य, अपरिचितविद्वज्जनपरिचितेश्च दुर्लभोऽयमवसरो न परिहातव्य इति बुद्ध्या कृतमिदं साहसमिति मर्षयितव्योऽयं जनः।

महदानन्दास्पदमिदं यदितः कतिपयवर्षेभ्यः प्राक् संस्थापितेयं दर्शनपरिषन्निरन्तरं स्वकीये कर्मणि प्रवर्तमाना दृश्यते। भारतीयसंस्कृतेर्विकासे दर्शनानां किं स्थानं कश्च प्रभाव आसीदिति विदितमेव सदस्यमहाभागानाम्। जगति समुपलभ्यमानेषु सर्वेष्वपि प्राचीनवाङ्मयेषु विपुलतमं विचित्रतमं च संस्कृतवाङ्मयमिति कथने नाचिदत्युक्तिर्न स्यात्। तत्रापि दर्शनविषयकोंऽश इतरविषयकांशापेक्षया नितरां प्रचुर इति सर्वविद्वज्जनप्रत्यक्षमेतत्। य एते पुरा कृतभारतीयसंस्कृत्याधारशिलान्यासा मन्त्रद्रष्टारो महर्षयः, ये च वेदाङ्गानां प्रतिष्ठापका आचार्याः, ये चायुर्वेदादिदृष्टप्रयोजनकशास्त्रप्रणेतारो महापुरुषाः चरकसुश्रुतप्रभृतयः, ये चास्तिकदर्शनषट्कस्य नास्तिकदर्शनषट्कस्य च प्रतिष्ठापका महाचार्याः, तदन्वये प्रादुर्भूतास्तन्मतस्यैवोपपादका उपोद्बलका महाव्याख्याकारा विद्वांसश्च, ते सर्वे साक्षात् परम्परया वा दार्शनिका एवासन्। तेषां कृतय एवाद्यापि सर्वत्र भारतवर्षे महत्या श्रद्धया परिशील्यन्ते। तत्र प्रतिपादितानां तत्त्वानां गाम्भीर्येण सर्वेषां जनानां भारतीयसंस्कृतेरुत्कर्षे महत्यादरबुद्धिः प्रादुर्भवति। तेषां सम्यगवबोधार्थं कृतेन तपसा विदुषां ये चरित्रगुणा बुद्धिगुणाश्च विकसिता भवन्ति, तैस्तैषां प्रभावो निखिलं समाजमभिव्याप्नोति; तैश्च गुणैर्विद्वद्भिः स्वसन्ताने संक्रामितैर्निखिला मनुष्यजातिः समुन्नतेः परां काष्ठां प्राप्नोति।

भारतीयसंस्कृतौ दर्शनानां यद् विशिष्टं स्थानं तद्द्योतकमिदमपि न विस्मरणीयमस्माभिर्यदत्र दर्शनातिरिक्ता अपि विद्या दर्शनत्वसमासादनप्रवणा भवन्ति। सर्वास्वपि ग्रीक-रोमनादिप्राचीनसंस्कृतिषु व्याकरणशास्त्रं महान्तं विकासमवाप। अफ्लातून-अरस्तू-डायोनिसियस-त्राक्स-

प्रभृतिभिर्ग्रीकविमर्शकैर्डोनाटस-प्रिसियनप्रभृतिभी रोमनविमर्शकैश्च स्वस्वभाषासंबन्धीनि भाषा-सामान्यसंबन्धीनि च बहूनि सरसानि तत्त्वान्याविष्कृतानि, परं तु न ग्रीसदेशे न वा रोमदेशे व्याकरणं दर्शनत्वमवाप। भारतवर्षे तु व्याकरणस्य दर्शनत्वं तत्रभवता भर्तृहरिणा तस्य वाग्योग-द्वारा मोक्षोपायत्वसमुद्घोषणेन माधवाचार्यैः स्वकीये सर्वदर्शनसंग्रहे पाणिनिदर्शनसन्निवेशेनान्यैश्च बहुभिर्लिङ्गैः स्पष्टं प्रतीयते। साहित्यस्यापि दर्शनैः सह संबन्धो बहुभिः श्रद्धार्हैर्विद्वद्भिरभ्युपगम्यते। इयता संतुष्टाः केचिद् गम्भीरविचारशीला विपश्चितस्तस्य स्वयं दर्शनत्वं प्रकीर्तयन्ति। लक्ष्यरूपस्य साहित्यस्याथवा काव्यस्य दर्शनानां च परस्परं संबन्धः स्पष्ट एव। भारतीयविचारपद्धत्यनुसारेण सर्वाण्यपि दर्शनानि काव्ययोनय इति राजशेखरेण स्वकाव्यमीमांसायां परिगणितेषु षोडशसु काव्ययोनिषु प्रमाणविद्याया अपि समुल्लेखदर्शनादस्माभिरनुमातुं शक्यते। प्रमाणविद्याशब्देन प्रायेण सर्वाणि दर्शनान्येवाभिप्रेतानि। "सर्वपार्षदत्वात् काव्यविद्यायास्तानिमानन्यांश्चार्थान् व्युत्पत्तये प्रत्यवेक्षेत" इति वदता राजशेखरेण कवीनां सर्वेभ्यो दर्शनेभ्योऽर्थग्रहणशीलत्वं सम्य-गुपवर्णितम्। उदाहृतं चैतद् बहुधा। निखिलमिदं प्रबोधचन्द्रोदयनामकं नाटकं वेदान्तदर्शन-मवलम्ब्य प्रवृत्तमिति जानन्त्येव सदस्यमहाभागाः। लक्षणरूपस्यापि साहित्यस्य दर्शनैः सह सम्बन्धो भिन्नप्रकारोऽपि तथैव स्पष्टः। प्रायेणालङ्कारशास्त्रे दार्शनिका एव पूर्वपक्षिण इत्यनेनैव दर्शनानां साहित्यस्य चांशतो विषयसाम्यमवगम्यते। पूर्वपक्षिणां सिद्धान्तिनां च मतभेदेऽपि विषयैक्यं तु भवत्येव। एतावदेव न, केचिदालङ्कारिकाः स्वयं दार्शनिका अप्यासन्। आलङ्कारिकशिरोमणि-रानन्दवर्धनाचार्यः साहित्यविषयकं ध्वन्यालोकमिव दर्शनविषयकं तत्त्वालोकनामकं ग्रन्थमपि रचया-मासेति ध्वन्यालोकलोचनवचनादवगम्यते। अस्माकं दुर्भाग्यमिदं यदयं ग्रन्थोऽधुना नोपलभ्यते। तदवलोकनेनैव ध्वनिवादस्य दर्शनैः सह सम्बन्धः सम्यगवगतो भवेत्। लोचनकाराणां श्रीमदभि-नवगुप्ताचार्याणां प्रत्यभिज्ञादर्शनव्याख्यातॄणां महामाहेश्वराचार्यबिरुदभाजां दार्शनिकमूर्धन्यत्वं सर्वविदितमेव। एवं च चित्रमीमांसा-कुवलयानन्दादिसाहित्यविषयकग्रन्थरचयितृभिः श्रीमदप्पय्य-दीक्षितैः परिमल-शिवार्कमणिदीपिका-सिद्धान्तलेशसंग्रह-पूर्वमीमांसावादनक्षत्रमाला-मयूखावल्यादि-ग्रन्थनिर्माणेनात्मनो दार्शनिकधुरन्धरत्वमपि प्रदर्शितम्। एवं साहित्यस्योभयोरपि रूपयोर्दर्शनैः सह घनिष्ठः संबन्धः सिद्धो भवति। एतावदेव न, साहित्यस्य स्वयं दर्शनत्वमिच्छन्ति केचिद् विद्वांसः। सर्वमपि तत्त्वज्ञानसाधकं शास्त्रं दर्शनम्, अथवा चेतनस्य प्रधानत्वेन प्रतिपादकं शास्त्रं दर्शनमिति दृष्टिमवलम्ब्य "रसो वै सः" इति श्रुत्युक्तं रसस्य चैतन्यात्मकत्वं चाश्रित्य काव्यस्य तत्प्रति-पादकशास्त्रस्य च तत्तत्स्थाय्युपहितब्रह्मचैतन्यसाक्षात्कारसाधनत्वाद्दर्शनत्वप्रतिज्ञा सुतरामादरार्हा।

## सभापतिभाषणम्

एवं दर्शनप्रधानाया भारतीयसंस्कृतेरध्ययनार्थं संस्थापितेऽस्मिन् संस्कृतविश्वविद्यालये विलसन्तीयं दर्शनपरिषदध्यापकानां विद्यार्थिनां चोत्साहं समुद्बोधयतीति दृष्ट्वा नितान्तं प्रमुदितं मे चेतः। अस्माकं शासनाधिकारिभिर्बहु विमृश्य प्रतिष्ठापितोऽयं विश्वविद्यालयः, अथवा पूर्वस्थितराजकीयसंस्कृतमहाविद्यालयस्य विश्वविद्यालयत्वेन परिणामः कृतः। विद्वत्समाजेच्छानुगुण्येनैव कृतमिदं परिवर्तनं शासनेन। विश्वविद्यालयप्रतिष्ठापनावसरे जनताया हृदये बह्व्यः प्रत्याशाः समुत्पन्ना आसन्। परम्परागताया विद्यायाः संरक्षणम्, आङ्गलशासनकाले भारतीयशिक्षापद्धतौ निकृष्टं स्थानमधिष्ठितायाः संस्कृतशिक्षायाः समुन्नतिः, प्राचीनपद्धत्या कृतविद्यानां विदुषां पुनः समादरणम्, सर्वप्रकारासु राजसेवासु संस्कृतज्ञानां प्रवेशः, विदेशस्थेषु भारतीयदूतावासेषु भारतीयसंस्कृतिरहस्यज्ञानां नियुक्तिः—इत्यादिविषयिकाः प्रत्याशाः संस्कृतज्ञानां हृदयेषु प्रादुरभवन्। यदा चानेन विश्वविद्यालयेन "श्रुतं मे गोपाय" इति वाक्यं मूलसिद्धान्तत्वेन स्वीकृत्य स्वमुद्रायां सन्निवेशितम्, तदा विदुषां चेतसि महानानन्दः समजनि। श्रुतस्य संरक्षणं नाम किमिति सम्यगवगन्तव्यमस्माभिः। व्यापिकया सर्वतोमुख्या च दृष्ट्या संरक्षणार्थोऽस्माभिर्बोद्धव्यः। परम्परागतस्य वैदिकबौद्धार्हतादिधर्मानुसारिभिर्भारतीयैरितरदेशाभिजनैर्वा महर्षिभिराचार्यैश्च विरचितस्य संस्कृततत्प्रकृतिकभाषानिबद्धस्य वाङ्मयस्य पठनपाठनविधिः, तत्र प्रतिपादितानां तत्त्वानामात्मसात्कृत्य योग्यशिष्येषु संक्रामणमितीदं संरक्षणविधेः प्रथमं पदम्। तच्च विश्वविद्यालयस्थापनात् प्रागेव भारते तत्र तत्र समुपलभ्यमानासु सर्वासु संस्कृतपाठशालासु भवति स्म। विशेषतः काशिकराजकीयसंस्कृतमहाविद्यालये निखिलायामीशवीयोनविंश्यां शताब्द्यामीशवीयविंशशताब्द्याः प्रथमार्धे च निरन्तरमिदमेव कर्म महता साफल्येनानुष्ठीयते स्म। अस्मिन् कर्मणि प्राप्तयशसां विदुषां नामान्यद्यापि सश्रद्धं स्मर्यन्ते समस्ते भारतवर्षे। विश्वविद्यालयत्वेन परिणतायामस्यां संस्थायामेतावत्येव कर्मणि क्रियमाणे किञ्चिन्नवीनत्वं वैशिष्ट्यं वा न स्यादिति बहूनामादरणीयवचसां विदुषामभिप्रायः। न्यस्तेऽपि प्रथमे पदे यावदनन्तरमपि पदं नाधीयते तावत् संरक्षणकर्मैव न सुष्ठु सम्पन्नं स्यादिति तेषामाशयः। प्रथमं पदं भवति सिद्धस्य ज्ञानराशेरात्मसात्करणरूपमतीतोन्मुखम्। श्रुतस्य गोपनविधाविदमेव समनन्तरं द्वितीयं पदं यदसिद्धस्य ज्ञानराशेः समुपार्जनरूपं भविष्यदुन्मुखत्वमिति।

भारतीयदर्शनानामैतिहासिक्या दृष्ट्याध्ययने क्रियमाणेऽस्माकं पूर्वाचार्यैः श्रुतस्य संरक्षणार्थमुभयोरप्यनयोर्मार्गयोः समाश्रयणं कृतं दृश्यते। अर्वाचीनैराचार्यैः पूर्वाचार्यप्रतिपादितानामेव मूलतत्त्वानामुपपादनं कुर्वद्भिरपि स्वसमयानुगुणशैलीसमाश्रयणेन तेषां नवीकरणमिव कृतम्।

श्रुत्यन्तभूतासूपनिषत्सु, श्रीमद्बादरायणाचार्यकृतेषु ब्रह्मसूत्रेषु, शङ्करभगवत्पादकृतशारीरकभाष्ये, आचार्यमधुसूदनसरस्वतीचरणविरचितायामद्वैतसिद्धौ च तस्यैव ब्रह्माद्वैतवादस्य मुख्यतया प्रतिपादनं कृतमिति सर्वसम्मतमेतत् । एवंस्थितेऽपि पूर्वपूर्वग्रन्थापेक्षया परस्मिन् परस्मिन् ग्रन्थेऽस्ति किञ्चिद् वैशिष्ट्यम् , काचिन्नवीनतेति को वा नाभ्युपगच्छेत् । उपनिषदां ब्रह्मसूत्राणां च न केवलं सूत्राबद्धत्व-तद्बद्धत्वकृतो विशेषः । अल्पाक्षरसूत्रबद्धायामपि श्रीमद्बादरायणकृतौ निखिला अपि वेदान्तविषयाः समन्वयाविरोधसाधनफलनामकेषु चतुर्ष्वध्यायेष्वन्तर्भाविताः । सर्वेषामध्यायानां बहुभिरधिकरणैः सर्वेषामप्यधिकरणानां संदेहपूर्वपक्षसिद्धान्तरूपैरंशैश्च विभागः कृतः । समस्तेयं कृतिः परपक्षप्रतिक्षेपपूर्वकस्वपक्षस्थापनरूपत्वात् तर्कबहुला दृश्यते । सर्वमिदं रोचकोपाख्यानबहुलाभ्यो महर्षितच्छिष्याणां परस्परसंवादरूपाभ्य उपनिषद्भ्यो मूलसिद्धान्ताभेदेऽपि बाढं विलक्षणम् । उपनिषत्सु प्रतिपादिताः सर्वेऽप्यर्थास्तत्र क्रोडीकृताः । तत्राविद्यमानोऽपि तदनुकूलस्तर्कस्तत्र सन्निवेशितः । ईदृशमेव वैलक्षण्यं ब्रह्मसूत्राणां शङ्करभगवत्पादकृतभाष्यस्य च । साक्षाद् ब्रह्मसूत्राणां परम्परया चोपनिषदां तात्पर्यनिर्णयपरमिदं प्रसन्नगम्भीरं भाष्यम् । ब्रह्मसूत्रान्तर्गतस्य तर्कांशस्य तदतिरिक्त-तर्कशतैरुपनिषद्वाक्यसहस्रैश्चोपबृंहणं सूत्राणां संक्षेपप्राणत्वात्तत्रानुल्लिखितानां बहूनां वेदान्तदर्शनस्य संपूर्णत्वसंपादकानां तत्त्वानामुचितेषु स्थानेषु सन्निवेश इत्यादि यच्छारीरकभाष्यस्य वैशिष्ट्यं तेनैव तस्य स्वप्रादुर्भावकालेऽसिद्धस्य ज्ञानराशेः समुपार्जनानुकूलग्रन्थरत्नेषु गणना संजाता । अन्ततो विमृश्यतामाचार्यमधुसूदनसरस्वतीचरणविचरिता अद्वैतसिद्धिः । ऐतिहासिक्या दृष्ट्या ग्रन्थरत्नमिदं स्वाविर्भावकाले वेदान्तदर्शनस्य महान् नवोन्मेष आसीत् । पूर्वसिद्धं निखिलमपि वेदान्तशास्त्र-मात्मसात्कृत्य स्वसमयसमुपलभ्यमानपरिस्थितिं च पर्यालोच्याचार्यवर्यैर्ग्रन्थरत्नमिदं विरचितम् । आचार्यपादानां समये नव्यन्यायशास्त्रस्य भारते महती प्रतिष्ठासीत् । दार्शनिकतत्त्वानां निरूपणं विवेचनं च यावन्नव्यन्यायसम्मतया शैल्या तदीयपारिभाषिकशब्दानां प्रयोगेण च न क्रियते, तावद् विद्वत्समक्षं स्वपक्षस्थापनं परपक्षखण्डनं च दुष्करं भवति स्म । एतस्यां परिस्थितौ आचार्यवर्यै-र्नव्यन्यायशैलीमवलम्ब्य परपक्षप्रतिक्षेपपूर्वकं वेदान्तसिद्धान्तानां प्रतिष्ठापनं संरक्षणं च कृतम् । तदा प्रभृत्यद्य यावत् सर्वत्र वेदान्तदर्शने प्रौढपाण्डित्यप्रेप्सुभिर्विद्वद्भिरस्य ग्रन्थस्य सम्यक् परिशीलनं क्रियते । समयानुगुण्येन पूर्वसिद्धज्ञानराशेः संरक्षणपूर्वकं नवीनज्ञानराशेः समुपार्जनस्य शोभन-मिदमुदाहरणं भवति ।

शब्दाद्वैतवादस्यापीतिहासोऽस्मिन् प्रसङ्गे विचारार्हः । अयं वादः संस्कृतवाङ्मये

बहुत्रोपवर्णितो दृश्यते। वेदेषु मुनित्रयस्य कृतिषु तत्रभवतो भर्तृहरेर्वाक्यपदीये नागेशभट्टविरचितायां लघुमञ्जूषायां च यदस्य वादस्य वर्णनमुपलभ्यते, तदस्माभिर्विशिष्य विमर्शनीयम्। वेदेषु बहूनामन्यवादानामिवास्य वादस्यापि बीजानि समुपलभ्यन्ते। श्रुतिषु वाग्विषयकाणि तत्तद्दृष्टिमवलम्ब्य व्याहृतानि बहूनि वाक्यानि समुपलभ्यन्ते। कदाचिच्छ्रुतिस्तैस्तैरिन्द्रवायुचन्द्रादित्याग्निविराट्प्रजापतिसमुद्रसलिलसंवत्सरसावित्रीसरस्वतीसुपर्णाद्यौरन्तरिक्षपृथिवीबृहत्यनुष्टुब्ब्रह्ममनोमतियज्ञादिभिस्तत्त्वैर्वाचस्तादात्म्यं प्रतिपादयति। केषुचित्—

वागेव विश्वा भुवनानि जज्ञे वाच इत् सर्वममृतं यच्च मर्त्यम्।
अथेद् वाग् बुभुजे वागुवाच पुरुत्रा वाचो न परं यच्च नाह॥

इत्यादिमन्त्रेषु संहृतभोग्यभोक्तृशक्तेर्बहुधा कारणत्वमाम्नातम्। तथा—

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा॥

इत्यादिके ऋग्वेदमन्त्रे सच्चिदानन्दात्मकेन परमात्मना तादात्म्यमनुभवन्ती वागाम्भृणी सर्वजगद्रूपेण सर्वस्याधिष्ठानत्वेन चाहमेव सर्वं भवामि, मयि सर्वं जगत् शुक्तौ रजतमिवाध्यस्तं सद् दृश्यते इति च प्रोद्घोषयति। शब्दाद्वैतस्य मूलतत्त्वानां छान्दस्या तर्करहितया गौरवान्वितया वाचा प्रतिपादनपरा एते मन्त्राः।

मुनित्रयस्य कृतिष्वष्टाध्याय्या मुख्यतः शब्दान्वाख्यानरूपत्वादतिसंक्षिप्तसूत्ररूपत्वाच्च भगवता पाणिनिना दार्शनिकविषयनिरूपणं स्वकण्ठत एव न कृतम्, तथापि केषाञ्चित्सूत्राणामर्थपर्यालोचनया भगवतः कानिचिद् दार्शनिकमतान्यनुमातुं शक्यन्ते। यथा एकशेषारम्भाद् भेद्यत्वं द्रव्यलक्षणमनुमीयते, द्रव्याणां प्राधान्येन वाच्यत्वे शब्दभेदप्रसक्तेस्तदारम्भस्यार्थवत्त्वात्। एवमेव स्त्रियां पुंसि नपुंसके इति सामान्येन शब्दान्वाख्यानेऽर्थस्याङ्गभावापादनात् संस्त्यानप्रसवस्थितयोर्लिङ्गलक्षणमनुमीयते। वार्त्तिकानां लक्षणत एव उक्तानुक्तदुरुक्तार्थव्यक्तिकारित्वात्तत्राष्टाध्याय्यामनुपलभ्यमानमपि तदर्थस्यैव स्पष्टीकरणरूपं बहूपलभ्यते, अतश्च विपुलस्तत्राभिनवो ज्ञानराशिः संचितो दृश्यते, यस्यैको महानंशो व्याकरणदर्शनविषयकः। 'सिद्धे शब्दार्थसंबन्धे' इति प्रथममेव वार्त्तिकं शब्दाद्वैतवादस्याङ्गतत्त्वभूतं शब्दार्थसंबन्धानां नित्यत्वं प्रतिपादयति। व्याकरणदर्शनस्यावान्तरविषयभूतजातिद्रव्यगुणदिक्साधनक्रियाकालसंख्यापुरुषोपग्रहलिङ्गादिस्वरूपनिरूपणविवेचनपराणि बहूनि वार्त्तिकानि तत्र तत्र विप्रकीर्णानि दरीदृश्यन्ते। सूत्राणि वार्त्तिकानि

च युगपद् परीक्षितुं प्रवृत्तैर्महाभाष्यकारैस्तु व्याकरणशास्त्रस्य दर्शनांशमधिकृत्य यद्यपि ललितललितैरपि गम्भीरैर्मनोहरैश्च पदैर्बहूक्तम्, तथापि न तत् सर्वमेकत्रोक्तम्; किन्तु तत्र तत्रोक्तमिति भृशं विप्रकीर्णम्। एवं स्थितेऽपि व्याकरणदर्शनगतानि सर्वाणि मूलतत्त्वान्यङ्गतत्त्वानि च भाष्ये यत्र कुत्रचिदुल्लिखितान्युपलभ्यन्त इत्यत्र बहून्युदाहरणानि दातुं शक्यन्ते। अत एव प्रक्रियांशस्येव दर्शनांशस्यापि महाभाष्यमेव मुख्य उपलभ्यमान आकरग्रन्थ इति सर्वैरर्वाचीनैर्विद्वद्भिरैकमत्येनाभ्युपगम्यते। भगवता पाणिनिना कात्यायनेन च महता परिश्रमेण संचितं ज्ञानराशिं महत्या श्रद्धयात्मसात्कृत्य तस्य विस्तरेण परीक्षात्मकव्याख्यानावसरे तस्य गुणदोषान् प्रदर्श्य भगवता भाष्यकारेण व्याकरणशास्त्रस्योभयोरपि प्रक्रियांशदर्शनांशविषयकयोर्ज्ञानराश्योः संवर्द्धनं कृतम्।

तत्रभवान् भर्तृहरिर्महाभाष्यकारापेक्षया व्याकरणदर्शनेतिहासे बहुभ्यो वर्षशतैरर्वाचीनः। अस्मिंश्च महति कालान्तरे भारतवर्षे दर्शनानां महान् विकासः संजातः। एकतो महर्षिजैमिनिबादरायणयोरनुपमया प्रतिभया पूर्वोत्तरमीमांसयोः, महर्षिगौतमकणादवात्स्यायनप्रशस्तपादानां परिश्रमेण न्यायवैशेषिकदर्शनयोः, आचार्येश्वरकृष्णमाठरव्यासचरणानां ग्रन्थरत्नैः सांख्ययोगयोः सम्यक् प्रतिष्ठापनेन देशे आस्तिकदर्शनानां महान् समुन्मेषोऽभूत्; अपरतो नास्तिकदर्शनान्यपि महत्या स्पर्धया सर्वत्र भारतवर्षे वर्धमानानि, भारताद्बहिरपि पार्श्ववर्तिनो दूरस्थितान् वा देशानाक्रम्यास्त्रशस्त्रादिप्रयोगं विनैव केवलं स्वोत्कर्षेण तत्र स्थितान् जनान् वशीकृत्य तत्र रूढमूलानि बभूवुः। तत्र विश्वविश्रुतकीर्तेः स्थविरवादमर्मज्ञस्य विसुद्धिमग्गादिप्रसन्नगम्भीरग्रन्थकर्तुराचार्यबुद्धघोषस्य नाम केन न श्रुतं स्यात्। माध्यमिकशास्त्रप्रणेता आचार्यनागार्जुनस्तावत् स्वबुद्धिवैभवेन प्राचीनभारतीयवैदुष्यस्य परां काष्ठां प्राप्तः सर्वानस्मानद्यापि भारतीयत्वाभिमानिनः करोति। अन्येऽपि सौगता आचार्या आर्यदेव-चन्द्रकीर्ति-शान्तिदेव-असङ्ग-वसुबन्धु-दिङ्नागप्रभृतयः प्रकृते कालान्तरे भारतीयविद्वत्समाजललामभूताः पूर्वसंचितज्ञानराशेः संवर्द्धने महान्तं प्रयत्नमकुर्वन्। यस्य प्रयत्नस्य स्वादूनि फलानि बहुधा लुप्तप्रायाण्यप्यवशिष्टान्यस्माभिरद्याप्यास्वादयितुं शक्यन्ते। तत्तदास्तिकनास्तिकदर्शनानुयायिनामेतेषामाचार्याणां कृतिषु शब्दतत्त्वमधिकृत्य बहुधा विचारः कृतो दृश्यते। प्रमाणानां संख्यास्वरूपविषयको विचारः सर्वेष्वपि दर्शनेषु भवतीति सर्वविदितमेतत्, अतः शब्दस्य पृथक्प्रमाणत्वाप्रमाणत्वविषयको विमर्शः सर्वेषु दर्शनेषु प्रवृत्तः। पदार्थभूतशब्दस्वरूपपरिज्ञानेऽपि दार्शनिकानां महत् कुतूहलं भवति स्म। एवं दृष्टिद्वयमवलम्ब्य सर्वेष्वप्यास्तिकेषु नास्तिकेषु च दर्शनेषु शब्दविषयिका मीमांसा प्रवृत्ता। मुख्यतया शब्दमेव विषयत्वेन गृहीत्वा प्रवृत्ते व्याकरणशास्त्रे तु तमधिकृत्य बहु

लिखितमिति स्वाभाविकमेतत् । दार्शनिकाः शाब्दिकाश्चैकस्यैव विद्वत्समाजस्याङ्गभूताः परस्परपरिचयवन्तो मुहुर्मुहुर्गोष्ठीषु विचारविनिमये कृताभ्यासाः परस्परप्रभावेण परप्रदर्शितदोषसमुद्धरणप्रयत्नेन च स्वस्वदर्शनस्य परिष्कारं विकासं चाकुर्वन्निति विशिष्य कथनं नार्हति । वाक्यपदीयस्य रचनायां प्रवृत्तस्य तत्रभवतो भर्तृहरेर्न केवलं श्रुतिषु मुनित्रयविरचितकृतिषु च प्रतिपादितानि वाग्विषयकाणि तत्त्वानि विदितान्यासन्, अपि तु सर्वतन्त्रस्वतन्त्राणां तेषां तत्तदास्तिकनास्तिकदर्शनाचार्यसमुद्भावितं शब्दविषयकं महन्मतवैचित्र्यमपि सुष्ठु परिचितमासीदिति वाक्यपदीयस्य स्वल्पपरिशीलनेनापि प्रतीयते । अतस्तेषां समक्षमिदमेव समयप्रभावानीतं कर्तव्यं समुपस्थितं यत् स्वकीयवैदिकपरम्परानुगुणाद्वैतित्वसंरक्षणपूर्वकं महाशाब्दिकमुनित्रयप्रतिष्ठापितसम्प्रदायानुसरणपुरःसरं यथासंभवं तत्तद्दर्शनानुकूल्येन, सत्यावश्यकत्वे दार्शनिकप्रसिद्धिं विहाय लोकप्रसिद्धपदार्थप्रक्रियासमाश्रयणेन च व्याकरणदर्शनगतपदार्थानां व्याख्यानमिति । विशदीकृतमिदं बहुशस्तत्रभवतो भर्तृहरेर्वैदुष्यस्य वैशिष्ट्यं वाक्यपदीयतृतीयकाण्डव्याख्याकारेण हेलाराजेन । तद्यथा तदीयजातिसमुद्देशव्याख्यायां दृश्यन्त इमानि वाक्यानि—( क ) "एवं स्वनिकायसिद्धाध्यासदर्शनाश्रयेण सार्वत्रिकी जातिपदार्थव्यवस्था दर्शिता", ( ख ) "एवं शब्दव्यापाराश्रयेण व्याप्तिरुपपादिता । अधुना वैशेषिकदृष्ट्याप्यर्थगतसमानधर्माश्रयेण जातिपदार्थव्याप्तिमाह", ( ग ) "तदेवं वैशेषिकदर्शनाश्रयेण जातिपदार्थव्याप्तिरुपपादिता । इदानीं विज्ञानवादेनापि पदार्थव्यवस्थामाह", ( घ ) "एवं व्यतिरिक्तोपाधिदर्शनमुपन्यस्याधुना स्वशक्तय एवोपाधय इत्यद्वैतदर्शनाश्रयेणापि प्राह", ( ङ ) "एवं यथादर्शनं जातिः शब्देन प्रतिपाद्यत इत्युपपादितम् । सा च नित्येति नित्यः शब्दार्थः" इति । एवमेव द्रव्यसमुद्देशव्याख्यागतमिदं वचनमवलोक्यताम्—"एवं दर्शनान्तराश्रयेणोद्दिष्टेष्वपि दर्शनभेदेषु स्वसिद्धान्ताश्रयेण द्रव्यपदार्थव्यवस्थां कर्तुमाह" इति । "सर्ववेदपारिषदं हीदं शास्त्रम्" इति भाष्यकारवचनस्य "सर्वपार्षदं हीदं शास्त्रमिति स्वल्पपरिवर्तनेन न केवलमद्वैतदृष्ट्या, अपि तु दर्शनान्तरदृष्ट्यापि वैयाकरणसिद्धान्तानुपपादयति तत्रभवान् भर्तृहरिः । यथोक्तं हेलाराजेन—"परमार्थदृष्ट्यात्र सर्वपार्षदत्वात् पुनरस्य शास्त्रस्य दर्शनान्तरोपन्यासः । एष च सर्वत्रैवास्य ग्रन्थकारस्याभिप्रायः" इति । "शब्दप्रमाणका वयम्, यच्छब्द आह तदस्माकं प्रमाणम्" इति भाष्यकारवचनद्योतिता—"वैयाकरणानां शब्दार्थोऽर्थः, न वस्त्वर्थोऽर्थः" इति दृष्टिस्तत्रभवता भर्तृहरिणावलम्बिता । एतद्दृष्टिद्वयसमाश्रयणेन शब्दार्थसम्बन्ध-जाति-द्रव्य-गुण-दिक्-साधन-क्रिया-काल-संख्या-पुरुष-लिङ्गादिव्याकरणदर्शनपदार्थानां विवेचने महद् वैशद्यमायातमिति वाक्यपदीयपरिशीलनेन स्पष्टं प्रतीयते । श्रीमद्भर्तृहरिपादैर्महाभाष्ये तत्र तत्र विप्रकीर्णानां व्याकरण-

दर्शनसंबन्धिनां तत्त्वानां संग्रहं कृत्वेदम्प्रथमतया तदेकविषयिकैका स्वतन्त्रा कृतिर्निबद्धा, यत्र स्वसमयावधि प्रादुर्भूतेषु तत्तद्दार्शनिकग्रन्थेषु प्रतिपादितानि शब्दविषयकाणि तत्त्वानि महता वैदुष्येण परीक्षितानि, स्वनिकायव्यवस्थया च लक्षितानीति तैः पूर्वसिद्धस्य ज्ञानराशेः स्वकृतौ सम्पूर्णतया सन्निवेशः कृतः, बहवश्च नवा अर्थास्तत्र संयोजिता इत्युभयथा श्रुतस्य गोपनं कृतम्।

एवमेकस्यैव दर्शनस्येतिहासे परीक्ष्यमाण इदं सिद्धं भवति यत् कालक्रमेण गुरुशिष्य-परम्परया प्रादुर्भवतां तद्दर्शनस्य प्रतिष्ठापकानां संवर्द्धकानां चाचार्याणां परस्परसंपर्कसंघर्षाभ्यामितर-दर्शनानुयायिभिश्च संपर्कसंघर्षाभ्यां पूर्वमसिद्धा अत एव नूतना मूलसिद्धान्तानुगुणाश्चार्थाः प्रादुर्भवन्ति, येन तद्दर्शनं नवीकृतमिव भवति, विद्यायाः संरक्षणं च संजायते। नवनवार्थप्रादुर्भाव एव श्रुतगोपनस्य लिङ्गम्, न केवलं परमावश्यकमपितु पूर्वसिद्धज्ञानराशेरात्मसात्करणम्। येन क्रमेण पुरा भारते विद्यायाः संरक्षणं वृद्धिश्च भवतः स्म, तेनैव क्रमेणाद्यापि भवितुमर्हति, अस्यैव क्रमस्य विद्यास्वरूपानुगुण्यात्। अद्यत्वे पुनरयं विशेषो यद् बहुभिः कारणैर्विशेषतः स्वातन्त्र्य-प्राप्त्याद्यास्माकं भारतीयानामिच्छतामनिच्छतां वा जगति समुपलभ्यमानाभिः सर्वाभिर्मनुष्य-जातिभिः सर्वैर्देशैः सर्वाभिः संस्कृतिभिः सर्वैश्च विद्याकेन्द्रैः सम्पर्कः संजातः। विद्याक्षेत्रेऽपि सम्पर्कोऽयं भवितुमर्हति। अस्मिन् सम्पर्के च बुद्धिपूर्वकं परिहृते विद्याया एव हानिर्भवेत्। श्रुतस्य गोपनविधौ यदस्य विश्वविद्यालयस्यानन्तरकरणीयं पदं तस्य सिद्धये जगति तत्र तत्र विकसद्भिर्दर्शनैर्विज्ञानैश्च सहात्रत्यविदुषां संपर्कसंस्थापनं परमावश्यकम्। यदा गतागतसौकर्यं नासीत् तदा संपर्कोऽपि न भवति स्म, यथा प्राचीनकालेषु। प्राचीनग्रीकसंस्कृतेः प्राचीनभारतीय-संस्कृतेश्च समसमयत्वेऽपि गतागतसौकर्याभावात् संपर्को विरल एवाभूत्। अद्यत्वे पुनर्यातायात-सौकर्यात् संपर्कः सुकरः। संस्कृतमहाविद्यालयेषु संस्कृतविश्वविद्यालयेषु च यानि प्राचीनानि दर्शनानि प्राचीना विद्याश्च परम्परागतसंस्कृतभाषानिबद्धवाङ्मयमवलम्ब्याधीयन्ते, तैर्दर्शनैस्ताभि-र्विद्याभिश्च समानानि दर्शनानि समानाश्च विद्यास्तेषु तेषु देशेषु ताभिस्ताभिर्भाषाभिरधीयन्ते विद्वद्भिः। भाषाभेदेऽपि विषयाः सदृशाः। सर्वेष्वप्येतेषु विद्याक्षेत्रेषु ज्ञानराशेर्वृद्धिर्भवति। संपर्कस्य बुद्धिपूर्वकं परिहारेण ये विद्वांसो विदेशेषु समानविद्याक्षेत्रेषु संभवन्तीं ज्ञानवृद्धिमुपेक्षन्ते, ते स्वयमेव स्वविद्यायाः संकोचं कुर्वन्ति। समानक्षेत्राणि कानीति चेत्, बहूनि सन्ति। कानि-चिदेवात्रोदाह्रियन्ते। तद्यथा—व्याकरण-भाषाविज्ञानयोः, मेटाफिजिक्स-वेदान्तदर्शनयोः, फिजिक्स-केमिस्ट्री-वैशेषिकदर्शनयोः, लॉजिक-नव्यन्याययोः, प्राचीनज्यौतिषाधुनिकास्ट्रानामीसंज्ञकविज्ञानयोः,

भारतीयगणिताधुनिकगणितयोः, पुराणेतिहासाधुनिकेतिहासयोः, आधुनिकचिकित्साशास्त्रायुर्वेदयोश्च समानविद्याक्षेत्रत्वमनायासेनाभ्युपगम्यम्। अन्यान्यपि बहूनि सन्ति।

यदिदमस्य विश्वविद्यालयस्य मुख्यलक्ष्यत्वेन स्वीकृतं श्रुतस्य गोपनं नाम, तस्य सिद्धौ समानविद्याक्षेत्रज्ञानं भृशमपेक्षितम्। तेनैवास्य विश्वविद्यालयस्य भविष्यदुन्मुखत्वं वैशिष्ट्यं च सिद्ध्येत्। काममत्र पाठ्यक्रमे केषाञ्चिदाधुनिकविषयाणां सन्निवेशः संजातः, परन्तु विदेशीयैः समानविद्याक्षेत्रैः सह वास्तविकः संबन्धोऽद्यापि न संजातः। अयं प्रस्तुतः सम्पर्कोऽस्माकं भारतीयानामेव हिताय भवेदिति तु न, सम्पर्कस्य द्विष्ठत्वाद् यैः समानविद्याक्षेत्रैः सहास्माकं सम्पर्को भवेत्तेषामपि तेन विद्यावृद्धिरवश्यं भविष्यति। अस्य तत्त्वस्यैकमुज्ज्वलमुदाहरणमस्माकं पुरतस्तिष्ठत्येव। क्रिस्तीयोनविंशयां शताब्द्यां पाश्चात्त्यविदुषां पाणिनीयव्याकरणपद्धत्या सह सम्पर्कः संजातः। अनेन सम्पर्केण तैराचार्यपाणिनेः संस्कृतशब्दानामन्वाख्यानक्रमः सम्यगवगतः। तस्य सौष्ठवेन वैज्ञानिकत्वेन च ते मुग्धा बभूवुः। तदा प्रभृति तत्साहाय्येन न केवलं संस्कृतभाषायाः, परन्तु जगति तत्र तत्रोपलभ्यमानानामन्यभाषाणां स्वरूपावबोधनम्, तद्गतशब्दानां पणिनिसम्मतया पद्धत्यान्वाख्यानम्, भाषाणां तुलनात्मिकया दृष्ट्याध्ययनम्, भाषामात्रस्य स्वरूपविवेचनमित्यादीनि भाषाविज्ञानान्तर्गतानि बहूनि कार्याणि पाश्चात्त्यदेशेषु सुष्ठुतरमनुष्ठीयन्ते। अनेन सम्पर्केण तेषु देशेषु भाषाविज्ञानं नवीकृतमिवाभूत्। तस्यामेव शताब्द्यां पाश्चात्त्यदेशीयानां भारतीयदर्शनैः सह सम्पर्क इदम्प्रथमतया संजातः, विशेषतो वेदान्तदर्शनेन। उपनिषदां ब्रह्मसूत्राणां शाङ्करभाष्यरामानुजभाष्ययोश्च ताभिस्ताभिः पाश्चात्त्यभाषाभिरनुवादोऽप्यभूत्। क्रमश इतरदर्शनग्रन्थानामप्यनुवादाध्ययनादिकं संजातम्। अद्य खलु तेषु देशेषु पाश्चात्त्यानां भारतीयानां च विदुषां परिश्रमेण जनानां भारतीयदर्शनज्ञानं वर्धते। अस्य परिणामस्य फलरूपेण तत्र दार्शनिकाः स्वकीयं पूर्वस्थितं भारतीयदर्शनानामज्ञानं दूरीकुर्वन्ति, भारतीयदर्शनैश्च कदाचित् प्रभाविता भवन्ति। जर्मनदार्शनिकस्य शोपनहवरस्योपनिषत्प्रभावितत्वं सुप्रसिद्धम्। अद्य खलु तेषु देशेषु योगाभ्यासे बहूनां शिक्षितानां जनानां रुचिर्दृश्यते। योगविषयका बहवो ग्रन्थाः पाश्चात्त्यैः स्वस्वभाषया निबद्धाः प्रतिवर्षं प्रकाश्यन्ते। योगाभ्याससौकर्यार्थं तत्र तत्राश्रमाणां स्थापनमपि श्रूयते। एवं भारतीयदर्शनैः सह सम्पर्केण पाश्चात्त्यसंस्कृतौ तत्र तत्र क्रमशः परिवर्तनमुपलक्ष्यते, पाश्चात्त्यदार्शनिकानां दृष्टौ वैदुष्ये च पूर्वस्थितसंकोचपरिहारेण गाम्भीर्यसंमिश्रा विशालता चायाति। भारतेऽपि प्राचीनपद्धत्या कृतविद्यानां दार्शनिकानां विदेशस्थसमानविद्याक्षेत्रैः सम्पर्केण संस्कृतौ वैदुष्ये च परिष्कारो भवितुमर्हति न वेत्यस्माभिर्विचारणीयम्। तत्तद्देशस्थानां दर्शनानां दार्शनिकानां विज्ञानानां

वैज्ञानिकानां च परस्परसंपर्कसंघर्षाभ्यामेव वैदुष्यस्य संस्करणसंवर्धनादिकं भवतीति भारतीयदर्शनानामितिहासविमर्शनाधुनिकविज्ञानवृद्धिक्रमपरीक्षणेन च निःसन्देहं प्रतीयते।

भारतीयदर्शनानां विदेशीयसमानविद्याक्षेत्रैः सह सम्पर्के सति तुलनात्मिका दृष्टिरवश्यमुदियादध्ययने परीक्षणे च। सा च दृष्टिरनया परिषदाप्यनुमोद्यत इति "अभिनवानां प्राच्यप्रतीच्यदर्शनानां तुलनात्मकं समीक्षात्मकं चाध्ययनम्" इति निर्दिष्टं परिषदस्तृतीयमुद्देश्यं निबन्धनामावलौ "प्राच्यप्रतीच्यदर्शनसमीक्षा"-नामकं निबन्धवर्गं चोल्लिखितं दृष्ट्वानुमीयते। तुलनात्मकाध्ययनस्य सन्ति केचिद् गुणाः। द्वयोर्वस्तुनोः परस्परतुलनया द्वयोरपि स्वरूपं वैशद्येन प्रतीयते। तयोः साधर्म्यवैधर्म्यपरिज्ञानेन तयोर्गुणदोषा अपि स्पष्टा भवन्ति। तुलनात्मिकया दृष्ट्याधीयानस्य वैदुष्ये विशालता समायाति, हृदये चौदार्यं प्रादुर्भवति। गुणदोषौ सर्वत्रोपलभ्येते इत्यवगत्य स कुत्रापि द्वेषं न करोति, तस्य सहिष्णुता वर्धते। अतस्तुलनात्मिका दृष्टिरध्ययनाङ्गत्वेन सर्वत्र स्वीक्रियते।

दृष्टिरियं सर्वेष्वपि विषयेषु सर्वेष्वपि च क्षेत्रेषु प्रयोक्तुं शक्यते प्रयुज्यते च। भाषाविज्ञानक्षेत्रेऽस्या दृष्टेः साफल्येन प्रयोगः सुप्रसिद्धः। योऽयं जगति व्यवह्रियमाणानां भाषाणामार्यभाषापरिवारः, सामीभाषापरिवारः, हामीभाषापरिवार इत्यादिभाषापरिवारैर्विभागः स खलु तुलनात्मिकया दृष्ट्याध्ययनस्यैव फलम्। यदिदं सामान्यभाषाविज्ञानमिति भाषाविज्ञानान्तर्गतमङ्गविज्ञानम्, तदपि तुलनात्मकाध्ययनस्यैव फलम्। अस्मिन् ह्यङ्गविज्ञाने भाषामात्रस्य स्वरूपनिरूपणे प्रयत्नः क्रियते। यदस्य प्रयत्नस्य सिद्धिः संजाता तत्रायमेव हेतुर्यत् प्रथमं तावद् विद्वद्भिर्बह्वीनां भाषाणामनया दृष्ट्याध्ययनं कृत्वा तासां विस्तरेण वर्णनं कृतम्। एतेषां विस्तृतानां वर्णनानां परीक्षणेन विद्वद्भिर्भाषामात्रविषयकाणि कानिचित्तत्त्वानि निष्कृष्टानि, येषां समूह एव सामान्यभाषाविज्ञानमित्युच्यते। अद्यत्वेऽस्याङ्गविज्ञानस्य प्रथममध्ययनं कृत्वैव भाषाविशेषाध्ययने प्रवर्तन्ते विद्वांसो विद्यार्थिनश्च पाश्चात्त्यदेशेषु। दर्शनानां क्षेत्रे पुनः स्थितिरियमधुना न संजाता। जगति प्रसिद्धानां भिन्नानां दर्शनानां वर्णनानि तु तैस्तैर्विद्वद्भिः कृतानि क्रियन्ते च। कुत्रचित् केषाञ्चिद् दर्शनानां तुलनात्मिकया दृष्ट्याऽध्ययनमपि संजातम्। परन्तु भाषाक्षेत्रे परिस्थितिरन्या दर्शनक्षेत्रे च परिस्थितिरन्या। अतः फलेऽपि महान् भेदः। भिन्नदेशेषु विराजमानानां दर्शनानां कदाचिदंशतः सादृश्यमुपलक्ष्यते, परं न तत् कस्यचिद् व्यापकस्य तत्त्वस्य द्योतकं भवति। प्रायेण सादृश्यमिदं यादृच्छिकम्। सर्वेषामपि मनुष्यबुद्धिप्रभवत्वाद् मनुष्यबुद्धेश्च सर्वत्रैकस्वरूपत्वात्तस्याः सृष्टिषु कदाचित्

सादृश्यमुपलभ्यत इति स्वाभाविकमेतत्। न तेन कश्चिद् दार्शनिको निष्कर्षः समुदेति। स्रष्टॄणां देशकालजातिधर्मवर्णादिभेदात् तत्स्वष्टिगतभेदानामेव प्राचुर्यात्। यथा भाषाणां तुलनात्मिकया दृष्ट्या परीक्षणेन भाषापरिवारप्रतिष्ठापनं सामान्यभाषाविकासश्चाभवताम्, तथा दर्शनानां परिवारविभागो वा सामान्यदर्शनविकासो वा न श्रूयते। यदिदं तुलनात्मिकया दृष्ट्याऽध्ययनेन विषयवैशद्यं भवतीति मया पूर्वं प्रतिपादितम्, तत् खलु सरसं स्पृहणीयं बुद्धिविवर्धनं च। परन्तु न तस्य किञ्चिद् दार्शनिकं महत्त्वम्। अध्ययनस्योपायमात्रं तत्। अतश्चाध्ययनसौकर्यसाधकसामग्र्यन्तर्गतम्। इदं त्वस्माभिः स्मरणीयं यद् दर्शनानां तुलनात्मकमध्ययनमितः कतिपयवर्षेभ्यः प्रागेवाविरभवत्। अतस्तदद्यापि शैशवावस्थायां वर्तते। तस्य विकासोऽवश्यं भवितुमर्हति। अद्यावधि यद् दर्शनानां तुलनात्मकमध्ययनं संजातम्, तत् खलु पाश्चात्त्यैर्भारतीयैर्वा विद्वद्भिः प्राच्यप्रतीच्यदर्शनविद्भिरनुष्ठितम्। तत्र भारतीयेषु विद्वत्सु प्राचीनपद्धत्या गुरुमुखादधीतविद्याः प्रायेणेदृशे तुलनात्मकेऽध्ययने न प्रवर्तन्ते, तेषां प्रायेण पाश्चात्त्यभाषानभिज्ञत्वात्, तद्भाषानिबद्धदर्शनग्रन्थपरिशीलनाशक्तत्वाच्च। ईदृशे कार्ये त एव विद्वांसः पटवो भवन्ति, ये बहुभाषाभिज्ञत्वात् प्राच्यप्रतीच्यदर्शनानां मूलग्रन्थाननुवादपरिहारेण साक्षादेव परिशीलयितुं समर्था भवन्ति। ईदृशा विद्वांसस्त्वस्मिन् समये स्वल्पसंख्याका एव भवन्ति, अथवाविद्यमानप्राया एव। परन्तु सजीकरणमावश्यकम्। सन्ति कानिचित् कार्याणि यानि तादृशैरेव विद्वद्भिः सम्पादयितुं शक्यन्ते। तेषु पूर्वोक्तं तुलनात्मकमध्ययनमेकम्। एकमपरमप्यधिकृत्य किञ्चिदुक्त्वा भाषणमिदं समाप्तिं नेष्यामि।

भारतीयदर्शनानां ताभिस्ताभिः पाश्चात्त्यभाषाभिः प्रतिपादनमद्यत्वे सर्वत्र क्रियते। तत्र बहुभिर्भारतीयविद्वद्भिरप्याङ्गलभाषाभिज्ञैर्महान् सफलः परिश्रमः क्रियते। अस्यैव मार्गस्य विपर्ययेण प्राचीनानामाधुनिकानां च दर्शनानां संस्कृतभाषया गाम्भीर्येण विस्तरतश्च प्रतिपादनमद्यावधि न संजातम्। जानाम्यहं यत् केचिद् बालोपयोगिनो बाह्यस्थूलतत्त्वमात्रस्पर्शिनः पाश्चात्त्यदर्शनैकदेशविषयका ग्रन्थाः कैश्चिदुत्साहिभिर्विरचिता इति। प्रोत्साहनार्होऽयं तेषां परिश्रमः, परन्तु न तेन लक्ष्यसिद्धिर्भवेत्। यादृशं कार्यं मयात्राभिप्रेतं तादृशं कार्यं तु केवलेनोत्साहेन न सिद्ध्यति। पूर्वोक्तप्रकारेण भारतीयदर्शनप्रतिपादकानां संस्कृतभाषया निबद्धानां मूलग्रन्थानां वश्यता, तथैव पाश्चात्त्यदर्शनग्रन्थानां मूलत एव साक्षात् परिचय इत्युभयं यस्य विदुषोऽस्ति, स उत्साहसमन्वितः सन्नस्य कार्यस्य सम्पादने योग्यो भवेदिति मे प्रतिभाति। संस्कृतभाषा खल्वतीव परिमार्जिता सकलविधानामपि तत्त्वानां विशेषत आध्यात्मिकानां तत्त्वानामभिव्यञ्जनेऽतीव समुचितेति जानन्त्येव

विद्वांसः । तथापि कर्मेदं महाश्रमसाध्यम् । विदेशीयसंस्कृत्यन्तर्गततत्त्वानामभिव्यक्तौ कदाचिदनुरूपसंस्कृतशब्दोपलम्भो दुःसाध्यो भवेद् यथा भारतीयसंस्कृत्यन्तर्भूततत्त्वाभिव्यक्तौ विकसितास्वपि पाश्चात्त्यभाषासु कदाचिदनुरूपशब्दाभावो लेखकैरनुभूयते । यत्नोऽयं सर्वथा विधानार्हः । अद्वैततत्त्वानां तर्करहितया गौरवान्वितया वाचोपनिषत्सु प्रतिपादितानां शाङ्करभाष्यादिग्रन्थेषु प्रसन्नगम्भीरया तर्कसमन्वितया भाषयाभिव्यक्त्या महद् वैशिष्ट्यं समुद्भूतम्, तेषामेव पुनरद्वैतसिद्ध्यादिग्रन्थेषु नव्यन्यायपारिभाषिकशब्दप्रयोगसाहाय्येन ज्ञानानां साधर्म्यवैधर्म्यविवेचनशैलीसमाश्रयणेन कृतेन प्रतिपादनेन वैशिष्ट्यातिशयः समजनीति पूर्वमेव निर्दिष्टं मया । एकस्या एव संस्कृतेरेकस्यैव सम्प्रदायस्यान्तर्यदीयं स्थितिः, का कथा विदेशीयसंस्कृत्यङ्गभूततत्त्वप्रतिपादनप्रयत्नस्य ? एवं स्थितेऽपि प्रयत्नोऽयं विधानार्हः । यतस्तेन प्रतिपिपादयिष्यमाणदर्शनस्य गुणदोषाः स्पष्टा भवेयुः, संस्कृतभाषाया अपि बलाबले स्पष्टे भविष्यतः, अन्ततश्च दोषाणामबलस्य च क्रमशो निराकरणं भविष्यति, संस्कृतबद्धदार्शनिकसाहित्यस्य च नवोत्थानं भविष्यति, अस्मिन् विश्वविद्यालये चाध्ययनशैल्या अतीतरक्षणसहितं भविष्यदुन्मुखत्वमपि सिद्ध्येत् । इत्येतावदेव ममास्मिन्नवसरे वक्तव्यमस्ति । साभापत्यपदाधिरोहणार्थमाज्ञप्तस्य मे मनसि ये केचिद् विचाराः प्रादुरभवन्, ते मया विदुषां पुरतः समुपस्थापिताः । तेषामुपादेयत्वे हेयत्वे वा सदस्या एव प्रमाणम् ।

दर्शनपरिषदधिकारिभिर्विद्वज्जनसम्पर्कस्य मेऽवसरो दत्तः । तेन बाढमनुगृहीतोऽस्मि । तान् प्रति च मया भूयो भूयः कृतज्ञता प्रकटीक्रियते । अन्ततोऽहं काशीविश्वनाथं प्रार्थये यदस्याः परिषदोऽस्य विश्वविद्यालयस्य चोत्तरोत्तराभिवृद्धिः स्यादिति शम् ॥



# पाश्चात्त्यदर्शनदिग्दर्शनम्

डा० सातकड़िमुखोपाध्यायः, नालन्दापालिशोधसंस्थानसञ्चालकः।

श्रीरामकृष्णाङ्घ्रिसरोजयुग्मे
पीयूषमत्युत्तममस्त्यदभ्रम्।
तुच्छेन्द्रियार्थान् प्रविहाय तस्मिन्
गाढं पिबन् मज्जतु चित्तभृङ्गः॥
सत्यानन्दं गुरुं नत्वा ध्यात्वा तत्पादपङ्कजम्।
प्रवर्त्ते दुःखसाध्येऽर्थे स मामुत्तारयिष्यति॥
विद्यागुर्वोः पदद्वन्द्वे श्रीयोगेन्द्रसुरेन्द्रयोः।
नामं नामं समारिप्से शास्त्रार्थस्यानुशीलनम्॥
मातः सरस्वति पुनर्पुनरेव नत्वा
बद्धाञ्जलिश्चरणयोर्विनिवेदयामि।
वाक्चेतसोर्मम तथा भव सावधाना
काश्यां न विज्ञसदसि स्खलतो यथैते॥

अयि भो विपश्चिन्मूर्धन्याः शास्त्ररहस्यपारदृश्वानो विदितवेदितव्याः सर्वतन्त्रापरतन्त्राः प्रवक्तारः, प्रेष्ठा अध्येतारश्च !

अत्रभवतां पुरतो नवीनमविदितचरं वस्तु प्रख्याप्य आत्मपटिमानं प्रतिष्ठापयितुं समीहन्तां नाम ये केचन, वयं तु शास्त्रैकदेशमात्रं परिचिन्वानाः कमपि सिद्धान्तं भवतां सविधे प्रतिपादयितुकामा जिह्रीमः। नायं कृतको विनयो व्याजो वा प्रादुष्क्रियते, परं वार्द्धके समुपस्थितः स्वकीयमज्ञानविस्तारमनुभवन् वाचंयमतामवलम्बितुं कामये। तथापि परतन्त्रोऽयं जनः। पण्डितप्रकाण्डानां विद्वत्सदसि लब्धकीर्तीनां श्रीमतां मित्रवराणां जगन्नाथोपाध्यायानां तथाऽस्मद्भूतपूर्वान्तेवासिनां लक्ष्मीनारायणत्रिवेदिमहाभागानां स्नेहातिशयेनाध्येषणानुबन्धेन चास्वैरीकृतः किञ्चिदद्याभिरूपभूयिष्ठायामस्यां परिषदि विनिवेदयामि। महान् खलु भारो मदीये शिरसि समारोपितो भवद्भिः। अनिच्छन्नपि परिजिहीर्षन्नप्यधिकारिषु गौरवसन्दानितहृदयः समुदाचारं परिपिपालयिषुः किञ्चिदुपस्थापयामि।

भवन्तः खलु प्राच्यदर्शनपारङ्गताः, प्रतीच्यदर्शननिष्णाताश्च बहवोऽत्र समवेता भवेयुः। विदितपूर्वमपि वस्त्वन्यस्य वदनाद् विनिःसृतं नावधीरयन्ति साधवः। प्रतीच्यदार्शनिकानां ग्रन्थाः प्रायेण तद्देशीयभाषासु निबद्धाः। तेषां च देववाण्यां छाया नाद्यापि विरचिता। एतस्मादेव हेतोस्तत्तन्मतपरिचयसम्पादनेऽलब्धावकाशाः प्राचीनमार्गावलम्बिनो बृहस्पतिकल्पा अपि विद्वांसोऽर्वाचीनैः पाश्चात्त्यदर्शनानुरागिभिरवधीर्यमाणाः प्राचीनमार्गपक्षपातिनां हृदयं परिदुन्वन्ति।

यत् किमपि वदन्तु निरङ्कुशा विद्वस्मन्या भारतीयदर्शनेष्वकृतपरिश्रमाः, दृढतरस्त्वस्माकं सम्प्रत्ययो यत्पाश्चात्त्यानां मतानि संस्कृतभाषाऽभिज्ञानां तत्परिचितभाषयोपपादितानि भवेयुश्चेत्, नूनं तेषामूहापोहसंविधाने तेऽलं भविष्यन्तीति। स्वर्गता अस्मद्गुरुवरा महामहोपाध्यायडाक्टरश्रीयोगेन्द्रनाथपूजनीयश्रीचरणाः पाश्चात्त्यदार्शनिकमतानि तदुपष्टम्भकयुक्तिपरिबृंहितानि समाकर्ण्य क्षणं तूष्णींभूय तेषां हेयतोपादेयते क्रियासमभिहारेण प्रत्यपीपदन्। नहि विदुषां किञ्चिदगोचरो नाम। परन्तु पाश्चात्त्यानां मनीषिणां मतान्युत्तानदृष्टिप्रसूतानीति मतिरपि न श्रद्धातुमर्हा। विशेषतस्तु जडविज्ञानगवेषणयाविष्कृतानां तत्त्वानां समाकलनेन तेषां दार्शनिकी चिन्ता विषयबाहुल्येन मांसलीकृता न खलु केनचिदप्युपेक्षया खलीकर्तव्या, यथा खलु तैरपि प्राचीनानां सिद्धान्ताः। विषयाणां बाहुल्यात् तत इतो विप्रकीर्णानां केषाञ्चन मूलभूतानां प्रमेयाणां विचारः प्रस्तोष्यते। विविदिषूणां विविदिषोत्तम्भनार्थ एष संरम्भो मदीयो न बुद्धिव्युत्पत्तिमान्द्यकृतप्रतिपादनाकौशलेनावज्ञातव्यो विशेषव्युत्पित्सुभिः।

योनकदेशे दार्शनिकी चिन्ता इदम्प्रथमतया पाश्चात्त्यानां मध्ये प्रादुरभूत्। बहवः खलु मनीषिणो जगद्रहस्योद्भेदने व्याप्रियन्त। तेषु प्लेटोमहोदयेन स्वगुरु-सोक्रेटिस्-नामकदार्शनिकानां मतानि संवादापदेशेन निबद्धानि। आङ्गलभाषायां तेषां छाया बहुशः सम्पादिताः, तेषां समीक्षा परीक्षा च आभीक्ष्ण्येन बहुभिराधुनिकैर्विद्वद्भिर्विहिता तन्मतव्युत्पत्तौ साहायकमाचरति। प्लेटोमहाभागो जन्मान्तरवादमात्मनो नित्यतां च महता संरम्भेण प्रत्यपीपदत्। बहवः खलु विद्वांसोऽस्मिन् वादे भारतीयसिद्धान्तस्य प्रतिबिम्बनमुत्प्रेक्षन्ते। आत्मनोऽमरत्वप्रतिपादिका युक्तिरन्यादृशी योपन्यस्ता सा प्राच्यदार्शनिकानां विचारपदवीमधिरोढुमर्हति। तदनन्तरमरिष्टतल-महोदयेनापरैव विचारसरणिराविष्कृता। तदुपज्ञं तर्कशास्त्रमद्यापि विद्यार्थिनामध्येतव्यग्रन्थेषु प्राग्भारमाबिभर्ति। सोऽप्यात्मनोऽमरत्वमभ्युपैति। अनेके मनीषिणस्तेषां मतानामुपपादने चोपबृंहणे च प्रायतिषत। भूयांसो ग्रन्था विलोपं गताः। तथाप्येतेषां सिद्धान्तान् परम्परागतान् खिष्टधर्मावलम्बिनः स्वधर्मानुकूल्येन व्याचचक्षिरे। अनन्तरं फरासिदेशे डेकार्तनामा महादार्शनिकः प्रादुरासीत्।

तस्य खलु मनीषिणो दार्शनिकी चिन्ता स्वातन्त्र्येण तत्त्वनिर्णयार्थं प्रवृत्ताभूत्। सर्वं खलु मतं संशयपदवीमानीय परीक्षितम्। यत्किमपि संशयविषयीभवति, विपक्षबाधकप्रमाणेन च निश्चेतुमशक्यं तदसत्यतया परिहातव्यम्। परन्तु सर्वं न सांशयिकं कर्तुं शक्यम्, अन्ततोगत्वा संशयस्य प्रामाणिकत्वोपगमात्। निश्चयं विना संशयः स्वाङ्गं धारयितुं नालं भवति। एवं संशयं पुरस्कृत्य दार्शनिकतत्त्वनिर्णयाय नवीनमार्गः प्राकाशि। अस्य मतस्य संवादो न्यायकुसुमाञ्जलावुपलभ्यते। किञ्च, संशयो विचारस्य प्राक्तनमङ्गमिति मीमांसकानां सिद्धान्तः—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्॥

इति वाक्येनावदातीकृतः। यदसंदिग्धं न तत्प्रेक्षावतां प्रतिपित्सागोचर इति भामतीनिबन्धे प्रथममुपन्यस्तम्।

स्पिनोजा-नामकदार्शनिकस्य मतं भारतीयदर्शनेन बहुधा साम्यमाविष्करोति। लाइब्नीज-नामकः शर्मण्यदेशवास्तव्यो महाविद्वान् गणितशास्त्रे दर्शने च तुल्यवत्प्रगल्भमानो बहुजीववादं बाह्यार्थानामसद्भावं च प्राचकटत्। सांख्यदर्शनेन जैनदर्शनेन च साम्यं वैषम्यं च प्रदर्शयन्नयं दार्शनिकसिद्धान्तो विदुषामालोचनमर्हति। इदं तु पाश्चात्त्यदार्शनिकानां लाघवाय गौरवाय वा समपद्यत यत्कस्यापि दार्शनिकस्य मतं शिष्यप्रशिष्यसम्प्रदायाविच्छेदेन परिपोषपराकाष्ठां नीतम्। प्रायेण स्वतन्त्रप्रज्ञाः पूर्वजानां मतखण्डने स्वबुद्धिवैभवमुपायुञ्जत। भारतवर्षे दार्शनिकप्रस्थानस्य गतिस्तु विलक्षणासीत्। सम्प्रदायाविच्छेदेन पूर्वाचार्यमतं प्रतिवादिदूषणानि निरस्यद्भिराचार्यैर्दृढभूमिकायां संस्थापितम्। अनेन हेतुना न्यायादिप्रस्थानानि परिपूर्णतां प्रापितान्यद्यापि विदुषां निवहैर्दीर्घकालनैरन्तर्यसत्कारैरासेव्यन्ते।

इङ्गलैण्डे बर्कले-नाम्ना दार्शनिकेन विज्ञानवादस्य प्रतिष्ठा समपादि। अनन्तरीया दार्शनिकास्तन्मतखण्डने व्यापृता अभूवन्, न च तस्य सम्प्रदायः समजनि। यथा भारते वर्षे बौद्धविज्ञानवादिनां प्रस्थानं दृढीकृतं न तथा पाश्चात्त्ये। ह्यूमनाम्ना दार्शनिकेन बौद्धविज्ञानवादस्य प्रतिबिम्बसदृशं मतं ससंरम्भं प्रतिपादितम्। तेन खलु कार्यकारणभावस्यायौक्तिकत्वं प्रत्यपादि, नित्यस्य स्थायिन आत्मनोऽस्तित्वमपाकृतम्, जगन्निर्मातुरीश्वरस्याप्रामाणिकत्वं चोदघोषि। अनुमानस्य प्रामाण्यं च व्याप्तिज्ञानस्यासंभवित्वमुपपाद्य निराकारि। बौद्धमतस्यावबोधने एतदीयं मतं हस्तालम्बं वितरति। सिद्धान्तानां संवादा मनुष्यबुद्धेः साजात्यं प्रमाणयन्ति, विसं-

वादाश्च पुरुषमतिवैश्वरूप्यमपि प्रदर्शयन्ति। आधुनिकपाश्चात्त्यदार्शनिकमतस्य प्रजापतिरूपः कान्तनामा शर्मण्यदार्शनिकः समेषां मनीषिणां पूजास्पदमिति न कोऽपि संशयः। यद्यपि तन्मतस्य दार्ढ्यसम्पादने प्रयासो विरलप्रायः पाश्चात्त्यदार्शनिकेषु दरीदृश्यते, तथापि तदीयचिन्ताया गाम्भीर्यमनपह्नवनीयमेव। यदि भारतीयपद्धतिमनुसृत्य तन्मतस्यावदातीकरणे प्रयत्नपरम्पराऽघटिष्यत तदास्य दार्शनिकस्य मतबोधने एतादृशं काठिन्यं नोपाजनिष्यत। तदीया दुर्बोधा भाषा, विभ्रमा प्रतिपादनशैली, दुरधिगमा उपपादनपरिपाटी च तन्मतबोधे महान्तं प्रतिबन्धमाचरन्ति। यद्यपि तस्य व्याख्यातारः पश्चषास्तन्मतव्युत्पादने प्रयासमङ्गीकुर्वाणा दृश्यन्ते, तथापि न तेषामेकवाक्यता दृष्टिगोचरीभवति।

कान्तमहोदयस्य मतं विज्ञानवादं विरुणद्धि, नाप्ययं सांशयिकानां मतमनुगृह्णाति। अथापि बाह्यं वस्तुजातं सद्रूपं मन्यमानोऽपि न प्रत्यक्षज्ञानगोचरतामस्याभ्युपगच्छति। सामान्यं नित्यं च वस्तु, सम्बन्धश्च परस्परं प्रतीयमानोऽपि नैते ज्ञानस्य विषयाः, अपि तु विषयिणो ज्ञानस्य धर्मा एते। सर्वं बाह्यं वस्तुजातं देशाधिकरणं प्रतीयते। सर्वं चोत्पद्यमानं कार्यं बहिरन्तश्च कालाश्रितत्वेनोपलब्धिगोचरो भवति। तथापि न देशकालौ ज्ञातृनिरपेक्षौ वस्तुसन्तौ संभवतः, तयोर्नित्यत्वात्, प्रतिस्वमेकव्यक्तित्वाच्च। अत्रास्य दार्शनिकस्य वैशेषिकमतात् प्रथीयान् भेदः। नित्यं विभु वस्तु न सांव्यावहारिकप्रत्ययस्य विषयो भवितुमर्हतीति द्रढीयान् सम्प्रत्ययः। द्रव्यगुणादयः पदार्था ज्ञानस्य विषयावगाहने प्रकारीभूता विषयिणो धर्मा न विषयस्य। मतस्यास्य सौत्रान्तिकमतेन साम्यमुद्भटमिव प्रतिभाति। एतेऽपि बौद्धदार्शनिका द्रव्यादिपदार्थजातं कल्पनाप्रसूतमित्यातिष्ठन्ते। क्षणभङ्गवादस्तु न कण्ठरवेण कुत्राप्यनेन प्रतिपादितः, तथापि नित्यपदार्थापह्नवसामर्थ्यात् शक्यावसायः। कार्यकारणभावोऽपि विकल्पमात्रप्रसूत इत्युच्यमानं धर्मकीर्तिमतेन साजात्यं प्रकटयति। निरङ्कुशया युक्त्येश्वरास्तित्वम्, पारलौकिकी जीवात्मनः स्थितिः, नित्यस्य जीवात्मनः सद्भावश्च न शक्योपपादनः। परन्तु शुभाशुभयोर्विवेकबुद्धिः सर्वाभिभाविन्यध्यात्मं स्फुरद्रूपा शुभाशुभफलदातारमन्तरेण न शक्या प्रतिपत्तुमित्यर्थापत्तिप्रमाणेन तानि साधयितुमयं प्रयतते। दुःखस्थानमेतद् यदस्य दार्शनिकस्य ग्रन्था न प्राचीनायां वाऽर्वाचीनायां वा भारतीयभाषायामनूदिताः। येऽपि पाश्चात्त्यदर्शनशास्त्राध्यापकवृत्तिमङ्गीकुर्वन्ति, तेऽपि समयाभावात् कार्यान्तरव्यासङ्गाद् वा एतेषां ग्रन्थानां सुबोधतामापादयितुं न समीहन्ते।

प्रतीच्या दार्शनिकी चिन्ता वैज्ञानिकगवेषणाप्रकाशितानि तत्त्वान्यवलम्ब्य दृष्टान्तबाहुल्येन समृद्धिं प्रापिता। एतेषां दार्शनिकग्रन्थानामध्ययनाध्यापने यदि देववाण्यां प्रवर्तिते भवेताम्,

आस्माकी चिन्ताऽपि तदा दृष्टान्तसम्पदा गरिमाणं बिभृयात्। न चैकदेशदर्शिताभिमानस्तत्त्वजिज्ञासुभिः परिपोषणीयः। यदि नाम पाश्चात्त्यदेशीया दार्शनिका भारतीयदर्शनस्य विचारप्रणालीं परिचिनुयुः, तदा तेषामपि चिन्ता समधिकबलाधानेन समेधिता भवेत्। अद्यत्वे प्राच्यानां प्रतीच्यानां च परीक्षकाणां तदितराणां च मिथः सम्मेलनं संघटतेतराम्। पुरा देशान्तरगमने महान् प्रतिबन्ध आसीत्, अधुना तु न सरित्समुद्रपर्वतादिकं प्रतिबन्धकायते। परस्परञ्च मानवानां भिन्नभिन्नभाषाभाषिणां भिन्नभिन्नाचारपरिपालकानामभ्यन्तरिन्द्रियं नो तथा भिद्यते यथा बहिराकृतिः। सारस्वतसाधनञ्च सम्भूयसमुत्थान आनुकूल्यं विदधीत। न चात्रात्मोत्कर्षाभिमानेनापरापकर्षबुद्ध्या वा प्रत्यवस्थेयम्। मनुष्याणां वर्णाश्रमाचारादिव्यवस्थाभेदेन विलक्षणानामपि हार्दिकमैक्यं नाशक्यसम्पादनम्।

प्रमोदायैतद्भारतीयानां यत्तेषां वेदादिशास्त्राणामनुवादमुखेन प्रतीच्यविद्यामन्दिरेषु प्रचारणं कृतमासीत्। तेनैव चाभ्युपायेन प्रतीच्या विद्वांसो भारतीयान् सत्कारपूर्वकमसभाजयन्त। परन्तु न्यायादिशास्त्राणां प्रतीच्यभाषया प्रतिपादनं न पुष्कलतां बिभर्ति। अतो यथा वाणिज्ये परस्परद्रव्यविनिमयेन सर्वेषां समृद्धिः समपादि, तथा सारस्वतसम्पदां विनिमयः क्रियासमभिहारेण सम्पादनीयः।

यथा खलु भारतीयदर्शनप्रस्थानेषु भूतचैतन्यवादो लौकायतिकानाम्, जडचैतन्यभेदेन द्वैतवादः, सेश्वरदर्शनम्, निरीश्वरदर्शनम्, विशिष्टाद्वैतवादः, बौद्धप्रस्थानेषु क्षणिकविज्ञानवादः, क्षणभङ्गवादः, प्रत्यक्षबाह्यास्तित्ववादः, अनुमेयबाह्यास्तित्ववादः, एवमन्येऽपि दार्शनिकप्रवादा अहमहमिकया प्रादुर्बभूवुः, तथैव पाश्चात्त्यदार्शनिकानां प्रवादानां नाना प्रस्थानभेदाः प्रायेण भारतीयदर्शनप्रस्थानप्रतिरूपका दरीदृश्यन्ते। सर्वथा साम्यं यद्यपि न दृश्यते, तथाप्येतेषां मतभेदानां समुत्थानं तत्रत्यानामपि दार्शनिकचिन्तावैश्वरूप्यं तत्त्वजिज्ञासूनामेकतो विस्मयम्, अन्यतो विभ्रमं च जनयितुं प्रभवति। "नाऽसौ मुनिर्यस्य मतं न भिन्नम्" इत्याभाणकस्तत्रापि सुप्रयोजः।

पाश्चात्त्यदार्शनिकचिन्ताप्रवाहेऽयं खलु स्थवीयान् प्रतिविशेषो भारतीयदार्शनिकचिन्ताप्रवाहादुपलक्ष्यतेतराम्। मनोविज्ञानम्, (Psychology), नीतिविज्ञानम् (Ethics), तथा समाजतत्त्वविज्ञानं (Sociology) पृथक्पृथक्प्रस्थानतया तत्राविर्भूतानि। मनोविज्ञाने वैज्ञानिकीं शैलीमवलम्ब्योच्चावचानि तत्त्वानि प्रादुष्कृतानि दृश्यन्ते। नीतिविज्ञाने च नैकविधानि

मतानि समुत्थापितानि । किं तावत्कर्तव्यम् ? किं वा कर्तव्यताप्रयोजकम् ? को वा पुरुषार्थः ? कस्य वाचारस्य सन्नीतिप्रभवत्वम् ? कस्य वा तदितरत्वम् ? किं वा पापम् ? किं वा पुण्यम् ? किं वा तयोस्तत्त्वे विनिगमकं प्रमाणम् ? इत्यादयो विषयाः प्रतीच्यनीतिशास्त्रेषु विचार्यन्ते । एतेषु शास्त्रेष्वस्मदीयानां प्राचीनविद्यापरम्परापरिपालनपरायणानामिमे विचारभेदास्तथा सिद्धान्तभेदा यदि परिचायिता भवेयुः, तदास्माकं मनीषा चतुरस्रतां गमिष्यतीत्युत्प्रेक्षामहे ।

प्रमाणशास्त्रे ( Epistemoeogy ) अपि पाश्चात्त्यविदुषां नानाविधा विचाराः प्राच्यदर्शननिष्णातानां विदुषां नापरिशीलनीयाः । तत्रापि केवलं परिभाषाभेदेन स्वतःप्रामाण्यं परतःप्रामाण्यमित्यादिविषयजातमधिकृत्य मतभेदाः परिस्फुरद्रूपा आविरभूवन् । प्राच्यमतैः साकं तेषां साम्यं वैषम्यं च यद्यनुशीलितं स्यात् तदैतदुभयेषामपि बुद्धिसम्पदं परिपुष्णीयादित्यपि निवेदयन्न जिह्रेमि । पुनश्च पाश्चात्यानां राजधर्ममधिकृत्य राष्ट्राभ्युदयमुद्दिश्य जनानां च कल्याणं वार्तमानिकमायतिकं च कथङ्कारं सौष्ठवेन सम्पादनीयम् ? कीदृशो वा धनिकश्रमिकाणां स्वार्थसमन्वयः शक्यसम्पाद्यनः ? इत्यादि विषयजातं महता संरम्भेण प्रतीच्यैर्विचारितम् । एतत्प्रमेयजातमिदानीन्तनीं भाविनीं च सामाजिकव्यवस्थां समाकलय्य समाजकल्याणं सम्पिपादयिषुभिः प्रेक्षणीयं संवृत्तम् ।

अद्यत्वे रूसचीनादिदेशेषु साम्यवादच्छद्मना लोकायतसिद्धान्ता युक्तिभेदैः सत्तर्कैः कुतर्कैश्च जनतायाः कल्याणसाधन एकमेवाद्वितीयं साधनमिति राष्ट्राधिकारिभिर्महता कण्ठगर्जनेन जोघुष्यते । एतन्मतावलम्बिनो जन्मान्तरं नाभ्युपयन्ति, परलोकास्तित्वमुपहासेन निराकुर्वन्ति, ईश्वरास्तित्वं धर्मकञ्चुकानां विप्रलम्भकानां स्वकपोलकल्पितमिति विपुलेनाडम्बरेण प्रतिपादयन्ति । धनिकानामुच्छेदसाधनेनैव दरिद्राणां दारिद्र्यावसानं शक्यक्रियमिति मतं सर्वत्र दरिद्रेभ्यो रोचतेतराम् । हिंसैव एतेषां प्रधानतयोपजीव्या, बलात्कारेण सर्वेषां धर्माणामवसादनं कर्तव्यमिति हि तेषामप्रच्यावनीयो राद्धान्तः । आशङ्कास्पदमेतदतितरां समापन्नं स्वधर्मपरायणानां भारतीयानां यदनेके पण्डितमानिन एतन्मतस्य प्रचारणाय बद्धपरिकरा भारतीयसंस्थासु । एतेषां पुण्यभूमी रूसदेशो वा चीनदेशो वा, मातृभूमिं प्रति सजातीयान् प्रति वा न समादरलेशोऽपि । अस्मिन् सङ्कटबहुले काले भारतीयचिन्तापरम्परायाः सदाचारपरम्परायाश्च समुत्सादने सर्वसंदोहेन प्रयतमाना यदि दृढतरसत्तर्कोपबृंहितप्रमाणैर्नापाक्रियेरन् तदा सर्वं भस्मसाद्भविष्यति । अथ च, एतेषां मतानि सूक्ष्मेक्षिकया पर्यालोच्य निरसितुं शक्यन्ते । आपातमधुरधनसाम्यवादमाश्रित्य विद्यार्थिनां मनांसि समावर्जयन्त्येते ।

## पाश्चात्त्यदर्शनदिग्दर्शनम्

दूयामहे यद् बहवः खलु विद्यालयेष्वध्यापकपदमधितिष्ठन्तः शास्त्राध्यापनव्याजेनैतन्मतस्योपादेयतां प्रतिपादयन्ति, छात्राश्च छात्र्यश्च व्यामोहिता भवन्ति। उत्तानबुद्धीनां विभ्रमकरं मतमेतद् यदि समूलकाषं न कषितं भवेत्तदास्माकमुदर्कः सुतराममङ्गलबहुलो भविष्यति। विशेषतस्तु प्राचीनशास्त्राध्यापकाः सुरभारतीसेवापरायणा एतेषामप्रशमनीयप्रकोपस्य विषयभूता न जात्वपि मर्षणीया भवेयुः। रोगस्य निदानं परमार्थतोऽजानन् कथं तत्प्रतिकाराय अलं भवेत्। अत एवैतेषां धर्मविद्वेषिणां साम्प्रतिकस्वार्थमात्रसम्पादनपरायणानां विद्वायमानानां युक्तिजालं समुच्छिद्य स्वमतस्य प्रतिष्ठापनं कर्तव्यम्।

प्रमेयाणां बाहुल्याद् विस्तरभीरुणा केवलं दिग्दर्शनमात्रं समाचरता मया तूर्णीभावः समालम्ब्यते। नैतावता विदुषां संसदं सभाजयितुं समर्थो भवेयमिति जानन्नपि मतिमान्द्याद् व्युत्पत्तिलाघवाद् वा नानाकर्मवैयाकुल्याच्चित्तस्यासमाधानाच्चात्रैव विरतिं प्रार्थये। आशासे यदनन्तरीयाधिवेशने योग्यतरस्य वैखर्या भवन्तः प्रीणिता भविष्यन्तीति शिवम्॥



# दर्शनाद्वैतम्

श्रीरामचन्द्रदीक्षितः, वा०सं०वि०वि०अनुसन्धानसंस्थानसंचालकः ।

परस्परतपस्संपत्फलायितपरस्परौ ।
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ॥

मान्या दर्शनपरिषदध्यक्षाः, स्वागताध्यक्षा उपकुलपतयः, तथा पूजनीया विद्वद्वतंसाः, हृदयरुचिता विद्यार्थिनश्च !

धन्यमहमात्मानं साम्प्रतमवैमि यदद्य महतो भागधेयस्य वशाद् वाराणसेयसंस्कृतविश्वविद्यालयीयाया दर्शनपरिषदोऽभ्यन्तरीणस्यास्याद्वैतदर्शनाधिवेशनस्याध्यक्षच्छद्मना किङ्करीभूय सभामिमां सभाजयितुं प्रतिलब्धावसरोऽस्मि संजातः, अप्रगल्भायापि मह्यमवसरमेनमुपकल्पितवद्भ्यो दाक्षिण्यस्नेहपूरितान्तरङ्गेभ्यः परिषत्प्रबन्धृभ्यो निवेदयामि चात्मनः कृतज्ञताम् ।

परिषत्संविधानसंप्रदायो ह्ययमनिदम्प्रथमतया बहुतिथेभ्यः कालेभ्यः संप्रवृत्तो विज्ञायते । उपाख्यायते च बृहदारण्यकादिषूपनिषत्सु—"जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे, तत्र ह कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुः । तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव" [1]इत्यादि । यज्ञकर्मानुष्ठानाभ्यन्तरेषु हि तत्र तत्र प्रतिलब्धावकाशा महर्षयस्तं कालं न निन्युर्व्रन्ध्यतया । किन्तु तत्तदलौकिकाध्यात्मिकनानातत्त्वविचारपरा दर्शनपरिषदासिका यज्ञशालास्वासाञ्चक्रिरे । तद्विचारफलान्येवार्षदर्शनानि सूत्ररूपेण पश्चादुपनिबद्धानि दरीदृश्यन्ते । ईदृग्विधानां च परिषदां महाप्रयोजनं श्रीशङ्करभगवत्पादा दर्शयन्ति स्म तत्र तत्र भाष्येषु—"अपि च तद्विद्यसंयोगः, तैः सह वादकरणं विद्याप्राप्त्युपायो न्यायविद्यायां दृष्टः । तच्चास्मिन्नध्याये प्राबल्येन प्रदर्श्यते । प्रत्यक्षा च विद्वत्संयोगे प्रज्ञावृद्धिः । तस्माद् विद्याप्राप्त्युपायप्रदर्शनार्थैवाख्यायिका" [2]इत्यादि ।

एतावतैव खल्वनुमेयसाराणि परिषदामधिवेशनानि यदसौ श्रुतिरेवोपदेशप्रधानमधुकाण्डोपदर्शितस्यात्मतत्त्वस्याविचलां स्थितिमाशासानोपपत्तिप्रधानेन तृतीयेन याज्ञवल्क्यकाण्डेन

---

१. बृह० ३।१।१

२. बृह० उ० शाङ्करभाष्ये ३।१।१

हिरुगुपदिष्टमर्थं महर्षिपरिषद्द्वारा निर्दिधारयिषति। तस्मान्नियतमसौ परिषत्सु विधीयमानो विचारो विद्यापारावारपारप्रतिपत्तेरव्यवहितोऽवश्यंभावी च हेतुरेषितव्यः। सोऽयं महाप्रयोजनोऽपि परम्परयाऽनादिकालप्रवृद्धोऽपि महतां कालेन म्लेच्छयवनादिभिराक्रम्यमाणेषु जनपदेषु शिथिलायां प्राचीनविद्याभ्यासपद्धतौ परिषद्योगो निर्वाणभूयिष्ठामिव दशां प्राप्तः कुहचित् कोणेषु प्रचाल्यमान उच्छ्वसिति।

तत् सर्वेषु विद्याधिष्ठानेषु विशेषतः संस्कृतविश्वविद्यालयेषु भूयसा समुद्यमेनास्य पुनर्नवीकरणं समधिकतरसंचालनं च नियतविधेयमिदानीमवशिष्यते।

एवमस्य परिषत्समन्वयस्य विद्याधिगमं प्रति फलोपकार्यज्ञतां निध्यायैव, मन्यामहे, श्रीमद्भिः सुब्रह्मण्यार्यमहोदयैर्विद्यालयेऽस्मिन् वत्सरद्वयात् पूर्वं दर्शनपरिषदधिवेशनं प्रस्तुतम्। महच्च सौभाग्यमस्य विश्वविद्यालयस्येदं यदुतास्योपकुलपतयः प्रायेण सर्वेऽपि नितरामस्मिन् श्रद्दधते। तद्यथेयं दर्शनपरिषदुत्तरोत्तराभिः कार्यपरम्पराभिः समृद्ध्येत तथाशास्यपरिषन्नियोगमशून्यं चिकीर्षामः।

स्यादेतत्, "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इत्यादिनीत्या निखिललोकशान्तिनिदानेऽपि प्रकृतित एव विष्वग्गतीनां देशविदेशाभिजननैकविधजनानां सामरस्यमावहत्यपि सम्प्रति समारोह्यमाणेऽस्मिन्नध्यात्मप्राग्भारविचारे पेशलमतयः केचिदनुशेरते—नायमनुरूपः कालः प्रशान्तिभूम्नोऽस्य संव्यवहारस्य, न च देशौचिती संलक्ष्यते। सम्प्रति खल्वस्माकं भारतदेशः, परकीयदेशाचिक्रमिषाविप्रलिप्साद्यासुरपाप्मपरीतमानसैः प्रातिवेशिकैः प्रतिपक्षिभिराक्रम्यमाणो दुनोति सतां निवृत्तिधर्मपराणां साधूनां मनांसि। किमीदृशौ देशकालौ—"समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः। मनोऽनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत्॥" इति, "तत्रैकाग्रं मनः कृत्वा……"[1] इति, "यत्रैकाग्रता तत्राविशेषात्"[2] इति च श्रुतिस्मृतिसूत्रवचनानामर्थकलामपि स्पृशतः? तस्मात् सन्तमपीमं व्यवसायं देशकालदौरात्म्यहेतोरुत्कृष्य, बहुशास्त्रैरनन्तैश्च महोद्यमैर्विद्राव्य प्रतिपक्षम्, नीत्वा च धर्मक्षेत्रमिदं प्रशान्तसकलकल्लोलोपसर्गमहार्णवमध्यसदृशीमवस्थाम्, पुनरविक्षिप्तैरिह व्यवसातव्यमिति मन्यन्ते। साम्प्रतमेतत्। तथापि कीदृशे कराले काले कीदृशे चातिघोरे रणसमुद्यमे सर्वविद्याप्रतिष्ठाभूतमध्यात्मविद्यात्मकं

---

१. भ० गी० ६।१२

२. ब्र० सू० ४।१।११

गीताशास्त्रमाविरभूदिति न प्रस्मर्तव्यं लोकवृत्तं प्रपश्यद्भिः। द्वयी हि गतिर्गुणवैतृष्ण्यात्मनः परवैराग्यस्य तन्नान्तरीयकस्य परविद्याधिकारस्य च प्रतिपत्तौ। तत्र शमदमतितिक्षादिसाधनाभ्यासमूला क्रमवाहिनी सरसा प्रथमा। विशुद्धचित्तानां शोकमोहाद्युपघातप्रभवा साहसिकी च द्वितीया, यया प्राप्तार्हन्तीकमर्जुनं प्रतीत्यात्मतत्त्वमुपदिदेश भगवान् गीताचार्यः। तदायोधनादिकृतः संक्षोभो भवत्येकान्तमन्तरायो दर्शनविचारस्येति न साधु लक्षितम्। प्रत्युत युद्धप्रसङ्गेषु कृतात्मलाभा ईदृशास्तत्त्वविचारा आनुकूल्यमेव युद्धसमुद्यमे भजेरन्निति मन्यामहे। अत एव भगवान् गीतासु तं तं तत्त्वविचारमादेशमादेशमर्जुनाय—"[1]तस्माद्युध्यस्व भारत", "युध्यस्व विगतज्वरः[2]" इति चोपसंहरति।

अन्ये पुनरिह विधान्तरेण प्रत्यवतिष्ठन्ते। अयं तेषां प्रत्यवस्थानस्याशयः—भारतीयस्य खलु जानराज्यस्य नेतारः सर्वप्रथममेव परिगृहीतैकान्तिकात्यन्तिककायिकवाचिकमानसाहिंसाव्रताः सामसन्धिकरणादिभिः सात्त्विकोपायैरेव राज्यशासनं देशसुरक्षां च प्रतिजज्ञिरे। तदिदानीमेषामयं प्रतियुद्धोद्यमः संकल्पितसत्यव्रतभङ्गाय कल्पेतेति। अविचारिताहिंसादितत्त्वानामापातमात्रेणेदमाक्षेपाभिधानं न शास्त्रयुक्तिसंप्रतिपन्नमिति ब्रूमः। तथाहि—अहिंसादयः किल धर्मा योगाङ्गत्वेन विधीयन्ते वेदान्तेषु योगशास्त्रेषु च—"अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः", "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः" [3]इति च। ते चाहिंसादयो द्वेधा विभज्यन्ते—सानुबन्धा निरनुबन्धाश्चेति। तत्र सानुबन्धा जनसमुदायानुबन्धिलौकिकसंव्यवहारविषयाः, येऽप्रच्युतजनसमुदायरक्षाकृते धर्मशास्त्रेषूत्सर्गापवादविधया बहु प्रपञ्चिताः सन्ति। निरनुबन्धास्तु उपरतलोकव्यवहाराणामन्तर्मुखानां यतीनां कृते वैयक्तिकाः। ते च—"जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्" [4]इत्यादिना योगशास्त्रेषु प्रपञ्च्यन्ते। ते चानुबन्धा देशप्रणाशसमाजविप्लवादयः प्रधानभूता अन्ये च धर्मशास्त्रेषूपगन्तव्याः, येषु हिंसादयो न दोषमावहन्ति। अत एव "न दोषो हिंसायामाहवे" इत्यादि सूत्रितं गौतमादिभिर्महर्षिभिः। भगवद्गीतास्वपि—"धर्म्याद्धि युद्धात् श्रेयोऽन्यत् क्षत्रियस्य न विद्यते",[5]

---

१. भ० गी० २।१८

२. भ० गी० ३।३०

३. यो० सू० २।३०

४. यो० सू० २।३१

५. भ० गी० २।३१

"सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्"[1] इत्यादिरुपदेशो न निरर्थक इत्यलमनेन प्रसक्तानुप्रसङ्गपल्लवितेन। सर्वथा सर्वप्रेष्ठमिदमद्वैतदर्शनाधिवेशनमभ्यागतान् विद्वद्वरान् प्रेक्षावतश्च हृदयसंवादिवस्तूपस्थापनेन समारिराधयिषतो मम स्मृतिपथमुपागतं 'दर्शनाद्वैतम्' इति विषयमधिकृत्य किञ्चित् प्रस्तूयते।

सन्ति सर्वज्ञकल्पकपिलकणादप्रमुखमहर्ष्युपज्ञानि सांख्यादीनि षडास्तिकानां दर्शनानि; तथा नास्तिकानामपि चार्वाकादीनि भवन्ति षड् दर्शनानि। येष्वन्योन्यविपरीतार्थविषयाः प्रतिपदं बहुधा विप्रतिपत्तयः संलक्ष्यन्ते। तथा दूषणभूषणवचनान्यनेकशः। तद्यथा—आत्मनि मुख्ये प्रमेयेऽस्ति देहेन्द्रियादिसंघातव्यतिरिक्त आत्मा नास्ति; कर्ता भोक्ता असंसारी विभुः परिच्छिन्नः; जडः स्वप्रकाश इति चेवंजातीयकाः। एवमेव तत्तत्प्रक्रियानुगतेष्वप्यर्थविशेषेषु विचित्रतरा विप्रतिपत्तय उदाहार्याः। एवंस्थिते माध्यस्थ्यमवलम्बमानाः पृच्छन्ति प्रेक्षावन्तः—"कपिलो यदि सर्वज्ञः कणादो नेति का प्रमा। तावुभौ यदि सर्वज्ञौ मतभेदः कथं तयोः॥" इत्येवमादि। कपिलादिसार्वज्ञमविप्रतिपन्नमुररीकुर्वाणानामस्माकं नास्त्यस्य प्रश्नरोगस्य प्रतिसमाधानायान्य उपायः, ऋते सर्वदर्शनसामरस्यसंदर्शनात्। तादर्थ्येन च प्रत्येकमेषां दर्शनविशेषाणां मुख्यतात्पर्यविषयाः प्रातिस्विका अर्थविशेषा अन्यान्ये प्रकल्प्यन्ते। ततोऽन्येषु प्रक्रियानिविष्टेष्वर्थेषु सत्यपि दर्शनानामन्योन्यविरोधे, तेषामतात्पर्यगोचरतया नास्ति काचित् क्षतिरिति व्यवस्थापनायै। ततो विषयभेदान्नास्ति विरोधः, पर्यवसितेन तु भावेन सर्वेषां दर्शनकाराणामेकमेव तत्त्वं लिलक्षयिषितमिति। इदं च विषयविभागप्रकल्पनमुपोद्बलयन्ति सन्ति समाख्यानानि पदशास्त्रम्, वाक्यशास्त्रम्, प्रमाणशास्त्रमित्येवमादीनीति। तत्रापि कतमस्य शास्त्रविशेषस्य कतमस्मिन्नर्थविशेषे तात्पर्यं येन स तत्रार्थे प्रबलः, कतमश्च प्रक्रियानिर्वाहमात्रोपयोगी तात्पर्याविषयो येन तत्र न प्रामाण्यमिति विनिगमकानि नियतमपेक्ष्यन्ते, यैर्विना विषयविवेको दुर्लभः। दिष्ट्या च तानि विनिगमकानि शास्त्रकारैर्ग्रन्थकृद्भिश्च स्वेषु ग्रन्थेषु सूचनाविधया निहितानि सन्ति, येषां समुद्धृत्य प्रकाशनमात्रमनुसन्धातॄणां कर्तव्यमवशिष्यते। तत्र प्रायः सर्वेषामेव दर्शनकाराणां प्रबन्धॄणां चाद्वैततत्त्वेऽस्ति तात्पर्यगतिरिति समुपलक्षितान्यभिज्ञानानि कानिचिदिह प्रचिकाशयिषामः।

तत्र तावन्महर्षिणा कणादेन पदार्थोद्देशे सूत्रवचनमिदमुक्तम्—"द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां"[2] इति। एते च पदार्थाः षड् भावा उच्यन्ते, भवन्ति सत्तां प्रतिलभन्त इति

१. भ० गी० २।३२

२. वै० सू० १।१।४

कृत्वा। अर्थाद् यस्य सत्तासंबन्धो न लभ्यते सोऽभाव इति सिद्धे सप्तमोऽभावपदार्थः सूत्रकारेण कण्ठतो नोद्दिष्टः। तथापि स्वेष्वेव सूत्रेषु सर्वत्र सिद्धवदभावं व्यवहरन्नभ्युपैत्येव सूत्रकारः सप्तममभावपदार्थमिति साम्प्रदायिकः पन्था इत्यन्यदेतत्। सत्तासंबन्ध एव षण्णामेषां पदार्थानां भावत्वमिति व्युत्पत्तिप्रदर्शनेन प्रदर्शितम्। स च सत्तासंबन्धो द्रव्यगुणकर्मणां पृथग्जनसाधारण्येन सर्वस्य लोकस्यापरोक्ष एव। सामान्यस्यापि व्यक्तिव्यतिरेकिणः सद्भावो व्यावृत्त्यनुवृत्तिभ्यां शक्यमनुमातुम्। विशेषसमवायौ च महता परिकरबन्धेन स्वयं सूत्रकारेण हेतुभिः प्रसाधिताविति तयोः सद्भावे नास्ति विमतिः।

ननु कथमेवं सति द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ? इत्थम्—द्रव्यादिषु त्रिषु समवायेन साक्षात् सत्तायोग इह वृत्तिपदेन द्योत्यते। तेनावशिष्टेषु परम्परासम्बन्धेन स इति सिद्ध्यति। अनेनैव चाभिसन्धिना भावत्वं नाम समवाय-समवायघटितसामानाधिकरण्यान्यतरसंबन्धेन सत्तावत्त्वमिति परिष्कुर्वन्त्यभिज्ञाः। अत्र समवाये सत्तासामानाधिकरण्यस्य स्वरूपसंबन्धेनाप्यसंघटनात्तत्राव्याप्तिः स्वरूपस्य समवायत्वेनैव संबन्धत्वकल्पनेन परिहरणीया। तेनाभावेऽतिव्याप्तिरपि लक्षणस्य वारिता भवतीत्यन्यत्। सर्वथा तु सत्तावत्त्वं भावत्वमिति सिद्धम्।

अत्रैतावतः सप्रपञ्चकथनस्यायमभिप्रायः—अन्यदीयसत्तानैरपेक्ष्येण स्वयंसिद्धसत्ताविरहिणोऽपि सामान्यादेः परकीयसत्तोपजीवनमात्रेण वस्तुभावः, अर्थक्रियासु च तादृशस्य वस्तुनः समर्थता प्रमाविषयत्वयोग्यता चेत्येवंजातीयकं धर्मजातमुपगच्छतां वैशेषिकाणां समानन्यायेन परब्रह्मसत्तोपजीवनेन सतो जगतो वस्तुत्वादिसमर्थने न प्रद्वेषः। ततश्चैकमेवाद्वितीयं सद्ब्रह्म, ततोऽन्यद् यद् लौकिकशास्त्रीयप्रमाणप्रमेयव्यवहारोपयोगि वस्तुजातम्, तद् व्यावहारिकस्वरूपेणैव रूपवदिति सदद्वैतवादगमनिकायाः स्वहस्तो दत्तः सर्वोपकारकेण वैशेषिकदर्शनेनेति।

किञ्चान्यत्। इह गौर्नास्तीत्यादिप्रत्ययेन गवाद्यभावस्य सद्भावव्यवहारः प्रसिद्धो लोके। न च तत्र पूर्वोक्तेन द्विविधेनापि संबन्धेन सत्तायोगः समस्तीति प्रश्ने वैशेषिकैरेवं समाधेयम्। यथा—कालसंबन्धित्वादिरूपमन्यदेव सत्त्वं न सत्ताजातियोगरूपमस्य व्यवहारस्य विषय इति। तथा चाननुगतेनापि नानारूपेण सत्त्वेनानुगतं सदाकारप्रत्ययमुपपादयन्तो वैशेषिकाः प्रतिभासकालमात्रसंबन्धित्वं प्रातिभासिकसत्त्वम्, व्यवहारकालव्यापिसंबन्धवत्त्वं व्यावहारिकसत्त्वम्, कालत्रयाबाध्यत्वं पारमार्थिकसत्त्वमिति सत्तात्रैविध्यपक्षस्यानुकूल्यमाचरन्तीति सुव्यक्तं प्रतिभाति। किञ्चान्यत्। नित्यः संसर्गाभावोऽत्यन्ताभाव इतीष्यते वैशेषिकादिभिः। तद्यत्र घटरहिते भूतले आनीय घटः स्थापितः, तत्र पूर्वमवस्थितो घटात्यन्ताभाव उड्डीय कुत्रचिद् गतः पलायितो वेति न साम्प्रतं वक्तुम्, तथा

सत्यभावस्वरूपविलोपप्रसङ्गात् । तथा च घटकाले तदन्यकाले च घटाभावस्तत्र नित्यत्वादस्तीत्येव मन्यन्ते । तदिदमद्वैतवाद्यभिमतद्वैतमिथ्यात्वस्य पुरस्कार एवेति वदामः । ननु न सार्वदिकाभावप्रतियोगित्वं मिथ्यात्वमिति वेदान्तवादिनां सिद्धान्तः, किं तर्हि स्वाधिकरणवृत्त्यभावप्रतियोगित्वं तदिति विवरणादावुद्घोष्यते । न च घटकाले तत्र भूतलादौ घटाभावं वर्तयन्ति तार्किकाः, प्रत्युत घटानधिकरणभूतलस्वरूपात्मकं तत्राभावसंबन्धं व्यासेधन्ति । तत् कुतो मिथ्यात्वपुरस्कारवाचोयुक्तिरिति चेत्, सत्यम् । तथापि भूतले घटानधिकरणभूतलस्वरूपमभावसंबन्धो नास्तीति किमुक्तं भवति? न घटाभावो नास्तीति; न च भूतलस्वरूपं नास्ति, अविकस्याङ्गीकारात् । किन्तु घटाधिकरणस्य भूतलस्य घटानधिकरणता नास्तीति विशिष्टस्य संबन्धस्याभाव उच्यते । तदिह मिथ्यात्ववादिनामप्यविप्रतिषिद्धम् । नहि ते घटाधिकरणं भूतलं घटाधिकरणभिन्नं मंस्यन्ते । तदिदं परिच्छिन्नस्य घटादेः कालदेशापरिच्छिन्नाभावप्रतियोगित्वं मिथ्यात्वमेव वाचोयुक्तिभङ्ग्यन्तरेण केवलमपच्छाद्यते, वस्तुवृत्ते तु न वैलक्षण्यं किञ्चिदित्यलम् ।

सर्वथानया सप्तपदार्थनिरूपणसरण्या वैशेषिका दार्शनिकलोकमेवं व्युत्पादयन्ति—यथा पदार्थानां सत्तासमवायेन वस्तुभावः, तथा सत्तैकार्थसमवायेन कालसंबन्धित्वरूपसत्तान्तरेण वा स वस्तुभावः प्रसिद्ध्यत्येवेति । 'ब्रह्म सत्यं जगन्मिथ्या' इति भणन्तोऽद्वैतवादिनोऽपि हि नैकान्तेन प्रपञ्चस्य शून्यतामाकलयन्ति, प्रत्युत मिथ्यात्वलक्षणशरीर एव सत्तादात्म्यम्, कालसंबन्धं वा निवेशयन्तोऽसति तस्यातिप्रसङ्गं वारयन्ति । यथाजातमतयस्तु अलीकपर्यायं मिथ्यापदमत्र गृहीत्वा बिभ्यति लौकिक्याः शास्त्रीयायाश्च व्यवस्थाया विलोपः प्रसज्यत इति । तत्रैषां भयप्रशमनाय मिथ्याशब्दो द्व्यर्थः—अनिर्वचनीयतावचनः, अपह्नववचनश्चेति । प्रपञ्चो मिथ्या इत्यत्रानिर्वचनीयार्थो ग्राह्य इति व्याचक्षीत । ग्राहितास्त्विमे कथञ्चित् सत्तासंबन्धमात्रेण भाविकः संव्यवहार इति तार्किकाणामुपदेशमिमे ग्रहीष्यन्तीति सर्वमुपपन्नम् ।

अनेन नैयायिका अपि नाद्वैतदर्शनस्य प्रतिपक्षभूताः, प्रत्युत प्रियसखा इति प्रख्यापितम् । तथा ह्येते पदार्थनिरूपणप्रक्रियायां नातिमात्रं वैशेषिकेभ्यो व्यतिरिच्यन्ते । यदाह श्रीविश्वनाथभट्टः—"एते च पदार्था वैशेषिके प्रसिद्धा नैयायिकानामप्यविरुद्धाः"[1] इत्यादि । एतत् किल प्रमाणशास्त्रं प्राधान्येन प्रत्यक्षादिप्रमाणान्येव निरूपयितुं प्रवृत्तम् । नियतां काञ्चित् प्रक्रियामनालम्ब्य तद्दुःशकमिति तादर्थ्येनैव वैशेषिकप्रक्रियामुपादत्ते, न भावतः । अत एव यत्र स्वे विषये वैशेषिकोक्त-

---

१. सिद्धान्तमुक्ता० २ का० व्याख्या

मनुपपन्नं पश्यन्ति, तत्र बहुभिर्युक्तिजालैः शब्दस्यानुमानात् पृथक् प्रामाण्यं वैशेषिकोपमर्देन प्रसाधयन्त्येव। इदं च वेदान्तप्रामाण्याख्यगिरिशिखरारोहस्य प्रथमं सोपानपर्व। तत आप्ततमसर्वज्ञेश्वरप्रणीततया लौकिकशब्देभ्यो वेदस्य विशिष्टं प्रामाण्यमिति व्युत्पादनं द्वितीयम्। भगवता गौतमेन द्वितीयमिदं पर्व "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्"[1] इति सूत्रितम्। अपौरुषेयस्य वेदस्य बोधकतयापवादविरहे सति प्रामाण्यमिति तृतीयं पर्व सांख्यपातञ्जलादिप्रतिपन्नम्। अत एव "आप्तश्रुतिराप्तवचनं तु"[2] इतीश्वरकृष्णकारिकायाम्–आप्ता चासौ श्रुतिरित्याप्तश्रुतिः, न त्वाप्तस्य श्रुतिरिति व्याचक्षते। अपौरुषेयतया मूलप्रमाणगतप्रामाण्यभूनिरीक्षणानपेक्षणेन निरपेक्षत्वलक्षणं वेदप्रामाण्यमिति चतुर्थं पर्व, यद् वेदवादिसंमतम्, विशिष्य बादरायणमहर्षिणोपोद्बलितम्। तत्सूत्रयाम्बभूव जैमिनिः—"अव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात्"[3] इति। अद्वयवादिनस्तु प्रामाण्यनिरूपणपरम्परापर्यवसानभूमिगिरिशिखरस्थानीयां कालत्रयबाधविधुरार्थप्रकाशनलक्षणां परमार्थप्रमाणतामातिष्ठन्ते, यत्र स्थिता भूमिष्ठमिव वनस्पतिमारूढशैलशिखराः पश्यन्ति नीचैरवस्थितां लोकयात्राम्।

तदयमद्वैतसिद्धान्ताभिमतवेदप्रामाण्याभिगमयितृप्रामाण्यप्रणालिकाप्रथमपर्वोपज्ञापकतया नैयायिकाः प्रत्यासन्नतरा वैशेषिकापेक्षयेति दर्शितः संप्रदायः। ये चाचार्यवाचस्पति-उदयनाचार्य-श्रीरघुनाथप्रमुखा न्यायसंगतेष्वर्थेषु प्रमाणभूताः, ते स्वयमद्वैतवेदान्तदर्शनिनः स्वेषु ग्रन्थेषु निवेदयन्ति स्मात्मनो वेदान्तदर्शनश्रद्धामिति नेदं परोक्षं प्रेक्षावताम्। तथा च सर्वदर्शनशिरोमणित्वेनाद्वैतदर्शनं पुरस्कृतमुदयानाचार्यैर्बौद्धाधिकारे—"न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिस्तद्बाधके बलिनि वेदनये जयश्रीः। नो चेदनित्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः॥"[4] इति। साकारविज्ञानवादिबौद्धमतप्रत्याख्यानोपसंहारस्थमिदं पद्यम्। अस्यार्थः—नीलपीतादीनां विषयविशेषाणामनङ्गीकारे ज्ञानानां वैचित्र्यं न प्रसिद्ध्यति, यतस्तेषां स्वगता नीलाद्याकारा न सन्ति। अतस्तदर्पकतया बाह्यार्था उपेयाः। अयं लोकयात्रापरिनिष्ठितो न्यायमार्गो दर्शितः। यदा परमार्थो विचार्यते, तदा व्यावहारिकार्थस्य बाधको ब्रह्मसाक्षात्कारः पुरस्करणीयः। ततश्च

---

१. न्या० सू० २।१।६८

२. सां० का० ५

३. मी० सू० १।१

४. आत्मतत्त्वविवेके

सर्वदर्शनेभ्यो बलवति वेदान्तनय एव जयश्रीसमृद्धिरिति । अत्रातिशयार्थकश्रीशब्दप्रयोगादयमर्थोऽवसीयत इति चन्द्रिकायामेवं व्याख्यातम्—[1]"जयश्रीः जयोत्कर्षकाष्ठा। तस्माद् बौद्धमतापेक्षया तार्किकमते जयः । तदपेक्षयाऽपि सांख्यादिमते, आत्मनोऽसङ्गत्वादिस्वीकारात् । तदपेक्षया वेदान्तिमते, द्वैतमिथ्यात्वादिपुरस्कारात् । अतो जयोत्कर्षकाष्ठा इति । इहोदयनाचार्याणामेवमाकूतं स्फुटं लक्ष्यते—लोकपरिस्थितौ तार्किकसांख्यमते एव सत्तर्कोपबृंहितत्वादुपादेये न बौद्धादिमतम् । परमार्थपरीक्षकाणां त्वद्वैतमेव शरणीकरणीयमिति ।

"आत्मनोऽसङ्गत्वादिस्वीकारात्" इति लघुचन्द्रिकावाक्यस्थेनादिपदेन स्वप्रकाशचिद्रूपत्वादिकमिव आत्मैकत्वमपि ग्राह्यमिति ब्रूमः । "जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥"[2] इत्यादिना सांख्यैरात्मनानात्वं हेतुप्रदर्शनपुरस्सरं कण्ठरवेणोदीरितं यद्यपि, तथापि पुरुषैकत्व एव तेषां परमो भाव इतीश्वरकृष्णकारिकात एव ध्वन्यते, "भ्रम धार्मिक विस्रब्धः" इत्यादाविव विधौ वाच्ये प्रतिषेधः ।

अत्राह—"कपिलो हि न सर्वात्मत्वदर्शनमनुमन्यते, आत्मभेदाभ्युपगमात् । महाभारतेऽपि '...बहवः पुरुषा ब्रह्मन् सांख्ययोगविचारिणाम्...।' अतश्च सिद्धमात्मभेदकल्पनयापि कपिलस्य मतं वेदविरुद्धम्, वेदानुसारिमनुवचनविरुद्धं च, न केवलं स्वतन्त्रप्रकृतिकल्पनयैवेति"[3] इत्यादि तत्र तत्र वदद्भिः श्रीमच्छङ्करभगवत्पादैः कपिलस्यात्मभेदाभ्युपगन्तृत्वम्, अत एव तस्य निराचिकीर्षितता चानुक्रम्यते । अतः कथमयमात्मभेदप्रतिषेधः सांख्यकारिकासु संभावनार्ह इति । तथाप्यत्र कारिकार्थं तावत् किञ्चिद् निध्याय विमृशामः । आत्मभेदसाधनाय हि येऽत्र हेतूकृता जननमरणादयः, न ते तत्त्वतः सन्त्यात्मनि पक्षे । आविष्कृतं चैतदुपरिष्टात् कारिकायामेव—"तस्मान्न बद्ध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित् । संसरति बद्ध्यते मुच्यते च नानाश्रया प्रकृतिः ॥"[4] इति । अतश्च प्रामाणिकपरिवृढो भूत्वेश्वरकृष्णोऽसिद्धैर्हेतुभिरात्मभेदं सिषाधयिषतीति न श्रद्धेयमेतत् । कारिका चेयं कियत् संवदति गौडपादाचार्याणाम्—"न निरोधो न चोत्पत्तिर्न

---

१. लघुचन्द्रिकायां मिथ्यात्वमिथ्यात्वप्रकरणे

२. सां० का० १८

३. ब्र० सू० शा० भा० २।१।१

४. सां० का० ६२

बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥"[1] इति वचनेनेति विस्मितचित्ताः प्रपश्यन्त्यद्वैतवादिनः।

स्यादेतत्, जननमरणादयो हेतवोऽसिद्धा इत्युक्तम्। तत् कथम्? इत्थम्—नित्यशुद्ध-बुद्धोदासीनस्वभावो हि सांख्यैः पुरुषः पुष्करपलाशवन्निर्लेपोऽभ्युपगतः। प्रकृतिगता एव च सर्वे समारम्भाः कर्तृत्वादयो धर्माश्चेति सांख्या मन्यन्ते। तस्मादेषां धर्माणामात्मनि संचारणे नास्त्यन्योऽभ्युपाय ऋतेऽध्यासात्। तमप्यध्यासं नानुमन्यन्तेऽख्यातिवादिनः सांख्याः। उद्धरकन्धरीकुर्वन्ति चात्मानमात्मशुद्धतानिरूपणायामद्वैतवादिनोऽप्यपेक्ष्य स्वस्यातिशयं मन्यमानाः। अत एवानात्म-धर्माणामात्मन्यध्यारोपणे कियानपि दोषसंस्पर्श आत्मनि कृतः स्यादिति सांख्यानामनुशयं क्षालयितु-मेव भाष्यकृद्भिरवतारितमिदं वाक्यम्—"तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाणु-मात्रेणापि स न संबद्ध्यते"[2] इति। तदेवं सति सांख्यमतसिद्धतयात्मभेदस्य यदनुवादकरणमाचार्या-णाम्, यच्च निराकरणम्, तदुभयं यथाप्राप्तापरिष्कृतसांख्यमतव्यवस्थापनव्यसनिनां कृते न मूलभूतसांख्यानामिति द्रष्टव्यम्।

ईश्वरास्तित्वविषये कीदृशं सांख्यानां हृदयमिति विमृष्टारो बहोः कालाद् बहुधा विप्रति-पद्यन्ते। सेश्वरा निरीश्वराश्चेति द्वयी गतिः सांख्यानामिति केचित्। ईश्वरप्रद्वेषिणस्त इत्यन्ये। उदासते सांख्या ईश्वरसद्भावविषये इत्यपरे। आपातप्रक्रियया निरीश्वराः, पर्यवसितेन भावेन तु सेश्वरा एतेऽद्वयवादिवदेवेति वयमुत्प्रेक्षामहे। तथा हि—निरतिशया ह्यकर्तार आत्मान इत्येतदर्थप्रसाधन-मेव मुख्यतमं कर्तव्यं सांख्यानाम्। तद्यदि नाम ईश्वरस्तत्त्वेषु संख्यायेत तदा जगत्प्रक्रियायां नियतमसावभिवेचनीयः स्यात्। न खलु जगत्कर्तृतां विहाय ईश्वरनिरूपणं नाम संभवति। जगत्क-र्तृत्वाभ्युपगमे च यद्यपि वैषम्यनैर्घृण्यादयो दोषा ईश्वरस्य अनादिप्रवाहपतितविजातीयकर्म-सापेक्षस्य न प्रादुःष्युः, तथापि महदिदमस्थाने यदीश्वरो विकारगोचरतापादनेन खलीक्रियते। तन्नूनमनेनैवानुशयेन विषयेऽस्मिन् उदासांचक्रिरे सांख्याः। निरूपणे हि ईश्वरस्य विधीयमाने निर-तिशयसार्वज्ञबीजस्य तस्य नियोगत एव पुरुषशब्दितेभ्यो जीवेभ्यः पृथक्भावोऽभ्युपेतव्यः प्राप्नुयात्। तद्वरमौदासीन्यमवलम्बितम्।

---

१. गौ० का०

२. ब्र० सू० शा० भा० १।१।१

'एकात्मपक्षपातिनः सांख्याः' इत्युक्तं पुरस्तात्। तत्रावश्यं रागद्वेषासूयासुखदुःखादेर्लोकेऽनुभूयमानस्य साङ्कर्यपरिहाराय आत्मनस्तरतमभावापन्ना बुद्धयाद्युपाधिभेदा एष्टव्याः। निहीनोपाधिसम्बन्धकृतं दुःखादिकमुत्कृष्टोपाधिकृतं च सुखादीति व्यवस्थापयितव्यम्। एवं च सति यदि सर्वार्थक्रियासमर्थं सर्वज्ञसंस्तुतं प्रधानं नाम कमप्युपाधिं पुरस्कुर्मः, स्वयमेव तदा तदुपहित ईश्वरः प्रसिद्धयेदेवेति सांख्यानामाशय उन्नीयते। तत्सन्तु तावत् सांख्या अपीश्वरं प्रणिधायोत्तरोत्तरमभ्युदयभाजः। सेश्वराः कापिला इत्यमुं भावं मनसिकृत्यैव, मन्यामहे, वाचस्पतिमिश्राः "प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति"[1] इति कारिकामीश्वरनिराकरणपरतया प्रत्नैर्व्याख्यातामपि विधान्तरेणोत्तमनायिकास्वभाववर्णनार्थां व्याचख्युः।

पातञ्जलास्तु सेश्वराः सांख्या एवेति नास्त्यत्र विप्रतिपत्तिः। तथापि तत्त्वविचारप्रवणाः सांख्याः, तत्त्वसाक्षात्कारकारणीभूतनिदिध्यासनव्यसनिनो योगिन इति तेषां प्रवृत्तिभेदः समस्त्येव। भगवद्गीतासु सांख्ययोगशब्दप्रयोगोऽप्येतदभिप्रायमूलक एवेति शक्यते वक्तुम्। तदस्य संयमशब्दितस्य समाधेः प्राप्तये सन्ति बहव उपायाः। येषु सुलभो ह्यः सद्यःफलप्रदत्वाच्च प्रधानतमो भगवद्भक्तियोगो नाम। एवमवश्यसंभजनीयस्येश्वरस्य निरूपणे येन केनापि भावेन यदुपेक्षणं सांख्यानाम्, न तत् श्रेयःप्राप्तये स्यादित्यनुशयानेन भगवता पतञ्जलिना समाधिपादे "ईश्वर प्रणिधानाद्वा"[2] इत्यनुक्रम्य "क्लेशकर्मविपाका......" इत्यादिरीश्वरसूत्रपञ्चतयी समुपदिश्यते। तेन प्रत्यक्षमेवेश्वरस्य सूत्रनिरूपणेनाधिकतरं प्रत्यासीदति योगदर्शनं वेदान्तदर्शनस्येति सुव्यक्तम्।

अथापि कञ्चित् विशेषमिह सूत्राक्षरानुलोमं दार्शनिकविचारनदीष्णान् प्रत्युपहरामः, यस्य परीक्षणेन दृश्यप्रपञ्चो न परमार्थ इति विषये पातञ्जलदर्शनमद्वैतदर्शनायत्तमिति ते संमन्येरन्। अस्ति सूत्रम्—"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्"[3] इति। मुक्तं पुरुषं प्रति नाशं प्राप्तमपि पुरुषार्थभूतं दृश्यं मुक्तान्याकुशलान् प्रति साधारणत्वादनष्टमेवेत्यर्थः। तेन नैकमुक्तौ सर्वमुक्तिप्रसङ्ग इति भावः। अत्रैतत्सम्प्रधारणीयम्—एकमेव वस्तुस्वरूपं यदेकं पुरुषं प्रति विनष्टं तत्तदैवान्यं प्रत्यविनष्टमिति कथमिदं संभाव्यते। नहि द्रष्टृपुरुषभेदेऽपि दृश्यस्यान्योन्यव्यावर्तनस्वभावौ भावाभावौ युगपद् भवत इति। अत्र श्रीभट्टनागेशो मन्यते—दृश्यं तावत् स्वस्वामिभाव-

---

१. सां० का० ६१

२. यो० सू० १।२३

३. यो० सू० २।२२

सम्बन्धेन पुरुषसम्बद्धम्। तस्मिन् सम्बन्धे विवेकख्यात्या नाशिते सति सम्बन्धयुक्तं दृश्यमपि नष्टमित्युच्यत इति "एकं मुक्तपुरुषं प्रति दृश्यं प्रयोजनाकरणाद् राज्ञो राज्यमिव नष्टमपि सामान्यतो न नष्टम्" इति व्याचक्षाणः स वक्तव्यः—एवमर्थपरिकल्पने सूत्रेणानेन कोऽपूर्वार्थ उपदर्शितः। का वा शङ्कानेन परिहृतेति। विशेषणापाये हि विशिष्टापाय इति नात्र तिरोहितं किञ्चित्। मुक्तपुरुषान्यपुरुषसम्बन्धो नापैति दृश्यस्येत्येतावदेवानया भङ्ग्या कथ्यत इति चेत्, अस्तु। तथापि तदन्यसाधारणत्वमात्रं सूत्रकारेण निर्देष्टव्यम्, न पुनस्तस्य सिद्धवद्धेतूकरणेनान्यान् प्रत्यप्रणाशः साधनीयः। तस्मात् पुरुषविभागेन दृश्यस्य प्रणाशसदसद्भावसंकीर्तनमिदं विद्वदविद्वत्पुरुषदृष्टिभेदेन व्यवस्थासम्पत्त्यर्थमित्येव श्लिष्यते। विदुषो दृष्ट्याऽभावप्राप्तमपि दृश्यमविदुषां व्यावहारिकदृष्ट्या स्थिरमेवेति। यदेतद्दृष्टिभेदेन सत्त्वमसत्त्वं च वस्तुनस्तद् मिथ्यात्वनान्तरीयकमिति सूत्रेणानेनाद्वैतदर्शनसिद्धान्तः पुरस्कृत इति वयं पश्यामः।

केचनास्मिन् सूत्रेऽद्वैतदर्शनपुरस्कारकल्पनां सुदूरगतेत्यक्षममाणाः "नाशोऽदर्शनम्। यद्यपि कुशलेन तं प्रति कृतकार्यं न दृश्यते; तथाप्यकुशलेन दृश्यमानं न नास्ति। नहि रूपमन्धेन न दृश्यत इति चक्षुष्मता दृश्यमानमभावप्राप्तं भवति" इत्यादि तत्त्ववैशारदीवचनं कथञ्चिदवष्टभ्य कथयन्ति दृश्यदर्शनादर्शनयोरकुशलं कुशलं च प्रति प्रविभागमात्रं सूत्रार्थ इति। तानापातसहृदयान् प्रति इदत्यं "भोगापवर्गार्थतायां कृतायां पुरुषेण न दृश्यत इति स्वरूपहानादस्य नाशः प्राप्तः, न नश्यति। कस्मात्? कृतार्थं प्रति" इत्यवतरणरूपं भाष्यवचनम्, "नन्वत्यन्तानुपलभ्यं कथं न विनश्यति? इत्याशयवान् पृच्छति—कस्मादिति" इति टीकावचनं च व्याचक्षीत। तेन टीकास्थं यथादर्शितमदर्शनपदं न तावन्मात्रविश्रान्तम्, किं तर्हि? अदर्शनप्रयुक्ताभावप्राप्तपर्यन्तमिति व्युत्पादितास्ते भवेयुः।

किञ्चान्यत्, इतः पूर्वतने "विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि"[1] इति सूत्रे भाष्यकृद्भिः—"प्रतिसंसृज्यमानाश्च तस्मिन्नेव सत्तामात्रे महत्यात्मन्यवस्थाय, यत्तन्निस्सत्तासत्तं निस्सदसद् निरसदव्यक्तमलिङ्गं प्रधानं तत् प्रतियन्ति" इत्यभ्युदितम्। सच्छब्दस्यासच्छब्दस्य च नानार्थयोगादिदं भाष्यवचनमन्यथा चान्यथा च व्याचक्षतेऽभियुक्ता व्याख्यातारः। अननुरूपस्तेष्वस्माकमभियोगः। सर्वाविरोधेन त्वयमभिप्राय उच्यते—न कौटस्थ्यरूपा परमार्थसत्ता प्रधानस्यास्ति। नापि निरुपाख्यत्वात्मिकाऽसत्ता। तस्मान्निस्सत्तासत्तम्। ननु मा भूत् तस्य सत्त्वमसत्त्वं वा धर्मः, सद्रूप-

---

१. यो० सू० २।१६

मसद्रूपं वा स्यात् ? तदपि नेत्याह—निःसदसदिति । एवं तर्हि महदादिकार्यमपि तत्र शक्यात्मनाऽसदिति प्राप्तं तन्निराचष्टे—निरसदिति । "असदिति चेन्न प्रतिषेधमात्रत्वात्"[1] इति सूत्रास्याप्ययमेवाशयः । तदिह सद्रूपब्रह्मतादात्म्यकृत एव प्रधानादिदृश्यवर्गे सद्व्यवहार इत्यद्वैततत्त्वमिहोपनिहितं भगवता व्यासेनेति द्रष्टव्यम् ।

एवं तावत्तात्पर्यपर्यवसानगत्या न्यायवैशेषिकसांख्ययोगदर्शनानामद्वैतदर्शनानुगुण्यम्, प्रत्युत तेषामद्वैतदर्शने भूयसा समादरश्चोपलक्षितः । मीमांसाशास्त्रं तु साक्षाद् वेदार्थनिरूपणार्थं प्रवृत्तम् । अथ चौपनिषदात्मसाक्षात्कारं प्रति आरादुपकारकाङ्गभूतनित्यनैमित्तिकादिनिखिलकर्मानुष्ठानौपयिकन्यायकदम्बकरूपमिति कृत्वा अद्वैतवादिनामत्यन्तमुपादेयमेव । यथा च दार्शनिकतत्त्वविषयेऽपि पार्यन्तिकभावगत्या अद्वैत एवास्य परा निष्ठा, तथा समनन्तरमेव दर्शयिष्यते ।

ब्रह्मसूत्रेषु द्वितीयोऽध्यायः 'अविरोधाध्याय' इति समाख्यायते । सा समाख्या द्वेधार्थापयितुं शक्यते, श्रुतियुक्त्यनुभवबाधेन दुर्बलीकृतैर्दर्शनान्तरैरौपनिषदस्य ब्रह्माद्वयसमन्वयस्य विरोधो बाधो नास्तीत्यस्मिन्नध्याये प्रतिपाद्यत इति प्रथमोऽर्थः, य एव सर्वैः प्रसिद्धिबलात् परिगृहीतः । द्वितीयस्तु दर्शनान्तराणां यथादर्शितेन मार्गेण सर्वेषामपि पार्यन्तिकभावगत्या अद्वैतदर्शनसमन्वयान्नैव विरोधप्रसङ्गोऽस्तीति । अस्मिन्नर्थे स्मृत्यनवकाशाधिकरणस्थभगवत्पादभाष्यभामत्यादीनां सूचनमपि लभ्यते । तथा हि—"स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्"[2] इति द्वितीयाध्यायस्यादिमं सूत्रम् । अत्र च ब्रह्मणो जगदुपादानत्वविषये श्रौतसमन्वयाभ्युपगमे प्रधानादिकारणत्ववादिकापिलादिस्मृतीनामनवकाशत्वदोषं प्रापय्य प्रतिबन्द्या मन्वादिस्मृत्यनवकाशदोष आपाद्यते । तत्र प्रथमं तावत् सावकाशनिरवकाशन्यायस्येह संचारणमात्रं दर्शनमूलभूतानां सर्वासां स्मृतीनां प्रामाण्याभ्युपगमं स्वहस्तयति । सावकाशनिरवकाशन्यायो हि सिद्धप्रमाणभावयोर्द्वयोः शास्त्रयोरन्योन्यविरोधस्थले एव प्रवर्तते । सावकाशस्य प्रकृतान्यस्थलान्तरविषयं प्रामाण्यम्, निरवकाशस्य तु स्थलान्तरं विषयो न लभ्यत इति प्रकृतार्थविषयमेव तदित्युभयप्रामाण्यसंरक्षणमेवास्य न्यायस्य शरीरम् । तदिह उभयविधस्मृतीनां प्रामाण्याभ्युपपत्त्यैव पूर्वपक्षः सिद्धान्तश्च प्रवर्तिताविति गम्यते । तथा भाष्यवचनमपि—"स्मृतिबलेन प्रत्यवतिष्ठमानस्य

---

१. ब्र० सू० २।१।७

२. ब्र० सू० २।१।१

स्मृतिबलेनैवोत्तरं वक्ष्यामीत्यतोऽयमन्यस्मृत्यनवकाशदोषोपन्यासः। अयं भावः—ब्रह्मोपादानत्व-प्रधानोपादनत्वबोधकयोस्तद्वचसोः सावकाशनिरवकाशता न संभवति, उभयोरपि स्वार्थमात्रनिष्ठयो-रन्यावकाशाप्राप्तेः। अतः प्रबन्धरूपमहावाक्यमादाय मानवस्यानुष्ठेयार्थेऽस्त्यवकाशो न कापिलस्येति पूर्वपक्षाशयः प्रकल्पनीयः। एवं चेत् कापिलस्मृतेरपि नित्यशुद्धासङ्गस्वप्रकाशचिदात्मन्यवकाशोऽस्तीति न प्रधानादौ श्रुतिविरुद्धे तात्पर्यमिति सिद्धान्तिनापि शक्यते वक्तुमिति। "एतेन योगः प्रत्युक्तः"[1] इति सूत्रे भामत्यां स्फुटमेव सर्वोऽयमर्थः प्रतिपादितः—"यदि प्रधानादिसत्तापरं योगशास्त्रं भवेत्, भवेत् प्रत्यक्षवेदान्तश्रुतिविरोधादप्रमाणम्।···प्रधानादिरस्याविषयो न स्वप्रामाण्यमिति परमार्थः" इति। इमामेव सरणीं वैशेषिकादिशास्त्रेष्वप्यविरोधगत्याद्वैतदर्शनसमन्वयायातिदिशन्ति भाष्यकृतः—"एतेन सर्वाणि तर्कस्मरणानि प्रतिवक्तव्यानि। तान्यपि तर्कोपपत्तिभ्यां तत्त्वज्ञानायोप-कुर्वन्ति चेत्, उपकुर्वन्तु नाम"[2] इति। इदमप्यस्मिन् प्रसङ्गे श्रीवाचस्पतिमिश्राणामवश्याकलनीयं वचनमस्ति यत्र न केवलं स्वाभिप्रायः, यावत् सांख्ययोगप्रवर्तकपूर्वाचार्यसम्मतिरपि दर्शिता—"नानेन योगशास्त्रस्य हैरण्यगर्भपातञ्जलादेः सर्वथा प्रामाण्यं निराक्रियते, किन्तु जगदुपादान-स्वतन्त्रप्रधानतद्विकारगोचरं प्रामाण्यं नास्तीत्युच्यते। न चैतावता एषामप्रामाण्यं भवितुमर्हति, यत्पराणि हि तानि तत्राप्रामाण्येऽप्रामाण्यमश्नुवीरन्, न चैतानि प्रधानादिसद्भावपराणि''तस्मात् प्रमाणभूतादपि योगशास्त्रान्न प्रधानादिसिद्धिः। अत एव योगशास्त्रं व्युत्पादयिता आह स्म भगवान् वार्षगण्यः—"गुणानां परमं रूपं न दृष्टिपथमृच्छति। यत्तु दृष्टिपथप्राप्तं तन्मायैव सुतुच्छकम्॥" इति योगं व्युत्पिपादयिषता निमित्तमात्रेणेह गुणा उक्ता न तु भावतः, तेषामतात्त्विक-त्वादित्यर्थः" इति। इदं हि वचनं स्वोक्तार्थदार्ढ्याय महर्षिणा व्यासेन योगभाष्येऽतिप्राचीनं संवादार्थमुदधारि। तदसौ सर्वदर्शनसमन्वयकरणसिद्धान्तो बहुतिथात् कालादेव संप्रवृत्तो वरीवर्तीति निश्चयातव्यम्।

तत्त्वसाक्षात्काराराादुपकारकाङ्गभूतनित्यनैमित्तिकादिविचारपरं पूर्वमीमांसाशास्त्रमात्मनिर्वि-शेषमेवाद्वैतदर्शनस्येत्युक्तम्। कियच्चैतत् प्रत्यासीदत्यद्वैतदर्शनस्येति पश्यामः। "आम्नायस्य क्रिया-र्थत्वादानर्थक्यमतदर्थानाम्"[3] इति सूत्रयन् जैमिनिः प्रतिपक्षो वेदान्तदर्शनस्येति यद्यपि मुखतः प्रतिभासते, तथापि परिनिष्ठितवस्तुबोधकोपनिषत्साधारणं वेदप्रामाण्यलक्षणम् "अन्यतिरेकश्चार्थेऽ-

---

१. ब्र० सू० २।१।३
२. ब्र० सू० २।१।३
३. मी० सू० १।२।१

नुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात्"[1] इति सूत्राक्षरैः प्रणयता तेनैव स्वाशयं गूढं प्रकट-य्यापातप्रतीतिरियमपोहिता । एवमर्थवादानां स्वार्थेऽप्रमाणता, देवतानां विग्रहाद्यस्वीकारः, ईश्वरनास्तिकतेत्येवंजातीयका विरुद्धवदाभासा अंशा अस्मिन् शास्त्रे ये लक्ष्यन्ते, सर्वानपि तानुदाहृत्य, यथैतेष्वर्थेषु भगवता जैमिनिनात्मनीनमाशयं प्रच्छाद्यैव व्यवहृतम्, न परमार्थभावेन, तथास्माभिः सुव्यञ्जितं पूर्वोत्तरमीमांसापरिशीलनाभिधे खण्डप्रबन्ध इति विस्तरभयान्नेह प्रतन्यते। दिङ्मात्रदर्शनाय तत्रत्य उपसंहारश्लोकः परं पठ्यते—"नास्तिक्यसंपूरितभावदोषान् मीमांसया संस्कृतब्राह्मवेषान् । निर्जित्य तेषां वशगं प्रमाणराजं स्वराज्येऽभिषिषेच नूनम् ॥" इति। विलक्षणा हि शैली जैमिनेरर्थनिरूपणे यदसौ स्वेन प्रतिषिद्धमेवार्थं पश्चादन्वारोहवादेनाभ्युपपद्यते । तद्यथा—ऊर्ध्वरेतसामाश्रमान् "परामर्शं जैमिनिरचोदना चापवदति हि"[2] इति प्रतिषिद्धय, "तद्भूतस्य तु नातद्भावो जैमिनेरपि" इति तुरीयाश्रमं प्रतिपन्नानां ततोऽप्रच्युतिमाह । तथेश्वरमनङ्गीकुर्वन् उपासकैः प्रतिपत्तव्यं परं ब्रह्मैव, ब्रह्मशब्दस्य तत्रैव मुख्यत्वादित्याह "परं जैमिनिर्मुख्यत्वात्"[3] इति । तदसौ महर्षिर्जैमिनिर्वेदान्तवाद्येवेदानीं परिणत इति स्फुटम् ।

भट्टप्रभाकरयोस्तु न केवलमद्वैतदर्शने प्रद्वेषाभावः, प्रत्युत भूयान् समादर एव लक्ष्यते। यदाहुराचार्यकुमारिलपादा आत्मनिरूपणोपसंहारे—"इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन ॥"[4] इति। तथा प्रभाकर-मिश्रैरप्युक्तम्—[5]"आत्मा निष्प्रपञ्चं ब्रह्मैव। तथापि कर्मप्रसङ्गिने न तथा वाच्यम्। उक्तं हि भगवता श्रीकृष्णेन—"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्"[6] इति।

तत्त्वनिरूपणावसरे च जीवस्वरूपं निर्वर्णयन् यदाह भट्टः—"जडबोधात्मको जीवः" इति, तत्राप्यविद्योपरक्तमात्मानमेवानेन पर्यायोक्तेनाभिप्रैतीति गम्यते, यथाश्रुते चेतनाचेतना-

---

१. मी० सू० १।१।५

२. ब्र० सू० ३।४।१८

३. ब्र० सू० ४।३।१२

४. श्लो० वा० आत्मवादे १४७ श्लो०

५. बृहत्यां तर्कपादे

६. भ० गी० ३।२६

त्मकांशद्वयभागित्वेनानित्यत्वप्रसङ्गात् । ईश्वरनिराकरणोपसंहारे च [1]"एवं ये युक्तिभिः प्राहुस्तेषां दुर्लभमुत्तरम्" इति वदता ईश्वरानुमानस्य सत्प्रतिपक्षत्वप्रख्यापनायायं सर्वः प्रपञ्चः, वेदान्तमतानुसारेणेश्वरस्य शास्त्रमात्रगम्यत्वं त्वनतिसन्धेयमिति स्वाशयोऽभिव्यञ्जितः । किं बहुना, निरालम्बनवादिनो बुद्धदेवस्य यद् ज्ञानातिरिक्तबाह्यार्थनिराकरणम्, तदपि विषयव्यासक्तरागिजनस्य वैराग्योत्पादनेन संग्रहार्थमेव, न तु परमार्थभावेनेति ब्रुवन् नास्तिकदर्शनानां समन्वयस्य बीजावापं प्रकुरुते—

युक्त्यानुपेतामसतीं प्रकल्प्य यद्वासनामर्थनिराक्रियेयम् ।
आस्थानिवृत्त्यर्थमवादि बुद्धैर्ग्राह्यं गतास्तत्र कथञ्चिदन्ये ॥[2] इति ।

तदिहाचार्यैरास्तिकषड्दर्शन्या इव नास्तिकषड्दर्शन्या अपि सामरस्यप्रकल्पनादिगुन्मीलितेति द्रष्टव्यम् ।

अत एवेमामेव दिशमभिप्रस्थितैर्विद्यारण्यश्रीचरणैः चार्वाकादिप्राभाकरान्तानां सर्वप्रस्थानानामद्वैतदर्शने पर्यवसानमुपादर्शि चित्रदीपे । श्रीमदप्पय्यदीक्षितेन्द्राश्च दर्शनानामिव तत्तत्संप्रदायानामप्यविरोधं चिख्यापयिषन्तः स्वे चतुर्मतसारसंग्रहाख्ये ग्रन्थे अद्वैत-शैववैष्णव-विशिष्टाद्वैत-द्वैतसंप्रदायानामतिश्लक्ष्णया पद्धत्या समन्वयं व्युत्पादयामासुः । यथा हि विज्ञानव्यतिरेकेणान्यद् वस्तु नास्तीति मन्यमानानां बौद्धानां विज्ञानाद्वैतम्, यथा च—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥[3]

इत्युपश्लोकयतां श्रीभर्तृहरिप्रमुखानां वैयाकरणानां शब्दाद्वैतम्, तथैवैतेषामपि संप्रदायानां यया कयाचिद्विधयाद्वैततत्त्व एव परा निष्ठेति शास्त्रविचारशीला अभिनिविशन्ते ।-विशिष्टाद्वैतवादिनो हि चिदचिदात्मकं जगदीश्वरशरीरान्तर्भूतं तद्व्यतिरेकेण नास्तीति विशिष्टस्याद्वैतं मन्यन्ते । तथा द्वैतवादिनोऽपि—"स्वतन्त्रं परतन्त्रं च द्विविधं तत्त्वमिष्यते । स्वतन्त्रो भगवान् विष्णु······:"[4] इत्याचार्येणोपदिष्टाः, तत्पारतन्त्र्यं च तत्सत्ताप्रयुक्तसत्ता-

---

१. श्लो० वा० सम्बन्धाक्षेप० ११७ श्लो०

२. श्लो० वा० निरालम्बनवादे २० श्लो०

३. वा० प० १।१

४. मध्वाचार्यरचिते तत्त्वसंख्यानप्रकरणे ।

कत्वम्, स्वातन्त्र्यमपि स्वसत्ताधीनसत्ताकत्वमिति परिष्कुर्वन्तश्च स्वतन्त्राद्वैतमातिष्ठन्ते। तमिमं स्मार्तशैववैष्णवादिविभिन्नसंप्रदायानां पर्यन्तगत्या, सर्वेषां नदनदीप्रवाहानामिवार्णवे, सर्वानुगताद्वैततत्त्व एव परा निष्ठेति समन्वयं भगवान् गीतासूपदिशति—

> यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
> तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥
> स तया श्रद्धया युक्तस्तस्या राधनमीहते।
> लभते च ततः कामान् मयैव विहितान् हि तान्॥[1] इत्यादिना।

नन्वीदृशस्य तात्पर्यसमन्वयप्रकारस्य समाश्रयणे सर्वासु दर्शनप्रक्रियासु, सर्वेषु च ग्रन्थेषु प्रायेण बहवोऽर्थास्तात्पर्यविरहव्याजेन परित्याज्या भवेयुः। न चैतद्युक्तं प्रतिभातीति केचिद् विमृशन्ति। तेषामयं विमर्शो न सहृदयानां चमत्कारमावहति, सोपानारोहक्रमन्यायेन तेषां परमतात्पर्यविरहेऽपि स्वेष्वर्थेष्वान्तरतात्पर्यसंभवात्। तदाहुरभियुक्ताः—"उपायाः शिक्षमाणानां बालानामुपलालनाः। असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥"[2] इति। उपायशब्दार्थं चैवं वर्णयन्ति—"उपादायापि ये हेयास्तानुपायान् प्रचक्षते"[3] इति। अत एवेदृशीमेव ग्रन्थरचनाप्रवृत्तिमात्मनः स्वयमेवाविरकार्षुरुदयनाचार्या बौद्धाधिकारे। तथा च शून्यतावादं प्रति शिक्षयाद्वैतवादे पर्यवसाय्यतामाचार्याणामिदमनुक्रमणम्—"[4]अस्तु तर्हि शून्यतैव परमनिर्वाणमिति चेत्? न। सा हि यद्यसिद्धा, कथं तदवशेषं विश्वम्? परतश्चेत्सिद्धा, परोऽभ्युपगन्तव्यः। स च परो यदि संवृतिरेव, विश्वशून्यतयोर्न कश्चिद् विशेषः। कथं तदप्यवशिष्येत। असंवृतिश्चेत् परः, परत एव सिद्धानवस्था। स्वयमसिद्धा चेत्, कथं शून्यत्वमपि साधयेत्। स्वतः सिद्धा चेत्, आयातोऽसि मार्गेण। तथा हि स्वतस्सिद्धतया तदनुभवरूपम्। शून्यत्वादेव न तस्य कालावच्छेद इति नित्यम्। अत एव न तस्य देशावच्छेद इति व्यापकम्। अत एव निर्धर्मकमिति विचारासहत्वम्, तस्य धर्मधर्मिभावमुपादाय प्रवृत्तेः। अत एव विशेषाभाव इत्यद्वैतम्। प्रपञ्चस्यापारमार्थिकत्वादेव निष्प्रतियोगिकमिति विधिरूपम्। अविचारितप्रपञ्चाक्षेपात्तु शून्यमिति व्यवहारः। तथापि प्रपञ्चशून्यस्यानुभवरूपस्य प्रपञ्चेन सह कः

१. भ० गी० ७।२१-२२

२. वाक्यपदीये।

३. वाक्यपदीये।

४. आत्मतत्त्वविवेके।

संबन्धः ? येनायं प्रकाशत इति चेत् , वस्तुतो न कश्चित् ; संवृत्या तु गगनगन्धर्वनगरयोराधाराधेयभाव इव विषयविषयिभावः । स च यथा नैयायिकैः समर्थयिष्यते, तथैव । वेद्यनिष्ठस्त्वसावस्मिन् दर्शन इति विशेषः । अविद्यैव हि तथा तथा विवर्तते यथानुभवनीयतया व्यवह्रियते । तत्तन्मायोपनीतोपाधिभेदाच्चानुभूतिरपि भिन्नेव व्यवहारपथमवतरति, गगनमिव स्वप्नदृष्टघटकटाहकोटरकुटीकोटिभिः । तदास्तां तावत् , किमार्द्रकवणिजो वहित्रचिन्तयेति । तस्मादनुभवव्यवस्थितावनात्मापि स्फुरतीत्यवर्जनीयमिति प्रविश वानिर्वचनीयख्यातिकुक्षिम् ; तिष्ठ वा मतिकर्दममपहाय न्यायानुसारेण नीलादीनां पारमार्थिकत्वे " इत्यादि ।

तदेवं सर्वदर्शनसामरस्यपर्यवसानभूमेर्दर्शनाद्वैतरूपस्याद्वैतदर्शनस्योपदेशेन, शान्तिदान्त्यादिसच्छीलपरिपूतेन स्वेन चारित्रेण च भारतदेशं सर्वदेशानामादर्शभूतमाकलयत्—"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः । स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥"[1] इति मानववचनं स्मारयन् दर्शनपरिषदोऽस्याः पुनरपि भूयसा धन्यवादानभिवदंश्च भाषणमिदमुपसंहरामि ।

॥ इति सर्वं शिवम् ॥



1. म० स्मृ० २।२०

# शब्दाद्वैतविमर्शः

श्रीरघुनाथशर्मा, वेदान्तविभागाध्यक्षः, वा. सं. वि. वि. वाराणसी।

सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमभिष्यन्दमानाम्।
यामन्ये विदुरन्यामिव नुमस्तां नानारूपामात्मनि सन्निविष्टाम्॥

शब्दोऽर्थ इत्यसद्द्वैतं यदविद्याविलासजम्।
तच्छब्दतत्त्वं ब्रह्माहमात्मानं मनसा भजे॥

अशेषं किलार्थजातं प्रतीयमानं शब्दानुविद्धमेव प्रतीयत इत्यस्ति सार्वजनीनोऽनुभवः। तदुक्तम्—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ इति।

लोके हि विकाराणां प्रकृत्यन्वयो दृष्टः। तथा हि—घटकुण्डलादयो विकारा मृत्सुवर्णादिप्रकृत्यन्विता दृश्यन्ते। तथैवैते रूपादयो विषयाः शब्दरूपानुगता एव दृश्यन्ते—गौरिति शब्दः, गौरित्यर्थः, गौरिति ज्ञानमिति। अतोऽर्थानां प्रकृतिः शब्दतत्त्वमेव ब्रह्मेति। न च वैपरीत्यमेव कुतो नेति वाच्यम्, शब्दस्यैव प्राग् बुद्ध्यारोहेण प्राक्सत्त्वेन च प्रकृतित्वौचित्यात्। तदुक्तं हरिणा—

यथा प्रयोक्तुः प्राग्बुद्धिः शब्देष्वेव प्रवर्तते।
व्यवसायो ग्रहीतॄणामेवं तेष्वेव जायते॥ इति।

(वा० प० १–५३)

यद्यपि भिन्नस्वरूपा भिन्नेन्द्रियग्राह्याश्च रूपादयो विषयाः, अभिन्नरूपमभिन्नेन्द्रियग्राह्यञ्च शब्दतत्त्वमिति नोपपद्यते रूपादीनामर्थानां शब्दतत्त्वस्य च परस्परं प्रकृतिविकृतिभाव इति शङ्का समुदेति, तथापि शब्दतत्त्वे ब्रह्मण्यधिष्ठानभूते रूपादीनामर्थानां रज्जाविव सर्पादीनां कल्पितत्वेन भिन्नरूपताया आविद्यकत्वात् सा निराकर्तव्या, "वाचारम्भणं विकारो नामधेयं

मृत्तिकेत्येव सत्यम्" इति श्रुत्या प्रकृतेरेव सत्यत्वव्यवस्थापनात्। किञ्च, शब्देन वस्तु तत्तद्रूपेण वाच्यं सत् सङ्केतग्रहसहकारेण परिच्छिद्यते (इतरव्यावृत्ततया ज्ञायते), अतस्तयोः प्रकृतिविकृतिभावाऽभ्युपगमेन शब्दात्मकं वस्तु। तथा हि—यद्यर्थः शब्दात्मको न भवेत्, तदा शाब्दे ज्ञाने न प्रतीयेत, किन्तु शब्देन शब्द एव प्रतीयेत, अन्येनान्यस्य प्रतीत्यसंभवात्; स्वस्यैव स्वप्रतीतिजनकतायाः प्रत्यक्षे दृष्टत्वात्। प्रतीयते च शब्देनार्थ इति शब्दप्रकृतिकतया शब्दात्मकोऽर्थः। किञ्च, शब्देन विषयविशिष्टं ज्ञानमभिलप्यते, मम घट इति ज्ञानं जातमिति। न चान्येनान्यस्याभिलापो युक्तोऽतादात्म्यादिति शब्दात्मकोऽर्थो ज्ञानञ्चेति। किञ्च, सर्वेऽपि स्थितिप्रवृत्तिनिवृत्तिरूपा व्यवहाराः शब्देनैव क्रियन्त इत्यतोऽपि तेषां व्यवहाराणां तद्विषयाणाञ्च मूलभूतं शब्दात्मकं ब्रह्मैवेति। तदुक्तं हरिणा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥

(वा० प० १, १)

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत॥

(वा० प० १।१२१)

शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी।
यन्नेत्रः प्रतिभात्माऽयं भेदरूपः प्रतीयते॥ इति।

(वा० प० १।११९)

तच्च शब्दतत्त्वं ब्रह्म, अक्षराणां वर्णानां निमित्तत्वादुपादानत्वाच्च अक्षरमित्युच्यते। कथं ब्रह्मणोऽक्षराणां निमित्तत्वमिति चेदित्थम्—प्रत्यक्चैतन्ये ज्ञानरूपेऽन्तरविद्यया संनिवेशिताः पदवाक्यरूपा वर्णाः परप्रत्यायनार्थं प्रयत्नेनाभिव्यज्यन्ते। सेयं वर्णव्यक्तिर्वर्णसंघातरूपा ब्रह्मरूपस्यात्मनोऽभिष्यन्द इत्युच्यत इत्येवं ब्रह्मोपादानिका वर्णव्यक्तिर्घटव्यक्तिरिव मृदुपादानिका। तदुक्तमृषिणा—

सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमभिष्यन्दमानाम्।
उतान्ये विदुरन्यामिव च एनां नानारूपामात्मनि संनिविष्टाम्॥ इति।

पूर्वार्धे सूक्ष्मत्वादिना विहिताया वाच उत्तरार्धेऽन्यत्वादिना पुनर्विधानादन्वादेशः।

## शब्दाद्वैतविमर्शः

एवमेकस्य सूक्ष्मस्य ज्ञानात्मकस्य शब्दतत्त्वस्य ब्रह्मणः परावाग्रूपस्य विवर्तभूतास्तिस्रो वाचः, तदर्थाश्चेति शब्दार्थोभयोपादानत्वं ब्रह्मणः शब्दतत्त्वस्य सिद्धम् । तदुक्तम्—

परा वाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ॥ इति,
स्वरूपज्योतिरेवान्तः परा वागनपायिनी ॥ इति च ।

विवर्तलक्षणं तु—एकस्य तत्त्वात् ( स्वरूपात् ) अप्रच्युतस्य अधिष्ठानस्य आरोप्ये स्वभेदप्रतिभासपुरस्सरं योऽसत्यस्याधिष्ठानविभागेन च प्रतीयमानस्य आरोप्यस्य धर्मोपग्रहः स विवर्त इत्युच्यते, स्वप्नविषयप्रतिभासवत् । तद्यथा—स्वप्नावस्थायामेक एव विज्ञानात्मा भिन्न-जातीयानेकपदार्थावभासी जायते । न च विज्ञानस्य तदा स्वरूपहानं भवति, तथा सत्यनुभवा-भावेनोत्थितस्य स्मरणानुपपत्तेः । तथा शब्दतत्त्वं ब्रह्मापि स्वरूपादप्रच्युतं सत् स्वाविद्यारूपया शक्त्याऽर्थाकारेण प्रतिभासत इति । उक्तञ्च स्वोपज्ञटीकायां कस्यचिद्वचनम्—"मूर्तिक्रियाविवर्ता-वविद्याशक्तिप्रवृत्तिमात्रम् । तौ विद्यात्मनि तत्त्वान्यत्वाभ्यामनाख्येयौ, एतद्धि अविद्याया अविद्या-त्वम्" इति । अस्यार्थः—गेहे घटः, क्षेत्रे गौरित्यादिना देशभेदावग्रहरूपेण यद् गोघटादि-रूपाणामर्थानामवस्थानं स मूर्तिरूपो विवर्तः । यत्तु तेषामेव जायते नश्यति वा घट इत्यादिनो-त्पादविनाशादिक्रियोपहितरूपेणावस्थानं स क्रियारूपो विवर्तः । स द्विविधोऽपि विवर्तोऽविद्या-शक्तिरूपतया प्रवृत्तिरूपतया चावस्थाभेदेन भिन्न इति चातुर्विध्यं विवर्तस्य । तथा हि—यदा मूर्तिविवर्तक्रियाविवर्तयोर्द्वयोरपि विपर्यासरूपं दर्शनं नास्ति, तदाऽविद्याशक्तिरूपो विवर्तः । यदा तु तयोर्दर्शनं तदा प्रवृत्तिरूपो विवर्त इति । तौ मूर्तिक्रियारूपौ द्वावपि विवर्त्तौ विद्यारूप आत्मन्याविद्यकत्वाद् भेदाभेदाभ्यामनिर्वाच्यौ । एतादृशविवर्तजननमेवाविद्याया अविद्यात्वमिति । तदेतस्मिन्नर्थे एते श्लोका भवन्ति तत्रभवतामप्रमत्तगीताः—

यः सर्वपरिकल्पानामाभासेऽप्यनवस्थितः ।
तर्कागमानुमानेन बहुधा परिकल्पितः ॥
व्यतीतो भेदसंसर्गौ भावाभावौ क्रमाक्रमौ ।
सत्यानृते च विश्वात्मा प्रविवेकात् प्रकाशते ॥
अन्तर्यामी स भूतानामाराद् दूरे च दृश्यते ।
सोऽत्यन्तमुक्तो मोक्षाय मुमुक्षुभिरुपास्यते ॥

प्रकृतित्वमपि प्राप्तान् विकारानाकरोति सः ।
ऋतुधामेव ग्रीष्मान्ते महतो मेघसंप्लवान् ॥
तस्यैकमपि चैतन्यं बहुधा प्रविभज्यते ।
अङ्गाराङ्कितमुत्पाते वारिराशेरिवोदकम् ॥
तस्मादाकृतिगोत्रस्थाद् व्यक्तिग्रामाविकारिणः ।
मारुतादिव जायन्ते वृष्टिमन्तो बलाहकाः ॥
त्रयीरूपेण तज्ज्योतिः परमं परिवर्तते ।
पृथक्तीर्थप्रवादेषु दृष्टिभेदनिबन्धनम् ॥
शान्तविद्यात्मकं योऽशस्तद् द्वैतदविद्यया ।
तया ग्रस्तमिवाजस्रं या निर्वक्तुं न शक्यते ॥
सर्वतः परिवर्तानां परिमाणं न विद्यते ।
तस्या या लब्धसंस्कारा न स्वात्मन्यवतिष्ठते ॥
यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
सङ्कीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ॥
तथेदममृतं ब्रह्म निर्विकारमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपं विवर्तते ॥
ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम् ।
विवृत्तं शब्दमात्राभ्यस्तास्वेव प्रविलीयते ॥ इति ।

एते च श्लोका वाक्यपदीयव्याख्यायामस्माकर्त्र्या सम्यग् व्याख्याता इति विस्तरभयान्नेह व्याख्यायन्ते ।

ब्रह्मेदं शब्दनिर्माणमिति द्वादश्याः कारिकाया आशयमाश्रित्यैव हरिणाऽपि शब्दार्थोभयात्मकस्य विश्वस्य शब्दशक्तिनिबन्धनत्वं शब्दोपादानकत्वञ्चोक्तम्—

शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी ।
यन्नेत्रः प्रतिभात्माऽयं भेदरूपः प्रतीयते ॥ इति ।

(वा० प० १, ११९)

अयमर्थः—वाच्यवाचकोभयरूपस्यास्य विश्वस्य निबन्धनी, वाच्यवाचकभावनियामिका, अयमेव शब्दोऽस्यैवार्थस्य वाचक इति नियमप्रयोजिका शक्तिः शब्देष्वेवाश्रिता । यन्नेत्र इत्यत्र

नेत्रपदस्य परिच्छेदोपाये लक्षणा, प्रकाशसाधनत्वरूपनेत्रसाधर्म्यात् शब्दशक्तेः। या शब्दशक्तिर्नेत्रं परिच्छेदोपायो यस्य वाच्यस्य पदपदार्थजातस्य सोऽयं यन्नेत्रः, प्रयुक्तशब्दशक्तिप्रकाश्योऽयं वाच्यः पदपदार्थसमूहः, प्रतिभात्मा प्रतिभायां बुद्धौ आत्मा स्वरूपं गोचरतया यस्येति विग्रहः। बुद्धिविषयः सन्निति यावत्। भेदरूपो गवादिशब्दतदर्थरूपवाच्यभेदभिन्नः प्रतीयते। नहि गवादि-पदतदर्थविषयकशक्तिविशिष्टेन गवादिपदेन विना गवादिपदतदर्थविषया प्रतिभा उत्पद्यते। यद्वा यन्नेत्र इत्यत्र नेत्रपदेन नयनक्रियासाधनं योगशक्त्या करणव्युत्पत्त्या आश्रय उच्यते। घटाद्याश्रितं हि जलादिकमन्यत्र नीयते। बुद्धिस्थेषु चातीन्द्रियेषु सूक्ष्मशब्देषु समाश्रितमिदं विश्वं वक्त्राऽभिव्यक्तिक्रमेण प्रतिपत्तृबुद्धौ नीयते। तथा च शब्देषु सूक्ष्मशब्देष्वेव बुद्धिस्थेषु अतीन्द्रियेष्वाश्रिताऽस्य वाच्यवाचकोभयभेदभिन्नस्य विश्वस्य निबन्धनी जनिका शक्तिः। यन्नेत्रः यं सूक्ष्मशब्दमुपादानतया आश्रितोऽयं वाच्यवाचकरूपः प्रतिभात्मा, बुद्धिविषयः प्रतिभासमानो भेदरूपो वाच्यवाचकभेदभिन्नः प्रतीयते। सूक्ष्मशब्दो यद् वाक्तत्त्वं तदेवाधिष्ठानमाश्रयोऽखि-लस्य वाच्यवाचकजातस्य, यतस्तदेव सूक्ष्मं वाक्तत्वं गवादिशब्दाकारेण तदर्थाकारेण च विवर्तत इति।

अयं भावः—केषाञ्चिन्मते गवादिशब्दगता गोशब्दत्वादिरूपा जातयो वाचिकाः, गवादिपदार्थगताश्च गोत्वादिजातयो वाच्याः। तदेतदुभयं स्वनिबन्धनत्वेन ( स्वज्ञापकहेतुत्वेन ) सूक्ष्मं वाक्तत्त्वं बुद्धिस्थमेव वाच्यवाचकोभयजात्याश्रयाणां शब्दनित्यत्वानित्यत्वपक्षभेदेन विवर्तो-पादानतया परिणाम्युपादानतया वाधिष्ठानभूतमाश्रयते। यतो वाच्या वाचिकाश्च गोत्वादयो गोशब्दत्वादयश्च जातयः स्वाश्रयाणामनुत्पत्तौ अनभिव्यक्ता न वाच्यत्वेन न वा वाचकत्वेन व्यवहारगोचराः, अतः स्वाभिव्यक्तये स्वाश्रयाणामुत्पत्तिमपेक्षमाणाः सूक्ष्मं वाक्तत्त्वं नित्यत्वपक्षे विवर्तोपादानतयाऽनित्यत्वपक्षे च परिणाम्युपादानतयाऽपेक्षन्त, इत्येवं सूक्ष्मेषु शब्देष्वाश्रिता शक्तिर्विश्वस्यास्य निबन्धनीत्युक्तम्।

कथमस्य वाच्यवाचकभेदभिन्नस्य विश्वस्य निबन्धनी ( जनिका ) शक्तिः सूक्ष्मवाक्तत्त्वे एवाश्रिता ? केन क्रमेण च सूक्ष्मस्य प्रतिसंहृतक्रमस्य वागात्मनो वाच्यवाचकोभयरूपेण विवर्तः परिणामो वेति जिज्ञासा चेत् ! श्रूयतां शब्दसर्वस्वं श्रुत्वा चैवावधार्यताम्। इदं हि सर्वं वाच्य-वाचकोभयात्मकं विषयजातं प्रविनश्यत् शक्तिरूपेण स्वस्वग्राहकेन्द्रियेषु प्रविलयं गच्छति, तादृश-शक्तिमच्चेन्द्रियजातं प्रविनश्यत् शक्तिरूपेण बुद्धिषु वृत्तिभेदभिन्नासु लयं याति, तादृश्यो बुद्धयश्च प्रविनश्यन्त्यः शक्तिरूपेण प्रतिसंहृतक्रमे सूक्ष्मे वाक्तत्त्वे प्रविलयं गच्छन्ति, इत्येवमस्य विश्वस्य

सूक्ष्मे वाक्तत्त्व एव प्रविलयः। एतद्वैपरीत्येन च सर्गकाले सूक्ष्माद् वाक्तत्त्वाद् बुद्धीनां वृत्तिभेदभिन्नानामुद्भवः, बुद्धिभ्य इन्द्रियाणाम्, इन्द्रियेभ्यो विषयाणां वाच्यवाचकोभयात्मनामिति रीत्या विश्वस्य सर्गलयाधिष्ठानत्वादुपादानकारणं सूक्ष्मं प्रतिसंहृतक्रमं वाक्तत्त्वं परम्। सा चेयं शब्दब्रह्मणः सूक्ष्मस्य वाक्तत्त्वस्य दैनन्दिने स्वप्ने सर्वप्रलये वृत्तिः, प्रबोधे च प्रागुक्तक्रमेण सर्वसर्गे वृत्तिः, संप्रसादे (निद्रायाम्) अविभागमुपागतानां पुरुषाणां प्रबोधे चैत्रमैत्रादिपुरुषप्रविभागानुकारिणी यद्यपि महती मायारूपा, तथापि वाक्तत्त्व एव परब्रह्मस्वरूपे जगत्कारणे नित्यमवस्थिता। एतदेवापरेऽप्याहुः—

वागेवार्थं पश्यति वाग्ब्रवीति वागेवार्थं निहितं सन्तनोति।
वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते॥ इति।

अयमर्थः—सूक्ष्मं वाक्तत्त्वमेव ज्ञातृरूपेणावस्थितं सत् स्वपरिणामेन स्थूलशब्देन प्रकाशितं स्वपरिणामभूतमर्थं पश्यति जानाति। तदेव वाक्तत्त्वं विवक्षाप्रयुक्तप्रयत्नवद् वक्तृरूपेणावस्थितं सत् स्वपरिणामभूतं स्थूलशब्दं ब्रवीति, प्राणस्योर्ध्वं समीरणेन करणकम्पं कण्ठताल्वाद्यभिघातं चोत्पाद्य स्थूलं शब्दमुच्चारयति। तदेव वाक्तत्त्वं स्वस्मिन् निहितमविभागेन शक्तिरूपेणावस्थितमर्थं विषयजातं दैनन्दिने सर्गे प्रबोधवृत्त्या संतनोति, प्रविभज्य विस्ताररूपेण प्रदर्शयति। तस्मिन्नेव वाक्तत्त्वे दैनन्दिने प्रलयेऽन्यस्मिन् वा बहुरूपं नानाजातीयं विश्वं निबद्धं शक्तिरूपेण स्थितम्। सर्गकालेऽपि प्रबोधे कार्यरूपेणाश्रितम्। तदेवमेतदेकमेव वाक्तत्त्वं भोक्तृलोकः स्वादृष्टद्वारा प्रविभज्य नानाभोग्यरूपतां स्वयमेवापाद्य उपभुङ्क्ते। नहि तत्रोपभोगे ईश्वरस्य कर्मनिरपेक्षस्य हेतुत्वम्, वैषम्यनैर्घृण्यापातात्। कर्मसापेक्षस्य हेतुत्वे तु जीव एव स्वकर्मद्वारा प्रधानकारणं भोग इति।

षड्जादिभेदः शब्देन व्याख्यातो रूप्यते यतः।
तस्मादर्थविधाः सर्वाः शब्दमात्रासु निश्रिताः॥

(वा० प० १।१२०)

इति कारिकयापि विश्वस्य शब्दशक्तिनिबद्धत्वरूपं शब्दोपादानकत्वं भङ्ग्यन्तरेण प्रतिपादितम्। तथा ह्येतत्कारिकार्थः—यतः षड्जादीनां स्वराणां परस्परं भेदः शब्देन व्याख्यातः, गाथकेन प्रतिपादित एव, रूप्यते परिच्छिद्यते, नान्यथा; गान्धर्वशास्त्रानभिज्ञानां सत्यपि सङ्गीतश्रवणे तत्तत्स्वरानवबोधात्। तस्मात् षड्जादिस्वरभेदनिरूपणस्य शब्दशक्तिमात्रनिबन्धनत्वात्

सर्वा अप्यर्थविधाः प्रसिद्धपदनिबन्धना अप्रसिद्धपदनिबन्धना वा शब्दमात्रासु शब्दशक्तिषु स्वप्रज्ञापिकासु स्वप्रज्ञप्तये, निश्रिताः नितरां श्रिताः संबद्धाः, सापेक्षा इति यावत् ।

अयं भावः——सर्वो ह्यर्थः स्वविषयकसंविज्ञानजनकपदप्रतिपादित एव तत्तद्व्यवहारपथमवतरति नान्यथा, नहि शब्दाव्यपदेश्येन स्वलक्षणमात्रेण चक्षुरादिभिः परिच्छिन्नोऽर्थो व्यवहारविषयो दृष्टः । शब्देन तु तत्तद्धर्मविशेषवत्तया प्रतिपादितो व्यवहाराङ्गं भवति । तथा हि——पूर्वं चक्षुरादिभिरर्थस्य संप्रयोगे संमुग्धरूपा स्वरूपेणार्थाकारनिरूपणा भवति । तदुत्तरमेकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति रीत्या तदर्थवाचकशब्दस्मृतौ बुद्ध्या शब्दार्थयोरभेददर्शनरूपा स्मृतिनिरूपणा भवति । तदुत्तरमयमर्थोऽस्यार्थस्य साधनम्, अयमर्थोऽस्यार्थस्य साध्य इत्यादिरूपाभिजल्पनिरूपणा भवति । तदुत्तरं तत्तदर्थक्रियासु प्रवृत्तिरूपो व्यवहार इति ह्यर्थस्य व्यवहारावतारप्रक्रिया । एवञ्च शब्देनाप्रतिपादितोऽर्थो न कथमपि व्यवहारपथमवतरतीति समाख्येयानां प्रसिद्धसंविज्ञानपदानामर्थानां स्थितिः । ये त्वप्रसिद्धसंविज्ञानपदा असमाख्येया अर्थाः षड्ज-ऋषभ-गान्धार-धैवत-निषाद-पञ्चम-मध्यमास्तेषां विशेषः स्वावधारणनिबन्धनगान्धर्वशास्त्रप्रसिद्धपदप्रत्ययं तादृशपदप्रत्ययजनिततत्तत्स्वरविशेषप्रत्ययं च विना नावधारयितुं शक्यते । किं बहुना, गोपालाविपालादयोऽपि गवादिभिः पशुभिः सह व्यवहर्तुं व्यवहारनिबन्धनानि पदानि 'हेहहहाहो, करछो' इत्यादीनि प्रकल्प्य गोमहिषादिरूपविशेषविषयं व्यवहारं गवां महिषीणाञ्च प्रजननाद्यर्थं गवादिष्वारभन्ते । तद्यथा—गोपाला 'हेहहहाहो' इत्यनेन शब्देन प्रकल्पितेन आम्रेडितेन साण्डं वृषभमेवाह्वयन्ते, स एव चानेन शब्देनाहूत आगच्छति, न तु महिषः । 'करछो' इतिपदेन चाभ्यस्तेन महिषीणां प्रजननार्थं महिषमाह्वयन्ते, स एव चानेन शब्देनाहूत आयाति, न तु साण्डमहावर्करादिः । तस्मात् समाख्येयेष्विन्द्रियग्राह्येषु परिच्छेदयोग्येष्वर्थेषु गवादिषु, असमाख्येयेषु विना शब्दं श्रवणेन्द्रियेण परिच्छेत्तुमशक्येषु षड्जादिस्वररूपेष्वर्थेषु, ये सामान्यशब्दा गवादयः षड्जादयश्च, ये च विशेषशब्दा धेन्वादयो वसन्तरागादयश्च, तेषु शब्देषु तेषामर्था बहुभेदभिन्ना अध्यारूढास्तेष्वर्थेषु ते शब्दा उत्कीर्णा इव, यथा शिलायां शालभञ्जिका उत्कीर्णाः । तथा च ते तेऽर्थाः सप्तदशाधिकशततमकारिकोक्तप्रकारेण शब्दशक्तिसंसृष्टया निरन्तरं (अव्यवधानेन) शब्दानुविद्धया, न तु सूच्या मण्यादिवद् व्यवधानेन शब्दानुविद्धया, अत एव शब्दात्मिकया (अनुपदोक्तरीत्या स्वस्मिन्नध्यारूढार्थाकारवत् शब्दात्मिकया) बुद्ध्या प्राणभावापत्तिपुरस्सरं तत्तत्स्थानाभिघातोच्चारितेन तेन तेन शब्देन द्वारीकृतेन प्रकाश्यते । यतो बुद्धिस्तत्तदर्थाकारवत् शब्दात्मिका, अतस्तया सोऽर्थः प्रकाश्यत इति स्थितिः । किञ्च, यथा प्रदीपेन स्वस्मात् पृथग्भूतानां

घटादीनां प्रकाशनम्, तथा न बुद्धया स्वस्वरूपात् पृथग्भूतानामर्थानां प्रकाशनम्, किन्तु बुद्धया प्रकाश्यमानस्तत्तदर्थो बुद्धया उपगृह्यते, स्वतादात्म्यापादानरूपोपग्रहपुरःसरं प्रकाश्यते। स च बुद्धेस्तत्तदर्थोपग्रहो न सन्दंशेन स्थाल्यादीनामिव, किन्तु बुद्धया तत्तदर्थः स्वीक्रियते (अर्थः स्वताद्रूप्योपगमेन एकतामुपनीयते) इति। तदेवं सर्वा अप्यर्थविधा बुद्धितादात्म्यापन्नासु सूक्ष्मासु शब्दमात्रासु नितरां श्रिता इति सिद्धम्। किञ्च, शब्दस्यार्थप्रकाशकस्य 'तदभिन्नाभिन्नस्य तदभिन्नत्वनियमः' इति न्यायेनार्थतादात्म्यापन्नस्य बुद्धितादात्म्यापन्नेन स्वरूपेणार्थोपादानत्वमपि हरिणा कारिकान्तरेणोक्तम्—

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत॥ इति।

(वा० प० १।१२१)

अयमर्थः—अयं सर्वोऽपि वाच्यवाचकभेदभिन्नः संसारः, शब्दस्य सूक्ष्मस्य वाक्तत्त्वस्य परिणाम इत्याम्नायविदो वेदविदो विदुर्विदन्ति, न तु वयं कल्पयामः। अतः प्रथमं सर्गादावेतद्विश्वं छन्दोभ्य एव, अत्र छन्दःपदेन सूक्ष्मं वाक्तत्त्वं लक्ष्यते, नित्यत्वशब्दत्वरूपच्छन्दःसाधर्म्यात्। अत्र छन्दसो नित्यत्वं तु वियदादिवत् सापेक्षं चिरस्थायित्वरूपम्। एवं सूक्ष्मवाक्तत्त्वस्य तु परिणामिनित्यत्वम्, परिणामित्ववचनात्। छन्दसो वेदरूपस्य मन्त्ररूपस्य वा सूक्ष्मवाक्तत्त्वकार्यत्वेन कार्यकारणयोरभेदोपचाराद्वा। तच्च सूक्ष्मं वाक्तत्त्वं परमाणुरूपं परिणामिनित्यमनेकञ्चेति मत्वा छन्दोभ्य इति बहुवचनम्। व्यवर्तत व्यजायत इत्यर्थः। विवर्तस्तु नात्र विवक्षितः, अत्रैव परिणामवचनविरोधात्।

अयं भावः—यथैव वैशेषिकादयः परमाणूनां चतुर्विधानां वायवीयतैजसाप्यपार्थिवभेदभिन्नानां जगत्कारणत्वमाश्रित्यारम्भवादमाचक्षाणाः कार्येषु घटादिषु गन्धस्पर्शरूपादिकस्य कारणधर्मस्य समन्वयं दृष्ट्वा परस्परव्यावृत्तभेदं सजातीयं सूक्ष्ममतीन्द्रियत्वेनासंवेद्यं सर्वेषां स्वविकाराणामनुकूलाभिः शक्तिभिरनुगतं स्वस्मिन् स्वाभिव्यक्तिशक्तेः प्रत्यस्तमयेनाव्यक्तरूपं परमाणुसमूहं सर्वविकारोपादानं व्यवस्थापयन्ति; सांख्यास्तु विकारग्रामे सुखदुःखमोहसमन्वयं दृष्ट्वा तत्कारणं सुखदुःखमोहसमन्वितं प्रधानं संस्थापयन्ति; केचित्तु, "पराऽस्य शक्तिर्विविधैव श्रूयते" इति श्रुतिबलेनात्मनः शक्तिसमूहस्यैवाविद्यापदव्यपदेश्यस्य त्रिगुणात्मकस्य त्रिगुणात्मकजगत्कारणत्वं वदन्ति; परे तु जगतो जन्मपरिणामाभ्यां वस्तुतोऽसंसृष्टमपि ब्रह्मैव मायया जगतो विवर्तोपादानरूपं कारणमिति मन्यन्ते; तथैवाम्नाये संहृतभोक्तृभोग्यभेदं तच्छक्तिरूपेणावस्थितं सूक्ष्मवागात्मकमात्मतत्त्वमेव

बहुधा भिन्नस्य विश्वस्य कारणत्वेनाम्नातम्। तथा च मन्त्रः—"स उ एवैष ऋङ्मयो यजुर्मयः साममयो वैराजः पुरुषः। पुरुषो वै लोकः, पुरुषो यज्ञः, तस्यैता लोकम्पृणास्तिस्र आहुतयस्ता एव व्यालिखिता वै त्रयो लोकाः" इति। अस्यार्थः—य एष वैराजः पुरुषो विराजः शरीरम्, अत्र पुरुषपदेन पुरुषाधिष्ठानत्वात् शरीरमुच्यते। यदेतद्विराट्पुरुषस्य विश्वात्मकं शरीरं दृश्यते। स उ एव, अत्रोकारः स्तोभवदनर्थकः। स एव ऋङ्मयो यजुर्मयः साममयः। अत्र ऋग्यजुः-सामपदैस्तदुपादानभूतं सूक्ष्मं वाक्तत्त्वमुच्यते, तस्यैव विश्वात्मकवैराजशरीरोपादानत्वसम्भवात्। अनेन भोक्ता उक्तः। पुरुषो वै लोकः भूर्भुवःस्वरात्मको लोकः पुरुष एव, भोग्यत्वादित्यर्थः। भोक्तृभोग्ययोरभेदोपचारात्। पुरुषो यज्ञः, यस्तु लोकसाधनं यज्ञः सोऽपि पुरुष एव, पुरुष-साध्यत्वात्; साध्यसाधनयोरभेदोपचारात्। तस्य यज्ञस्य, एतास्तिस्र आहुतयो या ऋग्यजुःसाम-मन्त्रैर्दीयन्ते। अत्र तिस्र इति त्रिविधा इत्यर्थः। ताश्चाहुतयस्तत्तल्लोकनिवासिलोकतर्पकत्वाद् लोकम्पृणाः। ता एव तिस्र आहुतय एव, व्यालिखिताः त्रिषु स्थानेषु आलिखिताः कल्पिताः, त्रयो लोका वै प्रसिद्धाः, वै इत्यव्ययस्य प्रसिद्धार्थकत्वात्। आहुतिफलरूपत्वाल्लोकानामाहुति-साध्यत्वेनाहुतिरूपत्वम्। तदेवं भोक्तृभोग्यभोगसाधनरूपस्य विश्वस्य वैराजपुरुषरूपत्वेन ऋग्यजुः-साममयत्वोक्त्या सूक्ष्मवाक्तत्त्वोपादानकत्वमनेन मन्त्रेणोक्तमिति।

तथाऽस्मिन्नर्थेऽन्योऽपि मन्त्रो भवति—"एष वै छन्दस्यः साममयः प्रथमोक्षन् वैराजः पुरुषो योऽन्नमसृजत। तस्मात् पशवोऽन्वजायन्त। पशुभ्यो वनस्पतयो वनस्पतिभ्योऽग्निः। तस्मादाहुर्न दारुपात्रेण दुह्यादग्निर्वा एष दारुपात्रम्। तस्मान्न दारुपात्रेण दुह्यते" इति। अस्यार्थः—योऽन्नं, पृथिवीम्, अन्नशब्दस्य पृथिव्यां "यत्कृष्णं तदन्नस्य" इत्याद्युपनिषत्सु प्रसिद्धत्वात्। व्रीहियवादिकं वा असृजत। एष वै एष एव, छन्दस्यः छन्दोभ्यो नानाविधाभ्यो गीतिभ्यो हितः छन्दस्यः, साममयः सामस्वरूपः, अत्र सामपदेन सामोपादानभूतं सूक्ष्मं वाक्तत्त्व-मुच्यते। प्रथमः सर्गादौ वर्तमानः, अक्षन् क्षतिरहितोऽविनाशी, यद्वा उक्षन् वृषभरूपः, "त्रिधा बद्धो वृषभो रोरवीति" इत्यादौ वाक्तत्त्वस्य वृषभत्वेन निरूपणात्। वैराजः पुरुषः विराड्रूपस्य विराज आत्मा, सूक्ष्मस्य वाक्तत्त्वस्य, "अथायमान्तरो ज्ञाता" इत्यादिवाक्यपदीयपद्ये ज्ञातृरूप-त्वेनोपवर्णितत्वात्। तस्माद् अन्नात्, पशवो गवादयः, अनु पश्चाद् अजायन्त। पशुभ्यो मूत्रशकृदादिद्वारा वनस्पतयोऽन्वजायन्त। यद्वा पशुभ्य इति चतुर्थी। पश्वर्थं वनस्पतयोऽन्नादेवा-जायन्तेत्यर्थः। वनस्पतिभ्यो वातेन प्रतिहन्यमानेभ्योऽग्निरजायत। तस्मादाहुर्न दारुपात्रेण गोदो-हनीकृतेन गां दुह्यात्, यतोऽग्निर्वा अग्निरेव, एष दारुपात्रमिति। अग्निरूपे दारुपात्रे दुग्धं

दुग्धं दह्येतेति भावः। तस्मादद्यापि न दारुवत्सेन लोके दुह्यते गौरिति लोकप्रसिद्धिर्दर्शितेति। अत्र मन्त्रे वाक्तत्त्वस्य सूक्ष्मस्य वैराजपुरुषरूपस्यान्नपशुवनस्पतिस्रष्टृत्वमुक्तम्। इदञ्च सर्व-सृष्ट्युपलक्षणम्, पूर्वमन्त्रसंवादादिति।

ऋङ्मन्त्रवर्णः खल्वप्यस्मिन्नर्थे भवति—"इन्द्राच्छन्दः प्रथमं प्रास्यदन्नं तस्मादिमे नामरूपे विषूची। नामप्राणाच्छन्दसो रूपमुत्पन्नमेकं छन्दो बहुधा चाकशीति॥" इति। अस्यार्थः—इन्द्रात् परमैश्वर्यसंपन्नाद् मायोपहितादात्मनः, प्रथमं सर्गादौ, अन्नं नामरूपात्मकं यत् स्थूलं भोग्यं तस्य यत्सूक्ष्मं स्वरूपं बुद्धौ इन्द्रियक्रमेण लयप्राप्त्याऽविभागेनावस्थितं तदप्यन्नम्, तत्तादात्म्यापन्ना बुद्धिरत्रान्नम्, मरुत्तत्त्वरूपाऽविभक्तनामरूपात्मिका सैव मायोपहिते परमात्मन्य-विभागं गता तदुपाधौ मायायामविभागप्राप्त्या सैव प्रथममिन्द्रात् परमेश्वरात्, प्रास्यत् प्राक्षिप्यत प्राविभज्यत। प्रविभक्ता समुत्पन्नाऽभूदित्यर्थः। अत्र नामरूपात्मिका बुद्धिश्छन्दः, स्वस्मिन् निलीनयोरविभक्तयोर्नामरूपयोश्छादकत्वात्। तस्माद् बुद्धिरूपाच्छन्दसः, इमे विषूची विष्वग्-गती पृथग्गती भिन्नमार्गे नामरूपे प्रविभक्ते अभूताम्। कथं नामरूपयोरुत्पत्तिमार्गौ भिन्ना-वित्यपेक्षायामाह—नामप्राणात् तत्तत्स्थानेष्वभिहतात् प्राविभज्यत। विवक्षाजनितप्रयत्नवद् बुद्धितत्त्वं प्राणमाविष्टं भवति, प्रयत्नप्रेरितश्च प्राण ऊर्ध्वमाक्रामन् तत्तत्स्थानाभिघाते शब्दं जनयतीति वैयाकरणानां शिक्षोक्ता प्रक्रिया। छन्दसस्तु बुद्धितत्त्वात् तत्तदिन्द्रियोद्भवक्रमेण रूपमर्थजातमुत्पन्नम्। एतदपि "शब्देष्वेवाश्रिता शक्तिः" इति कारिकाव्याख्यावसरे प्रागुपपादि-तम्। तदेवमेकमेव च्छन्दो बुद्धितत्त्वं वाच्यवाचकोभयरूपेण प्रविभागं प्राप्य बहुधा चाकशीति जगति प्रकाशते।

तथाऽपरोऽपि मन्त्रः पुनराह—"वागेव विश्वा भुवनानि जज्ञे वाच इत् सर्वममृतं यच्च मर्त्यम्। अथेद् वाग् बुभुजे वागुवाच पुरुत्रा वाचो न परं यच्चनाह॥" इति। अस्यार्थः—वागेव बुद्ध्यात्मना स्थितं सूक्ष्मं वाक्तत्त्वमेव, विश्वा भुवनानि सर्वाणि भुवनानि वाच्यवाचकोभयात्मकानि, जज्ञे जाता, इन्द्रियाणि प्राणञ्च द्वारीकृत्य। वाच इत् वाच एव, इदित्यवधारणेऽव्ययम्। यदमृतम् आकल्पान्तं स्थायि वियदादिकम्, "आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इत्य-भियुक्तोक्तेः। यच्च मर्त्यं मध्य एव विनाशि कार्यजातम्, तज्जज्ञे जाता। न केवलं वाग् मर्त्या-मर्त्योभयरूपभोग्यात्मनैव जाता, अपि तु भोक्तृरूपेण वक्तृरूपेणापि जातेत्याह—अथेद् वाग् बुभुजे। अथ वाग् इद् वागेव, बुभुजे आन्तरज्ञातृरूपेणावस्थिता बुभुजे भोक्त्री, वागेव पुरुत्रा बहुभिः प्रकारैः, पुरुशब्दाद् बह्वर्थात् त्राप्रत्ययः प्रकारे। उवाच वक्त्री, प्राणं द्वारीकृत्य शब्दानां

बहुधा प्रयोक्त्री। यच्चन चनेत्यप्यर्थे निपातः, यत्किञ्चिदपि, आह वक्ति जनः, तत्सर्वमभिधेय-मर्थजातं वाचो न परं न भिन्नम्, किन्तु वागात्मकमेव, वागुपादानकत्वादिति। पुराकल्पोऽप्येतमेवार्थमाह—

विभज्य बहुधात्मानं स छन्दस्यः प्रजापतिः।
छन्दोमयीभिर्मात्राभिर्बहुधैव विवेश तम्॥
साध्वी वाग् भूयसी येषु पुरुषेषु व्यवस्थिता।
अधिकं वर्तते तेषु पुण्यं रूपं प्रजापतेः॥
प्राजापत्यं महत्तेजस्तत्पात्रैरिव संवृतम्।
शरीरभेदे विदुषां स्वां योनिमधिगच्छति॥
यदेतन्मण्डलं भास्वद् धाम चित्रस्य राधसः।
तद्भावमभिसम्भूय विद्यायां प्रविलीयते॥ इति।

एषामर्थो वाक्यपदीयटीकायामस्माकर्त्र्यां द्रष्टव्यः (पृ० २०३–२०४)।

तदेवं महत्तत्त्वात्मनाऽवस्थितस्य शब्दस्य विश्वोपादानत्वं त्रयीरूपेणावस्थितस्य तस्य विश्वनिमित्तत्वञ्च यथाक्रमं "शब्दस्य परिणामोऽयम्" इति, "छन्दोभ्य एव प्रथमम्" इति च वाक्याभ्यामाख्यातमिति।

अथेदमवधीयताम्—तत्त्वमस्यादिमहावाक्याभिप्रेतं जीवब्रह्मैक्यमभिप्रेत्य क्वचिच्चिद्रूपस्य ज्ञातुः शब्दरूपत्वमुक्तम्—"अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः" इत्यत्र, "वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते" इत्यत्र च। क्वचित्तु परमात्मनोऽपि शब्दरूपता प्रतिपादिता—

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।
प्राहुर्महान्तं वृषभं येन सायुज्यमिष्यते॥ इति।

(वा० प० १।१३०)

अस्यार्थः—प्रयोक्तुरात्मानमपि, अन्तः शरीरान्तः, अवस्थितं महान्तम् ऋषभम्, पादत्रय-शृङ्गचतुष्टयादिकल्पनया ज्ञातस्य कामानां वर्षकत्वाच्च महावृषभत्वेन कल्पितं परब्रह्मस्वरूपमाहुः "चत्वारि शृङ्गा त्रयो अस्य पादाः" इत्यादिमन्त्राः। येन परब्रह्मरूपेण शब्देन सायुज्यं सम्बन्धः, तादात्म्यमिति यावत्। इष्यते मुमुक्षुभिः, तस्य प्रकाशमानानन्दरूपत्वेन परमपुरुषार्थत्वादिति।

अयं भावः—इह जगति द्वौ शब्दात्मानौ। स्थानकरणाभ्यामविवृत्तो नित्यः, ताभ्यां विवृत्तस्त्वनित्य इति। तत्र कार्यो व्यावहारिको वैखरीरूपः, येन सर्वोऽपि लोकव्यवहारः प्रवर्तते। स च पुरुषस्य परावाग्रूपस्य प्रतिबिम्बम् (छायां सादृश्यम्) उपगृह्णाति, विकारे प्रकृतिरूपानुगमदर्शनात्। नित्यस्तु शब्दः परावाग्रूपः सर्वस्य साध्यसाधनव्यवहारस्य पदपदार्थभेदव्यवहारस्य च योनिरुपादानकारणम्, तन्निबन्धनत्वात् सर्वप्रवादानाम्। कार्यस्तु शब्दः सर्वस्य व्यवहारस्य निमित्तकारणम्। किञ्च, नित्यः शब्दः संहृतक्रमः, अनवयवत्वेन नित्यत्वेन च क्रमशून्यत्वात् सर्वेषां प्राणिनामात्मरूपतयाऽन्तः। संनिविष्टः। सर्वेषां विकाराणां (कार्याणाम्) प्रभवः। विवर्तोपादानतया कर्मजन्यानां पुण्यापुण्यरूपाणां वासनानामाश्रयः। तदुपाधेरन्तःकरणस्य तादृशवासनाश्रयत्वात् सुखदुःखयोरधिष्ठानम्, कार्यकरणसंघातरूपोपाधितादात्म्यापन्नस्य तस्यैव कर्मफलोपभोक्तृत्वात्। तस्यैव ह्यनुकूलसाधनैरनुग्रहे सुखम्, प्रतिकूलसाधनैः कामोपघाते च दुःखमुत्पद्यते। यद्यप्यसौ सर्वेश्वरत्वात् सर्वत्रैवाप्रतिहतकार्यशक्तिः, तथापि घटादिना निरुद्धः प्रदीपप्रकाश इव परिगृहीतभोगक्षेत्रावधिर्भवति। तद्यथा—बहिरवस्थितपदार्थप्रकाशनशक्तिमानपि प्रदीपप्रकाशो घटेनावरुद्धत्वादन्तश्चरिष्णुर्बहिरवस्थितपदार्थप्रकाशने प्रतिहतशक्तिः, तथाऽसावपि परिगृहीतक्षेत्रावधिः, भोगाय क्षेत्रं (शरीरम्) परिगृह्य तेनावृतभोगः। अतः शरीरादन्यत्र भोगस्तस्य न भवति, शरीरद्वारेणैव च तस्य सुखदुःखानुभव इति। किञ्चासौ सर्वासां मूर्तीनां विकाराणां परिमाणाऽपरिमाणा च प्रकृतिर्विवर्तोपादानरूपा। अपरिणामेऽपि हि कारणे तस्य परिमितत्वे किञ्चित् कदाचिदुत्पाद्य क्षीयेतेति कारणस्यापरिमाणताऽभ्युपगम्यते। तेन सर्वदा मूर्तीनामुत्पादेऽपि नास्ति क्षय इति। किञ्चासौ सर्वप्रबोधरूपतया गोगवयादिरूपसर्वप्रभेदरूपतया च नित्यप्रवृत्तसर्वप्रत्यवभासरूपः। किञ्च, यथा स्वप्ने सर्वभावानां प्रविलयः पुरुषे निद्राकाले, जाग्रति च सर्वेषां तत एवोद्भवः; तथा प्रलये तस्मिन्नेव परावाग्रूपे पुरुषे सर्वभावानां प्रविलयः, सर्गादौ च तत एव जन्म इति स्वप्नप्रबोधानुकारी असौ परावाग्रूपः पुरुषः। तत एव हि सर्गादौ जगतः प्रवृत्तिः, तस्मिन्नेव च प्रलये जगतो निवृत्तिरिति प्रवृत्तिनिवृत्तिपदाभ्यामपि स्वप्नप्रबोधानुकारी। किञ्चासौ पर्जन्यवद् दवाग्निवच्च प्रसवोच्छेदशक्तियुक्तः। तद्यथा—पर्जन्योऽनुकूलया वृष्ट्या सस्यप्रसवहेतुः, प्रतिकूलया च ईतिरूपया सस्योच्छेदहेतुः; यथा च दवाग्निः क्षितिदाहद्वारा प्रभूततृणगुल्मादिप्रसवहेतुः, प्राक्तनस्य च तृणगुल्मादेरुच्छेदहेतुः; तथाऽयमपि सर्गकाले जगतः प्रसवहेतुः, प्रलयकाले च तस्योच्छेदहेतुरिति रीत्या प्रसवोच्छेदशक्तियुक्तः सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभः, कामानां वर्षणात्। तस्मिन् खलु वाग्योगविदो वैयाकरणा अहङ्काराश्रितान् सर्वान् वासनारूपान् संशय-

रूपाँश्च ग्रन्थीन् विच्छिद्य विभागमत्यन्तं परित्यज्य संसृज्यन्ते, "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः। मन्त्रोऽप्येनमर्थमाह—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश॥

अस्यार्थः—अस्य शब्दवृषभस्यालौकिकस्य चत्वारि शृङ्गाणि नामाख्यातोपसर्गनिपातरूपाणि, परापश्यन्तीमध्यमावैखरीरूपाणि वा। अस्य त्रयः पादाः भूतभविष्यद्वर्तमानकालरूपाः। तैर्ह्ययं लोके प्रतिष्ठते शब्दवृषभः। द्वे शीर्षे नित्यः कार्यश्चेति शब्दद्वयं शीर्षस्थानीयम्। सप्तविभक्तयः प्रथमाद्याः, अस्य हस्तासो हस्ताः। त्रिधा बद्ध उरसि कण्ठे शिरसि च त्रिषु स्थानेषु बद्धः, स्थानत्रयेणोच्चार्यत्वात्। अन्येषामपि स्थानानां त्रिष्वेवान्तर्भावः। प्रयोक्तुर्वोढुश्च कामानां वर्षणाद् वृषभः, रोरवीति भृशं वैखरीरूपं शब्दं करोति। महो देवः महान् देवः स्वप्रकाशचिद्रूपः शब्दवृषभः, मर्त्यान् मरणधर्मवतो मनुष्यान् आविवेश इति। वैयाकरणस्य व्याकरणहेतुकशब्दसंस्कारज्ञानेन शुक्लो धर्मो जायते, तेन च चित्तशुद्धिद्वारा ज्ञानोत्पत्तिरिति मोक्षमार्गोऽपि हरिणा दर्शितो वाक्यपदीये—

तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।
तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते॥ इति।

(वा० प० १।१३३)

तस्मात् शब्दस्य यथोपदर्शितमाहात्म्यसत्त्वात्, व्याकरणहेतुको यः शब्दसंस्कारः साधुशब्दानामपभ्रंशेभ्यो विवेकेन ज्ञानम्, सा परमात्मनः सिद्धिः सिद्ध्युपायः। कथमित्यत आह—तस्य प्रवृत्तितत्त्वज्ञ इति। तस्य शब्दब्रह्मणः, प्रवृत्तितत्त्वज्ञः, प्रवृत्तिः क्रिया, ते च षड्भावविकाराः—जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, नश्यतीति, तेषामसद्भूतत्वेन तेषां तत्त्वं सत्ता परब्रह्मरूपा प्रतिभाख्या, तज्ज्ञः व्याकरणहेतुकशब्दसंस्कारजन्यधर्मविशेषसहकारेण शब्दप्रवृत्तितत्त्वज्ञो वैयाकरणः, तत् श्रुत्यादिप्रसिद्धं विद्वदनुभवविषयञ्च, अमृतं जरामरणादिवर्जितं ब्रह्म, वस्तुतः स्वात्मभूतम्, अश्नुते व्याप्नोति प्राप्नोति, अभेदेन साक्षात्करोति, नित्यप्राप्तस्य प्राप्त्यन्तरायोगादिति।

अयं भावः—साधुत्वव्यवस्थापनपूर्वकमसाधुशब्देभ्यः साधुशब्देषु व्याकरणज्ञानेन पृथक् क्रियमाणेष्वपभ्रंशकृतो यः साधुशब्दानां विशेषज्ञानतिरोधानजननेन परिभवरूप उपघातस्तदपगमादाविर्भूते धर्मविशेषे नियत ऐहलौकिकः पुत्रपश्वादिप्राप्तिलक्षणः, पारलौकिकश्च स्वर्गादि-

प्राप्तिलक्षणोऽभ्युदयः। तथा चागमः—"एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति" इति। अत्र लोकशब्देनायं लोको गृह्यते, समुच्चयार्थकचकारसंनिधानात्। शब्दसंस्कारस्याभ्यासाच्च शब्दपूर्वकं शब्दविषयञ्च योगमधिगम्य, तस्यापि च साधुशब्दस्य विकारत्वेनासत्त्वात्, तदधिष्ठानभूतां परब्रह्मरूपसत्ताप्रभवप्रतिभागोचरत्वेन प्रतिभापदेनापि व्यपदेश्याम्, सर्वेषां भावविकाराणां प्रकृतिं सर्वस्य साध्यसाधनरूपभेदद्वयभिन्नस्य जगतः सर्गस्थितिलयानुकूलशक्तिसंपन्नां परब्रह्मरूपां सत्तां सम्यग् अवबुध्य नियता परब्रह्मप्राप्तिरूपस्य परस्य क्षेमस्य प्राप्तिरिति। तदुक्तम्—

प्राणवृत्तिमतिक्रान्ते वाचस्तत्त्वे व्यवस्थितः।
क्रमसंहारयोगेण संहृत्यात्मानमात्मनि॥
वाचः संस्कारमाधाय वाचं ज्ञाने निवेश्य च।
विभज्य बन्धनान्यस्याः कृत्वा तां छिन्नबन्धनाम्॥
ज्योतिरान्तरमासाद्य छिन्नग्रन्थिपरिग्रहः।
परेण ज्योतिषैकत्वं छित्त्वा ग्रन्थीन् प्रपद्यते॥ इति।

अस्यायं भावः—बुद्धौ प्राणे च शब्दस्यावस्थानमित्युक्तम्—"तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता" इति। यच्च शब्दतत्त्वं प्राणवृत्तिमतिक्रान्तं परावाग्रूपं तस्य दूरीभूतैव करणवृत्तिरिति करणवृत्तिगोचरवैखरीरूपशब्दगतस्य भेदरूपस्यासत्यताबोधात् प्राणवृत्तिमतिक्रान्त इत्यनेन बुद्धिस्थ एव शब्दे व्यवस्थित इत्युक्तम्। तत्र बुद्धावपि शब्दात्मप्रत्यवभासमानो गृहीतवर्णक्रम एव प्रत्यवभासत इति तस्यापि गृहीतवर्णक्रमस्य बुद्धिस्थस्य शब्दस्य व्यवच्छेदार्थमाह—क्रमसंहारयोगेणेति। बुद्धिस्थे शब्दे गृह्यमाणे वर्णक्रमस्तस्य यः संहारः प्रविलयस्तस्योपायभूतो यो योगस्तेन संहृतक्रमं परावाग्रूपमात्मानमात्मनि बुद्धौ संहृत्य क्रमसंहारपूर्वकं बुद्धौ निवेश्य बुद्धिगोचरीकृत्य। अस्य "परेण ज्योतिषैकत्वं प्रपद्यते" इति तृतीयपद्यस्थवाक्येन व्यवहितेन सम्बन्धः। तत्र परेण ज्योतिषैकत्वप्राप्तौ क्रममाह—द्वितीयतृतीयपद्याभ्याम्। तत्र पूर्वं वैखरीरूपाया वाचो व्याकरणेन संस्कारम् असाधुशब्देभ्यः पृथक्कृत्य ज्ञानरूपम्, आधाय कृत्वा, तामेव च वाचं ध्यानक्रमेण ज्ञाने ज्ञायतेऽनेनेति करणव्युत्पत्त्या बुद्धौ मध्यमारूपेण हृद्देशावच्छेदेन, पश्यन्तीरूपेण च नाभिदेशावच्छेदेन, प्रत्यवभासमानसूक्ष्मरूपवर्णक्रमवतीमेव निवेश्य, वाचं करणात् प्राणे प्राणाद् बुद्धौ ध्यानक्रमेण निवेश्य, ततः परम् अस्या वाचो मध्यमारूपायाः पश्यन्तीरूपायाश्च

बन्धनानि अविद्याऽहङ्कारादीनि, विभज्य पृथक्कृत्य, अविद्यया हि संहृतक्रमे वागात्मनि वर्णक्रममध्यारोपयति, अहङ्कारेण च बुद्धिं परावाग्रूपचैतन्यात्मरूपतयाऽभिमन्यत इत्यविद्याऽहङ्कारौ वाचो बन्धनभूताविति। एवं तां वाचं विवेकज्ञानेन छिन्नबन्धनां कृत्वा, परावाग्रूपात्मरूपं ज्योतिरान्तरमासाद्य साक्षात्कृत्य, छिन्नग्रन्थिपरिग्रहः छिन्नोऽविद्याऽहङ्कारादिरूपग्रन्थिपरिग्रहो यस्य स तथाभूतः सन्, ग्रन्थीन् प्रागुक्तान् छित्वा, परेण ज्योतिषैकत्वं साक्षात्कारेण प्रपद्यत इति।

तदेवं परावाग्रूपस्य शब्दतत्त्वस्य परब्रह्मणो बुद्धिप्राणौ द्वारीकृत्य शब्दार्थोभयात्मकस्य विश्वस्य सर्गविसर्गाविति स्थितेऽर्थायातः शब्दाद्वयवादः, प्रकृतेर्विकारानन्यत्वात्, विकाराणां मृषात्वस्य श्रुत्युक्तत्वाच्च, "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतेः। शब्दस्य चिद्रूपत्वं त्वर्थावभासकत्वात्।

यद्यपि शब्दपरिणामवादः शब्दविवर्तवादश्चेत्युभयमप्यत्र वाक्यपदीये हरिणा प्रदर्शितम्, तथाप्येतयोर्विवर्तवाद एव हरिसम्मत इति वयं मन्यामहे। तथा हि "विवर्ततेऽर्थभावेन" इति सिद्धवत् कृत्वोक्तम्। "शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः" इति तु परमतत्वेन। आम्नायविद इत्युक्तिस्तु तेषु गौरवबुद्ध्या। यद्वोपनिषत्सु, "अविकार्योऽयमुच्यते" इत्यादिस्मृतिषु, "सिद्धे शब्दार्थसम्बन्धे" इत्यादिवार्त्तिकतद्भाष्यादिभिश्च शब्दतत्त्वस्य परब्रह्मणः कूटस्थ-नित्यत्वे व्यवस्थितेऽनाम्नायवित्सु तेष्वाम्नायविद इत्युक्तिरुपहासः। सोऽयं शब्दाद्वयवादः शिवा-द्वयवादस्य ब्रह्माद्वयवादस्य च सन्निकृष्यत इत्युभाभ्यामपि स्वस्वपक्षे आकृष्यमाणोऽपि न ताटस्थ्यं विजहाति, यथेदं भारतं साम्प्रतं साम्यवैषम्यवादाभ्यामुभयत आकृष्यमाणमपि न माध्यस्थ्यबुद्धिं विजहातीति। यतः शिवाद्वयवादेऽहन्तेदन्तारूपविमर्शद्वयात्मकस्य शिवस्य वस्तुतः स्वरूपं परमार्थभूतं चार्थः, तस्य बहिष्ट्वेन भेदप्रथा तु मायेत्यभ्युपगम्यते। शब्दाद्वयवादे तु शब्दस्य विवर्तोऽर्थो न वस्तुभूत इति। अस्मिन् वादे शब्दस्य ब्रह्मरूपत्वमागमानुसारेण, शिवस्यागमिकैः परावाग्रूपत्वाभ्युपगमात्। ब्रह्माद्वयवादिभिरौपनिषदैस्तु ब्रह्मणो वाग्रूपत्वं नाभ्युपेयते, अशब्द-मित्यादिश्रुतेः। औपनिषदो भर्तृहरिरिति तु न विवादः, तन्मतस्य तत्र तत्र श्रीशङ्करभगवत्पादैः प्रत्याख्यानात्। आगमिकोऽपि, वाक्यपदीयटीकायां स्वोपज्ञायां शतश आगमवाक्यानां सश्रद्ध-मुपन्यासात्। तदेवं द्वयोरपि वादयोः प्रतिच्छाया वाक्यपदीये तट्टीकायां स्वोपज्ञवृत्तौ च समुपलभ्य-मानाऽप्यपूर्वैव काचिदिति सिद्धम्॥

दुर्दर्शमतिगम्भीरं चिद्रूपं सर्वगं महः ।
ज्ञात्वा शब्दाद्वयं ब्रह्म नमस्कुर्मो यथाबलम् ॥
स्वोपज्ञां मूलमप्यस्या व्याख्यामस्याश्च निर्मलाम् ।
वृषोपज्ञां सुविज्ञाय ममैष मनसः श्रमः ॥
तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा ॥
पदे पदे मे स्खलितं जरसाऽभिप्लुतस्य यत् ।
तरसा तत्समाधातुं सज्जीभवत सज्जनाः ॥
अस्मिन्निबन्धे निर्बन्धो न ममास्ति मनागपि ।
तद्दोषनिकरं हित्वा गुणमेवाचिचीषथ ॥

॥ इति शम् ॥

---

# स्वातन्त्र्यवादी भर्तृहरिः

डा० श्रीकान्तिचन्द्रपाण्डेयः, लक्ष्मणपुरम् ।

स्वातन्त्र्यवादो यद्यप्यद्वैतशैवागमाननुसरद्भिः सोमानन्द-उत्पलाचार्य-अभिनवगुप्तपाद-क्षेमराजादिभिः प्राधान्येन सविस्तरं प्रतिपादितः, एवं चायं काश्मीरशैवाद्वैतापरपर्य्यायत्वेन गृह्यते; तथापि नायं तद्बुद्धिप्रभवः । यथोक्तं सोमानन्दपादैः स्वीयशिवदृष्ट्यवसाने—

प्रतिपादितमेतावत् सर्वमेव शिवात्मकम् ।
न स्वबुद्ध्या शिवो दाता शिवो भोक्तेति शास्त्रतः ॥

वैदिकैर्वेदानामिव शैवैः शैवागमानामनादित्वं स्वीक्रियते । पाणिनिसमकालिकः पाणिनेश्चोपदेष्टा नन्दिकेश्वरः "अइउण्" इति सूत्रस्य दार्शनिकव्याख्यायामिमं स्वातन्त्र्यवादं स्वीकृतवान् । नन्दिकेश्वरनये हि प्रथमो वर्णः 'अ' इति निर्गुणब्रह्मवाचकः, इकारश्चित्कलावाचकः, उकार ईश्वरवाचकः, णकारश्च 'आसीत्' इति क्रियावाचकः । एवञ्च परयोगिनामव्यतिरेकतुरीयातीतसमाधौ निर्गुणतया प्रकाशमानो ब्रह्मापरपर्यायः शिवः प्रकाशविमर्शरूपोऽपि विश्वोत्तीर्णरूपे न्यग्भावितविमर्शतया प्रकाशैकघनः 'अ' इति निर्दिष्टः । स एव न्यग्भावितप्रकाशतया चिति-सत्ता-विमर्श-स्वातन्त्र्यादिपर्यायस्वशक्तिप्रधानतया पश्यन्त्याद्या वाचः सकलजडाऽजडात्मकं वाच्यं चाभासयन् विश्वरूप ईश्वर इत्युच्यते । अयं नन्दिकेश्वरसिद्धान्तः ।

ब्रह्मणः सद्रूपत्वमभ्युपगच्छद्भिर्वेदान्तिभिरप्ययं स्वातन्त्र्यवादोऽवश्यं स्वीकार्यः, यदि तैर्व्याकरणं नोपेक्ष्यते सर्वथा । अविरतप्रवर्तमानत्वद्योतकशतृप्रत्ययान्ताद् भवनार्थाद् 'अस्'-धातोर्निष्पन्नः सच्छब्दोऽसिक्रियाकर्तुर्ब्रह्मणो भवने स्वातन्त्र्यमभिधत्ते । अतो यदि ब्रह्मविषये तेषां सच्छब्दप्रयोगः सार्थकस्तर्हि स्वातन्त्र्यवादाभ्युपगमात् पलायनमार्गो नास्ति कश्चन ।

परमवैयाकरणेन भर्तृहरिणा स्वीकृत एवायं स्वातन्त्र्यवादः । यथाह—

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥ ( वा० प० १।२ )
जलयन्त्रभ्रमावेशसदृशीभिः प्रवृत्तिभिः ।
सकलाः कलयन् सर्वाः कालाख्यां लभते विभुः ॥ (वा०प०३।६।१४)

यथा च स्पष्टीकृतं भूतिराजतनयहेलाराजेन—"विश्वात्मैक एव परं ब्रह्माभिधानं सत्यो भावः। स एव नानाविधकार्यकारितयाऽनन्तशक्तित्वेन व्यवह्रियते" इति। तथा च क्रमिकांश्चक्रभ्रमिवत् परावर्तमानान् भावान् प्रकाशयन् कलयति भूतानीति काल इत्युच्यते। स विभुः स्वतन्त्रः। अत एव स्वातन्त्र्यशक्तिः काल इति वाक्यपदीये सिद्धान्तितम्—

"अभ्याहितकलां यस्य कालशक्तिमुपाश्रिताः" इत्यत्र।

अतो वाक्यपदीये प्रथमकारिकोपलब्धं 'विवर्तते' इति शब्दमाश्रित्य विवर्तवादिवेदान्ताऽनुसारं वैयाकरणदर्शनप्रतिपादनं न युक्तियुक्तं प्रतिभाति, भर्तृहरेः स्वातन्त्र्यवादित्वात्। वाक्यपदीयोपलब्धस्य विवर्तशब्दस्य न सर्वथाऽद्वैतवेदान्तप्रक्रियास्वीकृतोऽर्थः, जगद्विषये विवर्तशब्दवत् परिणामशब्दस्यापि भर्तृहरिणा प्रयुक्तत्वात्। यथाह—

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत ॥ ( वा० प० १।१२१ )

एवं प्रतिभाति यद् भर्तृहरिसमये वि-उपसर्गपूर्वकाद् वर्तमानार्थाद् वृतुधातोर्घञन्तान्निष्पन्नस्य विवर्तशब्दस्य विलक्षणतया अद्भुततया विशेषेण विपरीतया वा वर्तनमिति विग्रहानुसारं यौगिक एवार्थः परिगृहीत आसीत्। अयमर्थो वाक्यपदीयटीकायाम् ( ३।२।१२ )—"अनेकभावग्रामरूपतया चाद्भुतया वृत्त्या विवर्तनाद्" इति वदता हेलाराजेन स्वीकृत इवाभाति। इदञ्च समर्थ्यते—

न तत्त्वातत्त्वयोर्भेद इति वृद्धेभ्य आगमः।
अतत्त्वमिति मन्यन्ते तत्त्वमेवाविचारितम् ॥ (वा०प० ३।२।७)
विकल्परूपं भजते तत्त्वमेवाविकल्पितम्।
न चात्र कालभेदोऽस्ति कालभेदश्च गृह्यते ॥ (वा०प० ३।२।८)

इति कारिकाभ्याम्, तथा च तट्टीकोपलब्धहेलाराजवचनाभ्याम्। यथाह—

"नेहाऽद्वयनये सत्यासत्ये द्वे रूपे स्तः, अद्वैतहानिप्रसङ्गात्; किन्तु पारमार्थिकमेकमेवाद्वयम्। ·····तत्र योऽयं प्रकाशः स विद्या, अप्रकाशस्तु तमोऽविद्या। न च प्रकाशाभावोऽप्रकाशो नाम कश्चित् प्रमाणसिद्धो निरूप्यः। ततश्च योऽयं भेदप्रकाशः सैवैकघनप्रकाशाभावः प्रकाशविच्छेदोऽविद्या" इति। अथ च—"परमार्थतोऽविकल्पितं विकल्पानामविषयो यत्तत्त्वं तदेव व्यवहारकालेऽन्यस्याभावाद्विकल्पमानं विकल्परूपं नानाविधभेदावभासमनादिसिद्धाऽविद्यावशात्

समवलम्ब्यते...'मूर्तिविवर्ताश्रयं दिक्शक्तिविभक्तदेशनानात्वं निमित्तपौर्वापर्यावलम्बनसहम्, एवमकालकलितमपि तत्त्वमनादिनिधनंकालाख्यस्वतन्त्रशक्तिविनिवेशितप्रतिबन्धाभ्यनुज्ञावशाज्जन्माविकाराऽभिधीयमानपौर्वापर्यं चकास्ति" इति ।

अत्रेदमवधार्यम्—भर्तृहरिरविद्यामप्रकाशरूपां सर्वथा प्रकाशविरुद्धां प्रकाशभिन्नां न स्वीकरोति, अपि तु तस्या अपि प्रकाशरूपतामेव मनुते । एवञ्चाऽविद्याब्रह्मणोर्न पारमार्थिको भेदः । मूर्तिवैचित्र्यरूपो देशक्रमो मूर्तिशक्त्या, क्रियावैचित्र्यरूपश्च कालक्रमः कालशक्त्याऽवभास्यते । उभे ब्रह्माऽभिन्ने । शक्तिमतोर्हि वैयाकरणनये तादात्म्याभ्युपगमः, "तत्स्वरूपत्वेनाव्याहता नित्या अपि यस्य कलाः शक्तयः" (१।३) इति वाक्यपदीयटीकाकारवचनात् । अतः स्पष्टमिदं यद् भर्तृहरिनये ब्रह्मैव स्वशक्त्या स्वस्मिन् भेदमवभासयति । स च परिमितप्रमातृगताऽविद्याकारणात् परिमितप्रमातारं प्रत्येव भाति । एतत्सर्वमद्वैतशैवैरनुमन्यते—

मूर्तिवैचित्र्यतो देशक्रममाभासयत्यसौ ।
क्रियावैचित्र्यनिर्भासात् कालक्रममपीश्वरः ॥
सर्वत्राभासभेदोऽपि भवेत् कालक्रमाकरः ।
विच्छिन्नभासः शून्यादेर्मातुर्भातस्य नो सकृत् ॥
देशक्रमोऽपि भावेषु भाति मातुर्मितात्मनः ।
स्वात्मेव स्वात्मना पूर्णा भावा भान्त्यमितस्य तु ॥
(भा० भा० २, पृ० १६-२०)

अयमेव विवर्तशब्दस्यार्थः स्वातन्त्र्यवादप्रतिपादकैरभिनवगुप्तपादैः स्वीयक्रमकेलिनामकग्रन्थे परिगृहीतः । यथोक्तं महेश्वरानन्देन महार्थमञ्जर्याम्—"यथा च क्रमकेलौ 'तद्विवर्तः स्मृतो रश्मिपुञ्जश्चक्रेशिपूर्वकः' इत्यत्र व्याख्यातम्—विवर्तो विचित्रेण रूपेण वर्तनं न त्वविद्यावशात्, अपि तु स्वातन्त्र्यतः" इति । परन्तु नात्र सन्देहो यद्विवर्त्तस्य "एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणाऽसत्याऽविभक्तान्यरूपोपग्राहिता विवर्तः" (वा० प० टी० १।१२१) इति लक्षणं वाक्यपदीयटीकायामुपलभ्यते । तथा कैश्चन सोमानन्दात् पूर्वभाविभिर्वाक्यपदीयटीकाकारैरिदमेवोरीकृतमासीत् । यतः सोमानन्दः स्वीयशिवदृष्टिद्वितीयाध्याये 'अनादिनिधनं ब्रह्म' इति कारिकामुद्धरन् 'विवर्तते' इति शब्दस्याद्वैतवेदान्त्यभ्युपगतमेवार्थं मनुते स्मेति प्रतीयते शिवदृष्टिटीकाकर्तुस्तच्छिष्यस्योत्पलाचार्यस्य वचनात् । यथाह—"पश्यन्तीरूपं शब्दतत्त्वमक्षरमनाद्यन्तं ब्रह्म

विश्वार्थभावेन विवर्तते, तदसत्यरूपमात्मन्युपगच्छति। असत्यविभक्तान्यरूपोपग्राहिता विवर्तस्तस्यास्तद्विवर्तते" ( शि० दृ०, पृ० ४४ ) इति।

विवर्तवादस्वीकृतं जगदसत्यत्वम्, अविद्याभ्युपगमम्, पश्यन्त्याः परतत्त्वत्वप्रतिपादनम्, अन्यांश्च स्वातन्त्र्यवादविरुद्धान् वैयाकरणसिद्धान्तांशान् दृढं समालोच्य सोमानन्दः स्वातन्त्र्यवादं मनोहारिणीभिर्युक्तिभिर्दृढीचकार। वेदान्त्यभ्युपगतविवर्तवादस्वातन्त्र्यवादयोः परस्परविरुद्धयोरेकस्मिन् दर्शने समावेशः सर्वथाऽसमञ्जस इति सुविदितमेव विदुषाम्। परमतीव गहनोऽयं विषयः समधिकं विवेचनमपेक्ष्यते। चिकीर्ष्यते चेदं समयान्तरे। आशास्यते च मत्तोऽधिकं वैयाकरणदर्शने कृतपरिश्रमैरत्रत्यैर्धुरन्धरैर्वैयाकरणैः करिष्यते विचारोऽस्मिन् विषय इति॥

—:*:—

# शब्दाद्वैतवादिनामवान्तरमतभेदः

श्रीमुरलीधरमिश्रः, व्याकरणविभागाध्यक्षः, वा० सं० वि० वि० वाराणसी ।

उपास्महे शब्दब्रह्म कारणं जगतः परम् ।
यद्विना न प्रतीयेत प्रकाशश्चिद्घनस्य हि ॥
अर्थानां हि समासः शब्दादेवेति सूच्यते श्रुतिभिः ।
तज्ज्ञानं व्याकरणात् सोपानात् सिद्धिमार्गस्य ॥
तच्छास्त्रे प्राचार्या नागेशादिभर्तृहरिभट्टाद्याः ।
तेषां विमृश्य सरणीर्निर्मित एष प्रबन्धो वै ॥

"प्रमेयसिद्धिः प्रमाणाद्धि" इति सांख्यकारिकोक्तदिशा सर्वजनसाधारण्येन प्रथितस्य शाब्दज्ञानस्य शब्दप्रमाणात् सिद्धिरित्यवसीयते । तदुक्तं न्यायसिद्धान्तमुक्तावल्याम्—"पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः । शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥" इति । वैयाकरणसिद्धान्त लघुमञ्जूषायामपि—"तद्धर्मावच्छिन्नविषयकशाब्दबोधं प्रति तद्धर्मविशिष्टज्ञानं हेतुः । वैशिष्ट्यं च स्वाश्रयपदविषयकत्वम् , स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्यमेतदुभयसम्बन्धेन" इति । तत्र पदपदेन पद्यतेऽर्थोऽनेनेति शक्तं गृह्यते, न तु सुप्तिङन्तमिति पारिभाषिकम् ।

एवञ्च पदज्ञानेनार्थोपस्थितिद्वारा शाब्दबोधो जायत इति साधारणः पन्थाः । पदज्ञाने-नैकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति रीत्याऽर्थस्य स्मृतिरिति नैयायिकाः । वैयाकरणास्तु पदार्थोपस्थितेः स्मृतित्वं नाङ्गीकुर्वन्ति, अपि तु ज्ञानविशेषत्वमेव; तत्ताया अनुल्लेखात् । उद्बो-धकाभावात्तदस्वीकारे तु स्मृतौ विषयांशप्रमोषस्यैव दृष्टतया तत्तांशे प्रमोषस्यादृष्टचरतया तत्कल्पनाया असम्भवात् । नियमतो दोषविशेषस्य तत्तांशप्रमोषकत्वकल्पनायामत्यन्तगौरवात् । भ्रमजनकदोषस्य तत्प्रमोषकत्वकल्पनायामत्यन्तरागान्धस्य विनष्टरजतस्य शुक्त्यादिदर्शने सति जातायां स्मृतौ तत्तानुल्लेखापत्तिः । अतः सम्बन्धिज्ञानविधया पदार्थोपस्थितौ शब्दार्थयोः सम्बन्धस्वीकार आवश्यकः, स एव सम्बन्धः शक्तिरित्यवसीयते । शक्त्यैव शक्यलक्ष्यव्यङ्ग्यानां सर्वेषामर्थानां बोधेऽपि मतान्तरदृष्ट्या शक्यार्थविषये प्रसिद्धा, लक्ष्यव्यङ्ग्यार्थयोर्विषयेऽप्रसिद्धा शक्तिरिति वैयाकरणसमयः । घटाद्यर्थप्रतीतौ दीपादीनां तैः सह व्यङ्ग्यव्यञ्जकसम्बन्धव्यवहार

इव, ध्वनिस्फोटयोरेको व्यङ्ग्यव्यञ्जकभावाख्यः सम्बन्धः। अप्रसिद्धशक्त्या लक्ष्यव्यङ्ग्ययोर्बोधे मुख्यार्थबाधादिकं वक्तृबोद्धव्यादिकञ्च सहकारि, तेन न सर्वत्र तयोर्बोधः। एतेन नागेशमते लक्षणा व्यञ्जना च वृत्तिः स्वीक्रियत इति परास्तम्। प्रतिपादनन्तु तयोः मतान्तररीत्या। अत एव मञ्जूषायाम्—"लक्षणेति व्यवहारः" इत्युक्तम्।

स च सम्बन्धः शक्त्याख्यः, "सम्बन्धो हि सम्बन्धिभ्यां भिन्नो द्विष्ठ उभयाश्रितः" इति, "विशिष्टबुद्धिनियामकः" इति च भाष्योक्त्या शब्दार्थयोर्वर्तमानोऽपि प्रतियोगिनि शब्द एव तिष्ठतीति व्यवहारास्पदम्। अत एव शक्त्याश्रयः पदं नार्थः, अपि तु निरूपक एवेति व्यवहारः। एवञ्च 'राज्ञः पुरुषः' इत्यत्र स्वस्वामिभावसम्बन्धस्योभयनिष्ठत्वेऽपि प्रतियोगिनि राजन्येव स्वीकाराद् राजपदादेव षष्ठी विभक्तिः, न पुरुषपदात्।

तत्र शक्त्याश्रयः क इति प्रश्ने यदा शब्दस्य क्षणिकत्वम्, पदघटकवर्णानां वाचकत्वमिति पक्षो न्यायवैशेषिकरीत्या गृह्यते· तदा महत्यनुपपत्तिः। तथा हि—प्रत्येकं वाचकाः संहता वा ? नाद्यः, द्वितीयादिवर्णानामानर्थक्यात्। न द्वितीयः, संघातस्यानुपपत्तेः। वर्णानां क्षणद्वयस्थायित्वेनान्तिमवर्णोत्पत्तिकाले पूर्वेषां वर्णानां नाशाभ्युपगमात्। पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृतान्तिमवर्णस्य वाचकत्वे सरो रसः नदी दीनेत्यादावविशेषाद् वैलक्षण्यानुपपत्तिः। अव्यवहितोत्तरत्वसम्बन्धेन तत्तद्वर्णवत्त्वं तदुत्तरवर्णे तत्तद्वर्णवत्त्वञ्च तदुत्तरवर्णे इति रीत्या संस्कारद्वाराऽन्तिमवर्णोत्पत्त्यनन्तरं तत्प्रत्यक्षकालेऽलौकिकसन्निकर्षसहकृतलौकिकसन्निकर्षेण पदज्ञानसम्भवेऽपि तादृशपदस्याविद्यमानत्वेन शक्त्याश्रयत्वानुपपत्तिस्तदवस्थैव। अन्यथा नष्टो घटो जलवानिति व्यवहारापत्तिः, पदमेकं वाचकमिति व्यवहारानुपपत्तिश्च। एकबुद्धिविषयतया तादृशव्यवहारोपपादनेऽवयविनः पटादेरपि तन्मतसिद्धस्यापलापप्रसङ्गः, एकबुद्धिविषयेणाणुसमूहेनैवोपपत्तेः। अथ च तादृशपदानामुच्चारणभेदेन भिन्नानामानन्त्याद् व्यभिचाराच्च शक्तिग्रहोऽपि न स्यात्। तदर्थं शक्यतावच्छेदकस्यैकस्य कस्यचिद्धर्मस्य शक्ततावच्छेदकस्य स्वीकार्यतापत्तिः, स्वोच्चारणाधिकरणक्षणोत्तरक्षणोत्पत्तिकरूपाव्यवहितोत्तरत्वघटितानुपूर्व्या अपि कालभेदेन भिन्नत्वात् तस्या अपि अनवच्छेदकत्वात्। घटत्वादेरिवैकस्या जातेः कल्पनायामनन्तजातीनां तत्तत्पदेषु कल्पनावश्यकत्वेन गौरवापातात्। लाघवानादरेऽपि पदस्यानित्यस्य वृत्त्याश्रयत्वानुपपत्तिस्तदवस्थैव। अपि च, तत्तद्वर्णसमूहरूपपदस्य संस्कारद्वारा कथञ्चित् प्रत्यक्षत्वोपपादनेऽपि वस्तुतस्तदभावात् तद्गतजातिकल्पनाया असम्भवः। अतः शब्दानां नित्यत्वमावश्यकम्। अत एव मीमांसका वर्णानां नित्यत्वं विभुत्वञ्च स्वीकुर्वन्ति। तन्मते वर्णा एव पदम्। कण्ठताल्वादिव्यापारेण निष्पन्नध्वनिभिर्व्यज्यमानेषु वर्णेषु ध्वनिगत-

क्रमारोपेण तत्तत्क्रमविशिष्टेभ्यो वर्णेभ्यो बोधः। अतो न सर्वदा बोधः। वर्णानां तत्समूहपदानाञ्च नित्यत्वादेव सोऽयं गकारस्तदेवेदं पदमित्यादिप्रत्यभिज्ञोत्पद्यते। अनेकवर्णानां वाचकत्वस्वीकारे गौरवादेतन्मतमपहाय स्फोट एक एव वाचक इति वैयाकरणमतं सिद्ध्यति।

स चाष्टविधः—वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदस्फोटः, अखण्डवाक्यस्फोटः, वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोटश्च। स्फोटस्याष्टविधत्वमपि काल्पनिकमेव। परमार्थतस्त्वेको वाक्यस्फोटः स्फुटत्यर्थोऽस्मात्, स्फुट्यते व्यज्यते ध्वन्यादिना वेति द्विविधया व्युत्पत्त्याऽखण्ड एव।

नन्वेवमेकस्याखण्डस्य वाचकत्वे घटादिपदघटिताद् वाक्यात् पटाद्यर्थघटितस्यार्थस्य बोधः स्यादिति चेन्न, नहि घटादिना दीपादेरिव ध्वनिना स्फोटस्य भानम्, अपि तु जलादिना तद्गत-चाञ्चल्यविशिष्टसूर्यादेरिव ध्वनिगतकत्वादिधर्मविशिष्टस्य तद्रूपरूषितस्य तद्गतक्रमविविष्टस्यैवेत्य-ङ्गीकारात्। नातो घटादिना ध्वनिनाभिव्यक्तेन स्फोटेन पटाद्यर्थबोधः। नाऽत्र पक्षे ध्वनिनैकेन स्फोटस्याभिव्यञ्जनेऽन्यध्वनीनां वैयर्थ्ये संघातस्य व्यञ्जकत्वे ध्वनीनामनित्यत्वात् संघातानुपपत्ति-रित्यादि शङ्काकलङ्कलेशः, सर्वेषां ध्वनीनां व्यञ्जकत्वस्वीकारात्। तत्र स्फोटपदेन शास्त्रेऽनेक-विधव्यवहारस्य शास्त्रकारैः प्रदर्शनाद् महती भ्रान्तिः समुदेति। तथा हि—"तत्रानुवृत्तिनिर्देशे सवर्णा-ग्रहणमनण्त्वात्" इति वार्त्तिकादारभ्य प्रत्युच्चारणं वर्णो भिद्यते न वेति विचारः प्रस्तुतः। तत्र मीमांसकमतमाश्रित्य "एकत्वादकारस्य सिद्धम्" इत्यादिवार्त्तिकेन महता समारम्भेण वर्णैकत्वपक्षं प्रतिपाद्य "आन्यभाव्यन्तु कालशब्दव्यवायाद्" इत्यादिना वर्णानां प्रत्येकं परि-च्छेद्यत्वमनेकत्वञ्च न्यायवैशेषिकमतसिद्धं संस्थापितम्। पश्चाच्च वर्णसमाम्नाये कस्यचिदेकस्यैवानुकरणे तद्बोध्यस्यैकस्यैवाकारादेरणादिप्रत्याहारेषु ग्रहणात् प्रत्याहारघटितेषु सूत्रेषु ककारादिचिह्नैरण्प्रत्या-हारस्थत्वेन प्रत्यभिज्ञायामपि "अस्य च्वौ" इत्यादौ सवर्णग्रहणाप्रसक्तिरूपं दोषमापाद्य तन्निरा-करणाय "अइउण्" इत्यादिसूत्रेषु वर्णानां जातिपरत्वेन सर्वाकारादिषु वर्तमानाया जातेरनुकरणेन तदनुकार्यजातेरुपस्थितौ तत्र कार्यासम्भवेन तज्जात्याश्रयव्यक्तीनां ग्रहणे सर्वत्राण्त्वस्य निर्बाधतया न दोष इत्युक्तम्। किञ्च, जातेरस्वीकारेऽपि कस्यचिदेकस्याकारस्य वर्णसमाम्नायस्थाकारादिना बोधे तत्सादृश्यस्यान्येष्वकारेष्वपि वर्तनात्, 'लोकवद् व्यवहारः सेत्स्यति' इत्यभिप्रायमादाय "रूपसामान्याद्वा सिद्धम्" इति वार्त्तिकेन समाहितम्। तत्र कैयटेन मीमांसकानां व्यक्तिस्फोटवादित्वं वर्णानित्यत्ववादिनां जातिस्फोटवादित्वमसकृन्निगदितम्। तत्र स्फोटशब्दव्यवहारो वाचक-

वर्णेषु तद्गतजातिषु वा प्रवर्तितो वर्त्तते, न तु स्फोटे आन्तरे। एवमनेकेषु स्थलेषु विभिन्नार्थक-स्फोटशब्दस्य वर्तमानत्वेऽपि वैयाकरणसिद्धान्तरीत्या आन्तरः स्फोट एव वक्ष्यमाणो गृह्यत इत्यवगन्तव्यम्। अभिव्यक्तिश्च ध्वनिना केनचित् कत्वेन, केनचिद् गत्वेन केनचिदन्येनान्येन रूपेण। किञ्च, सर्वेण ध्वनिना रत्नपरीक्षणवत् पूर्णस्यैव स्फोटस्याभिव्यक्तिः क्रियते। यथा रत्नस्य परीक्षणे पूर्वदर्शनेनास्फुटम्, ततः स्फुटम्, स्फुटतरम्, स्फुटतमं चान्तिमेन दर्शनेन। यथा वा दूरादन्धकारे वाऽस्फुटा, स्फुटा, स्फुटतरा, स्फुटतमा च क्रमेणात्यन्तनिकटेन, तद्वत् प्रत्येकं वर्णेन सम्पूर्णस्याभिव्यक्तावपि स्फुटतमा बोधक्षमाऽभिव्यक्तिरन्तिमध्वनिनिष्पत्तेरनन्तरमेव। तदुक्तं भर्तृहरिणा—

यथानुवाकः श्लोको वा सोढत्वमनुगच्छति।
आवृत्त्या न तु स ग्रन्थः प्रत्यावृत्त्या निरूप्यते॥ इति।

तत्र चतसृषु वाक्षु परा-पश्यन्ती-मध्यमा-वैखरीषु मध्यमावस्थोऽयमान्तरः स्फोटस्तत्तद्-ध्वनिनाऽन्तःकरणे तत्तद्रूपरूषितोऽन्तःकरणस्थिताँस्ताँस्तानर्थान् बौद्धानेव बोधयति, उभयोरेकत्रैव स्थित्या सामानाधिकरण्यात्। अन्तःकरणस्थेष्वेव शब्देषु दैशिकः पूर्वपरादिव्यवहारः। नातः "इको यणचि" इत्यादिसूत्राणामसङ्गतिः। स्पष्टं चेदं "परः संनिकर्षः संहिता" इति सूत्रे भाष्ये। तत्र ह्युच्चरितप्रध्वस्तानां सन्निकर्षः पौर्वापर्यञ्च कथमित्याशङ्क्य—

बुद्धौ कृत्वा सर्वास्चेष्टाः कर्ता धीरस्तन्वन्नीतिः।
शब्देनार्थान् वाच्यान् कृत्वा बुद्धौ कुर्यात् पौर्वापर्ये॥ इति।

अत एव "एक इन्द्रशब्दः क्रतुशतेष्वाविर्भूतो युगपत् सर्वेषु यागेष्वङ्गं भवति" इति सरूपसूत्रे भाष्ये उक्तम्। अयं स्फोटवादः "ऐऔच्" इति सूत्रे भाष्ये नामनिर्देशेन स्पष्टमेवोक्तः—"अथवोभयतः स्फोटमात्रं निर्दिश्यते रश्रुतेर्लश्रुतिर्भवति" इति।

तत्र ध्वनिर्द्विविधः—प्राकृतो वैकृतश्च। तत्र प्राकृतध्वनिगतकालादेरेव स्फोटे भानम्, न तु वैकृतगतस्य। तदुक्तं वाक्यपदीये—

स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः।
स्वभावतस्तु नित्यत्वाद् ह्रस्वदीर्घप्लुतादिषु॥
प्राकृतस्य ध्वनेः कालः स्फोटस्येत्युपचर्यते॥ इति,

## शब्दाद्वैतवादिनामवान्तरमतभेदः

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।
स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ॥
शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः ।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥ इति च ।

तत्रान्तरेण शब्देनान्तरस्यार्थस्य बोधः । अत एकदेशस्थत्वेनेतरेतराध्यासः, अत एव तादात्म्यम् । गौरयमर्थः, गौरयं शब्दः, इत्येकाकारव्यवहारश्च । तदुक्तं योगसूत्रे—"शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्" इति । नन्वेवमपभ्रंशस्थलेऽपि तत्तद्ध्वनिनाऽभिव्यक्तस्य स्फोटस्य नित्यत्वात्ततोऽर्थबोधे तदर्थं ज्ञायमानस्य स्फोटस्य प्रयोगे साधुशब्दवद्धर्मादीनामुत्पत्तिः स्यात् ? इति चेन्न, व्याकरणे साधुत्वेन बोधितध्वन्यभिव्यक्तस्फोटेनैवार्थबोधे धर्मादीनामुत्पत्तिस्वीकारेणादोषात् । शब्दार्थयोरान्तरयोरेव वाच्यवाचकभावे हरिग्रन्थोऽपि प्रमाणम्—

यदन्तः शब्दतत्त्वं तु नादैरेकं प्रकाशितम् ।
तदाहुरपरे शब्दं तस्य वाच्ये तथैकता ॥
अर्थभागैस्तथा तेषामान्तरोऽर्थः प्रकाशते । इति,
एकस्यैवात्मनो भेदौ शब्दार्थावपृथक्स्थितौ ॥ इति च ।

अन्तरेकरूपेण स्थितयोरपि शब्दार्थयोर्बहिर्भेदेन भासनं शक्तिभेदात् । स च स्फोट आन्तरः प्रणव एव । "ॐकार एव सर्वा वाक् । सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" इति श्रुतेः । बह्वी वाक्यपदादिरूपा नानारूपा घटपटादिरूपा च । भागवतेऽप्युक्तम्—

समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ।
हृद्याकाशाद्भवेन्नादो वृत्तिरोधाद्विभाव्यते ॥ इति ।

हृद्याकाशादित्यस्य हृद्गताकाशादित्यर्थः । यः कर्णपिधानेन श्रोत्रवृत्तिनिरोधादस्माभिरपि विभाव्यते श्रूयत इति ।

ततोऽभूत् त्रिवृदोङ्कारो योऽव्यक्तप्रभवः स्वराट् ।
यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥ इति ।

त्रिवृत् त्रिमात्रः । अव्यक्त ईश्वरः कारणं यस्य सः । अत एव भगवतो लिङ्गं गमकः । स च प्रणवो द्विविधः—परोऽपरश्च । परो ब्रह्मात्मकः । अपरः शब्दात्मकः । तथा चोक्तम्—

परं परतरं ब्रह्म ज्ञानानन्दादिलक्षणम् ।
प्रकर्षेण नवं यस्मात् परं ब्रह्म स्वभावतः ॥
अपरः प्रणवः साक्षाच्छब्दरूपः सुनिर्मलः ।
प्रकर्षेण नवत्वस्य हेतुत्वात् प्रणवः स्मृतः ॥ इति ।

परप्रणवस्तु परमात्मा ।

शृणोति परमं स्फोटं सुप्ते श्रोत्रे च शून्यदृक् ।
येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥ इति ।

सुप्ते श्रोत्रे, कर्णपिधानादिना अवृत्तिके । इमं प्रणवरूपम् । स्फोटं स्थूलरूपेण परिणतमपि यः शृणोति स परमात्मा । जीवस्तु न श्रोतुं शक्नोति, श्रोत्ररूपेन्द्रियस्य निरोधात्, करणाभावात्, तदधीनज्ञानस्यासम्भवात् । परमात्मा तु शून्येऽपीन्द्रियवर्गे दृग् ज्ञानं यस्य तादृश इति न दोषः । येन प्रणवेन बृहती वाग् व्यज्यते यस्य च हृदयाकाशे आत्मनः सकाशादभिव्यक्तिः । तदुक्तम्—

स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः ।
स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम् ॥

स्वधाम्नः स्वकारणस्य परमात्मनः साक्षाद् वाचकः । सः प्रणवः सर्वेषां मन्त्राणामुपनिषद्रहस्यम् । वेदबीजं वेदकारणम् । परन्तु न विकारित्वं तस्य, यतः सनातनम् ।

तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह ।
धार्यन्ते यैस्त्रयो भावा गुणनामार्थवृत्तयः ॥

अकाराद्या अकारोकारमकाराः । यैरकाराद्यैः । त्रयो भावाः । धर्माः, धार्यन्ते तत्कारणत्वात् । गुणाः सत्त्वरजस्तमांसि । नामानि ऋग्यजुःसामलक्षणानि । अर्था भूर्भुवःस्वर्लोकाः । वृत्तयो जाग्रत्स्वप्नसुषुप्तयः । तदुक्तमन्यत्र—

ततोऽक्षरसमाम्नायमसृजद् भगवानजः ।
अन्तःस्थोष्मस्वरस्पर्शदीर्घह्रस्वादिलक्षणम् ॥

अजः परप्रणवरूपः । ततः अपरप्रणवात् । अक्षरसमाम्नायम् अन्तःस्थोष्मस्वरस्पर्शह्रस्वादिलक्षणमसृजदित्यर्थः । "व्याप्तिमत्त्वात्तु शब्दस्य" इति निरुक्तभाष्ये "अभिधानाभि-

धेयरूपा बुद्धिहृदयाकाशप्रतिष्ठिता परबोधनेच्छया पुरुषेणोदीर्यमाणा कण्ठादिषु वर्णभावमापद्य बाह्याकाशदेशस्थं शब्दं स्वस्वरूपं कृत्वा श्रोत्रद्वारेण तत्र स्थितां श्रोतुर्बुद्धिमनुप्रविश्य सर्वार्थाभिधानरूपां तत्तद्बुद्धिं व्याप्नोति। पुरुषप्रयत्नजा वक्त्रोद्धाता परं नश्यन्ति, न शब्दः।

स च स्फोटस्तदनुरक्तोऽर्थप्रत्ययं जनयतीति तत्रत्यपदत्वादिकं वक्त्रोद्धातेष्वारोपयन्ति, तद्गतनाशादिकञ्च तस्मिन्निति। स च शब्दो वस्तुत एकोऽपि तत्तद्ध्वनिगतसंस्कारैः प्रतिबिम्बिततत्तद्रूपोऽनन्तपदरूपतामापन्न इति सर्वपदरूपः सर्वार्थाभिधानशक्तिः। सत्यामपि सर्वार्थाभिधानशक्तौ नास्माकं सर्वेभ्यः पदेभ्यः सर्वार्थस्य भानम्। तथा सति घटपदात् पटार्थबोधोऽपि स्यात्, किन्तु योगिनामेव। ये हि योगबलेन तत्तत्पदस्य कारणभूतं सूक्ष्मं शब्दं योगमहिम्ना जानन्ति, तेषां घटपदादपि पटबोधो भवत्येव स्वमनीषायाम्। परन्तु तया मनीषया लोके न व्यवहरन्ति, व्यवहारस्य सर्वजनसाधारणविषयत्वात्।

वाक्यस्फोटस्यैव मुख्यतया यत्रापि केवलपदादेव बोधस्तत्रापि वाक्यमेव, पदे पदैकदेशन्यायेन वाक्येऽपि वाक्यैकदेशस्वीकारात्। स चैकदेशो न वाक्यावयवः, अपि तु तादृशं भिन्नं वाक्यमेव। लोकव्यवहारात्तस्यापि पूर्णवाक्यार्थे शक्तिग्रहः। तच्च वाक्यं न पदसमूहात्मकम्, पदाज्ञानेऽपि वाक्यतो बोधदर्शनात्। एवं पदमपि न प्रकृतिप्रत्ययादिसमूहरूपम्, तयोरर्थाज्ञानेऽपि पदार्थप्रतीतेरनुभवात्। तदुक्तं हरिणा—

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन॥ इति।

यो हि वाक्ये पदावभासः, पदे प्रकृतिप्रत्ययावभासः, सोऽपि वाक्यज्ञानोपायभूतः कल्पित एव। तदुक्तं हरिणा—

असतश्चान्तराले यान् शब्दानस्तीति मन्यते।
प्रतिपत्तुरशक्तिः सा ग्रहणोपाय एव सः॥
यथाद्यसंख्याग्रहणमुपायः प्रतिपत्तये।
संख्यान्तराणां भेदेऽपि तथा शब्दान्तरश्रुतिः॥ इति।

नन्वेवं वाक्यस्यैव सत्यत्वे व्याकरणं व्यर्थम्, तस्य प्रकृतिप्रत्ययद्वारैव शब्दव्युत्पादकत्वात्; इति चेन्न, लघुनोपायेन शब्दज्ञानायैव प्रकृतिप्रत्ययकल्पनायाः सत्त्वात्। तदुक्तं हरिणा—

उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥ इति।

पञ्चकोशादिवत्तस्मात् कल्पनैषा समाश्रिता ।
उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः ।। इति ।

तस्यैवोङ्कारस्य स्फोटरूपस्य यत्सूक्ष्मं रूपं तदेव शब्दब्रह्मेति गीयते । तदेव सकलनामरूपात्मकाकारसृष्टेराधारभूतं सच्चिदानन्दस्वरूपं सर्वेषां प्रपञ्चानामधिष्ठानं रजतस्य शुक्तिरिव, अहेः रज्जुरिव, तोये मृगमरीचिरिवावतिष्ठते । वैयाकरणानां मते सर्वप्रमाणानां श्रेष्ठभूतं शब्दः प्रमाणम् । यदाहुरसकृद् भाष्यकारा महर्षयः पतञ्जलयः—"शब्दप्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणम्" इति । अतः सर्वेभ्यः प्रमाणेभ्यः स्वतः प्रामाण्यमाश्रिताः श्रुतय एव शेखरायमाणाः सन्ति । ताश्चासकृच्छब्दादेव सृष्टिमाहुः—"वागेव विश्वा भुवनानि जज्ञे", "स हि सर्वशब्दार्थप्रकृतिः", "सर्वा वाचो वेदमनुप्रविष्टाः", "नावेदविन्मनुते ब्रह्म किञ्चित्" इति । तदुक्तं पुण्यराजेन ?—"वागेवाविभागापन्ना गवादिरूपेणावतिष्ठते । गवादयश्च बाह्यार्थविभागाः पुनः श्रुतिरूपत्वेन परिणमन्ते । अत एव शब्दार्थयोः कार्यकारणभावसम्बन्धः । तदुक्तं श्रुतौ—"नामेदं रूपत्वेन वृत्तरूपं रूपं चेदं नामभावेन तस्थे । एके तदेकमविभक्तं विभेजुः प्रागेवान्ये भेदरूपं वदन्ति ।।" इति । प्रकारान्तरेण जगतः कारणत्वं समर्थ्यते । तथा हि—शब्दबलादेवास्य विश्वस्य स्वमात्रा परमात्रा वेति प्रतीतिर्भवति । एकस्यैव चितितत्त्वस्यान्तः सन्निविष्टस्य बहिस्तत्तद्रूपेणावभासः । नास्ति बहिः किञ्चित् "सर्वं मिथ्या प्रकल्पितम्" इति श्रुतिरूपशब्दबलादिव कैश्चिद्दर्शनगामिभिः 'स्वमात्रा' इति निश्चितम् । यथा महतोऽग्नेर्विस्फुलिङ्गाः सूक्ष्माः, वायोरभ्रसंघातः, चन्द्रकान्ताद्विभागिन्यस्तोयधाराः, पृथिव्यां वारोहप्रसवा न्यग्रोधाः; एवं विश्वमखिलं तत एव चैतन्याज्जातं सत्यमिति 'परमात्रा' इति निश्चितम् । तत्र श्रुत्या शब्देन यथाऽर्थः प्रक्रम्यते प्रतीतिं गच्छति, तथैव रूढतामेति । अतः शब्देनैवार्थः सृज्यत इति न कैश्चिदपलपितुं शक्यते । किञ्च, सर्वजनप्रसिद्धस्यात्यन्तमलीकस्याप्यर्थजातस्य शब्दात् प्रतीतिः सर्वजनप्रसिद्धा, प्रत्यक्षप्रमाणादिविरोधेऽपि शशविषाणालातचक्रादौ । तदुक्तं हरिणा—

स्वमात्रा परमात्रा वा श्रुत्या प्रक्रम्यते यथा ।
तथैव रूढतामेति तया ह्यर्थो विधीयते ।।
अत्यन्तमतथाभूते निमित्ते श्रुत्युपाश्रयात् ।
दृश्यतेऽलातचक्रादौ वस्त्वाकारनिरूपणा ।। इति ।

शब्दब्रह्मणः प्रकाशत्वे प्रमाणम्—"त्रीणि ज्योतींषि त्रयः प्रकाराः । योऽयं जातवेदाः,

## शब्दाद्वैतवादिनामवान्तरमतभेदः

यश्च पुरुषेष्वान्तरः प्रकाशः, यश्च प्रकाशाप्रकाशयोः प्रकाशयिता शब्दाख्यः प्रकाशः। तत्रैतत् सर्वमुपनिबद्धं यावत् स्थास्नु चरिष्णु च'' इति। शब्दाज्जगतो विवर्तं प्रमाणम्—

ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम्।
विवृतं शब्दमात्राभ्यस्तास्वेव प्रविलीयते॥ इति।

तत्र विवर्तो नाम—एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्याविभक्तान्यरूपोपग्राहिता। उक्तञ्च—

मूर्तिक्रियाविवर्तौ विद्याशक्तिप्रवृत्तिमात्रगतौ।
विद्यात्मनिष्ठरूपौ तत्त्वान्यत्वाभ्यामनाख्येयौ॥ इति।

प्रणवरूपस्य ब्रह्मणो नादैस्तत्तद्वाक्यपदादिरूपेणाभिव्यक्तस्यापि नित्यत्वम्। अत एव व्याकरणादीनां शास्त्राणां निर्माणं सार्थकम्। अन्यथा नूतनानां शब्दानां निर्माणे निर्मितानां शब्दानामपरिच्छेदात् साधुत्वप्रदर्शनार्थं तन्निर्माणमसङ्गतं स्यात्।

तच्च सर्वस्य भूतजालस्य निमित्तमुपादानञ्च सर्वेषामधिष्ठानतया स्थितं ब्रह्म एकमेव, "एकमेवाद्वितीयम्", "प्रणव एवैकस्त्रेधाऽभिव्यज्यते" इत्यादिश्रुतिभ्यः। एकमेव च तत् प्रधानभूतां कालशक्तिमाश्रित्याश्रिता अनेकाः शक्तीराश्रित्य तत्तद्रूपेण भासते। तदुक्तं भर्तृहरिणा—

एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते॥
अव्याहताः कला यस्य कालशक्तिमुपाश्रिताः।
जन्मादयो विकाराः षड् भावभेदस्य योनयः॥ इति।

यथाऽग्नौ वर्तमाना दाहकत्वशक्तिर्नाग्नेः पृथग्भूता, शक्तिशक्तिमतोरभेदात्। तथैव ब्रह्मणि वर्तमानाः शक्तयो न पृथग्भूताः, किन्तु ब्रह्मस्वरूपा एव ता एवाश्रित्य नानारूपेण शुक्तौ रजतमिव भासते। शुक्तिज्ञानेन रजतमिवाधिष्ठानभूतब्रह्मज्ञानेन निवर्तते।

अत एव वाचश्चातुर्विध्यमुच्यते शास्त्रज्ञैः। ताश्च—परा, पश्यन्ती, मध्यमा, वैखरी च। तत्र वैखरी वर्णरूपा नित्या च। तस्यामनेके मतभेदाः।

केचिज्जैना अणुभिः शब्दानां निष्पत्तिमभिवदन्ति, केचिद् वायोः। वैयाकरणसिद्धान्त-मञ्जूषायां नागेशेनापि वैखर्यां वायुगुणत्वमेवाङ्गीक्रियते। शिक्षाकारा अन्तःकरणादेव तदुत्पत्तिं मेनिरे। तथा चोक्तं तैः—

आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णान् जनयते........................॥

इत्यादिना। भर्तृहरिणाप्युक्तम्—

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते।
कैश्चिद्दर्शनभेदोऽत्र प्रवादेष्वनवस्थितः॥ इति।

तत्र परा वागेव शब्दब्रह्म, यस्यास्तत्त्वं व्याकरणादिना संविज्ञाय मुक्तो भवति। पश्यन्ती तस्या एव काचित् स्थूलभूता योगिनां सविकल्पकसमाधौ प्रतीयते। मध्यमा वागस्माभिर्नादैरभि-व्यक्ता तत्तद्रूपरूषिता वाचकत्वेन गृह्यते। वैखरी तु ताल्वादिस्थानैर्बाह्याभ्यन्तरप्रयत्नैश्च निष्पाद्यमाना ध्वनिशब्देन नादशब्देन च व्यवह्रियते। तदुक्तमभियुक्तैः—

वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा।
उद्यतार्था च पश्यन्ती सूक्ष्मा वागनपायिनी॥ इति।

तत्र त्रिविधा वाग् व्याकरणस्य विषयः। तदुक्तं हरिकारिकायाम्—

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्॥ इति,
तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।
तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते॥ इति,
आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः।
प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः॥
इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः॥
अत्रातीतविपर्यासः केवलामनुपश्यति॥ इति च।

## शब्दाद्वैतवादिनामवान्तरमतभेदः

तदाह पुण्यराजः ?—"व्यवस्थितसाधुभावे हि शब्दतत्त्वे संस्क्रियमाणेऽपभ्रंशापगमादाविर्भूते धर्मविशेषे नियतोऽभ्युदयः। तदभ्यासाच्च शब्दपूर्वकं योगमधिगम्य प्रतिभासतत्त्वप्रभवां भावविकारप्रकृतिसत्तां साध्यसाधनशक्तियुक्तां सम्यगवबुध्य नियतं क्षेममाप्नोति" इति। तदुक्तमभियुक्तैः—

प्राणवृत्तिमतिक्रान्ते वाचस्तत्त्वे व्यवस्थितः।
क्रमसंहारयोगेन संहृत्यात्मानमात्मनि॥
वाचः संस्कारमासाद्य वाचः स्थाने निवेश्य च।
विभज्य बन्धनान्यस्याः कृत्वा तां छिन्नबन्धनाम्॥
ज्योतिरान्तरमासाद्य छिन्नग्रन्थिपरिग्रहम्।
परेण ज्योतिषैकत्वं छित्वा ग्रन्थीन् प्रपद्यते॥ इति।

तत्राष्टसु स्फोटेषु पूर्वपूर्वोपमर्दन जातिवाक्यस्फोटस्य वाचकत्वमङ्गीकुर्वता कौण्डभट्टेन का सा जातिरिति प्रश्ने तत्तद्व्यक्त्यवच्छिन्नं ब्रह्मैव जातिरित्युक्तम्। तदुक्तम्—

सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः॥ इति।

केषाञ्चिन्मते व्यक्तय एव ध्वनयः, तद्व्यङ्ग्या जातिरेव स्फोट इति वाक्यपदीये स्पष्टमेवोक्तम्—

अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता।
कैश्चिद् व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः॥ इति।

अद्वैतवादिवेदान्तिनयेऽद्वैतब्रह्मातिरिक्तं न किञ्चिदस्तीति जातिरप्यविद्यैव, आविद्यकः पदार्थो वा। एवञ्च तस्या प्रवाहनित्यतैव। अतस्तन्मते तत्तज्जात्यवच्छिन्नं ब्रह्मैव तत्तच्छब्दवाच्यं वाचकञ्च। जातिस्फोटव्युत्पादनमविद्योपवर्णनमात्रम्। तदुक्तं हरिकारिकायाम्—

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते।
समारम्भास्तु भावानामनादि ब्रह्म शाश्वतम्॥ इति।

शब्दाद्वैतविषये किञ्चिद्विशेषत इदानीं विमृश्यते।

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥

अस्मिन् श्लोके भर्तृहरिणा ब्रह्मण एवानादिनिधनमिति विशेषणं तदेवाक्षरं चेत्युक्तम् , न तु शब्दस्य । तस्मादेव ब्रह्मणो जगतो विवर्तभाव उक्तः । तत्र—"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति" इत्यादिश्रुतयः प्रमाणम् । अतः शब्दतत्त्वमित्युक्तम् । तत्र शब्दतत्त्वमित्यत्र यद्यपि कर्मधारयसमासेन शब्द एव तत्त्वमिति वक्तुं शक्यते, तथापि षष्ठीसमास एवात्र युक्ततया प्रतिभाति । यतो हि पुण्यराजेन ? शब्दतत्त्वमित्यस्य सर्वशब्दरूपतया सर्वशब्दोपग्राह्यतया चेति विवृतिः कृता । अनेन वाच्यतावाचकतयोश्च ब्रह्मण्येव पर्यवसानमित्यवसीयते ।

इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम् ।
ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः ॥

इति वैयाकरणभूषणसारेऽपि ब्रह्मणः शब्दतत्त्वशब्देनैवोक्तिः, न तु शब्दस्यैव ब्रह्मत्वमुक्तम् । अतः शब्दब्रह्मेत्यस्यापि शब्दतत्त्वं ब्रह्मेत्येवार्थः । नन्वेवं सर्वेषां वस्तूनां तत्त्वं ब्रह्मैवेति शब्दतत्त्वमिति कथने विशेषाभावात् कर्मधारयसमास एवोचित इति चेन्न ? वैयाकरणप्रक्रियायां सृष्टिस्थितिप्रलयकारणत्वं ब्रह्मणः शब्दद्वारैवेति ज्ञापनार्थं तथोक्तत्वात् । स च शब्दः सूक्ष्मप्रणवरूपो रवपरादिशब्दैर्व्यवह्रियमाणो योगिना निर्विकल्पकसमाधौ प्रतीयमानो वर्तते । तदुक्तं वाक्यपदीये—

सत्या विशुद्धिस्तत्रोक्ता विद्यैवैकपदागमा ।
युक्ता प्रणवरूपेण सर्ववादाविरोधिनी ॥ इति ।

तथा चोक्तं पुण्यराजीये ?—"इहैकस्मिन् ब्रह्मणि सर्वं कल्पितम् । स चावान्तरः पुरुषः सर्वविकल्परहित इत्यत्र प्रणवः सर्वस्याभ्यनुज्ञाविषयः सर्वश्रुतिरूपः प्रकृतिसर्वनामत्वात् सर्वदर्शनोदयप्रत्यस्तमययोनिः सर्वाविरुद्धार्थोपग्राही सर्वथेदं ब्रह्मानुजानाति सर्वथा च प्रतिषेधति" इति । तस्मिन्नेव प्रणवे कालाख्या शक्तिर्वर्तते । शब्दस्वरूपतत्त्वज्ञः क्रमसंहारेण योगं लभते, साधुप्रयोगाच्चाभिव्यक्तधर्मविशेषो महान्तं शब्दात्मानमभिसंभवं कैवल्यं प्राप्नोति । सोऽव्यतिकीर्णां प्रतिभामुपैति । तस्माच्च सत्तामात्रात् प्रतिभाख्याच्छब्दात् पूर्वयोगभावनाभ्यासात् प्रत्यस्त-

मयसर्वविकारोल्लेखां परां प्रकृतिं प्रतिपद्यते। तत्र प्रतिपत्तौ ब्रह्मणि प्रतिपत्तावेव पर्यवसानम्। तदुक्तं वाक्यपदीये—

तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते॥ इति।

उक्तं चाभियुक्तैः—

आपः पवित्रं परमं पृथिव्यामपां पवित्रं परमञ्च मन्त्राः।
तेषाञ्च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः॥ इति।

नागेशभट्टास्तु शैवागमसंस्कारसंस्कृता अद्वैताद् ब्रह्मणः सृष्टिप्रक्रियां दर्शयन्ति। सा च सृष्टिरनादिभूता प्राणिनां कर्मोपभोगाय प्रवृत्ता मायात्मिका मायोपादानात्मिका तत्परिणामभूता च। तत्र न सर्वदा प्राणिनां कर्मणामुपभोगक्षमत्वम्, किन्तु पक्वकर्मणामेव। एवञ्च कालवशात् परिपक्वकर्मणामभावे जाते स्वोपभोगार्थं जातायाः सृष्टेः क्रमेण स्वस्वकारणे प्रविलीनतया सुप्तमायारूपेण वर्तनाल्लय इत्याख्या जायते। पुनरपि कालवशात् केषाञ्चित् कर्मणां परिपाके जाते तदुपभोगार्थं माया विक्षुब्धा भवति। ततो मायापुरुषयोर्विश्लेषो जायते। ततो माया सिसृक्षारूपेण परिणमते। सिसृक्षावृत्तेरव्यक्तं त्रिगुणं सत्त्वरजस्तमोरूपं बिन्दुरूपमुत्पद्यते, यस्य शक्तितत्त्वमित्याख्या जायते। तत्र बिन्दावंशत्रयम्—चित्, अचित्, चिदचिच्च। अचिदंशो बीजम्, चिदचिन्मिश्रोऽशो नादः, चिदंशो बिन्दुरिति। तस्माच्चिदंशबिन्दोश्चिदचिन्मिश्रस्य नादस्योत्पत्तिः। स एव नादः शब्दब्रह्मरूपेण रवपरादिरूपेण च व्यवह्रियते। तस्य चाभिव्यक्तिः प्राणिनां मूलाधारे व्याकरणजन्यसाधुशब्दज्ञानात् तत्प्रयोगाच्च जायमानधर्मविशेषेणान्तःकरणशुद्धौ सत्यां जायते। तस्मादेव जगतः सृष्टिः। तदेव शब्दब्रह्म सूक्ष्मतम-सूक्ष्मतर-सूक्ष्मरूपेण क्रमशस्तत्तदर्थबोधनाय प्रवृत्तस्य पुंसो हृदयाकाशेऽभिव्यक्तं स्फोटरूपेण व्याकरणनिकाये प्रसिद्धं भवति। एतया प्रक्रिययाऽपि शब्दस्य तत्त्वं ब्रह्मैव। अतो न वाक्यपदीयवैयाकरणभूषणसारादिभिः सह वास्तविकः कश्चिद् विरोधः, प्रक्रियायां विरोधे सत्यपि। तदुक्तं वाक्यपदीये—

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते॥ इति।

शब्दाद्वैतमित्यत्र शब्दः प्रणव एवाद्वैततत्त्वज्ञानजनकत्वाद् अद्वैतम्, वदनं वादः, शब्दाद्वैतस्य वादः शब्दाद्वैतवादः।

कर्मधारयसमासस्वीकारवादिनां तु शब्द एव तत्त्वम्, तदेव च ब्रह्मस्थानीयत्वाद् ब्रह्म। अतो वेदान्तिमतान्नास्ति कश्चिद्विशेषः। यदेव तत्त्वमेकमेवाद्वितीयं सच्चिदानन्दरूपं "तत्त्वमसि", "प्रज्ञानं ब्रह्म", "अयमात्मा ब्रह्म", "अहं ब्रह्मास्मि" इति महावाक्यचतुष्टयाद् बोध्यते, तदेव शब्दब्रह्म; नाममात्रे विवादः। अत एव "तस्मै पूर्णात्मने नमः", "अनादिनिधनम्", "अक्षरम्" इत्यादिविशेषणान्याञ्जस्येनोपपद्यन्ते। अत्र मते वाक्यपदीयभूषणकारनागेशादीनां सैद्धान्तिको महान् मतभेदः, तान्त्रिकस्य खपरादिशब्दैर्व्यवह्रियमाणस्य शब्दब्रह्मणो मायिकत्वात्, हर्यादिसम्मतशब्दब्रह्मणस्तदतीतत्वात्।

अन्ते च निष्कर्षरूपेणेदमेवायाति यद् भारतीयानां विदुषां ऋषित्वमाप्तानामन्येषां समेषां चेदमेव परमं लक्ष्यम्, यच्चतुर्वर्गप्राप्तिरिति। तत्राप्यर्थधर्मकामानामन्ते विनाशित्वादत एव दुःखसंभिन्नत्वात् सर्वतः परमं लक्ष्यं परमपुरुषार्थो मोक्ष एव। स च जगतो वास्तविकतत्त्वज्ञानादेव। तस्यैव तत्त्वज्ञानस्योपायभूतानि सर्वाणि दर्शनानि, निखिलानि शास्त्राणि च साक्षात्परम्परया वा तादृशतत्त्वज्ञानं जनयन्त्येवेति सर्वसम्मतः पन्थाः। किं बहुना, अत्यन्तं व्यवहारमार्गं लौकिकमापन्नस्य साहित्यशास्त्रस्यापि "रसो वै सः" इत्यादिश्रुत्यनुसारेण रसरूपब्रह्मनिरूपणद्वारा तदेव परमं लक्ष्यम्, किमुतान्येषां तदर्थमेव बद्धपरिकराणां दर्शनशास्त्राणाम्। तस्माद् व्याकरणज्ञानेन क्रमशश्चतुर्वर्गफलावाप्तिर्भवत्येवेति शम्॥

प्रबन्धो निर्मितो ह्येष श्रीमच्छङ्करपादयोः।
अर्पितो भवतात् किञ्चिद् मोदाय विदुषां हृदि॥

—:*:—

# वैयाकरणनये शाब्दज्ञानस्य परोक्षत्वापरोक्षत्वविवेकः

श्रीबालकृष्णशर्मा पञ्चोली, वा. सं. वि. वि. वाराणसी।

अत्र परोक्षत्वपदेन परोक्षज्ञानत्वं विवक्ष्यते। अत एव शाब्दज्ञानस्येत्यत्र षष्ठ्यर्थवृत्तित्वस्य तत्रान्वय उपपद्यते। अन्यथा तस्यानन्वयापत्तिः। प्रतियोगिविशेषिताभावज्ञाने प्रतियोगिज्ञानस्य कारणतया प्राक् परोक्षत्वं विविच्यते।

परोक्षं नाम अक्ष्णः परम्। मयूरव्यंसकादित्वात् तत्पुरुषसमासः। "अच् प्रत्यन्ववपूर्वात्" (पा० सू० ५।४।७५) इत्यत्र 'अच्' इति योगविभागात्, "परोक्षे लिट्" (३।२।११५) इति निपातनाद् वा समासान्तोऽच्। यद्वा—"प्रतिपरसमनुभ्योऽक्ष्णः" इति शरदादिगणसूत्रेण टच् समासान्तः। स च यद्यप्यव्ययीभावे विधीयते, तथापि परशब्दस्याक्षिशब्देनाव्ययीभावविधायक-शास्त्राभावेन तत्समासासम्भवात् परशब्दाव्यवहिततत्वविशिष्टाक्षिशब्दाद् गणसूत्रेण समासान्त-विधानसामर्थ्येन समासान्तरादपि टज् विज्ञायते। यद्वा परशब्दस्याक्षिशब्देन सहाव्ययीभावसमासो ज्ञाप्यते।

वृत्तिविषये चाक्षिशब्द इन्द्रियत्वप्रवृत्तिनिमित्तेन्द्रियत्वेन निखिलेन्द्रियवाची, न तु चक्षुः-पर्यायः; अन्यथेन्द्रियान्तरविज्ञातेऽपि वस्तुनि परोक्षशब्दवाच्यत्वापत्तेः। अत एवाहुरन्ये—दृश्यते प्रेक्ष्यतेऽनेनेति दर्शनं नेत्रम्, तत्पर्य्यायोऽत्राक्षिशब्दोऽयं न भवतीति "अक्ष्णोऽदर्शनात्" (पा० सू० ५।४।७६) समासान्तोऽजिति। यद्वा 'परोक्षे' इति निर्देशादेवाक्षिशब्दे उत्तरपदे परे परशब्दस्य परस् आदेशः, रुत्वे उत्वे गुणे च तत्सिद्धिः। यद्वा अक्षिशब्दस्यादेरुकारादेशो निपात्यत इति।

ज्ञानं द्विविधम्—परोक्षमपरोक्षञ्च। तत्रेन्द्रियसन्निकर्षनिष्ठजनकतानिरूपितजन्यत्वाभाव-समानाधिकरणज्ञानत्वं परोक्षत्वम्। ननु 'सोऽयं देवदत्तः' इति प्रत्यभिज्ञायाः परोक्षत्वापत्तिः, तत्तांशविषयकज्ञानस्येन्द्रियासन्निकर्षजन्यत्वादिति चेन्न, इन्द्रियसन्निकर्षजन्यत्वाभावमात्रनिष्ठप्रति-योगितानिरूपकपर्य्याप्त्यनुयोगितावच्छेदकज्ञानत्वस्यैव परोक्षज्ञानत्वात्। प्रत्यभिज्ञायां चेन्द्रिय-सन्निकृष्टदेवदत्तांशमादायेन्द्रियसन्निकर्षनिष्ठजनकतानिरूपितजन्यत्वस्यापि सत्त्वेन तत्समानाधि-

कज्ञानत्वस्याभावप्रतियोगिकपर्याप्त्यनुयोगिताऽनवच्छेदकत्वात्। जन्यत्वासमानाधिकरणाभावप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकज्ञानत्वस्यैव परोक्षज्ञानत्वाभ्युपगमादिति फलितोऽर्थः।

नन्वेवं 'पर्वतो वह्निमान्' इत्याद्यनुमितेः परोक्षत्वं न स्यात्, पर्वतांशमादायेन्द्रियसन्निकर्षनिष्ठजनकतानिरूपितजन्यत्वस्यापि सत्त्वेन जन्यत्वासमानाधिकरणो य इन्द्रियसन्निकर्षजन्यत्वाभावस्तत्पर्याप्त्यधिकरणज्ञानत्वस्यैव परोक्षज्ञानत्वादिति चेन्न, व्याप्तिज्ञानजन्यत्वव्यधिकरणं यदिन्द्रियसन्निकर्षजन्यत्वं तदभावसमानाधिकरणो य इन्द्रियसन्निकर्षजन्यत्वाभावस्तत्पर्य्याप्त्यनुयोगितावच्छेदकज्ञानत्वस्यैव परोक्षज्ञानत्वात्। तादृशज्ञानत्वावच्छिन्नप्रतियोगिताकभेदसमानाधिकरणज्ञानत्वमपरोक्षज्ञानत्वम्। यद्वा, इन्द्रियसन्निकर्षनिष्ठजनकतानिरूपितजन्यतावज्ज्ञानत्वमपरोक्षज्ञानत्वम्।

ननु ज्ञानमात्रेऽयं क्रमः—आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियं विषयेणेति। तथा चानुमित्यादेरपि मनोरूपेन्द्रियजन्यतयाऽपरोक्षत्वापत्तिरिति चेन्न, इन्द्रियत्वावच्छिन्ना या कारणता तन्निरूपितकार्य्यतावज्ज्ञानत्वस्यैवापरोक्षज्ञानत्वात्। ज्ञानत्वावच्छिन्नं प्रति मनसः कारणत्वं तु मनस्त्वेनैवेति मनस्त्वावच्छिन्नकारणतानिरूपितकार्य्यताया ज्ञानमात्रे सत्त्वेऽपि इन्द्रियत्वावच्छिन्नमनःकारणतानिरूपितकार्य्यताया अनुमित्यादावसत्त्वेनादोषात्।

न चेश्वरापरोक्षज्ञानेऽव्याप्तिः, ईश्वरज्ञानस्याजन्यत्वादिति वाच्यम्, "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" इति सूत्रेण जन्यापरोक्षस्यैव निरूपणात्। यद्वा ज्ञानाकरणकत्वविशिष्टज्ञानत्वमपरोक्षत्वम्। ननु ज्ञानाकरणकज्ञानस्यापरोक्षत्वे 'घटः' इति चाक्षुषस्यापरोक्षत्वं न स्यात्, विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणतया संसर्गानवगाहि प्रथमं चक्षुषा घटत्वज्ञानं घटज्ञानञ्च जायते। तदनन्तरं विशिष्टज्ञानमिति विशिष्टज्ञानात्मकप्रत्यक्षस्य निर्विकल्पात्मकज्ञानकरणकतयाऽव्याप्तिरिति चेन्न, ज्ञानाकरणकमित्यस्य विशिष्टज्ञानाकरणकमित्यर्थात्।

ननु यदुक्तं संसर्गानवगाहि निर्विकल्पात्मकं जायत इति, तदसङ्गतम्, चक्षुःसंयुक्तस्वरूपसम्बन्धरूपकारणवशात् समवायसम्बन्धस्यापि भानं दुर्निवारमिति निर्विकल्पासिद्धिरिति चेन्न, संसर्गानवगाहीत्यस्य संसर्गप्रयोज्यप्रकारताविशेष्यताशून्यार्थावगाहिज्ञानस्यैव निर्विकल्पात्मकज्ञानत्वात्।

ननु विषयतात्रयशून्यस्य ज्ञानस्यासम्भव इति चेन्न, निर्विकल्पस्याप्रत्यक्षत्वेन तत्र तुरीयाया एव विषयतायाः स्वीकारात्। यद्यपि पतञ्जलिमतानुयायिवैयाकरणनयेऽपि निर्विकल्पात्मकं

## वैयाकरणनये शाब्दज्ञानस्य परोक्षत्वापरोक्षत्वविवेकः

ज्ञानमेष्टव्यमेव, तथापि विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वानुरोधेन निर्विकल्पात्मकं विशेषणज्ञानमपेक्षत इत्येव न, किन्तु विशेष्याग्रहदशायां विशिष्टबुद्धेरनुपपत्त्या विशेष्यस्यापि निर्विकल्पात्मकज्ञानस्य विशिष्टबुद्धित्वावच्छिन्नं प्रति कारणत्वमित्युभयविषयकनिर्विकल्पात्मकज्ञाननिष्ठजनकतानिरूपितजन्यतावद्विशिष्टबुद्धित्वावच्छिन्नमित्येतावद् व्यतिरिच्यते। अत एव निर्विकल्पात्मकज्ञानस्य स्वरूपम् 'घटघटत्वे' इति दर्शयन्ति न्यायविदः। तथा च विकल्पो विशेष्यविशेषणभावः, तेन सह वर्तत इति सविकल्पकं विशिष्टज्ञानम्। विशेष्यविशेषणभावान्निर्गतं निर्विकल्पात्मकमर्थमात्रावभासि।

अन्ये तु विशेष्यविशेषणयोर्युगपदिन्द्रियसन्निकर्षेणैव विशिष्टबुद्ध्युपपत्तौ निर्विकल्पात्मकं ज्ञानं प्रकल्प्य तत्कारणत्वकल्पनं मुधैवेत्याहुः।

ननु निर्विकल्पकज्ञानस्य कारणत्ववादिनयेऽपि स्मरणात्मकविशिष्टबुद्धौ विशेषणाज्ञानदशायां तत्संस्काराभावदशायां वा विशिष्टस्मृत्यनुपपत्त्या तत्संस्कारस्यैव कारणत्वं वाच्यमिति तत्संस्कारस्य कारणत्वेनैव निर्वाहे निर्विकल्पकस्य कारणत्ववैफल्यमिति चेन्न, अपूर्वचैत्रत्वादेः स्मरणासम्भवेन 'चैत्रः' इति विशिष्टबुद्ध्यनुपपत्तेः।

## वेदान्तिमते शाब्दज्ञानस्याप्यपरोक्षत्वम्

अत्र ज्ञानगतापरोक्षत्वप्रयोजकं प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभेदरूपम्। तथा हि चैतन्यं त्रिविधम्—विषयचैतन्यम्, प्रमाणचैतन्यम्, प्रमातृचैतन्यं चेति। तत्र घटादिविषयावच्छिन्नं चैतन्यं विषयचैतन्यम्। अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम्। अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम्। तथा च विषयावच्छिन्नचैतन्यम् अन्तःकरणवृत्त्यवच्छिन्नचैतन्यं च यत्रैकदेशस्थं तत्र तयोरभेदः। स एव ज्ञानगतापरोक्षत्वस्य प्रयोजकः।

न चैवम् 'अहं धार्मिकः' इति शाब्दस्थले धर्मावच्छिन्नचैतन्यान्तःकरणवृत्त्यवच्छिन्नचैतन्ययोरात्मरूपैकदेशस्थत्वेन शाब्दज्ञानस्यापि प्रत्यक्षत्वापत्तिरिति चेन्न, विषये योग्यत्वस्याप्यपेक्षणात्। फलबलकल्प्यं योग्यत्वञ्च न धर्मे इत्यदोषः। सुखस्य वर्तमानतादशायाम् 'अहं सुखी', 'दशमस्त्वमसि', 'तत्त्वमसि' इत्यादौ विषयावच्छिन्नचैतन्यान्तःकरणवृत्त्यवच्छिन्नचैतन्ययोरेकदेशस्थत्वेन प्रत्यक्षत्वापत्तिरिति चेन्न, तत्र शाब्दज्ञानस्यापरोक्षत्वस्येष्टत्वात्। अतः "तद्धास्य विजज्ञौ तमसः पारं दर्शयति" इति श्रुतिः, "वेदान्तविज्ञानसुनिश्चितार्थाः" इति श्रुतिश्च सङ्गच्छते। पूर्ववाक्ये तज्जन्यापरोक्षज्ञानस्योपदेश( वाक्यप्रयोग )मात्रसाध्यत्वोक्तिः। उत्तरवाक्ये शाब्दज्ञानस्य

विपदेन विशेषविषयत्वलाभात् सुपदेनापरोक्षत्वोक्तिः। तमसः पारं दर्शयतीत्युक्त्या चापरोक्षत्व-सिद्धिः। न च ग्राममार्गोपदेशकर्तरि 'ग्रामं दर्शयति' इत्यस्य यथा दर्शनकर्मीभूतमार्गगतकर्मत्वस्य स्वाश्रयघटितत्वसम्बन्धेन ग्रामे आरोपात् परम्परासम्बन्धेन वा तथोपचारः, साक्षात्साधनत्वे बाधकाभावेन परम्परासम्बन्धस्यात्र =( 'तमसः पारं दर्शयति' इत्यत्र ) अन्याय्यत्वात्। उपदेशा-तिरिक्तदर्शनकारणस्य नारदसनत्कुमाराख्यायिकायामप्रतीतेश्च।

न च "मनसैवानुद्रष्टव्यम्" इति श्रुतिविरोधः, तस्याः श्रुतेश्चित्तैकाग्रतायामेव तात्पर्य्यात्। न च सुपदस्याप्रामाण्यशङ्काविरहपरतया द्वितीयवाक्ये तेनापरोक्षरूपतालाभः। अन्यथा वेदान्त-बोध्यस्य विचारकर्तव्यतादेश्चापरोक्षत्वापातादिति वाच्यम्, निश्चितपदेनैवाप्रामाण्यशङ्काऽभावादे-र्लाभेन सुपदस्य तत्परत्वाभावात्। वेदान्तबोध्यस्य ब्रह्मातिरिक्तस्याप्येवमपरोक्षत्वापत्तिर्नापाद्या, अर्थपदस्य मुख्यतस्तात्पर्यविषयपरत्वात्, वेदान्तवेद्यताया ब्रह्ममात्रपर्यवसन्नत्वाच्च।

एवं शाब्दज्ञानस्यापरोक्षत्वेऽनुमानमपि मानम्। अपरोक्षत्वं तत्त्वमस्यादिवाक्यजन्य-ज्ञानवृत्ति, अपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वात्, ज्ञानत्ववत्। न च कर्मकाण्डज्ञानजन्य-वृत्तित्वमपि सिद्धयेदिति वाच्यम्, विपक्षबाधकसत्त्वासत्त्वाभ्यां विशेषात्। तथा हि—तत्त्वमस्यादि-वाक्यस्यापरोक्षज्ञानाजनकत्वेऽपरोक्षभ्रमनिवृत्त्यसिद्धयापत्तेः। न च मनसैवापरोक्षज्ञानम्, मनसः कुत्राप्यसाधारणतया प्रमाकरणत्वाभावात्। न च ब्रह्मज्ञाने सुखदुःखज्ञाने च मनसोऽसाधारणकार-णत्वम्, आत्मनः स्वप्रकाशत्वात्, सुखदुःखयोः साक्षिवेद्यत्वाच्च। न च शब्देऽपरोक्षज्ञानजनकत्व-वदन्यत्रावलृप्तमेव मनस्यसाधारणत्वं कल्पनीयम्, एवमपि तेन शब्दस्य परोक्षज्ञानहेतुत्वं सिद्धमेव, तज्ज्ञानस्यापरोक्षत्वमात्रं कल्प्यते। मनसि तु करणत्वं तज्जन्यज्ञानेऽपरोक्षत्वं चोभयं कल्प्यमिति विशेषः।

न चैवं ज्योतिष्टोमादिविषयककर्मकाण्डजन्यज्ञानेऽप्यपरोक्षत्वं स्यात्, प्रमाणाभावात्। तत्र हि कल्पनीयमनुष्ठानाय फलाय वा ? नाद्यः, परोक्षज्ञानादेव तत्सम्भवात्। नान्यः, परोक्ष-ज्ञानादेव तत्फलसिद्धेः।

न च 'शब्दो नापरोक्षज्ञानजनकः, शब्दत्वात्' इति प्रतिसाधनम्, 'दशमस्त्वमसि' इत्यादौ व्यभिचारात्। न च तज्ज्ञानमिन्द्रियकरणकमेव, न शब्दकरणकम्; शब्दस्तु सहकारि-कारणमेवेति वाच्यम्, बहुलेऽपि तमसि सहकारिकारणालोकाभावेनेन्द्रियकरणत्वासम्भवेन लोचन-विहीनस्यापि 'दशमस्त्वमसि' इति वाक्यजन्यापरोक्षज्ञानस्य भ्रमनिवर्तकत्वदर्शनात्। 'दशमस्त्व-

मसि' इत्यत्रात्मांशे इन्द्रियसन्निकर्षात्, दशमत्वांशे शब्दात्, एकं ज्ञानमित्यस्याप्रयोजकत्वमेव। न च 'धर्मवांस्त्वमसि', 'पर्वतो वह्निमान्' इत्यादौ विशेष्यस्यापरोक्षत्वेऽपि विशेषणांशस्य परोक्षत्ववदत्रापि दशमत्वे परोक्षत्वमेवास्त्विति वाच्यम्, अत्र परोक्षत्वेऽपरोक्षभ्रमनिवृत्त्यनापत्तेः।

ननु शब्दस्यापरोक्षज्ञानजनकत्वं किं स्वभावसिद्धम्? अथवा अपरोक्षविषयनिमित्तम्? नाद्यः, 'ग्रामं गमिष्यति चैत्रः' इत्यत्राप्यपरोक्षत्वापत्तेः। नान्त्यः, 'जीवाः परमात्मनो न भिद्यन्ते, आत्मत्वात्' इत्यादिना जायमानानुमित्यादेः श्रवणात् प्राग्वेदान्तवाक्यजन्याया भाषाप्रबन्धजन्याया अनधीतवेदान्तजन्याया ऐक्यप्रतीतेश्चापरोक्षत्वापत्तौ श्रवणमननादेरनियमत्वापत्तेः।

## अर्थगतमपरोक्षत्वं किम्?

न तावदपरोक्षबुद्धिरूपम्, ब्रह्मण्यस्य सत्त्वेऽपि दशमत्वादौ तदभावात्। यद्विषयकं चैत्रस्यापरोक्षज्ञानं जातम्, शब्दादिना मैत्रस्य तज्ज्ञानेऽपरोक्षत्वापत्तेः। अपरोक्षव्यवहारविषयत्वरूपमपि न, शब्दजन्यवृत्तेरपरोक्षव्यवहारविषयविषयकत्वेनाज्ञाननिवर्तकत्वम्, अज्ञाननिवृत्तौ च सत्याम् 'अपरोक्षोऽयम्' इत्येतत्स्वरूपं व्यवहारस्यापरोक्षत्वमित्यन्योन्याश्रय इत्यादिशङ्कासमाध्यनन्तरं यस्य प्रमातुर्यं बोधमादाय बोद्धृत्वं तदभिन्नार्थविषयकज्ञानत्वमेव तस्यापरोक्षत्वम्। तदभिन्नत्वञ्च मनोऽनवच्छेदप्रयुक्तो यो भेदस्तच्छून्यतावच्छेदकत्वरूपम्। यद्विषयावच्छेदेन हि चिति वृत्तिरूपेण परिणतमनःसम्बन्धस्तद्विषयावच्छेदेन पूर्वं सत उक्तभेदस्य नाशादुक्तशून्यता-सुखादौ तु सा सहजैव। विषयस्यापरोक्षत्वमनावृत्तत्वमेवेत्याद्युक्तमद्वैतसिद्धौ।

तदयं निर्गलितोऽर्थः— किञ्चिच्छाब्दज्ञानमपरोक्षम्, किञ्चिच्च परोक्षम्, किञ्चिच्च परोक्षत्वापरोक्षत्वोभयाक्रान्तम्। यथा "तत्त्वमसि" इति वाक्यजन्यं ज्ञानमपरोक्षम्, "चैत्रो ग्रामं गच्छति" इति परोक्षम्, "दशमस्त्वमसि" इति परोक्षत्वापरोक्षत्वोभयाक्रान्तम्।

न चैवं परोक्षत्वापरोक्षत्वयोरेकत्र समावेशे स्वसामानाधिकरण्य स्वाभावसामानाधिकरण्य-स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वैतत्त्रितयसम्बन्धेन परस्परविशिष्टत्वरूपसाङ्कर्येण, तयोर्जातित्वं न स्यादिति चेन्न, इष्टापत्तेः। वेदान्तनये समवायासिद्धया ब्रह्मभिन्नसकलप्रपञ्चस्यानित्यतया च नित्यत्वसमवेतत्वघटितं जातित्वं खपुष्पायमानमेव। ननु तयोर्जातित्वाभावेऽपि 'पर्वतो वह्निमान्' इत्याद्यनुमितौ विरुद्धयोः परोक्षत्वापरोक्षत्वयोर्विरोधव्याघात इति चेन्न, एकस्यैव चैतन्यस्य पर्वताकारवृत्त्यवच्छिन्नत्वेनापरोक्षत्वे वह्न्याकारवृत्त्यवच्छिन्नत्वेन परोक्षत्वे च वृत्तिभेदप्रयुक्तयोः परोक्षत्वापरोक्षत्वयोर्विरोधाभावस्येष्टत्वात्।

वस्तुतस्त्वेतादृशस्थले 'सुरभि चन्दनम्', 'सोऽयं चैत्रः' इत्यादौ सौरभांशतत्तांशज्ञानस्य नाशेन ज्ञानलक्षणप्रत्यासत्तेर्वक्तुमशक्यतया तद्विषयकसंस्कारस्यैव प्रत्यासत्तित्वं वाच्यमिति संस्कारचक्षुरादिसन्निकर्षोभयजन्यं ज्ञानान्तरमेव, न तत्र स्मृतित्वम्, नाप्यनुभवत्वम्। 'दशमस्त्वमसि' इत्यादौ परोक्षत्वापरोक्षत्वानाक्रान्तं ज्ञानान्तरमेवेति न कश्चिद्दोषः।

यत्त्वाहुः—वैयाकरणनये "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमाद् ऋते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥" इति ह्युक्तदिशा ज्ञानमात्रस्य शब्दानुविद्धतया निर्विकल्पकज्ञानस्य दुर्वचत्वम्। न चैवं विशिष्टबुद्धौ विशेषणज्ञानस्य विशेष्यज्ञानस्य च निर्विकल्पस्य कारणतया निर्विकल्पाभावे सविकल्पस्यापि सिद्धिर्दुर्वचेति वाच्यम्, युगपद्विशेष्यविशेषणयोरिन्द्रियसन्निकर्षेण निर्विकल्पज्ञानमन्तरैव विशिष्टज्ञानस्य सम्पत्तेरिति; तन्न, "अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते" इत्यत्र ज्ञानपदेन सविकल्पस्यैव ग्रहणात्। किञ्च, यदि 'सुरभि चन्दनम्' इति विशिष्टज्ञानं सौरभज्ञानपूर्वकमेव दृश्यते। नहि सौरभज्ञानं विना विशिष्टज्ञानं सम्पत्तुमर्हति, तथा 'अयं घटः' इति सविकल्पकं विशेषणघटत्वज्ञानपूर्वकमेवेति, तन्न, सर्वेणैव विशिष्टज्ञानेन निर्विकल्पकज्ञानपुरस्सरेणैव भाव्यमिति नहि नियमः, किन्तु ययोर्विशेष्यविशेषणयोर्विभिन्नेन्द्रियग्राह्यता, तत्रैव विशेषणज्ञानं पूर्वमपेक्षते। यथा 'सुरभि चन्दनम्' इत्यत्र सौरभं विशेषणं घ्राणेन्द्रियग्राह्यम्, चन्दनन्तु चक्षुर्ग्राह्यम्। तस्मात् प्राग् घ्राणेन्द्रियेण गृहीतं सौरभं पूर्वानुभवजनितसंस्कारबलेन स्मृतं सत् सन्निकृष्टचन्दनस्य विशेषणतया भासते। यत्र तु विशेष्यविशेषणयोरेकेन्द्रियग्राह्यता, यथा 'गौः' इत्यत्र जातिर्व्यक्तिश्च चक्षुर्ग्राह्येति। नात्र विशेषणज्ञानपूर्वकत्वं विशिष्टज्ञानेऽपेक्षत इति नायं सार्वत्रिको नियमो विशिष्टज्ञानं विशेषणज्ञानपूर्वकमिति।

वैयाकरणनये नैयायिकनये च विशिष्टबुद्धिं प्रति निर्विकल्पकज्ञानस्य कारणत्वं सममेव। विशेष्यविषयकस्यापि निर्विकल्पकज्ञानस्य कारणत्वमिति वैयाकरणनिकाये विशेषः। किञ्च, वैयाकरणनैयायिकयोः सिद्धान्ते क्वापि शाब्दज्ञानस्यापरोक्षत्वं नास्ति, वेदान्तिनय एव यत्र शाब्दस्थले तत्तदिन्द्रिययोग्यवर्तमानाबाधितविषयावच्छिन्नचैतन्यस्यान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्य चैकदेशस्थत्वं तत्रापरोक्षत्वम्। अन्यत्र शाब्दज्ञानमपि परोक्षमेव। "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति योगोक्तविकल्पस्य नात्र विवेकः, किन्तु निर्विकल्पघटकविकल्पस्यैव प्रकृतत्वात् तस्यैवात्र विचारपथप्रदर्शनमित्यलं पल्लवितेन॥

***

# शब्दब्रह्मतत्त्वम्

श्रीपरमानन्दशास्त्री, पाटलिपुत्रम् ।

शब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।
इत्यभिध्याय शब्दाख्यब्रह्मतत्त्वं विविच्यते ॥
अनिरुद्धपदाम्भोजमधुपायितचेतसा ।
आचार्यपरमानन्दशास्त्रिणा नातिविस्तरम् ॥

"आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुतेर्ब्रह्मात्मकस्यात्मनो निरवशेषेण श्रवण-मनन-निदिध्यासनं सर्वस्यैव सचेतसो विधेयकोटाववस्थितमिति सर्वजनीनम् । "यदेतदक्षरमेतदमृतमयं तत् प्रविश्य देवा अमृता अभया भवन्ति" इत्यक्षरब्रह्मलोकप्रवेशहेतुकममृतत्वमभयत्वं च फलं श्रुतावेव प्रकटीकृतम् । अतश्च मुमुक्षुभिर्विद्वद्वरेण्यैरनेकविधः पन्थाः प्रकटीकृतः, यत्र च वैयाकरणानां शब्दब्रह्मवादोऽप्यस्त्येकः प्रसिद्धः पन्थाः ।

वागेव विश्वा भुवनानि जज्ञे वाच इत् सर्वममृतं यच्च मर्त्यम् ।
अथेद् वाग् बुभुजे वागुवाच पुरुत्रा वाचो न परं यच्च नाह ॥

इति श्रुतौ वाचः सर्वोपादानत्वम्, सर्वभोक्तृत्वम्, सर्ववक्तृत्वं च सुस्पष्टमुक्तम् । तदनुसार्येव च वैयाकरणकुलगुरोर्भर्तृहरेरिदं वचः, यथा—

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः ।
छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्त्तत ॥

( वाक्यपदीये, १।१२० )

व्याख्याता चेयं कारिका स्वयं तेनैवेत्थम्—

"यथैवान्ये कार्यकारणभावमाचक्षाणाः कार्येषु कारणधर्मसमन्वयं दृष्ट्वा व्यावृत्तभेदं सूक्ष्ममसंवेद्यं सर्वविकारशक्त्यनुगतं प्रत्यस्तमितव्यक्तिशक्तिरूपमणुग्रामं प्रधानशक्तिसमूहं विद्याकारणं जन्मपरिणामासंसर्गं विवर्त्तं व्यवस्थापयन्ति, तथैवाम्नाये संहृतभोग्यभोक्तृशक्तेर्वागात्मनो बहुधा

कारणत्वमाम्नातम्—"स तु एवैष ऋङ्मयो यजुर्मयः साममयो वैराजः पुरुषः। पुरुषो वै लोकः। पुरुषो यज्ञः। तस्यैता लोकम्पृणास्तिस्र आहुतयस्ता एव त्र्यालिखिता वै त्रयो लोकाः" इति।

अत्र ब्रह्माण्डशरीरात्मकस्य वैराजस्य पुरुषस्य ऋगादिमयत्वकथनेन शब्दकारणकत्वमुक्तम्। शब्दब्रह्मपूर्विकायाः सृष्टेर्मनुनापि—"वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे" इति स्पष्टमभिधानात्। बादरायणेनापि भगवता—"शब्द इति चेन्नातः प्रभवात्" इति सूत्रेण वेदशब्देभ्यो जगतः सृष्टत्वकथनाच्च शब्दस्य ब्रह्मात्मकत्वं सुप्रसाधितचरम्।

इन्द्राच्छन्दः प्रथमं प्रास्यदन्नं तस्मादिमे नामरूपे विषूची।
नामप्राणाच्छन्दसो रूपमुत्पन्नमेकं छन्दो बहुधा चाकशीति ॥

इति श्रुतौ वाक्तत्त्वात्मकेनेन्द्रेण जन्यत्वं महत्तत्त्वात्मकस्य छन्दसः स्पष्टमुपपादितम्। तस्मादेव च छन्दसो नामरूपयोरुद्भवस्य स्पष्टमाम्नातत्वाच्च महत्तत्त्वमेव छन्दःपदाभिप्रेतमिति सर्वथा सुवचम्।

पुराणात्मकः पुराकल्पोऽपि वाचः सर्वोपादानत्वं सर्वात्मकत्वं च—

विभज्य बहुधात्मानं स छन्दस्यः प्रजापतिः।
छन्दोमयीभिर्मात्राभिर्बहुधैव विवेश तम् ॥
साध्वी वाग् भूयसी येषु पुरुषेषु व्यवस्थिता।
अधिकं वर्तते तेषु पुण्यं रूपं प्रजापतेः ॥
प्राजापत्यं महत्तेजस्तत्पात्रैरिव संवृतम्।
शरीरभेदे विदुषां स्वां योनिमुपगच्छति ॥
यदेतन्मण्डलं भास्वद्धाम चित्रस्य राधसः।
तद्भावमभिसंभूय विद्यायां प्रविलीयते ॥

इति स्पष्टमूचिवान्।

सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत्।
ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः स्मृता ॥
वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः।
सृष्ट्याविर्भावमासाद्य मध्यमा वाक् समा मता ॥

इति काशिकाकारिके, "ईश्वर एवानादिजीवोपाध्याश्रितकर्मप्रेरितव्यापारानन्तरं नाभौ

पराख्यमायापरिणाममुपेत्य, हृदि पश्यन्त्याख्यमुपेत्य, विशुद्धचक्रे मध्यमाख्यमुपेत्य, पश्चाद् वक्त्रे वैखर्याख्यमवाप्य वेदादिरूपो भवतीत्यर्थः" इति तत्त्वविमर्शकृदाचार्य उपमन्युरपि ।

अतश्चैव वैयाकरणकुलगुरुणा भर्तृहरिणा वाक्यपदीये ब्रह्मकाण्डे—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥
एकस्य सर्वबीजस्य यस्य चेयमनेकधा ।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः ॥

इत्येकस्य शब्दात्मनो ब्रह्मणः परमस्यार्थभावेन जगद्विवर्त्तकारणत्वम्, स्वप्नविज्ञान-पुरुषवच्च भोक्तृ-भोग-भोक्तव्यरूपेणावस्थानं साधु समुल्लिखितम् । "वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते" इति पस्पशायां भगवान् पतञ्जलिरपि ।

यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
सङ्कीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ॥
तथेदममृतं ब्रह्म निर्विकारमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपं विवर्त्तते ॥
ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम् ।
विवृत्तं शब्दमात्राभ्यस्तास्वेव प्रविलीयते ॥

इत्यपि हर्युक्तेर्वाग्ब्रह्मसमर्थनप्रस्थानव्यतिकरोऽपि समुपलभ्यत एव ।

शब्दस्य चास्य द्वे रूपे स्फोटध्वनिसंज्ञके व्याकरणग्रन्थेषु सविस्तरं प्रतिपादिते वर्तते । वाचकशब्दानां च द्वौ भेदौ भर्तृहरिणैव वाक्यपदीये—

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः ।
एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते ॥

इति सुस्पष्टमुद्भावितावेव ।

शब्दानां प्रत्याय्यप्रत्यायकशक्ती च संसृष्टरूपे भवत इत्यपि—

अविभक्तो विभक्तेभ्यो जायतेऽर्थस्य वाचकः ।
शब्दस्तत्रार्थरूपात्मा संभेदमुपगच्छति ॥

इत्यभियुक्तोक्तिषु सुस्पष्टम् । तत्रापि च—

आत्मभेदस्तयोः केचिदस्तीत्याहुः पुराणगाः ।
बुद्धिभेदादभिन्नस्य भेदमेके प्रचक्षते ॥ ( वाक्यप० १।४५ )

इति भर्तृहरिणा पूर्वाचार्याणां प्रस्थानभेदोऽपि सूचितचरः ।

प्रविभज्यात्मनात्मानं सृष्ट्वा भावान् पृथग्विधान् ।
सर्वेश्वरः सर्वमयः स्वप्ने भोक्ता प्रवर्तते ॥

इति च वैयाकरणानां संक्षिप्तं शब्दब्रह्मदर्शनम् । बौद्धाः पुनः शब्दब्रह्मदर्शनं न सहन्ते, तेषां मते परिणामवादस्य विवर्त्तवादस्य वा कल्पनाया अयुक्तत्वात्,

तस्यैव नान्यथाभावो नाप्यन्यस्यैव युज्यते ।
युवा न जीर्यते यस्माद् यस्माज्जीर्णो न जीर्यते ॥
( माध्यमिकका० १३ )

इत्यादिना नागार्जुनेन सुविशदं तदपाकरणाच्च ।

न चोपादानमेवात्मा व्येति तत् समुदेति च ।
कथं हि नामोपादानमुपादाता भविष्यति ॥

इत्यादिनोपादानकारणत्वस्यापि तेनैव निराकृतत्वात् ।

अनादिवासनोद्भूतविकल्पपरिनिष्ठितः ।
शब्दार्थस्त्रिविधो धर्मो भावाभावोभयाश्रयः ॥ ( प्रमाणवा० )

इत्यादिना आचार्यधर्मकीर्त्तिना वाचो विकल्पप्रतिभास्यर्थविषयककल्पनामुखेन शब्दब्रह्मवादखण्डनम्, "न सन्ति प्रधानादयोऽनुपलब्धेः" इति दिङ्नागसूत्रसंकेतिते शब्दब्रह्मापरिग्रहेऽपि भङ्ग्याऽनुकूलतर्कप्रदर्शनमप्याचार्यस्य धर्मकीर्त्तेर्भवति । शब्दानित्यत्व-वेदापौरुषेयत्व-स्फोटनिरसनादिप्रस्तावेषु च तत्र तत्र बौद्धग्रन्थेषु शब्दब्रह्मवादव्यावर्तकानि वचनानि निबन्धविस्तरभयान्नात्र समुद्धृत्य विविच्यन्ते ।

तत्त्वसंग्रहकारेण शान्तरक्षितेन तु पञ्चविंशत्या कारिकाभिर्महताटोपेन शब्दब्रह्मवादः खण्डितः । तेन हि—

नाशोत्पादसमालीढं ब्रह्म शब्दमयं परम् ।
यत्तस्य परिणामोऽयं भावग्रामः प्रतीयते ॥ १२८ ॥

इति संचक्षते येऽपि ते वाच्या········।
प्रधानपरिणामेन समं च ब्रह्मदर्शनम्।
तद्दूषणानुसारेण बोद्धव्यमिह दूषणम् ॥ १५२ ॥

इति वदता बहुभिर्दूषणमार्गैरयं वादो दूषितः स्वग्रहे। तथा हि—

(१) जगतः शब्दमयत्वं किं शब्दपरिणामत्वनिबन्धनम्? उताहो शब्दादुत्पत्तिनिबन्धनम्? नाद्यः, परिणामत्वस्यैवानुपपत्तेः। शब्दब्रह्मणो हि स्वाभाविकशब्दरूपपरित्यागपूर्वकं नीलादिरूपप्रतिपत्तिस्वीकारेऽभ्युपगताक्षरत्वस्य हान्यापातात्। अपरित्यागपूर्वकं च तत्स्वीकारे बधिरस्यापि शब्दसंवेदनापत्तिः, नीलादिसंवेदनाव्यतिरेकात्। किञ्चैवं नीलादेरपि शब्दस्वरूपवदसंवेदनप्रसङ्गः, शब्देन सह नीलादीनामैकात्म्यात्। नान्त्योऽपि, जगतो वर्तमानत्वात्; सिसाधयिषितहेतोश्च हेतुत्वाभ्युपगमानौचित्यात्।

(२) किञ्च, परिणमच्चेदं शब्दब्रह्म प्रतिपदार्थं भिद्यते न वा? नाद्यः, ब्रह्मणोऽनेकत्वप्रसङ्गात्। नान्त्यः, सर्वेषामपि नीलादीनामेकाकारप्रतिभासापत्तेः। सर्वेषामप्येकशब्दरूपाव्यतिरेकात्।

(३) अपि च, नित्यशब्दस्वभावत्वे हि घटपटादीनामपि पदार्थानां नित्यत्वं प्राप्नोति, जगतः शब्दात्मकत्वाभ्युपगमात्। तथा च तेषां परिणामरूपता नैव सिध्येत्, भावानां शब्देन सहैव यौगपद्यतः सिद्धत्वात्। न च शक्यते तथासिद्धस्यापि परिणामात्मकता वक्तुम्, वस्तूनामक्रमत्वेन घटादीनां मृत्परिणामत्वमिव शब्दपरिणामत्वस्य साधयितुमशक्यत्वात्।

(४) जगतः शब्दकार्यत्वस्वीकारोऽपि सदोष एव, शब्दस्य नित्यत्वेनाविकारित्वात्। ततः क्रमेण घटादीनामुत्पत्तेर्वक्तुमशक्यत्वात्। सर्वेषामेवाविकलप्रतिबद्धसामर्थ्यकारणाद् युगपदेवोत्पादस्य निराकर्तुमशक्यत्वात्।

(५) एकस्वभावाच्छब्दात्मनोऽन्यान्यस्य स्वभावस्योत्पत्तिरङ्गीक्रियेत चेत्? ब्रह्मणोऽर्थरूपेण विवृतत्वं प्रतिज्ञातं न सिद्ध्येत्। अर्थान्तरोत्पादे तत्स्वभावमनाविशतोऽन्यस्य ताद्रूप्येण विवर्त्तस्य वक्तुमशक्यत्वात्। शब्दाकारानुस्यूतत्वं हेतुरपि न सुवचम्, नीलपीतादिषु शब्दरूपानुपलम्भात्। अनुपलभ्यमानस्य च तथात्वकल्पनाया अनौचित्यात्।

(६) अथाविद्योपप्लवकृतोऽयं परिणामो न तु तात्त्विक इति चेत्? उच्यते, एवं सति नीलाद्याकारव्यतिरिक्तत्वेनाप्रतिभासमानस्य ब्रह्मणोऽस्तित्वापलापप्रसङ्गात्। प्रमेयसत्ताव्यव-

स्थितेश्च प्रमाणानुगतत्वसिद्धान्तात्। स्वसंवेदनत एव तदुपलभ्यते। ज्ञानात्मरूपत्वादित्यपि न, यतो हि—शब्दात्मकं ब्रह्म न प्रत्यक्षतः सिद्धम्, तथाभूतस्य तस्याप्रतिभासनात्। नाप्यनुमानतः, कार्यलिङ्गत्वपक्षे नित्यात् कस्यचिदपि कार्यस्यानुपपत्तेः, क्रमयौगपद्याभ्यां नित्यस्यार्थक्रियाविरोधात्। स्वभावलिङ्गत्वपक्षेऽपि ब्रह्माख्यस्य धर्मिण एवासिद्धेः। अर्थक्रियासामर्थ्यविरहेऽपि वस्तूत्पादकल्पने वन्ध्यासुतस्यापि घटपटादीनामिव तात्त्विकत्वप्रसङ्गः।

( ७ ) 'विशुद्धज्ञानसन्ताना योगिनस्तथा पश्यन्ति' इत्यपि न शक्यते वक्तुम्, ज्ञाने तस्य व्यापाराभावात्। प्रसाधकं ज्ञानं हि प्रकाशात्मतया स्वसंवेदनप्रसिद्धम्। न त्वेवं शब्दात्मा सर्वत्र प्रत्ययात्मनि संवेद्यते। तस्माद् मिथ्याप्रवादोऽयं शब्दब्रह्मवाद इति हि कमलशीलपरिपोषितः शब्दब्रह्मखण्डनप्रकारो बौद्धशान्तरक्षितस्य।

वयं तु प्रतिब्रूमः—बौद्धानां शब्दब्रह्मवादखण्डनं साहसमात्रमेव, जगतः परिणामरूपत्वस्य तैरप्यङ्गीकारात्। बौद्धाचार्येण वसुबन्धुना—

आत्मधर्मोपचारो हि विविधो यः प्रवर्तते।
विज्ञानपरिणामोऽसौ परिणामः स च त्रिधा॥
विपाको मननाख्यश्च विज्ञप्तिर्विषयस्य च। [त्रिंशिका]

इति स्पष्टं तथा प्रतिपादनात्। एवञ्च यथा बौद्धानां तत्त्वैकभूतस्य विज्ञानमात्रस्य घटपटादिरूपेण दृश्यमानता—

दृश्यं न विद्यते बाह्यं चित्तं चित्रं हि दृश्यते॥ ३३॥
देहभोगप्रतिष्ठानं चित्तमात्रं वदाम्यहम्॥ ( लङ्कावतारे ३ )

इत्यादिना प्रतिपादिता तेषां प्रस्थाने सुस्थिता। एवमेव च—

अरणिस्थं यथा ज्योतिः प्रकाशान्तरकारणम्।
तद्वत् शब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक्॥४७॥
वितर्कितः पुरा बुद्ध्या क्वचिदर्थे निवेशितः।
करणेभ्यो विवृत्तेन ध्वनिना सोऽनुगृह्यते॥४८॥
नादस्य क्रमजन्मत्वाद् नापूर्वो न परश्च सः।
अक्रमः क्रमरूपेण भेदवानिव जायते॥४९॥

( वाक्यप० ब्रह्म० )

इत्यादिना हर्युक्तदिशा तत्त्वैकभूतस्य शब्दात्मनो ब्रह्मणश्च तत्तत्पदार्थरूपेण विवर्तमानता वैयाकरणेष्वपि सुस्थिता । यथा च—

विज्ञानपरिणामोऽयं विकल्पो यद् विकल्प्यते ।
तेन तन्नास्ति तेनेदं सर्वं विज्ञप्तिमात्रकम् ॥१६॥

( त्रिंशिका० )

इत्यादिना वसुबन्धूक्तदिशा बौद्धानां परमार्थसत्यस्य विज्ञानस्य यथा सांवृतिकसत्यं घटपटादिपरिणाम उक्तोऽविद्यापरिकल्पितः, तथैव विवक्षात्मविकल्परूपयाऽविद्यया परिकल्पितं जगद् यदि शब्दब्रह्मणः परिणामत्वेन परिकल्प्यते शाब्दिकैस्तत्र वृथा हाहाकारो भवति बौद्धानाम् ।

संसृज्यन्ते न भिद्यन्ते स्वतोऽर्थाः पारमार्थिकाः ।
रूपमेकमनेकं च तेषु बुद्धेरुपप्लवः ॥८॥ ( प्रमाणवा० १ )

इति धर्मकीर्तिभाषितं च यथा बौद्धैः प्रमाणत्वेन मन्यते, तथैव यदि शाब्दिका अपि—

पदे न वर्णा विद्यन्ते वाक्येष्ववयवा न च ।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥५९॥
भिन्नं दर्शनमाश्रित्य व्यवहारोऽनुगम्यते ।
तत्र यन्मुख्यमेकेषां तत्रान्येषां विपर्ययः ॥ ७५ ॥

( वाक्यप० ब्रह्म० )

इति हरिभाषितं प्रमाणमङ्गीकुर्वन्ति, न तत्र युज्यते महाभारतरचनावसरः !!

अथ चेद् भवतां तत्त्वसंग्रहोक्तदूषणानामपाकरणप्रकारविशेषजिज्ञासा, तर्हि श्रूयताम्—

( १ ) जगतः शब्दमयत्वं न तावच्छब्दपरिणामत्वनिबन्धनम् , न वा शब्दादुत्पत्ति-निबन्धनम् । अपि तु शब्दविवर्तत्वनिबन्धनम् ।

एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात् ।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेन विवर्त्तते ॥ ( वाक्यप० )

इति हरिणा विवर्तवादस्यैव स्पष्टमुक्तत्वात्। अतात्त्विकान्यथाभावत्वस्य चात्र विवर्तपदार्थत्वात्।

परिणामवादपक्षस्वीकारेऽपि "अरणिस्थम्" (वाक्यप०) इत्यादिपूर्वोक्तहरिकारिकोक्तदिशा बुद्धौ प्रातिस्विकरूपेण प्रतिभासमानत्वरूपपरिणामत्वस्वीकारेण न स्वीकृताक्षरत्वहान्यापातः। विज्ञानमात्रस्य परमार्थसत्यतावादिनो बौद्धस्य घटादेः परमार्थसत्तापत्तिनिराकरणप्रयास इव शाब्दिकस्यापि शब्दस्याक्षरत्वशून्यापत्तिनिराकरणप्रयासोऽपि न गौरवाय। बधिरस्य शब्दसंवेदनप्रसङ्गश्च दूषणं नापादनीयम्, कार्यद्रव्यसंवेदनं प्रति विषयेन्द्रियमनःसन्निकर्षस्य कारणत्वाभ्युपगमात्। नीलादीनां शब्देन सहैकात्म्यमुद्भाव्य च तेषामप्यसंवेदनप्रसङ्गोऽपि नोद्भाव्यः। भेदसहिष्णोरभेदस्यैव तादात्म्यत्वेन शाब्दिकैरङ्गीकृतत्वात्। शब्दादुत्पत्तिनिबन्धनं शब्दमयत्वेनाक्षिप्य दत्तं दूषणं च स्वयमेवापास्तम्, शाब्दिकैरस्माभिर्विवर्तवादस्याङ्गीकृतत्वात्।

(२) नित्यस्य शब्दब्रह्मणो वागात्मनः प्रतिबिम्बग्राही कार्यो विवर्त्तविषयः शब्दः स्वीक्रियते शाब्दिकैः। अतश्च नित्यः शब्दो ब्रह्मात्मक एकः, कार्यश्च नानेति शाब्दिकसिद्धान्तः। तथा च एकस्यैव चन्द्रमसो नानास्वपि स्थलेषु प्रतिबिम्बनं न चन्द्रमसो नानात्वप्रयोजकम्। एवमेकस्य नित्यस्य शब्दब्रह्मणो नानाबुद्धयुपारूढत्वहेतुना प्रतिबिम्बरूपेण नानाकारेण विवर्तनमपि न दोषाय। भेदसहिष्णोरभेदस्य शाब्दिकैरङ्गीकारेण नित्यकार्यशब्दयोरौपाधिकभिन्नत्वस्वीकाराच्च कार्यशब्दानां नानात्वेऽपि न नित्यस्य नानात्वप्रसङ्गो न वा नीलपीतादीनामेकाकारत्वप्रतिभासनत्वप्रसङ्गोऽपि, बुद्धयुपारूढस्य नीलपीतादेरेकशब्दव्यतिरिक्तत्वेनैवोपलब्धेः।

(३) नित्यशब्दस्वभावत्वपक्षे जगतः शब्दात्मकत्वमालम्ब्य घटपटादीनां पदार्थानामपि नित्यत्वं नाशङ्कनीयम्, शाब्दिकैर्जगतः शब्दविवर्तत्वस्वीकारात्, अतात्त्विकान्यथाभावस्य विवर्तपदार्थत्वाङ्गीकाराच्च। अपूर्वापराभ्यां युगपद्व्यवस्थिताभ्यां सत्त्वासत्त्वाभ्यामेक आत्मा शब्दब्रह्माख्यो विकल्पते, सदसद्रूपेणावतिष्ठते। तदेव चासत्त्वरूपमनतिक्रामन् गवादिरूपेण विवर्तरूपत्वेन प्रत्यवभासमानं सद् व्यवहारनिबन्धनमिति हि शाब्दिकानां सिद्धान्तः। एवञ्च व्यवहारनिबन्धने प्रतिभासे समुपलभ्यमानस्य घटपटादेरनित्यता सुवचा, जगतो विवर्तरूपत्वेनासत्त्वरूपत्वाभ्युपगमात्। भावानां तत्त्वतो यौगपद्येन शब्देन सहैव सिद्धत्वेऽपि बुद्ध्युपारूढानामेव तेषां व्यवहारप्रयोजकत्वाम्नानान्न तेषां विवर्तरूपताहानिः। वस्तूनामक्रमत्वं तात्त्विकत्वं

च शाब्दिकानां सम्मतम्। येन घटादीनां मृत्परिणामत्वमिव शब्दपरिणामत्वं नैव साध्यतां गच्छेत्, अपि तु क्रमजन्मनां वस्तूनां बुद्धिपरिकल्पितानामेवाक्रमत्वम्।

नामैवेदं रूपत्वेन वव्रते रूपं चेदं नामभावेऽवतस्थे।
एके तदेकमविभक्तं विभेजुः प्रागिवान्ये भेदरूपं वदन्ति॥

इत्यादिना वाचो गवादिरूपेण विवर्त्यमानत्वं व्यवहारकाले, गवादीनां च वाग्रूपेण प्रलीनतया पारमार्थिककाले व्यवस्थीयमानत्वं च सुव्यक्ततरमेव।

(४) एतेन जगतः शब्दकार्यत्वमुद्भाव्य दूषणदानं शान्तरक्षितस्य दूरापास्तम्, जगतो विवर्तात्मकार्यत्वस्य शाब्दिकैरङ्गीकारात्।

(५) सर्वव्यवहारयोनेः संहृतक्रमस्य सर्वेषामन्तःसन्निवेशिनो वागात्मनो नित्यस्य ब्रह्मणः प्रतिबिम्बोपग्राहित्वस्य कार्यं शब्दात्मनि वैयाकरणैरभ्युपगमात्, अर्थरूपे च ब्रह्मणो विवर्ते स्वभावान्तरोत्पादमुद्भाव्य दूषणदानमपि न सम्यक्, सर्वव्यवहारयोनौ शाब्दे ब्रह्मणि सर्वव-स्वभावसत्ताभ्युपगमात्। शब्दाकारानुस्यूतत्वेन चैकस्वभावतापि तस्य—

भेदानुकारो ज्ञानस्य वाचश्चोपप्लवो ध्रुवः।
क्रमोपसृष्टरूपा वाग् ज्ञानं ज्ञेयव्यपाश्रयम्॥८७॥

इति हर्युक्तौ क्रमोपसृष्टरूपत्वस्य शब्दाकारानुस्यूतरूपपरत्वात्,

ज्ञेयेन न विना ज्ञानं व्यवहारेऽवतिष्ठते।
नालब्धक्रमया वाचा कश्चिदर्थोऽभिधीयते॥

इत्यभियुक्तोक्त्यापि तथा सम्मेलनात्। नीलपीतादिषु शब्दरूपानुपलम्भेनैतद्धेतुदूषणमपि न सम्यक्, योगिदृष्टौ सर्वेषां सर्वार्थवाचकतास्वीकारमुखेन शाब्दिकैर्योगिभिर्नीलपीतादिष्वपि शब्दरूपोपलब्धिस्वीकारात्। शब्दभावनाबीजानां तदानीं सूक्ष्मवृत्तिप्रतिलम्भेनासंलक्ष्यत्वं च न विपरीतार्थसाधकम्।

(६) अथाविद्योपप्लवकृतं परिणामत्वमालम्ब्य नीलाद्याकारव्यतिरिक्तत्वेनाप्रतिभास-मानत्वमुद्भाव्य ब्रह्मणोऽस्तित्वाभावोपपादनमपि न विचारसहम्, मयूराण्डरसवत् प्रतिलीनस्य शब्दब्रह्मणो ज्ञानिद्वारा प्रतिभासस्य शाब्दिकैरङ्गीकृतत्वात्।

आण्डभावमिवापन्नो यः श्रोतुः शब्दसंज्ञकः।
वृत्तिस्तस्य क्रियारूपा भागशो भजते क्रमम्॥५२॥ (वाक्य० ब्रह्म०)

इत्यादिना भर्तृहरिणैव शब्दद्वारकार्थानतिक्रमस्य स्पष्टमुक्तत्वात्। शब्दब्रह्मणश्चोपक्रमः शब्दविवर्तप्रक्रियाप्रदर्शनेनैव प्रपञ्चितो वैयाकरणैः। वन्ध्यासुतादिपदानामपि विकल्परूपार्थक्रियासमर्थता—"अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इत्यादिनोक्तैव।

(७) विशुद्धज्ञानसन्ताना योगिनस्तु शब्दाख्यं परमं ब्रह्म तथैव पश्यन्ति यथा बौद्धा विपश्चितो ग्राह्यग्राहकाकारविनिर्मुक्तमद्वयं विज्ञानम्। एवञ्च शब्दब्रह्मवादोऽयं बौद्धानां विज्ञानप्रवादतोऽधिकमेव समीचीन इति हि शाब्दिकसम्प्रदायानुगतः साधीयान् पन्थाः। तस्मात्—

> वागेवार्थं पश्यति वाग् ब्रवीति वागेवार्थं निहितं सन्तनोति।
> वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते॥

इति हि ममापि मतिः। ॐ नमो वाग्ब्रह्मणे॥

*****

# व्याकरणस्य स्वतन्त्रदर्शनत्वालोचनम्

श्रीकालिकाप्रसादशुक्लः, अनुसन्धानसंस्थानम्, वा० सं० वि० वि० वाराणसी ।

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" ( बृह० २-४-५ ), "य आत्माऽपहतपाप्मा, सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" ( छान्दो० ८-७-१ ), "आत्मेत्येवोपासीत" ( बृ० १-४-७ ), "आत्मानमेव लोकमुपासीत" ( बृ० १-४-१५ ), "ब्रह्म वेद ब्रह्मैव भवति" ( मुण्ड० ३-२-९ ) इत्यादिश्रुतिभिः प्रत्यगात्मसाक्षात्कारस्यैव परमपुरुषार्थमोक्षसाधनत्वं समर्थितम्। तादृशसाक्षात्कारसाधकानि वेदान्तादीन्येव शास्त्राणि दर्शनशास्त्रपदव्यपदेश्यानि भवितुमर्हन्ति, न तु पदसाधुत्वासाधुत्वसाधनेन शब्दसाक्षात्कारसाधकं शब्दशास्त्रं दर्शनशास्त्रपदव्यपदेश्यतामादधीत ।

अत्रेदं तात्पर्यम्—यद्यप्याकरग्रन्थेषु दर्शनशब्दप्रवृत्तिनिमित्तमधिकृत्य शास्त्रीयपद्धत्या न क्वचनापि कश्चनापि विचारलेशो निभाल्यते, तथापि येषु शास्त्रपदवाच्येषु किं वस्तु ? क आत्मा ? किं तत्स्वरूपम् ? कानि च तत्साधकानि प्रमाणानि ? को मोक्षः ? इत्यादयोऽध्यात्मविषयाः प्राधान्येन प्रतिपादिता भवेयुः । प्रसङ्गोपात्तानां लौकिकानामपि विषयाणां विवेचनतात्पर्यं यदि तत्रैव पर्यवस्येत्, तान्येव दर्शनशास्त्रपदव्यपदेश्यतां समुपयान्तीति पण्डितमण्डलीषु प्रवहन्ती काचन परम्परा पर्यालोच्यते । नैवम्भूतं व्याकरणशास्त्रम्। केवलमत्र पदसाधुत्वासाधुत्वाख्यानमेव विजयतेतमामिति कथङ्कारमस्य स्वतन्त्रदर्शनशास्त्रत्वमिति संशीतिः कदाचिद् विदुषामपि मानसे मनाक् पदं निदध्यादित्यत्र व्याकरणाकरग्रन्थेषु निगूढानि, प्रस्थानग्रन्थेषु प्रपञ्चितानि च दर्शनतत्त्वानि संक्षिप्य संगृह्यन्ते ।

तपःस्वाध्यायसततनिरतैर्विगतकल्मषैः समाधिसमाहितस्वान्तैर्ऋषिभिः स्वेन स्वेनार्षेण चक्षुषा स्वे स्वे निर्विकल्पे समाधौ सम्प्रत्युपलभ्यमानानां चेतनाचेतनभेदेन द्वैविध्यमापन्नानां पदार्थानां सर्वग्राह्यग्राहकाकाररहितमपरिच्छिन्नं सर्वतः संहृतक्रमं यन्मूलतत्त्वं दृष्टमनुसंहितं च, तदेव च तत्तन्मतानुयायिनां सर्वेषां प्राणिनां परमपुरुषार्थसाधनतयाभीप्सिततमम्, तदेव च दर्शनम्। तत्प्रतिपादकानि शास्त्राण्यपि दर्शनाभिधानानि, 'शिष्यतेऽनुशिष्यतेऽपूर्वोऽर्थो बोध्यतेऽनेन', 'दृश्यते बोध्यतेऽपूर्वोऽर्थोऽनेन' इति विग्रहाभ्यां दर्शनशास्त्रपदयोः पर्यायवाचकत्वात् ।

एवञ्च दार्शनिकान्तरैरिव शाब्दिकशार्दूलैरपि शब्दतत्त्वं मूलतत्त्वरूपेण समाधौ साक्षात्कृतम्, तस्यैव च प्रत्यगात्मस्वरूपत्वेन व्याकरणस्याप्यध्यात्मज्ञानोपायभूतत्वाद् दर्शनशास्त्रत्वे न विप्रतिपद्येरन् मात्सर्यविधुरा विद्वांसः।

अत्रेदमाकूतम्—"सदेव सोमेदमग्र आसीदेकमेवाद्वितीतम्", "ब्रह्मैवेदं सर्वम्", "आत्मैवेदं सर्वम्" इत्यादिभिः श्रुतिभिर्जगत्कारणस्य सत्यत्वमेकत्वं ब्रह्मत्वमात्मत्वञ्च यथा प्रतिपाद्यते; तथा "वागेवार्थं पश्यति वाग् ब्रवीति वागेवार्थं निहितं सन्तनोति। वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते॥", "ओमित्येतदक्षरमिदं सर्वम्", "ओमिति ब्रह्म" इत्यादिश्रुतिभिः शब्दस्वरूपतापि प्रतिपाद्यत इति शब्दब्रह्मैव जगत्कारणम्। अस्य स्वप्रकाशकत्वमपि "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुत्या प्रतिपाद्यते। हेलाराजोऽपि (?)—"इह त्रीणि ज्योतींषि त्रयः प्रकाशाः स्वरूपपररूपयोरवद्योतकाः। तद्यथा-योऽयं जातवेदाः,यश्च पुरुषेष्वान्तरः प्रकाशः, यश्च प्रकाशाप्रकाशयोः प्रकाशयिता; शब्दाख्यः प्रकाशस्तत्रैतत् सर्वमुपनिबद्धं यावत् स्थास्नु चरिष्णु च" अभियुक्तोक्त्याऽनया शब्दतत्त्वस्य स्वप्रकाशकत्वं समार्तथत।

ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानामेते पृथगिव स्थिते॥ (वा० ब्र० ५५)

इति प्रतिपादयन् हरिरप्यत्र परमानुकूलतां भजते। यथा तेजसः प्रदीपादेः, ग्राह्यत्वं ज्ञानविषयत्वम्, ग्राहकत्वं घटादिविषयकज्ञानजनकत्वं चेति द्वे ग्राह्यत्वग्राहकत्वरूपे शक्ती स्तः; तथैव सर्वशब्दानामेते ग्राह्यत्वग्राहकत्वशक्ती, शक्तिशक्तिमतोरभेदाद् नित्यमात्मभूते अपि भिन्ने इव स्थिते प्रतिभासमाने स्त इत्यर्थः। शब्दः स्वं प्रकाशयन्नेवार्थं प्रकाशयतीति कारिकाया निर्गलितोऽर्थः।

एतदेव शब्दतत्त्वं केनोपनिषदा—"अन्यदेव तद्विदितादथो अविदितादधि" (केनोप० १-३) इत्यनेनात्मनो ब्रह्मत्वे प्रतिपादिते "कथं त्वात्मा ब्रह्म? आत्मा नामाधिकृतः कर्मण्युपासने च। संसारी कर्मोपासनं वा साधनमनुष्ठाय ब्रह्मादिदेवान् स्वर्गं वा आसादयितुमिच्छति। तस्मादन्य उपास्यो विष्णुरीश्वर इन्द्रश्च प्राणो वा ब्रह्म भवितुमर्हति, न त्वात्मा, लोकप्रत्ययविरोधात्। तार्किका अपि ईश्वरादन्यमात्मानमाचक्षते। मीमांसकाश्च "अमुं यजामुं यज" इत्यन्या एव

देवता उपासते। तस्माद्युक्तं यद्विदितमुपास्यं तद् ब्रह्म भवेत्, ततोऽन्य उपासक इत्यस्या विप्रतिपत्तेर्विपातनाय सिद्धान्तितया यच्चैतन्यमात्रसत्ताकमक्रमं शब्दतत्त्वं वाचा सक्रमया वर्णपद-वाक्यरूपया नाभ्युद्यते, येन चाक्रमेण शब्दतत्त्वेन सक्रमा वागभ्युद्यते तद् ब्रह्म। इदं यदनात्म-भूतमुपाधिभेदविशिष्टमीश्वराद्युपास्यते तन्न ब्रह्मेति विद्धि" इत्यर्थिकया ."यद्वाचाऽनभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥" (केनोपनिषद् १-४) अनया श्रुत्या ब्रह्मपदेन प्रतिपादितम्।

"यः स्फोटम् = स्फोटाभिव्यञ्जकं ध्वनिं श्रृणोति, सुषुप्तौ इन्द्रियगणे विलीनेऽपि शून्यम् = अज्ञानं पश्यतीति शून्यदृक्, सुप्तोत्थितस्य 'न किञ्चिदवेदिषम्' इति स्मरणं तदानी-मज्ञानानुभवं साधयति; येनाक्रमेण प्रणवेन वाग् व्यज्यते; यस्य चात्मनः सकाशाद् हृदयाकाशे प्रत्यक्षम्; स परमात्मा" इत्यर्थकेन—

श्रृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृग्।
येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः॥

अनेन भागवतेनापि परमात्मपदेन तदेव वस्तु समर्थितम्।

भगवती गीताऽपि—"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" (१८-६१) इत्यनेन ईश्वरपदेन तदेव तत्त्वं प्रतिपादयति। तथा चोक्तं नागेशभट्टेन—"चतुर्विधा हि वागस्ति—परा, पश्यन्ती, मध्यमा, वैखरी च। तत्र मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा वागुच्यते। नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता (हृदयदेशे शब्दब्रह्मरूपा) मनोगोचरीभूता पश्यन्ती वागुच्यते। एतद्द्वयं (परारूपं पश्यन्ती-रूपम्) वाग्ब्रह्म योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते। ततो हृदय-पर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते" (परमल० मं० स्फोटविचारः, पृ० ६८-६९) इति। एवञ्च व्यासनागेशयोरैक्यं स्पष्टमेव।

सर्वग्राह्यग्राहकाकारवर्जिता अपरिच्छिन्ना सर्वतः संहृतक्रमा ब्रह्मापरपर्याया पश्यन्ती वाग् अविद्यालक्षणया अन्तःपश्यदवस्थया भोक्तृतारूपया विशिष्टं ज्ञेयरूपशून्यं चैतन्यमात्रं जीव इत्यभिधीयते। अनुमोदितश्चायमर्थो भागवतेन—

स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥
( ११-१२-१७ )

"स एषः = अपरोक्षः, जीवयतीति जीवः = परमेश्वरः, अपरोक्षत्वे हेतुः—विवरेषु = आधारादिचक्रेषु प्रसूतिरिव प्रसूतिरभिव्यक्तिर्यस्य सः, तामेवाभिव्यक्तिमाह—घोषेणेति । घोषेण पराख्येन नादवता प्राणेन सह, गुहामाधारचक्रं प्रविष्टः सन्, मनोमयं सूक्ष्मं रूपं पश्यन्त्याख्यं मध्यमाख्यं च मणिपूरचक्रे विशुद्धिचक्रे च, उपेत्य = प्राप्य, वक्त्रे मात्रा = ह्रस्वादिः, स्वरः = उदात्तादिः, वर्णः = अकारादिरित्येवं वैखर्याख्यः, स्थविष्ठः = अतिस्थूलो नाना वेदशाखात्मको भवति । तथा च श्रुतिः—

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

[ निगमरूपोऽयं मन्त्रोऽनेकधा मुनिभिराचार्यैश्च व्याख्यायते । नामाख्यातोपसर्गनिपातेति भेदचतुष्टयमुपक्रम्य महाभाष्ये व्याख्यातः, पशुषु वाच एको भागः, पक्षिष्वेकः, सरीसृपेष्वेकः, तुरीयस्तु मनुष्येष्वित्यपि क्वचिद् व्याख्यायते । परं परापश्यन्तीत्यादिभेदचतुष्टयानुवादेन तु समनुगतार्थमिदं सुस्पष्टतया भवति 'तुरीयं वाचो मनुष्या वदन्ति' इति । एवञ्च सम्मुग्धज्ञानरूपया पश्यन्त्या स्फुटज्ञानरूपया च मध्यमया वैखरी वागियमर्थावबोधक्षमा भवतीति न कोऽप्यत्र विवादावसरः । ] अभियुक्तश्लोकश्च—

या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टि-
र्वर्णानन्तः प्रकटकरणैः प्राणसङ्गात् प्रसूते ।
तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां
वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥ इति ।"

इति श्रीधरस्वामी ।

पश्यन्त्येव च वक्त्रकुहरं प्राप्ता कण्ठादिस्थानभागेषु विभक्ताकारादिवर्णरूपा वैखरी वागुच्यते । ततः सैव बाह्यार्थवासनयाऽविद्यारूपया क्रमेण घटपटाद्याकारैर्विवृता चक्षुरादिना गृह्यते । "तिस्र एव वाचः" इति मतेनेदम्, "परा वाग् चतुर्थी" इति मते तु परैव वाग् ब्रह्मरूपेति विवेकः ।

अत्रेदमाकूतम्—कार्येषु कारणधर्मसमन्वयदर्शनाद् वैशेषिकैर्घटादिकार्यस्य पृथिवीत्वेन, तत्कारणस्य परमाणोः पृथिवीत्वम्, सांख्यैश्च विकारग्रामेषु सुखादिसमन्वयदर्शनात् तत्कारणस्य प्रधानस्य सुखादिरूपत्वं यथा आस्थीयते; तथैव घटादिषु शब्दरूपानुगमात् तत्कारणस्यापि शब्दरूपत्वं शाब्दिकैः स्वीक्रियते। जात्यादीनां मिथो विशेष्यविशेषणभावानवगाहि जात्यादिस्वरूपावगाहि 'घटघटत्वे' इत्येवंरूपं निर्विकल्पकम्; 'गौः, शुक्लः, चलः, डित्थः', इत्यादिविशेष्यविशेषणभावावगाहि सविकल्पकं वा शब्दानुविद्धमेवेति सर्वेऽर्थाः सर्वथा सर्वदा सर्वत्र नामधेयेनान्विता इति नास्ति सोऽर्थो यः कथञ्चित् कदाचित् क्वचिन्नामधेयेन वियुज्येतेति शब्दार्थयोस्तादात्म्यमभ्युपेयम्। अत एव अर्थाः प्रतीयमाना नामधेयैरुपेताः स्वसामानाधिकरण्येनावगम्यन्ते गौरित्यर्थः, अश्व इत्यर्थ इति।

एवञ्च निर्विकल्पकं सविकल्पकं वा ज्ञानं 'गौः, शुक्लः, चलः, डित्थः' इति शब्दविशिष्टमेवार्थमवबोधयति। शब्दाख्यविशेषणानुरक्तस्य तस्य विशेष्यस्य स्वरूपं पृष्टस्त्वं शब्देनैव दर्शयसि, शब्दापरित्यागलब्धप्रकाशस्वरूपया वाऽनुभूत्याऽनुभवसीति सोऽपि विशेष्यः शब्दरूप एवेति जानीहि। शब्द एवार्थोपारूढः प्रतिभातीति व्यवतिष्ठते। अथ च यदुपारूढः शब्दः प्रकाशते, तस्य पृथक् प्रदर्शयितुमनुभवितुं चाशक्यत्वाच्छब्द एव तथा प्रतिभाति। यथा चेन्द्रियजज्ञानेषु प्रक्रमस्तथा शाब्देष्वपि प्रत्ययेषु शब्दविशिष्टो वार्थः शब्दारूढो वार्थः प्रतिभातीति शब्दविवर्त एवायमर्थो नान्यः कश्चित्। अतश्च शब्दब्रह्मेदमेकमविद्योपाधिदर्शितविचित्रभेदमविद्योपरमे यथावस्थितरूपं प्रकाशत इति सिद्धम्। तदुक्तं हरिणा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥

(वा० प० १, १)

श्रुतिश्चाप्यमुमर्थमनुमोदते—

वागेव विश्वा भुवनानि जज्ञे नामैवेदं रूपत्वेन वव्रृते।

(वा० प० १२१ टीका)

शिवदृष्टावपि शब्दविवर्तवादः शाब्दिकसिद्धान्तत्वेनानूदितः—

इत्याहुस्ते परं ब्रह्म यदनादि तथाक्षयम्। तदक्षरं शब्दरूपं सा पश्यन्ती परा हि वाक्॥
स एवात्मा सर्वदेहव्यापकत्वेन वर्तते। अन्तःपश्यदवस्थैव चिद्रूपत्वमरूपकम्॥

तावद् यावत् परा काष्ठा यावत् पश्यन्त्यनन्तकम् । अक्षादिवृत्तिभिर्हीनं देशकालादिशून्यकम् ॥
सर्वतः क्रमसंहारमात्रमाकारवर्जितम् । ब्रह्मतत्त्वं परा काष्ठा परमार्थस्तदेव सः ॥
आस्ते विज्ञानरूपत्वे स शब्दोऽर्थविवक्षया । मध्यमा कथ्यते सैव विन्दुनादमरुत्क्रमात् ॥
संप्राप्ता वक्त्रकुहरं कण्ठादिस्थानभागशः । वैखरी कथ्यते सैव बहिर्वासनया क्रमात् ॥
घटादिरूपैर्व्यावृत्ता गृह्यते चक्षुरादिना ।

यद्यपि—

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः ।
छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत ॥
( वा० ब्र० १२० )

इत्यत्र संसारोऽयं शब्दब्रह्मणः परिणामः प्रतिपादितः, अत्र तु विवर्तः प्रतिपाद्यते । अनयोश्च भूयान् भेदः । उपादानसमसत्ताककार्यापत्तिः परिणामः, यथा दुग्धस्य दधिभवनम्, उभयोरपि व्यावहारिकसत्त्वात् । उपादानविषमसत्ताककार्यापत्तिर्विवर्तः, यथा शुक्तिकाया रजतभवनम्, शुक्तिकाया व्यावहारिकसत्त्वाद्रजतस्य च प्रातिभासिकसत्त्वात् ; तथापि 'शब्दस्य परिणामोऽयम्' इत्युपक्रम्य 'विश्वं व्यवर्तत' इत्युपसंहारात् परिणामविवर्तयोः पर्यायत्वेन वाक्यपदीये प्रयोगो दृश्यते । शान्तरक्षितेनापि 'अनादिनिधनम्' इति कारिकाम्—"नाशोत्पादासमालीढं ब्रह्म शब्दमयं च तत् । यत्तस्य परिणामोऽयं भावग्रामः प्रतीयते ॥" ( तत्त्वसंग्रहः, १२८ कारिका ) इत्यनेनार्थतोऽनुवदता विवर्तपदमपहाय परिणामपदं प्रयुक्तम् । भवभूतिना च जलविकारे तरङ्गादौ—

"पृथक् पृथगिवाश्रयते विवर्तान्
आवर्तबुद्बुदतरङ्गमयान् विकारान् ॥"

इत्यनेन विवर्तपदं प्रयुक्तम् । एवञ्च कतरस्मिन् वाक्यपदीयकारस्य तात्पर्यमिति निर्धारयितुं यद्यपि न शक्यते, तथापि हेलाराजादिव्याख्यानेन शब्दब्रह्मविवर्तवाद एव तात्पर्यमध्यवसातुं शक्यते । "इह त्वविसंवादात् प्रमाणं सदर्थातादात्म्यं शब्दस्य साधयत्येव" इति तात्पर्यटीका-दर्शनाद् न्यायमञ्जरीदर्शनाच्च शब्दपरिणामवादोऽपि केषाञ्चिद् वैयाकरणानामभिमत आसीत् । यतो हि वैयाकरणमतप्रत्याख्यानाय तयोः प्रवृत्तिः ।

शब्दतत्त्वाख्यं ब्रह्म प्रथमं स्वलिङ्गं त्रिमात्रमोङ्कारं ततोऽक्षरसमाम्नायं ततश्चतुरो वेदान् विरच्य्य सर्वं जगद् व्यरीरचत् । उक्तञ्च—

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥ ( भा० शा० पृ० २५३ )

शब्दतत्त्वाख्यं ब्रह्म च सूक्ष्मप्रणवरूपं परब्रह्मपदेन त्रिमात्रमोङ्कारं चापरब्रह्मपदेन शब्दब्रह्मपदेन च व्यपदिशन्ति पुराविदः । तथा च श्रुतिः—

एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः ।
तस्माद् विद्वानेतेनैवायतनेनैकतरमन्वेति ॥

( प्रश्नोप० ५-२ )

एतेनायतनेन = परब्रह्मप्राप्तिसाधनेन ओङ्कारेण एकतरम् = परब्रह्म अनुगच्छति । नेदिष्ठं ह्यालम्बनं परब्रह्मणो यदोङ्कार इति फलितोऽर्थः । अत एव—

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च तत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

इति स्मृतिरपि सङ्गच्छते । शाब्दिकैस्तु परं ब्रह्मैव शब्दब्रह्मपदेनोच्यते । एतच्चौपनिषद-ममृतं शब्दब्रह्म शाब्दिकः समश्नुते । उक्तं च भगवता भाष्यकारेण—"एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति" ( पस्पश० १ ) इति । तथा हि—व्यवस्थितसाधुत्वेन रूपेण शब्दतत्त्वे संस्क्रियमाणेऽपभ्रंशरूपप्रतिबन्धकापगमे धर्मविशेष आविर्भवति, ततः शब्दब्रह्मतादात्म्योपगमरूपा ब्रह्मणः प्राप्तिर्भवतीति ।

तथा चोक्तं हरिणा—

तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते ॥

( वाक्य० ब्र० १३२ )

"इह द्वौ शब्दात्मानौ कार्यो नित्यश्च । तत्रान्त्यः सर्वेश्वरः सर्वशक्तिर्महान् शब्द-वृषभः, तस्मिन् खलु वाग्योगवित् शास्त्रजशब्दज्ञानपूर्वकं प्रयोगेण क्षीणपापः पुरुषो विच्छिन्ना-हङ्कारग्रन्थीन् अत्यन्तं संसृज्यत इति तदर्थः" इति तद्व्याख्यातार इति नागेशः ।

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश ॥

अस्य मन्त्रस्य व्याकरणस्वरूपपरव्याख्यानावसरे भगवता भाष्यकारेण "महता देवेन नः साम्यं स्यादित्यध्येयं व्याकरणम्" इत्यनेन ब्रह्मतादात्म्यप्राप्तिरेव व्याकरणाध्ययनस्य प्रयोजनं प्रतिपादितम्। अत्र नागेशः—"महान् परब्रह्मरूपः, देवोऽन्तर्यामिरूपः शब्दो मर्त्यैष्वाविष्ट इत्यर्थः" इति। अत्र साम्यमभेदः, शाब्दिकनये "नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः" ( परि० शे० ७५ ) इत्यत्रान्यसदृशेत्युक्त्या सादृश्यस्य भेदाघटितत्वसूचनात्। साम्यं सायुज्यमिति नागेशः। तदुक्तं हरिणा—

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ॥
( वा० १३१ )

नाकमिष्टसुखं यान्ति चतुर्भिर्वाडवै रथैः ।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः ॥
( महाभा० ३-१-४८ )

'चत्वारि' इत्यादिमन्त्रः कल्पवृक्षवत् तदाश्रितान् सर्वानुपकरोति। अत एव गीतावत् तत्तत्संप्रदायाचार्यैस्तत्तदनुकूलतया व्याख्यातः। भगवान् भाष्यकारस्तत्रेत्थं व्याख्यातवान्—"चत्वारि शृङ्गाणि = चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च; त्रयो अस्य पादाः = त्रयः काला भूतभविष्यद्वर्तमानाः, द्वे शीर्षे = द्वौ शब्दात्मानौ नित्यः कार्यश्च, सप्तहस्तासो अस्य = सप्त विभक्तयः, त्रिधा बद्धः = त्रिषु स्थानेषु बद्धः, उरसि कण्ठे शिरसीति, वृषभो वर्षणात्, रोरवीति = शब्दं करोति, कुत एतत्? रौतिः शब्दकर्मा, महो देवो मर्त्यां आविवेशेति। महान् देवः शब्दः, मर्त्या मरणधर्माणो मनुष्यास्तानाविवेश। महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम्" इति। याज्ञिकैश्च यज्ञस्वरूपपरतया व्याख्यातः। किं बहुना, राजशेखरेणाप्य-लङ्कारशास्त्रपरतया व्याख्यातः। अप्रकृतत्वात् तत्तद्व्याख्यानं नेह निर्दिश्यते।

अत्रेदं तत्त्वम्—सिद्धान्तशैवादिमते शिवस्य या ज्ञानशक्त्याख्या समवायिनी शक्तिः सा निमित्तकारणम्, समवायो नाम तादात्म्यमिति शिवः शक्तिश्च एकं तत्त्वम्। शिवस्य या किञ्चित्स्वा परिग्रहशक्तिः सा क्रियाशक्तिरुच्यते। परिग्रह उपादानकारणमित्येकं तत्त्वमिति रत्न-

त्रयम्। स च बिन्दुर्द्विविधः—शुद्धोऽशुद्धश्च। शुद्धबिन्दुरेव महाबिन्दुर्महामायेति, अशुद्धबिन्दुश्च मायेत्युच्यते। बिन्दौ समवायिन्याः शक्तेर्यः सम्बन्धः स एव विकल्पो भेदज्ञानमित्याख्यायते। तं च विकल्पमाश्रित्य शिवः शुद्धबिन्दुं क्षोभयति। तेन च स शब्दार्थसृष्टिधारां जनयति। सा च शब्दधारा परापश्यन्तीमध्यमावैखरीरूपा शुद्धा। ततोऽशुद्धबिन्दुः क्षुब्धोऽशुद्धां शब्दार्थधारां जनयति, सा च परापश्यन्तीमध्यमावैखरीरूपा अशुद्धा। द्विविधस्यापि बिन्दोर्जडत्वेन अचिदात्मकत्वात्तत्परिणामो द्विविधापि परादिरूपा वागचिद्रूपैव। तस्या अतिक्रम एव बन्धनच्छेदलक्षणो मोक्षो न तु तत्तादात्म्यम्। स च दीक्षादिव्यापारेण सम्पाद्यत इति। तथा चोक्तमष्टप्रकरणे—

शब्दतत्त्वमघोषा वाग् ब्रह्म कुण्डलिनी ध्रुवम्।
विद्या शक्तिः परा नादो महामायेति दैशिकैः॥
बिन्दुरेव समाख्यातो व्योमानाहतमित्यपि।
चतस्रो वृत्तयस्तस्या याभिर्व्याप्तास्त्रिधाणवः॥
वैखरीमध्यमाभिख्या पश्यन्ती सूक्ष्मसंज्ञिता।
तत्र सा वैखरी श्रोत्रग्राह्या यार्थस्य वाचिका॥
स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा।
प्रयोक्तॄणामियं प्रायः प्राणवृत्तिनिबन्धना॥
केवलं बुद्धयुपादाना क्रमाद्वर्णानुपातिनी।
अन्तःसङ्कल्परूपा तु न श्रोत्रमुपसर्पति॥
प्राणवृत्तिमतिक्रम्य वर्तते मध्यमाह्वया।
अविभागेन वर्णानां सर्वतः संहृतक्रमा॥
स्वयंप्रकाशा पश्यन्ती मयूराण्डरसोपमा।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी॥
यस्यां दृष्टस्वरूपायामधिकारो निवर्तते।
पुरुषे षोडशकले तामाहुरमृतां कलाम्॥
तामेव वाणीं सूक्ष्माख्यामाहुरात्मविदो जनाः।
प्रत्यात्मनियता एता वृत्तयो बन्धनात्मिकाः॥

आभ्यो विभक्तमात्मानं नहि पश्यन्ति पुद्गलाः।
यदा वृत्तिविशेषेण विलीना चित्तसंश्रया॥
तदा सूक्ष्मा विशुद्धेव चिदाभात्यविवेकतः॥ इति।

त्रिधाणवः—उत्तममध्यमाधमभेदेन ज्ञानादिमन्तः। पुद्गलाः=जीवाः। सूक्ष्मा = परा। सूक्ष्मा त्वभिधेयबीजत्वेन सर्वभूतेष्ववस्थिता पश्यन्त्या अपि कारणभूता चिदा अत्यन्तसंश्लेषात् तद्रूपेव भातीत्यर्थः।

अभिनवगुप्तपादाचार्यास्तु—प्रकाशो विमर्शश्चेति वस्तुद्वयम्। प्रकाश एव शिवः, विमर्शस्तु तस्य स्वातन्त्र्यशक्तिरुमा इति चाख्यायते। अथापि प्रकाशस्य विमर्शव्यतिरेकेण विमर्शस्य प्रकाशव्यतिरेकेणासत्त्वादेकमेव तद्द्वयमिति मन्यन्ते। तन्मतानुसारिणो द्वैतिन इत्युच्यन्ते। विमर्शश्च परा वाग् प्रकाशश्च अर्थ इति। यदाहुः—

शब्दजातमशेषं तु धत्ते शर्वस्य वल्लभा।
अर्थजातमशेषं तु धत्ते मुग्धेन्दुशेखरः॥ इति।

सामरस्यमुपगतमनादिमिथुनं वागर्थयुगलं निरञ्जनं परब्रह्मपदमित्यद्वयविदां परिभाषा। विमर्श एव च पूर्णाहन्ता। यदा च शिवः स्वकीयस्वातन्त्र्येण स्वातन्त्र्यशक्तिं संकोचयति, तदा अहमिदं जानामीति भेदमनुभवतीति स्वातन्त्र्यशक्तिरहितोंऽशो जडवर्गः स्वातन्त्र्यशक्तिसहितश्चांशश्चेतनवर्गो जायत इति। अयमेव परमेश्वराद्वयवाद इत्युच्यते।

शङ्कराद्वैतवादिनस्तु—यत्प्रकाशः शिव इति विमर्शश्च तत्प्रकाशक इति परमेश्वराद्वैतवादिभिरभ्युपेतम्। तत्र प्रकाशस्यैव स्वप्रकाशत्वमभ्युपेत्य प्रकाशसम्भवे विमर्शो नाङ्गीक्रियते, प्रकाश एव ब्रह्म, तदेवानिर्वाच्याऽविद्यया नानारूपं भासत इति वदन्ति।

शब्दब्रह्मवादिनस्तु—विमर्शः (परा वाक्) एव ब्रह्म, तदेवाविद्यया नानारूपं भासत इति प्राहुः।

यद्यपि परमार्थतः परमेश्वराद्वयवादस्य ब्रह्माद्वयवादस्य शब्दब्रह्माद्वयवादस्य च नात्यन्तं भेदः, यतः परमेश्वराद्वयवादे प्रकाशविमर्शयोः भेदाप्रतिभासात् प्रकाश एव विमर्शः, ब्रह्मवादे च प्रकाश एवैकं तत्त्वम्, शब्दब्रह्मवादे च विमर्श एवेति; तथापि तत्त्वनिरूपणप्रणालीनां भिन्नतया त्रयाणां भेदः।

अत्रायं निष्कर्षः—विमर्श एव 'वरा वाक्', 'शब्दब्रह्म' इति च व्यवह्रियते वैयाकरणैः। तेषां मते शब्दब्रह्मणा तादात्म्यमेव जीवस्य मोक्षः। स च शब्दावस्थानरूपः। एतदेव शब्दब्रह्म प्रधानं दर्शनतत्त्वम्, यदाश्रित्य विदितवेदितव्यैः शिष्टैस्तत्तत्त्वोपयोगिपदार्थविभागसमुद्भासितानि निगमागममूलकान्यनेकानि व्याकरणग्रन्थरत्नानि प्रणीतानि। तत्साधनतयैव धात्वर्थनामार्थ-जातिव्यक्तिपदार्थपञ्चवृत्त्यादीनां विचारस्तत्र तत्र महता आडम्बरेण कृतो दृश्यते। इदमेव तत्त्वं स्फोटपदेन स्फोटायनऋषिणा प्रतिपादितम्। तेन स्फोटोऽयनं सिद्धान्तो यस्येति स ऋषिः स्फोटायन-संज्ञको जातः। तथा चोक्तं नागेशेन—

सर्वतन्त्रार्थतत्त्वज्ञः सर्वत्र च निबन्धकृत्।
वैयाकरणनागेशः स्फोटायनऋषेर्मतम्॥
परिष्कृत्योक्तवान् तेन प्रीयतामुमया शिवः।
(लघुमञ्जूषा, पृ० १५७३)

पाणिनिना ऋषिरयमष्टाध्याय्यां स्मृतः—अवङ् स्फोटायनस्य (६।१।१२३)। अयं स्फोटो भगवता भाष्यकारेण—"स्फोटमात्रं निर्दिश्यते, रश्रुतेर्लश्रुतिर्भविष्यति" इति शब्देन तत्र तत्रोक्तः, महावैयाकरणभर्तृहरिकैयटनागेशप्रभृतिभिः सम्यङ्निरूपितश्च। शाब्दिकशार्दूलैः पण्डितश्रीरामाज्ञा-पाण्डेयमहाभागैः कृतं विशदतया षोडशस्फोटनिरूपणं केषां विदुषां चेतश्चमत्काराय न कल्पेत। सिद्धान्तशैवमते च मोक्षदशायामशुद्धवाग्रूपबन्धनस्यातिक्रमे शुद्धवाग्रूपस्यानुगमेऽपि तस्याः शुद्धतया चित्त्वेन प्रतिभासाच्चिद्रूपेव तदानीं वाग् भवति, जीवस्य च न वाक्तादात्म्यमिति।

शब्दार्थज्ञानानां मध्येऽर्थमेव प्राधान्येनोररीकृत्यौलुक्यदर्शने पदार्थस्वरूपज्ञानाद् निःश्रेयसाधिगमो भगवता कणादेन प्रतिपादितः। अक्षपादस्तु वैशेषिकसम्मतान् पदार्थानुपजीव्य विप्रतिपन्नान् बौद्धादीन् प्रत्याख्यातुं न्यायदर्शनं व्यरीरचत्। ज्ञानं मूलतत्त्वमाश्रित्य सांख्ययोग-वेदान्तशास्त्राणि तत्तन्महर्षिभिः समाम्नातानि। व्याकरणदर्शनन्तु शब्दं प्रधानीकृत्य प्रवृत्तमिति नास्य दार्शनिकत्वं तैर्दर्शनैर्गतार्थम्। अथ चास्यैहिकामुष्मिकोभयफलसाधकत्वेन दर्शनान्तराणां चैहिकफलोत्पादे सामर्थ्याभावेन नान्तर्भावस्तेषु। तथा दर्शनान्तराणामिवास्य लेखनप्रणाल्यपि सूत्रात्मिकाऽस्ति। यदि व्याकरणस्य वस्तुतो दर्शनत्वं तदा कथमिदानीं तत्सम्प्रदायविच्छेदात् तत्पदार्थाः स्वप्नायन्त इत्ययं प्रश्नः स्वयं हरिणा समाहितः—

प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान्।
संप्राप्य वैयाकरणान् संग्रहेऽस्तमुपागते॥
कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात्।
तस्मिन्नकृतबुद्धीनां नैवावस्थितनिश्चयः॥
वैजिसौभवहर्यक्षैः शुष्कतर्कानुसारिभिः।
आर्षे विप्लाविते ग्रन्थे संग्रहप्रतिकञ्चुके॥
यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः।
काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः॥
पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः॥
न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वं च दर्शनम्।
प्रणीतो गुरुणास्माकमयमागमसंग्रहः॥

अनायासेनोदरपूरणगवेषणपरैरलसैः पल्लवग्राहिपाण्डित्यैस्तत्त्वाधानाक्षमैः संग्रहपठनपाठनपरम्परायां क्षयं नीतायां फणिभाषितभाष्यफक्किकाविषयज्ञाने शिथिलानामुपेक्षितबोधवर्द्धनोपायानां दोषेण महाभाष्ये प्रलयं प्रापिते व्याकरणागमोऽयं ग्रन्थमात्ररूपो दाक्षिणात्यपुस्तकालयस्वरूपशोभैकफलोऽभूत्। ततश्च संस्कृतसाहित्यस्य परमसौभाग्येनासादितसत्त्वाविर्भावाश्चन्द्राचार्यवसुरातभर्तृहरिप्रभृतयः सिद्धा इमं व्याकरणागमं समुद्धृतवन्त इति कारिकार्थः।

तदेवं व्याकरणस्य स्वतन्त्रदर्शनतत्त्वे निर्णीते प्रमाणचिन्ता पादलेष्टुकायेत। प्रमाणचर्चा हि दर्शनशास्त्राणां प्रधानविषयतामादधाति, यतः प्रमाणादेव प्रमेयसिद्धिः। अत एव शास्त्रकारैः प्रमाणान्यपि प्रमेयवद् व्यवस्थाप्यन्ते। शाब्दिकशिरोमणिभिश्च कुत्रापि नैतत् स्पष्टं प्रतिपादितं यत् तैः कियन्ति कीदृशानि च प्रमाणानि स्वीक्रियन्ते। प्रत्युत तत्र तत्र पदार्थविचारावसरे कदाचित् तार्किकाः कदाचिद् मीमांसकाः कदाचिच्च वेदान्तिनोऽनुस्रियन्ते। अतो यद्यपि शाब्दिकसम्मतानि प्रमाणानि इयत्तया इदमाकारकत्वेन च परिच्छेत्तुं दुश्शकानि, तथापि भाष्यादिपर्यालोचनेन प्रत्यक्षानुमानार्थापत्तिशब्दानुपलब्ध्यभ्यासादृष्टाख्यानि सप्त प्रमाणानि विभावयितुं शक्यन्ते। तथा हि—लोकव्यवहारार्थं शाब्दिकैरकामैरपि प्रत्यक्षप्रमाणस्य सार्वभौमत्वं स्वीक्रियेतैव,

अन्यथा शब्दानां श्रावणप्रत्यक्षविषयत्वाभावेन स्वहस्तेनैव स्वपादे कुठाराघात आपतेत्। अनुमानमन्तराप्यनुमानेन सिद्धानां तासां परिभाषाणां विलयापत्तिः स्यात्। वाक्यपदीयादप्यनुमानस्य प्रमाणत्वं सिद्ध्यति, यतः कश्चिदपि किञ्चिदपि वस्तु नहि सर्वतोभावेन प्रेक्षितुं शक्नुयात्, एककालावच्छेदेन सर्वावयवदर्शनस्यासंभवात् सकलविषयकं ज्ञानमानुमानिकमेव। तथा चोक्तं वाक्यपदीये—

दुर्लभं कस्यचिल्लोके सर्वावयवदर्शनम्।
कैश्चित्त्ववयवैर्दृष्टैरर्थः कृत्स्नोऽनुमीयते॥

(वा० २-१५८)

"प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देशः" (पा० सू० १-३-२ महाभा०), "ननु च प्रत्यक्षमुपलभ्यते" (पा० सू० १-२-३० महाभा०), "अन्यथाजातीयकः खल्वपि प्रत्यक्षेणार्थसंप्रत्ययोऽन्यथाजातीयः सम्बन्धात्। राज्ञः सखा राजसखः। सम्बन्धादेतद् गन्तव्यं नूनं राजाप्यस्य सखेति" (महाभा० पा० सू २-१-२४), "एते प्रत्यक्षं कंसं घातयन्तीति" (महाभा० पा० सू० ३-१-२६) उपरि निर्दिष्टे भाष्ये प्रत्यक्षस्य प्रमाणस्या स्पष्टमुक्तत्वात्, "सम्बन्धादेतद् गन्तव्यम्" (महाभा० पा० सू० १-१-९) इत्यनेन, "कोऽसावनुमानः" (महाभा० पा० सू० १-३-१), "क्रियापृथक्त्वे च द्रव्यपृथग्दर्शनमनुमानमुत्तरत्रानेकशेषभावस्य" (भाष्य० वा० पा० सू० १-४-१०८), "धूमं दृष्ट्वा अग्निस्तत्रेति गम्यते", "त्रिविष्टब्धकं दृष्ट्वा परिव्राजका इति" (महाभा० पा० सू० ३-२-११) इत्यादिना चानुमानस्य सूचनात् स्पष्टमुक्तत्वाच्च प्रत्यक्षानुमानयोर्वैयाकरणानां पक्षपातो वर्तत एव।

"नह्यन्यदुपलभ्यते" इति भाष्यात्, "एवञ्चानुपलब्धिप्रमाणेनान्यत्वाभावनिश्चय इत्यर्थः" इति तत्रत्यकैयटाच्चानुपलब्धिरपि प्रमाणान्तरं वैयाकरणानाम्।

"सम्बन्धिशब्दैर्वा तुल्यम्" (वा० पा० सू० १-१-७१) इति वार्त्तिकभाष्यादिपर्यालोचनेनार्थापत्तेरपि प्रमाणान्तरत्वं सिद्ध्यति।

"उपमानानि सामान्यवचनैः" (पा० सू० २-१-५५) इति सूत्रे भाष्ये—"मानं हि नामानिर्ज्ञातार्थमुपादीयते, अनिर्ज्ञातमर्थं ज्ञास्यामीति। तत्समीपे यन्नात्यन्ताय मिमीते तदुपमानं गौरिव गवय इति। गौर्निर्ज्ञातो गवयोऽनिर्ज्ञातः" इति स्पष्टत उपमानस्य मानसामीप्यप्रतिपादनाद् नोपमानस्य प्रमाणान्तरत्वमभिप्रेतं शाब्दिकानाम्।

"शब्दप्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणम्" (महाभा० पस्पशाह्निकम्) इति

भाष्येण शब्दानां प्रमाण्ये तु विवाद एव नास्ति। यद्यपि तद्भाष्यस्वारस्याद् वाक्यपदीयपर्यालोचनाच्च शब्दप्रामाण्य एव वैयाकरणानां पक्षपातः प्रतीयते, नानुमानादिषु; तथापीतरप्रमाणापेक्षया शब्दप्रमाणस्य बलवत्त्वबोधन एव भाष्यादितात्पर्यावसानम्, न तु तेषां प्रत्याख्याने।

रूपतर्काणां यद् मणिरूप्यादीनां न्यूनाधिक्यविषयकं ज्ञानं जायते, तत्परेषामसमाख्येयमभ्यासादेव जायते, नेन्द्रियादिभ्यः। तच्च नानुमानिकम्, व्याप्तिज्ञानाजन्यत्वात्। न प्रत्यक्षम्, पटुभिरिन्द्रियैरप्यभ्यासरहितैरधिगन्तुमशक्यतया इन्द्रियमात्राजन्यत्वादिति लौकिकप्रत्यक्षानुमानातिरिक्तं किञ्चिल्लौकिकसमाधिजन्यं भावनापरपर्यायमभ्यासाख्यं हरिणा प्रमाणान्तरमाश्रीयते। एतच्च 'श्वो मे भ्राता आगन्तेति हृदयं मे कथयति' इति कन्यकाज्ञानमिव लौकिकमार्षमाचक्षते। स्पष्टं चेदं प्रशस्तपादभाष्ये। तथा चोक्तं वाक्यपदीये —

परेषामसमाख्येयमभ्यासादेव जायते।
मणिरूप्यादिविज्ञानं तद्विदां नानुमानिकम्॥

(वा० ब्र० ३५)

एवमृषीणां ज्ञानं तपःसाध्यादृष्टजन्यं न प्रत्यक्षानुमानजन्यम्। पितृरक्षःपिशाचानां सिद्धयोऽपि लौकिकप्रत्यक्षानुमानागोचरा इत्यदृष्टमपि प्रमाणान्तरमेवेत्युक्तं हरिणा—

प्रत्यक्षमनुमानञ्च व्यतिक्रम्य व्यवस्थिताः।
पितृरक्षःपिशाचानां कर्मजा एव सिद्धयः॥

(वा० ब्र० ३६)

इत्थं वैयाकरणैः प्रत्यक्षानुमानार्थापत्तिशब्दानुपलब्ध्यभ्यासादृष्टाख्यानि सप्त प्रमाणानि स्वीक्रियन्ते। कैश्चन च सांख्यस्वीकृतानि प्रत्यक्षानुमानशब्दाख्यानि त्रीणि प्रमाणानि प्रतिपाद्यन्ते।

इदमत्र तत्त्वम्—यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव च चतुष्कोणाद्याकारं भवति, तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते। अयं परिणाम एव 'वृत्तिः' इत्युच्यते। सैव प्रमाणम्। एवञ्च वैयाकरणानां प्रमाणस्यापि प्रमेयान्तःपातित्वमेवेति। यद्यपि ज्ञानोत्पत्तिप्रक्रियाऽत्र शास्त्रे नैव प्रतिपादिताऽस्ति, तथापि योगभाष्ये तादृशज्ञानप्रक्रियाया उक्तत्वादत्र तदङ्गीकारे नास्ति काचनापि विप्रतिपत्तिः।

एवं कतिपयैः शब्दैर्व्याकरणस्य स्वतन्त्रदर्शनत्वमालोच्य विरम्यते॥

---

# नादवाद-स्फोटवादौ

श्रीपतिरामत्रिपाठी, अनुसन्धाता, वा० सं० वि०वि० वाराणसी ।

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासाः ॥ ( ऋक्० १०-७१-४ )

## नादनिरूपणम्

नादस्फोटयोः कियत् सूक्ष्ममन्तरमिति प्रतिपिपादयिषुणा मया किमपि विलिख्यते । तत्र प्रथमोपस्थितत्वान्नादस्वरूपं किमिति शैवागमपद्धत्या निरूप्यते । तत्र खलु बिन्दु-शक्ति-शिवाख्यं तत्त्वत्रयं मन्यते । तत्र बिन्दुः कारणं नादरूपस्य तत्त्वस्य । तदुक्तम्—

जायतेऽध्वा यतः शुद्धो वर्तते यत्र लीयते ।
स बिन्दुः परनादाख्यो नादबिन्द्वर्णकारणम् ॥
( रत्नत्रये, श्लो० २२ )

एवं शुद्धाध्वनः शिवादिरूपस्योत्पत्तिलयाधारत्वेनोपादानतया नादबिन्दुवर्णापरनादाख्यरूपेणाव्यक्तं त्रिगुणञ्च शक्तितत्त्वमुच्यते । तत्र नादो नामाभिधेयबुद्धिहेतुर्बिन्दोः प्रथमप्रसररूपः । सूक्ष्मो नादश्चिन्तया रहितः । बिन्दुश्च तत्कार्यो मयूराण्डरसवदव्यपदेश्यः परामर्शज्ञानरूपोऽक्षरबिन्दुस्तत्रैव सूक्ष्मत्वेनोक्तः । अर्णश्च वर्ण एव । आकाशवायुप्रभवः श्रोत्रग्राह्यः स्थूलशब्दः । एवञ्च नादबिन्द्वर्णकारणत्वं बिन्दोर्विज्ञेयम् । उक्तञ्च—

स्थूलं शब्द इति प्रोक्तं सूक्ष्मं चिन्तामयं भवेत् ।
चिन्तया रहितं यत्तु तत्परं परिकीर्तितम् ॥

एवं स्थूल-सूक्ष्म-परभेदेन बिन्दु-नाद-शब्दरूपस्य ग्रहणं बोध्यम् । तथा च शब्दस्य परनादरूपस्य बिन्दुतत्त्वस्याव्यक्तरूपस्य ज्ञानन्तु निर्विकल्पसमाधौ भवति । शिव एव च बिन्दोर्विस्फोटको वर्तते । तदुक्तं रत्नत्रये—

विद्याशरीरो भगवाननन्तः क्षोभको मतः ।
मायायाः सा च विद्वद्भिर्बैन्दवं तत्त्वमुच्यते ॥ ४७ ॥

किन्तु यदाऽवश्यं शब्दोऽपेक्षितो भवति, तदा शिवसंक्षोभाद् बिन्दुजन्यः कश्चन शब्दो भवति। तस्यैव च चतस्रो वृत्तयः परापश्यन्तीमध्यमावैखरीरूपा भवन्ति। तत्र शब्दोपादानत्वेन बिन्दुसिद्धिर्भवति। तदुक्तं रत्नत्रये—

स तु शब्दश्चतुर्धा वाग् वैखर्य्यादिविभेदतः।
जायते बिन्दुसंक्षोभादनन्तस्यार्थदर्शने ॥ ४६ ॥

अत्र शैवागमोक्तदिशा बिन्दोः पर्यायेष्वेतानि नामानि परिगृह्यन्ते—

शब्दतत्त्वमघोषा वाग् ब्रह्मकुण्डलिनी ध्रुवम्।
विद्या शक्तिः परा नादो महामायेति दैशिकैः ॥ ६० ॥
बिन्दुरेव समाख्यातो व्योमानाहतमित्यपि। ६१ श्लोकार्धम् ॥

इत्याद्युक्तदिशा परा-नाद-बिन्द्वित्यादीनामेकार्थवाचकत्वमेव ज्ञायते। किन्तु रत्नत्रये—

शब्दराशिश्च बिन्दूत्थो बिन्दुर्नादादसावपि।
बिन्दोरनाहतादेष कारणं शुद्धवर्त्मनः ॥ १७२ ॥

इत्यत्र 'बिन्दुर्नादादसावपि' इति वचनेन नादादेव बिन्दोरुत्पत्तिर्वक्तुं शक्यते। स च नादोऽनाहताद् बिन्दोर्जायते। अनाहतो बिन्दुश्च केवलाद् बिन्दोर्भिन्न इति न पूर्वापरविरोधः।

अत्र प्रसङ्गाद् वैखरीमध्यमापश्यन्तीसूक्ष्मेतिरूपैर्वृत्तिचतुष्टयस्य संक्षेपतः शैवागमोक्तदिशा विचारः क्रियते। तत्र वैखरी श्रोत्रग्राह्या, याऽर्थस्य वाचिका भवति। तदुक्तम्—

आकाशवायुप्रभवाच्छरीरात् समुच्चरन् वक्त्रमुपैति नादः।
स्थानान्तरेषु प्रविभज्यमानो वर्णत्वमागच्छति यः स शब्दः ॥

एवञ्च नादाभिव्यङ्ग्यत्वं शब्दस्येति भवति।

केवलं बुद्ध्युपादाना क्रमाद् वर्णानुपातिनी।
अन्तःसंजल्परूपा तु न श्रोत्रमुपसर्पति ॥ ६४ ॥
प्राणवृत्तिमतिक्रम्य वर्तते मध्यमाह्वया।

एवञ्च मध्यमा वाक् स्थूलशब्दस्य कारणत्वेन गृह्यते ।

अविभागेन वर्णानां सर्वतः संहृतक्रमा ।
स्वयंप्रकाशा पश्यन्ती मायूराण्डरसोपमा ॥ ६५ ॥

पश्यन्ती चेयमक्षरबिन्दुरूपा ।

सूक्ष्मा तु नादापरपर्यायेत्युक्तं रत्नत्रये—

स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥ ६६ ॥

तत्रापायित्वञ्च सुषुप्त्याद्यवस्थास्वपि संभवात् , न तु नित्यत्वेन । तेनास्या अपि प्रतिपुरुषं भिन्नतया अचेतनत्वादनेकत्वाच्च कार्यत्वमनित्यत्वं च बोध्यम् । एतस्यां च पुरुषाविवेकेन दृष्टायां पुरुषस्य भोगसमाप्तिरूपा संसारनिवृत्तिः । तदुक्तम्—

यस्यां दृष्टस्वरूपायामधिकारो निवर्तते ॥ ७५ ॥ इति ।

यस्यां पुरुषस्वरूपाद् विवेकेन दृष्टस्वरूपायां पुरुषस्य भोगाधिकारो निवर्तत इति तदर्थः ।

अत्र वैयाकरणाः—परा वागेव शब्दब्रह्मपदव्यपदेश्या । सैव वाक् शैवदर्शने सूक्ष्मापदेन व्यवह्रियते । तज्ज्ञानादेव मोक्षः । तदुक्तम्—

सर्वभूतान्तरचरः शब्दब्रह्मात्मको रविः ।
भित्वा यं बोधखड्गेन निर्गच्छन्त्यविशङ्किताः ॥ ७७ ॥

किञ्च—

शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ इति ।

सर्वा चेयमागमोक्तसृष्टिप्रक्रिया नागेशेनापि लघुमञ्जूषायां प्रतिपादिता—

"प्रलयान्ते परमेश्वरस्य सशक्तिकस्य सिसृक्षात्मिका मायावृत्तिर्जायते । ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते । इदमेव शक्तितत्त्वम् । तस्य बिन्दोरचिदंशो बीजम् , चिदंशो बिन्दुः, चिदचिन्मिश्रोंऽशो नादः । अत्राचिच्छब्देन शब्दार्थोभयसंस्काररूपाऽविद्या उच्यते । ततश्चास्माद् बिन्दोः शब्दब्रह्मापरनामधेयं वर्णादिविशेषरहितं ज्ञानप्रधानं सृष्ट्युपयोग्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते । एतज्जगदुपादानमेव 'रव'-'परा' इत्यादिशब्देन व्यवह्रियते । तदुक्तम्—

बिन्दोस्तस्माद्भिद्यमानाद्रवोऽव्यक्तात्मकोऽभवत् ।
स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते ॥

( प्रपञ्चसारे, १।४३ )

एतत्सर्वगतमपि प्राणिनां मूलाधारे संस्कृतपवनचलनेनाभिव्यज्यते। ज्ञातमर्थं विवक्षोः पुंस इच्छया जातेन प्रयत्नेन योग एव मूलाधारस्थपवनसंस्कारः, तदभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निष्पन्दं 'परा वाग्' इत्युच्यते। तदुक्तं हरिणा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ (वा० ब्र० १)

तामेव परां वाचं शब्दब्रह्मानादिनिधनपदव्यपदेश्यां शैवागमानुसारिणो बन्धनात्मिकामेव ब्रुवते। तद्यथा—

तामेव वाणीं सूक्ष्माख्यामाहुरात्मविदो जनाः।
प्रत्यात्मनियता एताश्चतस्रो बन्धनात्मिकाः॥

अयं भावः—वैयाकरणाभिमतां शब्दब्रह्मापरपर्यायां पराख्यां वाचमेव शैवा बिन्दुकार्यभूतां शब्दवृत्तिमेव मन्यन्ते, न तु पुरुषसमवायिनीम्; तस्याविकारित्वेन जडत्वात्, तत्समवाये पुरुषस्यापि विकारित्वाऽचेतनत्वादिद्रोषप्रसङ्गाच्च। एतासाञ्च चतसृणां वृत्तीनां कार्यत्वेन जडत्वान्न चित्समवायो युज्यते, अपि तु बन्धनत्वमेवेति बोद्धव्यम्। एतदेवोक्तं रत्नत्रये—

सच्चिदानन्दविभवात् सकलात् परमेश्वरात्।
आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः॥
परशक्तिमयः साक्षात् त्रिधाऽसौ भिद्यते पुनः।
बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः॥
बिन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः।
समवायः समाख्यातः सर्वागमविशारदैः॥
भिद्यमानात् पराद्बिन्दोरव्यक्तात्मा ततोऽभवत्।
शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः॥

अत्र खलु समवायः सम्बन्धः। स च क्षोभ्यक्षोभकभावरूपः सृष्टिहेतुः। अत्र पराद् बिन्दोरित्युक्त्या प्रथमबिन्दोरेव नादोऽजायतेति प्रतीयते। तदुक्तम्—

## नादवाद-स्फोटवादौ

कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा ।
स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते ॥
स बिन्दुनादबीजत्वभेदेन च निगद्यते ।

( प्रपञ्चसारे, १-४२ )

वैयाकरणैः सूक्ष्मापरपर्याया एव वाक् शब्दब्रह्मपदेन व्यवह्रियते । अत्र खलु तेषां भ्रम एव वर्तते । यतो हि—वैखरी श्रोत्रजे बोधे कारणम् । मध्यमा सविकल्पकज्ञाने कारणम् । पश्यन्ती मध्यमोत्पत्तौ कारणम् । किन्तु सूक्ष्मा—

यदा वृत्तिरशेषेण विलीना चित्तसंश्रया ।
तदा सूक्ष्मा विशुद्धेव चिदाभात्यविवेकतः ॥८३॥

( रत्नत्रये )

इत्युक्तदिशा यदा चित्तसंश्लिष्टा भवति, सर्वा वृत्तयश्चित्ते विलीना भवन्ति, तदा सूक्ष्मा वाक् तादात्म्यापन्नतया चिदिव भाति । तत्र चिदा सहात्यन्तश्लेष एव कारणम् । अत एव न तज्ज्ञानान्मोक्षः । यथा अतात्त्विकान्यथाभावस्थले रज्जौ सर्पभ्रमेण बिभ्यति जनाः, किन्तूत्तरकालिकेन प्रमात्मकेन ज्ञानेन नायं सर्पः, अपि तु रज्जुरेवेति भयापनोदनं भवति; तथैव परावाचोऽपि कारणीभूतस्य चिच्छक्तिसम्पन्नस्य बिन्दुरूपस्य ज्ञानान्मोक्ष इति तेषां सिद्धान्तः । वस्तुतस्तु परा सूक्ष्मशब्दापरपर्याया चिच्छक्तिरूपैव, तत्सहकृतबिन्दुरूपेण स्थितस्य परनादस्य ज्ञानमेव मोक्षकारणमिति मन्तव्यम् ।

## स्फोटनिरूपणम्

शब्दस्य हि द्विविधं रूपं दरीदृश्यते—ध्वन्यात्मकं वर्णात्मकं चेति तर्कशास्त्रे प्रसिद्धम् । तत्र धर्मिणि नास्ति केषाञ्चिदपि विप्रतिपत्तिः । दृश्यते च लोके मृदङ्गादिभवे ध्वनौ, अकारादिषु च वर्णेषु सर्वजनीनः शब्दपदव्यपदेशः, इत्यसांशयिकतया न तयोर्विमर्शयोग्यत्वम् , सन्दिग्धस्य सप्रयोजनस्यैव च प्रेक्षावतां जिज्ञास्यत्वात् । तयोः शब्दपदप्रवृत्तिस्तावत्तार्किकादीनां मते शब्दत्व-जातिपुरस्कारेण, शब्दत्ववर्णत्वादिजातिमभ्युपगच्छतां प्राभाकराणां मते श्रोत्रग्राह्यत्वोपाधिना वेत्यन्यदेतत् । तदुक्तं वाक्यपदीये—

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते।
कैश्चिद्दर्शनभेदोऽत्र प्रवादेष्वनवस्थितः॥
(ब्रह्म० १०८)

अत्र नैयायिकैः शब्दस्य गुणत्वमेव स्वीक्रियते। आकाशगुणः शब्द उत्पत्तिनिरोधधर्मक इति। रूपरसगन्धादिसहवृत्तिर्द्रव्येषु सन्निविष्टोऽभिव्यक्तिधर्मक इति सांख्याः। आकाशगुणः शब्दो विभुर्नित्योऽभिव्यक्तिधर्मक इति प्राभाकराः। स च विभुर्द्रव्यरूपो नित्य इति भाट्टाः। पञ्चमहाभूतसंक्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मकः क्षणिकश्चेति बौद्धाः। अणुपरिणामो हि शब्द इत्यार्हताः पौद्गलिकाः। वायुपरिणामो हि शब्द इति शिक्षाशास्त्रिणः। पाणिनीयशिक्षायाम् "आत्मा बुद्ध्या समेत्यार्थान्" इत्यादिनोक्तो ज्ञानपरिणामो हि शब्द इति वैयाकरणाः। तथा हि—"आख्यातोपयोगे" (१-३-२९) इति सूत्रखण्डनावसरे—"अयमपि योगः शक्योऽवक्तुम्। कथमुपाध्यायादधीत इति। अपक्रामति तस्मात्तदध्ययनम्। यद्यपक्रामति किं नात्यन्तायापक्रामति? सन्ततत्वात्। अथवा ज्योतिर्वज्ज्ञानानि भवन्ति" इत्युक्तं महाभाष्ये। अयं भावः—'उपाध्यायादपक्रामच्छब्दजातमधीयान उपादत्ते' इत्यर्थके उपाध्यायादधीत इत्यत्रापक्रमजन्यविश्लेषाश्रयत्वादुत्सर्गेणापादानत्वं संसाध्य शब्दानामपक्रमणं न युक्तम्। ततश्चोक्तं 'सन्ततत्वात्' इति। शब्दस्य व्यञ्जका ध्वनय उपाध्यायेनोत्पाद्यमाना अपि सादृश्यात् तत्त्वेनाध्यवसीयमानाः श्रोतुः पुनः पुनः श्रोत्रदेशं गच्छन्तो व्यक्तिस्फोटरूपं जातिस्फोटरूपं वा शब्दमभिव्यञ्जयन्ति। अथवा ज्वालारूपं यथा ज्योतिरविच्छेदेनोत्पद्यमानं सादृश्यात् तत्त्वेनाध्यवसीयमानं सन्ततम्, तथैवोपाध्यायज्ञानानि भिन्नशब्दरूपतामापद्यमानानि सन्ततान्युच्यन्त इति। सन्ततान्युक्त्वा भाष्यकृता शब्दस्य ज्ञानपरिणामत्वं सूचितम्। तत्रैव कैयटेनोक्तम्—"ज्ञानस्य शब्दरूपतापत्तिरिति दर्शनमत्र भाष्यकारस्य" इति।

पस्पशाह्निकेऽपि "अथ गौरित्यत्र कः शब्दः" इत्युत्तरप्रसङ्गे "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपस्य सम्प्रत्ययो भवति स शब्दः" इत्युक्तम्। तत्र येनोच्चारितेनेत्यस्य येन प्रकाशितेनाभिव्यक्तेनेत्यादिकैयटादिभिरर्थोऽकारि। एवञ्च नादाभिव्यङ्ग्यत्वं स्फोटस्य शब्दब्रह्मरूपस्येति व्याख्यातं भवति। ततश्च परमताभिप्रायेणाथवा प्रतीतपदार्थको लोके ध्वनिरिति शब्द इत्युक्तम्। तत्र नैयायिकमतेन नादरूपस्य ध्वनेरेव शब्दत्वं स्वीकृतम्। तत्र नादाभिव्यङ्ग्यत्वं ध्वन्यभिव्यङ्ग्यत्वं वा शब्दस्येति नागेशादिभिः स्वीकृतम्। तदुक्तं भर्तृहरिणा—

## नादवाद-स्फोटवादौ

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः ।
एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते ॥

(वा० ब्र० ४४)

अत्र शब्दस्य द्विविधो भेदः—आभ्यन्तरो बाह्यश्च । एकोऽभिव्यङ्ग्योऽपरोऽभिव्यञ्जकः एवं स्फोटनादयोः खल्वभिव्यङ्ग्याभिव्यञ्जकभावरूपः सम्बन्धः स्वीकार्यः ।

### स्फोटस्याखण्डत्वम्

वैयाकरणाः स्फोटस्याखण्डत्वं नित्यत्वं कूटस्थत्वमनादिनिधनपदव्यपदेश्यत्वञ्च स्वीकुर्वन्ति । तदुक्तं बहुशो भाष्यकृता—"नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिरिति" इति ।

नित्याः शब्दार्थसम्बन्धाः समाम्नाता महर्षिभिः ।
सूत्राणां चानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः ॥

इति वाक्यपदीयम् । "सिद्धे शब्दार्थसम्बन्धे" इत्युक्त्वा वार्त्तिककारोऽपि ब्रवीति । "तदशिष्यं संज्ञाप्रमाणत्वात्", पृषोदरादीनि यथोपदिष्टम्" इत्यादिदिशा पाणिनिरपि ब्रवीति ।

### ध्वनिस्फोटतादात्म्यविचारः

"आद्यन्तौ टकितौ", "तपरस्तत्कालस्य" इत्यादिभाष्यदिशा ध्वनि-स्फोटयोस्तादात्म्यसम्बन्धोऽभ्युपेयो भवति । तत्र 'स्फोटध्वनी' इति शब्दद्वयस्योपादानं शब्दत्वेन स्वीकृतम् । स्फोटः शब्दः, ध्वनिः शब्दगुणः, भेर्याघातवद् । तदुक्तम्—

ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते ।
अल्पो महाँश्च केषाञ्चिदुभयं तत् स्वभावतः ॥ इति ।

तद्यथा भेरीमाहत्य कश्चिद् विंशतिपदानि गच्छति, कश्चित्त्रिंशत्, कश्चिच्चत्वारिंशत् । स्फोटस्तु तावानेव, ध्वनिकृता वृद्धिः । तत्र स्फोटः श्रोत्रेन्द्रियग्राह्यः स्फोटनामा पदार्थः । शब्दध्वनिःतदभिव्यक्त्युत्तरं जायमानो वैकृतध्वनिरूपः शब्दस्य चिराचिरोपलब्धिकरत्वाद् गुणः-उपकारकः । अत्र खलु ध्वनिरूपेण स्फोट एव गृह्यते । भर्तृहरिणाप्युक्तम्—

स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः ॥ ७५ ॥

स्वभावतस्तु नित्यत्वाद्ध्रस्वदीर्घप्लुतादिषु ।
प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते ॥ ७६ ॥

अत्रापि प्राकृतध्वनिः स्फोटाभिव्यञ्जकत्वेन गृह्यते । तदुक्तम्—

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।
स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ॥ ७७ ॥
शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः ।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥ ७८ ॥ इति ।

अत्रेदमाकूतम्—स्फोटस्तावच्छब्दतत्त्वमस्ति, ध्वनिः शब्दगुणः । स्फोटो यद्याकाशस्तर्हि ध्वनिः शब्दरूपेण गुणः । स्फोटः शब्दः, ध्वनिरर्थः । स्फोटः प्रकृतिः, ध्वनिः प्रत्ययः । स्फोटो ब्रह्म, ध्वनिर्माया । स्फोट आत्मा, ध्वनिः शरीरम् । स्फोटः प्रतिभा ध्वनिर्ज्ञानम् । स्फोटः परोक्षः ध्वनिः प्रत्यक्षः । स्फोटः परमाणुरूपः, ध्वनिरणुः । स्फोटोऽक्षरः, ध्वनिः क्षर एव । स्फोटो नित्यः ध्वनिरनित्यः ।

एवञ्च 'स्फोटध्वनी' इत्यनयोरभिव्यङ्ग्याभिव्यञ्जकसम्बन्धेन ज्ञानं भवति । तत्र व्यञ्जकध्वनिस्थितस्य ह्रासस्य वृद्धेर्वा स्फोटे भानं भवति । तेन व्यङ्ग्ये किमप्यन्तरं न भवति । यथा स्वच्छस्फटिकस्याभिमुखे जपाकुसुमादीनां स्थित्या लौहित्यादिप्रतीतिर्भवति, यथा च चन्द्रस्य स्थिरत्वेऽपि जलगतचाञ्चल्यस्य तत्र प्रतीतिर्जायते, तद्वद् ध्वनिगतद्रुतमध्यमविलम्बितादिवृत्तीनामपि भानं तत्र भवति । एवं स्फोटो ध्वनिश्चेति द्वयमपि प्रमाणसिद्धं वर्तते । ध्वनेः शब्दगुणत्वकथनस्याभिप्रायस्तु स्फोटाभिव्यञ्जकत्वेन ग्राह्यः ।

## स्फोटशब्दव्युत्पत्तिविचारः

शब्दकौस्तुभोक्तदिशा भट्टोजिदीक्षितेन—"स्फुटत्यर्थोऽस्मादिति स्फोटः" इत्युक्तम् । तत्रेदमिति पदस्य शब्दत्वेन पर्यवसानं बोध्यम् । कौण्डभट्टेन च वैयाकरणभूषणे स्फोटस्य यौगिकत्वमेव स्वीक्रियते । स्फुटत्यर्थो यस्मादिति येनार्थज्ञानं भवति स स्फोटपदवाच्यः । श्रीकृष्णेन स्फोटचन्द्रिकायां स्फोटशब्दस्य यौगिकत्वमस्वीकुर्वता योगरूढत्वं पङ्कजशब्दवद् व्यवस्थापितम् । तत्र खलूक्तम्—"यद्यस्य यौगिकत्वमेव स्वीकुर्यात्तर्हि येन केन प्रकारेणार्थज्ञानोत्पादकानां वाच्यलक्ष्यव्यङ्ग्यार्थादीनां चेष्टादीनाञ्च स्फोटपदव्यपदेश्यत्वं भवति । अत्र

जातिस्फोटवादिनां वैयाकरणानां मतेन वाच्यलक्ष्यव्यङ्ग्यार्थप्रतिपादकवाचकलाक्षणिकव्यञ्जकशब्दानामथ च तत्र स्थितानां जातीनाञ्च स्फोटत्वं स्वीक्रियत एव। एवञ्च सर्वं समञ्जसम्" इति।

अत एव स्फोटस्य शब्दब्रह्मणोऽनादिनिधनपदव्यपदेश्यत्वसिद्धिर्भवति। स्फोटस्याष्टौ भेदा वैयाकरणनिकाये प्रसिद्धाः सन्ति। (वैयाकरणप्रधानेन पण्डितश्रीरामाज्ञाशास्त्रिणा षोडश स्फोटाः प्रतिपादिताः। तदपि प्राप्तेऽवसरे निरूपणीयं भविष्यति)। ते च वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोटः, अखण्डवाक्यस्फोटः, अखण्डपदस्फोटश्चेति। तत्राखण्डवाक्यस्फोट एव वास्तविकः। अन्यत्सर्वं प्रक्रियाज्ञानार्थमेव बोध्यम्। उक्तञ्च—

वाक्यस्फोटेति निष्कर्षे तिष्ठतीति मतस्थितिः। (वै० भू० सा० ३४)

उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥ (वाक्यपदीयम्)

मञ्जूषायामपि प्रारम्भे—"तत्र वाक्यस्फोटो मुख्यः, लोके तस्यैवार्थबोधकत्वात्तेनैवार्थसमाप्तेश्च। तदुक्तं न्यायभाष्यकृता—"पदसमूहो वाक्यमर्थसमाप्तौ" (२।१।५५) इति। तत्र परमार्थतोऽखण्डब्रह्मस्वरूपवत् स्फोटोऽपि सर्वथा नित्यः सच्चिदानन्दस्वरूप एव। स एव स्फोटो विवक्षोः पुंसः—"परा वाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता। हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥" इत्युक्तदिशा परापश्यन्तीमध्यमावैखरीरूपेण क्रमशः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलशब्देन तत्तत्स्थानेष्वभिघातद्वारा वैखरीरूपेणान्ते सर्वजनश्रवणगोचरो भवति। तदुक्तं ऋक्संहितायाम्—

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥ इति।
(१-१६४-१०)

वाक्यपदीयेऽपि—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥

एवञ्च शब्दब्रह्मण एवेदं जगत्प्रपञ्चजातं विवर्तरूपेण वर्तते। "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्", "स भूरिति व्याहरत् ततो भुवमसृजत्" इत्यादिश्रुत्या च तदेव

स्पष्टीभवति। किञ्च—"सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्। वेदशब्देभ्य एवादौ पृथक्-संस्थाश्च निर्ममे ॥" इति स्मृतिरपि प्रमाणं भवति। एवं "ओङ्कार एव सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" इति श्रुतेश्च बह्वी नानेतिपदस्य घटपटादिरूपेणेत्यर्थकरणात् सर्वस्यापि कारणं वेद एवेति ज्ञायते। अस्य खलु शब्दाद्वैतवादस्य परमप्राचीनासु संहितास्वपि बीजं समुपलभ्यते—"वागेव विश्वा भुवनानि जज्ञे", "वाच इत् सर्वममृतं मर्त्यञ्च", "वागेवार्थं पश्यति वाग् ब्रवीति वागेवार्थं सन्निहितं सन्तनोति। वाचैव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते ॥" इत्यादिश्रुतिभिः शब्दादेवास्य विश्वस्य विकासो लभ्यते। भर्तृहरिणापि—"शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः" इति कथनेन परिणामशब्दस्य फलवाचित्वेन न तूपादानसमसत्ताककार्यापत्तिरूपपारिभाषिकत्वेन ग्रहणेन जिज्ञास्यत्वात्। तयोः शब्दपदप्रवृत्तिस्तावत्तार्किकादीनां मते शब्दत्वजातिपुरस्कारेण, शब्दत्ववर्णत्वादिजातिमभ्युपगच्छतां च विश्वं वेदस्य विवर्तत्वेनाभिप्रेतम्। अत एव वैयाकरणानां विवर्तवादः राद्धान्तितो भवति। स च विवर्तो वाक्यपदीयब्रह्मकाण्डविवरणोक्तदिशा—"एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्याविभक्तान्यरूपोपग्राहिता विवर्तः, स्वप्नविषयप्रतिभासवत्" इति लक्षणको बोध्यः। अत्र नागेशः शैवागममतमनुसृत्य प्रपञ्चसारोक्तदिशा बिन्दुतत्त्वादेव तत्र चिदंशो बीजमित्यादिना चिदचिन्मिश्रोंऽशो नाद इति कथनानन्तरम्—

बिन्दोस्तस्माद् भिद्यमानाद्रवोऽव्यक्तात्मकोऽभवत्।
स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते ॥

इति कथयित्वा मध्यमानादांश एव स्फोट इति प्रत्यपादयत्। तत्र स्फोटस्य धारावाहिकन्यायेन प्रवाहनित्यताञ्च स्वीकृत्य व्यावहारिकनित्यत्वं प्रतिपादितवान्। तद्यथा—

क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम्।
प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्माभवत्परा ॥ इति।

नित्यत्वं तु यावत्सृष्टिस्थित्या व्यवहारनित्यतया च बोध्यम्।

सर्वथेयं नागेशस्योक्तिस्तावद् भ्रान्तमूलिका वर्तते। अनादिनिधनपदव्यपदेश्यस्य नित्यस्य स्फोटस्य च नित्यत्वं सर्वथा नष्टं भवति, अत एव नेदं प्रामाणिकमिति कृत्वा भाष्यादिमतेन सर्वथा नित्यत्वमनादिनिधनत्वञ्च शब्दब्रह्मणः स्फोटस्येति बोध्यम्।

## नादवाद-स्फोटवादौ

### नादध्वनिस्फोटेषु भेदः

श्रीरामकण्ठेन शैवागमानुसारेण नादकारिकायामुक्तम्—

बुद्ध्यस्मितामनोभ्यो विद्यातो रागतः कलायाश्च।
माया पुंशक्तिभ्यो नादोऽन्यो दृश्यते ध्वनिभिः॥

अयमाशयः—अस्मिता अहङ्कारः। ततश्च बुद्ध्यादीनां मायान्तानां स्वकार्य्यैरेव सिद्धेः कार्यान्तरहेतुत्वे च प्रमाणाभावात् पुरुषस्य तच्छक्तेश्चाविकारित्वेन वाक्समवायायोगाद् ध्वनीनाञ्च स्थूलानामुत्पत्त्यपवर्गयोगित्वेन कारणान्तरापेक्षित्वात् तदुद्भूतवर्णानां क्रमभावित्वेनाभिधायकत्वान्यथानुपपत्त्या तत्कारणत्वेन नादस्तेभ्यो भिन्न एकः कश्चन पदार्थ इति निश्चीयते। अत्र ध्वन्यभिव्यञ्जकविधिना वाचकत्वेन कस्य ग्रहणम्? पदस्य वाक्यस्यान्यस्य वेति सन्देहे पदवाक्यैकदेशभूतानां वर्णानां क्षणध्वंसित्वेन परस्परोपकारकत्वाभावात् तद्व्यतिरिक्तयोश्च पदवाक्ययोर्भेददर्शनान्न तयोरपि वाचकत्वमिति प्रत्यक्षनिराकृतत्वात्।

अथ गौरित्यत्र गकारौकारविसर्जनीयरूपेण पदं वाच्यम्, तदा तदभिन्नत्वेन वाचकत्वाभावाद् यदि सर्वथा अन्त्यवर्णस्य विसर्गस्यैव वाचकत्वमभ्युपगच्छेत्तदा 'अश्वः पुरुषः' इत्यादावपि विसर्जनीयस्य सत्त्वेन ततोऽपि सास्नादिरूपार्थप्रतिपत्तिः स्यात्।

अत्र शैवाः—यत्तावदब्रुवन् वैयाकरणा वर्णव्यतिरिक्तः स्फोट इति, तदयुक्तम्, न वर्णव्यतिरेकेण तस्य स्फोटस्य तद्ग्राहकयोर्मध्ये स्थितिरुपपद्यते। यतः स हि स्फोटो वर्णेभ्यो भिन्नोऽभिन्नो वा स्यात्? तत्र न तावद्भिन्नः, वर्णव्यतिरेकेण तस्योपलब्धिलक्षणप्राप्तस्यानुपलब्धेः, शशविषाणादेरिव। न चानुमानात् स्थितिरुपपद्यते, तस्य प्रत्यक्षनिराकृतत्वात्। न चोपलब्धिप्राप्तत्वं तस्यासिद्धमिति वाच्यम्, ज्ञापकत्वात्। कारको हीन्द्रियादिशक्त्यैवाज्ञातोऽपि कार्यं जानाति करोति संस्कारवद् बीजादिवच्च। ज्ञापकस्याक्षिनिकोचादेरिव ज्ञापकत्वस्यासम्भवान्नानुमानादनवस्था। तथा चाज्ञापकः स्फोटो नाभ्युपगन्तव्य इति। यदा अभिन्नस्तदा वर्ण एव स्फोटो न तु तेभ्यो भेदेनावस्थित इति हस्तः कर इतिवत् स्फोटो वर्ण इति समानश्रुत्यापत्तिः स्यात्।

यत्तावदुक्तं वर्णाभिव्यङ्ग्य इति तदपि न युक्तम्। स्फोटो हि बहुभिर्वर्णैरभिव्यज्यते ततश्चार्थप्रतीतिहेतुः स्यात्, एकैकेन वा? यदा बहुभिरभिव्यङ्ग्यस्तदा तेषामुच्चरितप्रध्वंसित्वेन विसर्जनीयकाले गकारौकाराभावान्न विसर्जनीयमात्रात्तदभिव्यक्तिरिति दोषः स्यात्। यद्येकैकेन

वर्णैनाभिव्यज्यते स्फोटस्तर्हि गकारादिना 'गो गवय गगन' इत्यादिस्फोटानां बहूनामभिव्यक्तितो विशेषाभावादनेकार्थप्रतिपत्तिप्रसङ्गः। किञ्च, विभुत्वे चास्यैकपुरुषोच्चारितैर्वर्णैरभिव्यक्तिभावे सति विशेषाभावाद् देशान्तरेऽपि प्रमातॄणामर्थप्रतिपत्तिः स्यात्, तथा कालान्तरे नित्यत्वेनाधेयाविशेषत्वात्। तथा च नायं स्फोटो नित्यो विभुर्वा कश्चिदर्थप्रतिपादको युक्त इति चेन्न, भाष्ये 'परः सन्निकर्षः संहिता' इत्यत्र—

बुद्धौ कृत्वा सर्वा चेष्टा कर्त्ता धीरस्तन्वन्नीतिः।
शब्देनार्थान् वाच्यान् कृत्वा बुद्धौ कुर्यात् पौर्वापर्यम्॥

इति कथनोक्तदिशा सर्वस्य वस्तुजातस्य बौद्धपदार्थत्वात्तत्रैव सास्नालाङ्गूलादिलक्षणमर्थं बुद्ध्याध्यवस्य तदनुगुणं गौरिति पदं चिन्तयैवानुसन्धाय ततः स्थूलशब्दं प्रयुङ्क्ते ततश्च बुद्ध्यधिरोहितं पदं बुद्ध्याधिरूढं गवादिपदसहकृतं विवक्षितगोगवयाद्यर्थक्रमेण तत्तदर्थाकारमुत्पद्यमानं तत्तत्स्थूलशब्दोच्चारणकारणं तत्तद्बुद्धिवृत्त्यात्मकमेवार्थविज्ञाने क्रमेण गवादीनां वाचकं भवति। तदुक्तम्—

तद्बुद्ध्यधिरोहपदं क्रमवृत्तस्य क्रमेण विज्ञानम्।
वाचकमिष्टमदुष्टं हेतुश्चेत् स्थूलशब्दजातस्य॥ (नादकारिका, ७)

अत एव वाच्याद् भिन्नं किमपि वाचकत्वेन स्थितमान्तरं विमर्शात्मकं वस्तु विद्यते। बुद्धिर्हि बाह्ये चक्षुरादिना विषयीकृत एवार्थेऽध्यवस्यतीति दृष्टा, न खलु सर्वथाऽविषयीकृतेऽतिप्रसङ्गात्। ततश्चाभ्यन्तरे बुद्धिः केनापि विषयीकृतस्वार्थे परामर्शं करोति, अन्यथा सर्वदा सर्वार्थप्रसङ्गः स्यात्। तदुक्तम्—

रूपरसगन्धशब्दाद्यर्था येनावमृश्यतां नीताः।
सोऽन्तः सङ्कल्पात्मा नादः सिद्धो न विषयभावेन॥
विषयीकुर्वन् सर्वान् शब्दार्थानेष वाचको नान्यः। इति।

तस्माद् रूपादयोऽर्था येनावमृश्यतां नीताः (वक्तृबुद्धेः परामृश्यतां नीताः) स एवात्र नादे वाचकः, स चान्तःसङ्कल्पात्मा, प्रतिपत्तुर्वाच्यबुद्धिगत्या स्थूलशब्दाकारेण वाच्यो भवति। एवञ्च सूक्ष्मनाद एवाभिव्यङ्ग्यः, स्थूलनाद एवाभिव्यञ्जकत्वेन गृह्यते। नादाभिव्यञ्जकत्वेन परनादस्य स्फोटरूपस्य ग्रहणं बोध्यम्। वाक्यपदीयेऽपि—

## नादवाद-स्फोटवादौ

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

उक्तञ्च श्रीमत्पराख्ये ग्रन्थे—

"पूर्ववर्णजसंस्कारयुक्तोऽन्त्योऽर्णोऽभिधायकः" इति ।

तत्र 'अर्ण' इति पदेन नादध्वनिरेव गृह्यते । एवं परनादस्य शब्दब्रह्मरूपस्य स्फोटस्थानापन्नस्य वाचकत्वं सिध्यति, अस्य सूक्ष्मशब्देत्यपि संज्ञा । तथा च वाक्येषु पदेषु वा वाचकत्वेन भिन्नरूपोऽयं नादोऽव्यक्तत्वेन सूक्ष्मशब्दवाच्यवाचकत्वेन स्थूलशब्दवाच्यः । उक्तञ्च नादकारिकायाम्—

अव्यक्तत्वान्नादः सूक्ष्मशब्दस्तु वाचकत्वेन ॥ १३ ॥

एवं स एवाव्यक्तात्मा नादः शब्दब्रह्मपदव्यपदेश्यः । तस्य ज्ञानादेव मोक्षः । उक्तञ्च— "शब्दब्रह्मणि निष्णातः परब्रह्माधिगच्छति" इति । शैवागमपद्धत्या विचारे क्रियमाणे नादस्य द्वैविध्यं दृश्यते । तत्रैकः कारणरूपो नादः (परनादः), अपरश्च कार्यरूपः । तत्र द्वयोरभिव्यङ्ग्याभिव्यञ्जकभावरूपः सम्बन्ध इति बोध्यम् ।

परमार्थतस्तु महामायायाः शक्तिस्वरूपाया जन्यो नाद एव ( परनाद )रूपेण वाचकत्वेन ज्ञेयः, यस्य स्थूलशब्दत्वेन मन्त्रतन्त्रात्मकाः शब्दा वाच्या अभिव्यञ्जका भवन्ति । उक्तञ्च देव्युपनिषदि—

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रैषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैति ॥ इति ।

दुर्गासप्तशत्यामपि—"त्रिधा मात्रात्मिका स्थिता", "यानुच्चार्या विशेषतः" इत्यादि रात्रिसूक्ते । अन्ते च नादकारिकायाम्—

सा प्रतिपुरुषं भिन्ना वाक्शक्तिर्वाचिका स्थितेति ।
वाचकजातं निर्मायान्तरस्तद् व्यनक्ति बाह्येऽपि ॥
स्थूलैः शब्दैर्व्यक्ता सूक्ष्मा नादात्मकास्ततो ध्वनयः ।
वाच्यविभिन्नां बुद्धिं कुर्वन्तो वर्धयन्ति जनयात्राम् ॥ इति ।

वस्तुतस्तु यो हि खलु शैवानां गेहे नादशब्देनानाहतनादः शब्दब्रह्मपदेनोच्यते स एवास्माकं वैयाकरणानां नये स्फोटशब्देन व्यवह्रियते । स च स्फोटः सर्वथा भाष्यकारवार्त्तिककार-सूत्रकारवाक्यपदीयाद्युक्तदिशा नित्यः कूटस्थोऽनादिनिधनपदव्यपदेश्योऽक्षर एव । श्रुतिरपि वक्ति—

सूक्ष्मामर्थामविभक्ततत्त्वामेकां वाचमभिष्यन्दमानाम् ।
तामन्ये विदुरन्यामिव नानारूपामात्मनि सन्निविष्टाम् ॥

॥ इति शम् ॥

**:०:**

# श्रीगीतातात्पर्यनिर्णयः

को० व० नीलमेघाचार्यः, व्याख्याता, वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी ।

भगवान् श्रीकृष्ण उपश्लोक्यते—"वसुदेवसुतं देवं कंसचाणूरमर्दनम् । देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम् ॥" इति । अत्र श्रीकृष्णलीलाचरितक्रममनुरुन्धे विशेषणक्रम इत्यतिरोहितं प्रेक्षावताम् । अत्रायं प्रश्नः स्वरसत उज्जिहीते यद् भगवतः श्रीकृष्णस्य को नाम स उपदेशः ? कुत्र स निहितोऽस्ति ? येन स जगद्गुरुरिति पप्रथे । अत्र सर्वाभिनन्द्यमुत्तरं नन्विदमेव, यत् स उपदेशो भगवद्गीतैव, या मध्येमहाभारतरत्नावलि नायकरत्नायते ।

भगवतः श्रीकृष्णस्यायमुपदेशो गीतेति कुतः संशब्द्यते । नन्वत एव, यथा लोके गीतं गीयते, तथैव गानरसिकेन भगवता गायतैवेमे श्लोका अर्जुनायोपादेशिषत । बाल्यात्प्रभृति गानरसिको भगवान् । तस्य मुरलीगानं त्रैलोक्यविश्रुतम् । चतुर्णां वेदानां प्रामाण्ये एकरूपे सत्येव गानरसिकत्वादेव स गीतिप्रधानं सामवेदं "वेदानां सामवेदोऽस्मि" इति स्वविभूतिकोटौ परिगणयांबभूव । अद्यापि गानरसिकैर्विचक्षणैस्ते ते गीताश्लोका गीयन्त इति न परोक्षं धीमताम् । किञ्च, लोके गीतं सरसं सुग्रहं महतः सूक्ष्मानप्यर्थाननायासेन श्रोतॄन् ग्राहयद् भावोत्तेजकं यथाऽनुभूयते, तथैवेयं गीतापि सरसा सुग्रहा निखिलनिगमान्तगह्वरनिलीनान् महतः सूक्ष्मानप्यर्थाननायासेन श्रोतृभ्यः समर्पयन्ती श्रोतॄणां विविधान् भावानुत्तेजयतीति गीतसाम्यादपि गीतेति व्यपदेशो योयुज्यते । यथा परिहासकः संप्रसन्नः प्रेमपरीवाहायमानानि परिहासवाक्यानि अनालोचयन्नेव निर्निरोधमालपति, तथैव भगवान् श्रीकृष्णोऽर्जुनं प्रति संप्रसेदिवान् प्रेमपरीवाहायमानानीमानि पद्यानि सर्वज्ञःवादनालोचयन्नेव जह्नुकन्याप्रवाहन्यायेन निर्निरोधं जगाविति "तमुवाच हृषीकेशः प्रहसन्निव भारत" इत्यनेन व्यज्यते ।

भगवद्गीतेति स्त्रीलिङ्गशब्देन कुतः समाख्यायतेऽयमुपदेशः ? भ्रमरगीतम्, गोपीगीतमित्यादिवद् भगवद्गीतमिति कुतो न क्लीबशब्देन समाख्यायते ? नन्वत एव, यत इहोपनिषद् विशेष्यत्वेनाभिसंहिता । उपनिषच्छब्दः स्त्रीलिङ्गः । तद्विशेषणस्य भगवद्गीताशब्दस्य स्त्रीत्वमौचितीमाटीकते । भगवद्गीतोपनिषदित्येव चिरन्तनी प्रसिद्धिः । अत एव श्रीभगवद्गीताया

एकैकाध्यायावसाने "इति श्रीभगवद्गीतासूपनिषत्सु" इति पाठसंप्रदायो बहोः कालादनुवर्तते। बहुवचनं पूजायाम्। अत एव श्रीशङ्कराचार्यैस्तत्र तत्र "गीतासु" इति व्यवह्रियते। उपनिषदध्यात्मशास्त्रम्। गीतापि अध्यात्मशास्त्रम्। अतोऽप्युपनिषत्त्वं युज्यते। अत एव श्रीरामानुजाचार्यैः स्वकीये गीताभाष्ये "एवमुक्त्वा हृषीकेशम्" (२-१) इति श्लोकं व्याचक्षाणैः "भगवता परमपुरुषेणाध्यात्मशास्त्रावतरणं कृतम्" इत्यभाषि। अपि च, "सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः। पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्॥" इति श्लोकानुसारेण सर्वोपनिषत्सारसंग्रहरूपाया भगवद्गीताया उपनिषत्त्वं किंपुनर्न्यायसिद्धम्। अपि च, महाभारते आदिपर्वणि अनुक्रमणिकाध्याये श्रीभगवद्गीतां लक्ष्यीकृत्य प्रवृत्तेन—"लोकानां च हितार्थाय कारुण्यान्मुनिसत्तमः। अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत्॥" इति वचनेनापि गीताया उपनिषत्त्वं स्फुटीभवति। तत्सिद्धमुपनिषदो विशेष्यत्वात् श्रीभगवद्गीतेति समाख्या युज्यत इति। भगवद्भावभावितेन श्रीकृष्णेन गीतत्वाद्भगवद्गीतेति व्यपदिश्यते। अत एव "श्रीभगवानुवाच" इति निर्दिश्यते।

कुरुक्षेत्रे धार्तराष्ट्रपाण्डवयुद्धारम्भे इयं भगवद्गीता श्रीकृष्णेनार्जुनायोपदिष्टेत्येतत् सर्वथाऽश्रद्धेयमित्यातिष्ठमानानां युक्तिमात्रशरणानां विमर्शकंमन्यानां प्रत्यवस्थानस्य परिहारमन्तरा नास्ति श्रीगीतातात्पर्यनिर्णयार्थस्य मीमांसनस्यावसरलाभ इति तेषां प्रत्यवस्थानप्रकाराणां तत्परिहारप्रकाराणां च निरूपणे प्रवर्तामहे।

प्रत्यवस्थातारः संगिरन्ते यत् सेनाद्वये शङ्खाध्मानादिना युद्धार्थसन्नाहे चरमां कोटिमधिरूढे "प्रवृत्ते शस्त्रसंपाते" इत्युक्तायां परिस्थितावुपनतायां कथं भगवता गीतोपदेशार्थमवसरोऽलम्भि? कथं वा पक्षद्वयनिविष्टाः क्षणविलम्बमप्यसहमानाः क्रोधान्धा योद्धारो यावद्गीतोपदेशसमापनं युद्धेऽप्रवृत्य जोषमासीरन्? कथं नु विविधविचित्रमहार्थगर्भाया भगवद्गीताया रूक्षे परिमिते च तस्मिन् काले उपदेशनं ग्रहणं च कर्तुं शक्येत? कथं वाऽनुकूलेषु वैयाकुलीगन्धानाघ्रातेषु शान्तिमयेषु सौहार्दसंभृतेषु परःशतेषु भगवद्गीतोपदेशौपयिकेषु प्रसङ्गेषूपस्थितेष्वपिताननादृत्य भगवताऽयमजुनस्य विविधवैयाकुलीमापादयन् अशान्तिभरितो रूक्षः प्रसङ्ग एव गीतोपदेशानुकूलत्वेन निर्धार्य परिजगृहे? युद्धविमुखमर्जुनं प्रति तस्मिन् परिमिते समये युद्धप्रोत्साहनौपयिकेष्वेवार्थेषु उपदेष्टव्येषु सत्सु कथं नु सर्वज्ञशिखामणेर्देशकालपात्रवेदिनो भगवतः प्रकृतविरुद्धस्यापृष्टस्य सर्वनिर्वेदावहस्य ज्ञानभक्तिप्रधानस्याध्यात्मशास्त्रस्योपदेशो युज्यते? आभिरनुपपत्तिभि-

रिदमेवाध्यवसीयते यत् सम्प्रत्युपलभ्यमानेयं भगवद्गीता कुरुपाण्डवयुद्धे श्रीकृष्णेन भगवताऽर्जुनायोपदिष्टेत्येतत् सर्वथाऽश्रद्धेयमेवेति ।

अस्य प्रत्यवस्थानस्य परिहाराय प्रवृत्ताः केचन भगवद्भक्तिभरिता विद्वांस एवमुत्तरं प्रस्तुवन्ति यद् भगवान् श्रीकृष्णो हृषीकेशः । सर्वप्राणिनां सर्वेन्द्रियाणां प्रेरकः । अस्य प्रेरणामन्तरेण न चतुर्मुखोऽपि स्पन्दितुमलम्, किं पुनर्धार्तराष्ट्राः पाण्डवास्तदीयाश्च । अतो यावद्गीतोपदेशसमाप्ति भगवतः श्रीकृष्णस्य संकल्पेन रुद्धाः सर्वेऽपि सेनाद्वयनिविष्टा योद्धारो युद्धे न प्रावर्तन्त । किञ्च, पाण्डवसेनापतिर्धृष्टद्युम्नः श्रीकृष्णस्य भ्रुकुटीभटकल्पः । श्रीकृष्णस्यादेशमन्तरा स न पाण्डवसेनां संग्रामे प्रवर्तयेत् । कौरवसेनाऽपि सेनापतेर्भीष्मस्याज्ञां विना न युद्धे प्रवर्तेत । स भीष्मः परमास्तिकः पाण्डवपक्षपाती श्रीकृष्णभक्तश्च सन् श्रीकृष्णे पार्थाय गीतामुपदिशति सति तद्विघ्नरूपमादेशं नैव दिशेत् । अतः सेनापतिद्वयस्वभावपर्यालोचने इदमेवावधार्यते यत् सेनयोर्युद्धेऽप्रवृत्तिः श्रीकृष्णस्य गीतोपदेशावसरलाभश्च युज्यत एवेति ।

अत्र परे प्रवावदूका इदमुत्तरमरोचयमानाः प्रत्यवस्थानपरिहारे प्रवृत्ता एवमाचक्षते यद् भगवतः श्रीकृष्णस्य सर्वातिशयिते प्रभावे सत्यपि स प्रभावो गीतोपदेशावसरलाभाय भगवता प्रयुक्त इत्यत्र न किञ्चन प्रमाणमुपलभामहे । अथैषां प्रत्यवस्थानप्रकाराणां यथामहाभारतभगवद्गीतमेते परिहारप्रकारा आञ्जस्येन संगच्छन्ते । तथाहि—महाभारते[1] उद्योगपर्वणि १५५-१५६ तमयोरध्याययोरिदमितिवृत्तं वर्ण्यते यद् दुर्योधनेन स्वकीयानामेकादशानामक्षौहिणीनां सेनापतिपदेषु कृपद्रोणादय एकादशमहावीराः सर्वसेनापतिपदे श्रीभीष्मश्चाभ्यषेचिषतेति । १५७ तमे चाध्याये इदं वर्ण्यते यद् युधिष्ठिरः स्वकीयानां सप्तानामक्षौहिणीनां सेनापतिपदेषु द्रुपदविराटादीन् सप्तमहावीरान् सर्वसेनापतिपदे श्रीकृष्णाज्ञया धृष्टद्युम्नं चाभिषिच्य धृष्टद्युम्नपदादपि श्रेष्ठे पदेऽर्जुनं ततोऽपि श्रेष्ठपदे भगवन्तं श्रीकृष्णं चाभिषिषेचेति । तत्रत्यं "सेनापतिपतिं चक्रे गुडाकेशं धनञ्जयम् । अर्जुनस्यापि नेता च संयन्ता चैव वाणिनाम् सङ्कर्षणानुजः श्रीमान् महाबुद्धिर्जनार्दनः ।" इत्येतद्वचनमत्रावधानमर्हति । तेनेदं विज्ञायते यत् पाण्डवसेनायां सर्वोच्चं पदं भगवते श्रीकृष्णाय समर्पितमिति । अत एव कौरवसेनायां युद्धसन्नाहपिशुने सिंहनादशङ्खध्मानादौ

---

१. अस्मिन् लेखे महाभारताध्यायश्लोकादिसंख्याः टी० आर० कृष्णाचार्येण निर्णयसागरमुद्रणयन्त्रालये मुद्रितं महाभारतग्रन्थमवलम्ब्य दत्ता वेदितव्याः ।

श्रीभीष्मेण कृते तत्प्रतिद्वन्द्वितया पाण्डवसेनायां शङ्खध्मानादेर्वर्णनप्रसङ्गे सर्वप्रथमं भीष्मसमकक्षस्य धृष्टद्युम्नस्य शङ्खध्मानादौ वर्णनीये तदुपेक्ष्य सर्वादौ "पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः" इति श्रीकृष्णस्यैव शङ्खध्मानं वर्ण्यते। पाण्डवसेनायां सर्वातिशायिनि पदेऽभिषेचितस्य श्रीकृष्णस्या देशमन्तरा न कोऽपि युद्धे प्रवर्तेत। सर्वेऽपि पाण्डवसेनापतयो यावद्गीतोपदेशसमाप्ति श्रीकृष्णस्याज्ञां प्रतीक्षमाणा युद्धे न प्रावर्तिषतेति श्लिष्यते। एकतरसेनायां युद्धे विलम्बमानायां सत्यामपर-सेनया धर्मयुद्धप्रवृत्तयाऽनिच्छायामपि तावन्तं कालं विलम्बितव्यमेव भवति। धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः किलोभयपक्षीयाः। अतो धार्तराष्ट्रसेनापि सहसा युद्धे न प्रववृते। "प्रवृत्ते शस्त्रसंपाते" इति गीतावचनं तु आसन्नशस्त्रसंपाततत्परं क्षुद्रयोद्धृषु प्रवृत्तस्य शस्त्रसंपातस्य वर्णने तत्परं वा। क्षुद्रा हि योद्धारोऽमर्षमसहमानाः क्षुद्रनदीप्रवाहन्यायेन झटिति युद्धे प्रवृत्य सपद्येव शान्तोद्योगा भवन्ति। महान्तो योद्धारस्तु स्वपक्षस्थेषु अधिकाधिकपरिपन्थिभिः पीड्यमानेषु तद्दर्शं समुद्रिक्तक्रोधवीर्या विलम्बेनायोधने प्रवर्तन्ते, नाविजिज्य निवर्तन्त इति लोकानुभवसाक्षि-कम्। तत् सिद्धं सेनाद्वये युद्धार्थसन्नाहे सूचितेऽपि झटिति युद्धप्रवृत्तेरनिष्पत्तेर्भगवतः श्रीकृष्णस्य गीतोपदेशावसरः सुलभ एवेति।

किञ्चायं धर्मयुद्धसंप्रदायोऽत्रावधानमर्हति यद् भारतीययुद्धनीतेरयं धर्म उभाभ्यां सेनाभ्यां प्रथमतः शङ्खध्मानादिना स्वकीयो युद्धोत्साहः परस्परं प्रदर्शनीयः। तत एकतर-सेनातोऽपरसेनायां प्रवेशस्य तत्र स्थितानां महनीयानां प्रणामस्य तत आशीर्वादग्रहणस्य परपक्षात् स्वपक्षमाजिगमिषोर्योद्धुर्ग्रहणस्य चावसरो देय इति। अत एव भीष्मपर्वणि पञ्चविंशाध्यायादारभ्य द्वाचत्वारिंशाध्यायान्तेषु अष्टादशस्वध्यायेषु श्रीभगवद्गीतोपदेशे संपन्ने त्रयश्चत्वारिंशेऽध्याये—"ततो धनञ्जयं दृष्ट्वा बाणगाण्डीवधारिणम्। पुनरेव महानादं व्यसृजन्त महारथाः॥" इति पाण्डव-महारथानां युद्धोत्साहमुपवर्ण्यानन्तरमिदमाख्यायते यद् युधिष्ठिरो रथादवतीर्य शान्तवेषः सन् श्रीकृष्णेन भ्रातृभिश्चानुगम्यमानः शत्रुसेनां प्रविश्य तत्र स्थितान् महनीयान् श्रीभीष्मद्रोणकृप-शल्यान् प्रणनाम। तैश्च—"यद्येवं नाभिगच्छेथा युधि मां पृथिवीपते। शपेयं त्वां महाराज परी-भावाय भारत॥ प्रीतोऽहं पुत्र युध्यस्व जयमाप्नुहि पाण्डव। यत्तेऽभिलषितं चान्यत् तदवाप्नुहि संयुगे॥ अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्। इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः॥" इति स्वपरिस्थितिप्रकाशनपूर्वकं जयाशिषा योजितो बभूव। ततो मृत्युकारणमनुयुक्तेन भीष्मेण पश्चाद् दास्यामीति, द्रोणाचार्येण अत्यन्तविश्वसनीयादप्रियं श्रुत्वा प्रायोपवेशं गतस्य मे मृत्यु-रिति, कृपाचार्येण च यद्यप्यहमवध्यस्तथापि युद्धे त्वमेव जेष्यसीत्यभिहितः, शल्यं कर्ण-

तेजोभङ्गं याचमानस्तेन तथास्त्वित्यभिहितः प्रतिनिवर्तनोत्सुको बभूव। भीष्मवधपर्यन्तं नाऽहं योत्स्य इति प्रतिश्रुतपूर्वो कर्णः श्रीकृष्णेन तावत्कालपर्यन्तं पाण्डवपक्षे एत्य तत्परिपन्थिभिर्युध्यस्वेत्यभिहितस्तन्नोररीचकार। अथ युधिष्ठिरः परपक्षात् स्वपक्षे आजिगमिषुं युयुत्सुमादाय प्रतिनिववृते इति। ततश्चतुश्चत्वारिंशादध्यायादारभ्यैव युद्धं वर्ण्यत इति न तिरोहितं महाभारतपाठकानाम्। तत् सिद्धं भगवद्गीतोपदेशानन्तरमपि युद्धारम्भात् पूर्वं युधिष्ठिरस्य परसेनाप्रवेशस्य तत्रत्यपूज्यपुरुषप्रणामस्य तत आशीर्वादग्रहणस्य परपक्षाद्युयुत्सुग्रहणस्य पर्याप्ते समयेऽवशिष्यमाणे सति सुतरां भगवतोऽर्जुनं प्रति गीतामुपदेष्टुं समयः सुलभ एवेति तदवसरदौर्लभ्यचोद्यं महाभारतापरामर्शमूलमेवेति।

विविधमहार्थगर्भाया गीताया अस्मिन् परिमिते रूक्षे समये उपदेशनं ग्रहणं वा कथं शक्यसंभवम्? अर्जुनेन सह मैत्र्यां चिरादनुवर्तमानायामितः पूर्वमर्जुनाय गीतार्थानुपदेशष्टुमनुकूलेषु शमप्रसादमेदुरेषु परःशतेषु प्रसङ्गेषूपस्थितेष्वपि तदा गीतामनुपदिश्यायं वैयाकुलीविषाददुश्चिन्तादिदोषनिकुरुम्बकरम्बितः प्रसङ्ग एव भगवतागीतोपदेशानुकूल्तया कथं पर्यग्राहि! युद्धपराङ्मुखं पार्थं प्रति युद्धप्रोत्साहनौपयिकेष्वार्थेषूपदेष्टव्येषु सत्सु कथं नु सर्वज्ञशिरोमणिना देशकालपात्रविदा भगवता श्रीकृष्णेन प्रकृतविरुद्धमपृष्टं सर्वनिर्वेदावहं ज्ञानभक्तिप्रधानमध्यात्मशास्त्रमुपदिश्यते? इतीमे आक्षेपास्तादात्विकार्जुनपरिस्थितितत्प्रश्नयाथात्म्यापरिज्ञानमूलकत्वादनादेयाः।

तथा हि—आदित आरभ्यार्जुनो महाभारतसंग्रामारम्भपर्यन्तं क्षत्रियवंशप्रसूतत्वात् क्षात्रं धर्ममेव ऐहिकाभ्युदयसाधनमामुष्मिकश्रेयःसाधनं च मन्यमानस्तमेव सश्रद्धं पालयन् त्रिवर्गनिष्ठो बभूव। स महाभारतसंग्रामारम्भे उभयोः सेनयोरवस्थितान् युयुत्सून् अवश्यंभाविमृत्यून् बन्धूनवलोक्यास्थानस्नेहकारुण्यधर्माधर्मधीभिराकुलो विसृज्य सशरं चापं यद्रथोपस्थे उपाविशत् तस्येदमेव निदानं यद् उद्योगपर्वणि धृतराष्ट्रेण पाण्डवेभ्यो हृतराष्ट्रेभ्यो न्यायप्राप्तं राज्यभागमदित्सता पाण्डवेषु बुद्धिभेदमुपजनयितुं प्रेषितेन संजयेन युधिष्ठिरसभामेत्य भीष्मादिहत्यादोषोद्भावनपूर्वं "न चेद्भागं कुरवोऽन्यत्र युद्धात्प्रयच्छेरन् तुभ्यमजातशत्रो। भैक्षचर्यामन्धकवृष्णिराज्ये श्रेयो मन्ये न तु युद्धेन राज्यम्॥" इति प्रोक्तमर्थं शुश्रुववानर्जुनो यथाधृतराष्ट्रप्रतीक्षं संग्रामारम्भे समुद्बुद्धतदर्थसंस्कारस्ता एव युक्तीः—"कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन। इषुभिः प्रतियोत्स्यामि", "गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्षमपीह लोके", "न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः" इत्यनुवदन् युद्धवैमुख्यौत्सुक्यं "न योत्स्ये" इति गोविन्दमुक्त्वा प्रकटीचकार। यद्यपि तदा युधिष्ठिरेण—"ज्ञात्वा मां संजय गर्हयेस्त्वं यदि धर्मे यद्यधर्मे चरामि।

यत्राधर्मो धर्मरूपाणि धत्ते धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः । बिभ्रद्धर्मो धर्मरूपं तथा च विद्वांसस्तं संप्रपश्यन्ति बुद्ध्या ॥ यदि ह्यहं विसृजन् साम गर्ह्यो नियुध्यमानो यदि जह्यां स्वधर्मम् । महायशाः केशवस्तद्ब्रवीतु वासुदेवस्तूभयोरर्थकामः ॥ ईदृशोऽयं केशवस्तात विद्वान् विद्धि ह्येनं कर्मणां निश्चयज्ञम् । प्रियश्च नः साधुतमश्च कृष्णो नातिक्रमे वचनं केशवस्य ॥" इत्युक्त्वाऽत्र निर्णयदानार्थं प्रार्थितेन वासुदेवेन (उद्योगपर्वणि एकोनत्रिंशोऽध्याये)—"न त्वं धर्मं विचरं संजयेह मत्तश्च जानासि युधिष्ठिराच्च । अथो कस्मात् संजय पाण्डवस्योत्साहिनः पूरयतः सकर्म ॥ यथाख्यातमावसतः स्वधर्मे पुरा कस्मात् साधुविलोपमात्थ । अस्मिन् विधौ वर्तमाने यथावदुच्चावचा मतयो ब्राह्मणानाम् ॥ कर्मणाहुः सिद्धिमेके परत्र हित्वा कर्म विद्यया सिद्धिमेके । नाभुञ्जानो भक्ष्यभोज्यस्य तृप्येद्विद्वानपीह विहितं ब्राह्मणानाम् ॥ या वै विद्या साधयन्तीह कर्म तासां फलं विद्यते नेतरासाम् । तत्रेह वै दृष्टफलं तु कर्म पीत्वोदकं शाम्यति तृष्णयार्तः ॥ सोऽयं विधिर्विहितः कर्मणैव संवर्तते संजय तत्र कर्म । तत्र योऽन्यत् कर्मणः साधु पश्ययेन्मोघं तस्यालपितं दुर्बलस्य ॥" इत्यादिभिः पद्यैर्युधिष्ठिरस्य परमधर्मज्ञत्वं धर्मनिष्ठत्वं कर्मज्ञानयोर्विदुषां मतभेदं कर्मत्यागपूर्वकज्ञानापेक्षया कर्मणः श्रैष्ठ्यं कर्मशेषभूतज्ञानस्यैव फलपर्यवसायित्वं मातरिश्वसूर्यचन्द्राग्निजलपृथिवीप्रभृतीनां सर्वदा कर्मनिरतत्वं कर्मानुष्ठानेनैव देवेन्द्रबृहस्पतिरुद्रादित्यवसुयमकुबेरादीनां महर्षीणां च समीहितसिद्धिं प्रतिपाद्य स्वधर्मभूतकर्मानुष्ठानावश्यकतासमर्थनेन स सञ्जयवादः सम्यग् खण्डितः, तथापि तान् भगवत्प्रतिपादितानर्थान् विस्मृत्यार्जुनः समुद्बुद्धकेवलसंजयोदितार्थसंस्कारस्तानेवार्थान् भावमाणो युद्धाद्विमुखो बभूव । गीतोपदेशानन्तरं भगवता—"कच्चिदज्ञानसम्मोहः प्रणष्टस्ते धनञ्जय" इति पृष्टः पार्थः "नष्टो मोहः स्मृतिर्लब्धा" इति समुत्तरयन् पूर्वं भगवदुदितार्थविषये स्वस्य साम्प्रतं गीतोपदेशेन जायमानां स्मृतिं प्राचीकशत् । अस्तु, युद्धारम्भे पार्थः "यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" इति श्रीभगवन्तं कृष्णं शरणमुपेत्य शिष्यभावं परिगृह्य श्रेयोजिज्ञासया पप्रच्छ । युद्धे विजयेन भूमावसपत्ने राज्ये लब्धेऽपि युद्धे मरणेन देवाधिपतिभावे लब्धेऽपि ममायमिन्द्रियशोषकः शोको न दूरीभवेत्, यदि स्वधर्मस्य युद्धस्यैतोऽपि महत्तरे शोकापनोदके परमपुरुषार्थे पर्यवसानं स्यात्, यदि च सा पर्यवसानरीतिर्विज्ञायेत, तदा काममयं शोको दूरीभवेत्, युद्धे च प्रवृत्तिर्जायेत । यदि स्वधर्मस्य युद्धस्य राज्यस्वर्गसुखापेक्षयाऽतिशयितपुरुषार्थपर्यवसायित्वं संभाव्यते, तर्हि तदुपदिश्यताम् । ममत्वेषा मतिः—युद्धस्य तथाविधपुरुषार्थपर्यवसायित्वमसंभवीति । युद्धमिह राज्यसुखे परत्र स्वर्गसुखे वा पर्यवस्यतीत्येव हि वेदादिशास्त्रेषु प्रथितम् । अतो न योऽस्य इत्याशयानेन

पार्थेनाग्रे—"नहि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणाम्। अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम्॥", "न योत्स्ये" इत्यभ्यधायि।

लोके त्रिवर्गनिष्ठानां युद्धे प्रवर्तनार्थं प्रायो ये ये हेतव उपस्थाप्यन्ते, तान् सर्वानपि हेतून् द्वितीयाध्यायस्थैरष्टादशाध्यायस्थैश्च—"स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि" इत्यादिभिः (२।३१–३७, १८।५९–६०) पद्यैरुपदिश्याप्यतृप्तहृदयो भगवान् विजज्ञौ यत् स्वधर्मस्य युद्ध-स्य फलत्वेन ये भूमावसपत्नं राज्यं स्वर्गसुखं वा कामयन्ते तादृशास्त्रिवर्गनिष्ठाः क्षत्रियाधिकारिण एवानेनोपदेशेन युद्धे प्रवर्तयितुं पार्यन्ते। परन्त्वैहिकामुष्मिकफलभोगवैराग्येणातिमात्रशोकेन चाविष्टोऽयं मुमुक्षुरर्जुनो नैभिर्हेतुभिर्युद्धे प्रवर्तयितुं शक्यते। अर्जुनं प्रति प्रतिपाद्यमाना इमे हेतवोऽभ्युच्चयहेतुतामेवार्हन्ति। साम्प्रतमतिमात्रशोकवैराग्यमग्नोऽयं पार्थो निवृत्तत्रिवर्गाधिकारो यदृच्छोपनतापवर्गाधिकारसंपन्नो न तस्मादुत्कृष्टपुरुषार्थाधिकारात् प्रच्यावयितुं शक्यते युज्यते वा। उत्कृष्टाधिकारसोपानमारूढस्य तस्मादवतारणं हि न हितैषिणः कर्म। अतो यावदस्मै अपवर्गाधिकारिणे युद्धादेः स्वधर्मस्यापवर्गपर्यवसायित्वप्रकारो नोपदिश्येत, न तावदयं युद्धे प्रवर्तयितुं शक्येत, नापि कल्याणभाजनं संपद्येत। अतोऽस्मै युद्धादेः स्वधर्मस्यापवर्गपर्यवसानप्रकार उपदेष्टव्यः। तस्यायमेव समुचितः समयः। तथाविधोपदेशश्रवणाधिकारोऽस्य जीवने इदानीमेव पुष्कलो वर्तत इति। एवमभिसन्दधानो भगवान् सर्वस्यापवर्गिकस्य धर्मस्य विशुद्धात्मज्ञानमूलतां विशुद्धात्मज्ञानस्य च "तरति शोकमात्मवित्" इति श्रुत्युक्तरीत्या शोकनिवर्तकसिद्धौषधतां चाभिप्रयन् द्वितीयाध्याये "नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम्" इति महाभारतोदितरीत्या तत्त्वज्ञानप्रधानसांख्यानुरोधेन देहेन्द्रियमनःप्राणबुद्धिभ्यो विलक्षणं नित्यं सततैकरूपं निर्विकारं षड्भावविकारगन्धानाघ्रातमात्मतत्त्वं "न त्वेवाहं जातु नासम्" इत्यादिना "तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि" (२।३०) इत्यन्तेनोपदिश्य, ईदृशविशुद्धात्मज्ञानप्रतिष्ठितं तन्मूलकं तदनुकूलमापवर्गिकधर्मानुष्ठानप्रकारमनुष्ठानप्रधानयोगशास्त्रोदितम् "एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु" इत्यादिना प्रस्तुत्य आपवर्गिकान् निष्कामकर्मयोगज्ञानयोगभक्तियोगान् समग्रगीतयोपदिदेश। एवमुपदिश्यानेन समग्रोपदेशश्रवणेनार्जुने संपन्नं परिवर्तनं जिज्ञासमानेन भगवता—"कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा। कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय॥" इति पृष्टः कौन्तेयः—"नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादाज्जनार्दन। स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव॥" इत्युत्तरयन् "क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ धनञ्जय" इत्यादीनि (२।३,१४,१८,३७,३८,४५,४७,४८,४९,५०;३।८,९,१९,३०,४१,४३;४।१५,४२;६।४६,

८।७,२७;९।२७,३३,३४;११।३३;१२।८-११;१८।५७,६०,६५) "मामेकं शरणं व्रज" इत्यन्तानि (१८।६७) भगवद्वचनानि कर्तव्यत्वेन प्रतिजज्ञे। "विसृज्य सशरं चापं शोकसंविग्नमानसः" इति वर्णितामर्जुनस्य प्राक्तनीमवस्थामुपदेशेन विनिवर्त्य तं श्रीभगवान् यस्यां दशायां प्रतिष्ठापयामास सा दशा संजयेन गीतोपसंहारे "यत्र पार्थो धनुर्धरः" इति वर्ण्यते। तत् सिद्धमस्थानस्नेहकारुण्यधर्माधर्मधियाकुलमैहिकामुष्मिकफलभोगविमुखं भैक्षचर्ययापि चिकीर्षितदेहयात्रानिर्वाहमर्जुनं निवृत्तत्रिवर्गाधिकारमधिरूढापवर्गाधिकारं विज्ञाय श्रीभगवान् ऐहिके राज्ये पारत्रिके स्वर्गसुखे चात्यन्तविमुखोऽयं पार्थो युद्धस्य निरुक्तैहिकामुष्मिकफलसाधनप्रतिपादनेन संग्रामे प्रवर्तयितुं न शक्यते, किन्तु युद्धस्य स्वधर्मस्य निष्कामभावेनानुष्ठीयमानस्यापवर्गपर्यवसायित्वप्रकारप्रतिपादनेनैव युद्धे प्रवर्तयितुं पार्यत इत्यभिसन्दधानः कर्मज्ञानभक्तियोगानुपदिदेशेति।

यद्यपि श्रीकृष्णार्जुनयोर्गाढा मैत्री बहोः कालादनुवर्तते, तयोरत्र यावद् बहून् विषयानधिकृत्य परःसहस्राः संवादा अपि प्रावर्तिषत, ताभ्यां संवादस्य बहवोऽवसरा अपि अलम्भिषत, परन्तु तदा श्रीभगवान् अर्जुनाय कर्मज्ञानभक्तीनामुपदेशस्य तं तमवसरमननुकूलमेव मेने। यतस्तेष्ववसरेषु अर्जुने त्रिवर्गाधिकारसंपत्तिरेव विजजृम्भे, न त्वपवर्गाधिकारसंपत्तिः। अपवर्गानधिकारिणे आपवर्गिकाणां धर्माणामुपदेशो न युज्यते। अनधिकारिणं प्रति कृतो ह्युपदेश ऊषरोप्तबीजवन्निरर्थकः संपद्येत। अत एव ह्यनुशिष्यते—"ऊषरे निवपेद्बीजं षण्ढे कन्यां प्रयोजयेत्। सृजेद्वा वानरे मालां नापात्रे शास्त्रमुत्सृजेत्॥", "आत्मपूजार्थमर्थार्थं दम्भार्थमपि खिन्नधीः। अयोग्येषु वदन् शास्त्रं सन्मार्गात् प्रच्युतो भवेत्॥" इति। अपि च, कर्मज्ञानभक्तियोगरूपा आपवर्गिका धर्मा अत्यन्तं गोपनीया अर्थाः। अत एव हि श्रीभगवान्—"इदं ते गुह्यतमं प्रवक्ष्याम्यनसूयवे" (९।१), "इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया" (१८।६३), "सर्वगुह्यतमं भूयः शृणु मे परमं वचः" (१८।६४) इति तेषामर्थानां परमगुह्यत्वं विस्पष्टमगासीत्। "मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम्" (११।१), "त्वदन्यः संशयस्यास्य छेत्ता नह्युपपद्यते" (६।३८) इत्याचक्षाणस्तेषां गुह्यत्वं संमेने पार्थः। गुह्यानामेषामर्थानामनधिकारिणेऽपृच्छते च प्रकाशनं सर्वथाऽन्याय्यम्। यो यस्य धर्मस्य श्रवणेऽनुष्ठाने चाधिकुरुते, तस्मा एव स धर्म उपदेष्टव्य इति प्राची मर्यादा। अनधिकारिणे क्रियमाण उपदेशो विप्लवाय कल्पेत। अत एव भगवाननुशशास—"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्। जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन्॥" (३।२६),

"तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्" ( ३।२९ ) इति। निकृष्टाधिकारसंपन्नाय यदि उत्कृष्टाधिकार्यधिकर्तव्या धर्मा उपदिश्येरन्, तर्हि स स्वाधिकर्तव्यं धर्मं निकृष्टं मत्वा परित्यजेत्, अधिकाराभावादुत्कृष्टाधिकारिनिर्वाह्यं च धर्मं न निर्वहेदिति स उभयभ्रष्टः संपद्येतेति महती हानिः प्रसज्येत। इदं सर्वमभिप्रेत्यैव भगवान् इतः पूर्वं बहुष्ववसरेषूपनतेष्वप्यनधिकारिणे पार्थाय कर्मज्ञानभक्तीनामपवर्ग्यधर्माणामुपदेशनमयुक्तं मन्वानो महाभारतयुद्धारम्भे यया कयापि विधयार्जुने उपनतां त्रिवर्गाधिकाराच्छ्रेष्ठस्यापवर्गाधिकारस्य संपत्तिं "कुतस्त्वा कश्मलमिदम्" ( २।२-३ ) इति साक्षेपं युद्धार्थं प्रोत्साहने कृतेऽपि "कथं भीष्ममहं संख्ये" ( २।४ ) इत्यादिभिः पार्थवचनै रूढमूलां निश्चिन्वन् अपवर्गाधिकारिणे पार्थाय आपवर्ग्यान् धर्मानुपदिशन् निष्कामयुद्धादिस्वधर्मानुष्ठानस्यापवर्गपर्यवसायितां च ख्यापयन् पार्थं युद्धे प्रोत्साहयामास। तत् सिद्धं महाभारतयुद्धारम्भात् प्राग् अर्जुनेऽपवर्गाधिकारस्यासंपत्तेः कर्मज्ञानभक्तीनामापवर्गिकधर्माणामुपदेशस्य समुचितमवसरमलब्धवता भगवता महाभारतयुद्धारम्भेऽर्जुनस्य जातामपवर्गाधिकारसंपत्तिं परीक्ष्य निर्धारितवता तदात्वे एव एषां धर्माणामुपदेशस्यावसरं प्रापुषा ते धर्माः पार्थायोपादेशिषतेति।

अथ श्रीभगवद्गीतायाः कस्मिन्नर्थे तात्पर्यमिति मीमांस्यते। पार्थस्य स्वधर्मे युद्धे प्रवर्तने गीतायाः परमं तात्पर्यम्। तदर्थं स्वधर्मस्य युद्धस्य निष्कामभावेनानुष्ठीयमानस्यापवर्गपर्यवसायित्वप्रतिपादनेऽवान्तरतात्पर्यम्। यद्द्वारा कर्मयोगस्यापवर्गे पर्यवसानं तयोर्ज्ञानभक्तियोगयोः प्रतिपादनेऽपि गीतायास्तात्पर्यं समस्ति। इदं सर्वमभिसन्धायैव भगवता श्रीरामानुजाचार्येण "एवमुक्त्वा हृषीकेशम्" ( २।९ ), "तमुवाच हृषीकेशः" ( २।१० ) इति श्लोकयोर्व्याख्याने गीताभाष्ये—"एवमस्थाने समुपस्थितस्नेहकारुण्याभ्यामप्रकृतिं गतं क्षत्रियाणां युद्धं परमधर्ममप्यधर्मं मन्वानं धर्मबुभुत्सया च शरणागतं पार्थमुद्दिश्य आत्मयाथात्म्यज्ञानेन युद्धस्य फलाभिसन्धिरहितस्यात्मप्राप्त्युपायताज्ञानेन च विनाऽस्य मोहो न शाम्यतीति मत्वा भगवता परमपुरुषेणाध्यात्मशास्त्रावतरणं कृतम्। तदुक्तम्—"अस्थानस्नेहकारुण्यधर्माधर्मधियाकुलम्। पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम्॥" इति।............"परमपुरुषः प्रसन्निवेदमुवाच—परिहासवाक्यं वदन्निव आत्मपरमात्मयाथात्म्यतत्प्राप्त्युपायभूतकर्मयोगज्ञानयोगभक्तियोगगोचरं "न त्वेवाहं जातु नासम्" इत्यारभ्य, "अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" इत्येतदन्तं वचनमुवाचेत्यर्थः" इति बभाषे। किञ्च, संजययानपर्वस्थस्य—"अस्मिन् विधौ वर्तमाने यथावदुच्चावचा मतयो ब्राह्मणानाम्। कर्मणाहुः सिद्धिमेके परत्र हित्वा कर्म विद्यया सिद्धिमेके॥" इति भगवद्वचनस्य

गीतास्थानां "किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः" (४।१६), "काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः। सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥" (१८।२), "त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः। यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥" इत्येषां भगवद्वचनानां परामर्शे इदमवसीयते यत् श्रीकृष्णावतारसमकालिकानां ब्रह्मवादिनां ब्राह्मणानां नित्यनैमित्तिककर्मानुष्ठाने विप्रतिपत्तेरभावेऽपि काम्यकर्मविषये पुष्कला विप्रतिपत्तिरासीत्। केचिदपवर्गार्थिना काम्यानि कर्माणि बन्धकत्वात् स्वरूपतस्त्याज्यानीत्यातस्थिरे। परे तान्यपि कर्माण्यवश्यमनुष्ठेयानीति मेनिरे। इत्थं विप्रतिपत्तावुपस्थितायां श्रीभगवान् काम्यानामपि कर्मणां निष्कामभावेनानुष्ठीयमानानामपवर्गपर्यवसायित्वादवश्यानुष्ठेयतां स्वमतत्वेन स्थिरीचक्रे। अत एव श्रीभगवता अष्टादशे विप्रतिपत्तिप्रदर्शनोत्तरं—"निश्चयं शृणु मे तत्र त्यागे भरतसत्तम। त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४ ॥ यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥ एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च। कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥" इति तृतीयाध्याये, "मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा। निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥ ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः। श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥ ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्। सर्वज्ञानविमूढाँस्तान् विद्धि नष्टानचेतसः ॥" इति साभिसन्धिकं गीयते। बहोः कालाद्विच्छिन्नप्रचारोऽयमपवर्गपर्यवसायी निष्कामकर्मयोगः पुनरप्यर्जुनायोपदिश्य प्रचारित इति "इमं विवस्वते योगं प्रोक्तवानहमव्ययम्। विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥ एवं परम्पराप्राप्तमिमं राजर्षयो विदुः। स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥ स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः। भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥ एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः। कुरु कर्मैव तस्मात् त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥" इत्येभिश्चतुर्थाध्यायस्थैर्भगवद्वचनैरवसीयते। तत्र यथागीतापरिशीलनं साक्षान्मोक्षोपायत्वरूपमार्थं प्राधान्यं भक्तियोगेऽवश्यप्रतिपिपादयिषितत्वरूपं प्राधान्यं कर्मयोगे फलति।

अथ यथाभगवद्गीतं कर्मयोगज्ञानयोगभक्तियोगानां स्वरूपं तेषामपवर्गपर्यवसानप्रकारश्च मीमांस्यते। सद्गुरुमुपसन्नेन च्छात्रेण तदाज्ञया क्रियमाणाच्छास्त्राध्ययनादुपजायमानं तत्त्वहितपुरुषार्थयाथात्म्यगोचरं परोक्षज्ञानं सर्वस्या अपि आध्यात्मिकसाधनाया आधारभित्तिरिति सर्वसंप्रतिपन्नम्। अत एव "व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन" इति भगवता गीयते। तत्र व्यवसायात्मिका बुद्धिरात्मयाथात्म्यनिश्चयपूर्विका बुद्धिरिति भगवता श्रीरामानुजाचार्येण भाष्यते।

भगवद्भक्तेः शास्त्रजन्यज्ञाने सहकारिकारणत्वम् "मायां न सेवे भद्रं ते न वृथा धर्ममाचरे। शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ॥" ( महाभा० उद्योग० अ० ६८श्लो० ५ ) इति संजयवचनात् सिध्यति। अत एव श्रीवत्साङ्कमिश्रैः पञ्चस्तव्यां वैकुण्ठस्तवे—"न्यायस्मृतिप्रभृतिभिर्भवता निसृष्टैर्वेदोपबृंहणविधावुचितैरुपायैः। श्रुत्यर्थमर्थमिव भानुकरैर्विभेजुस्त्वद्भक्तिभावितविकल्मषशेमुषीकाः ॥ १५ ॥ ये तु त्वदङ्घ्रिसरसीरुहभक्तिहीनास्तेषाममीभिरपि नैव यथार्थबोधः। चित्तन्नमञ्जनमनापुषि जातु नेत्रे नैव प्रभाभिरपि शङ्खसितत्वबुद्धिः ॥ १६ ॥" इति श्रीभगवानुपश्लोक्यते।

अधिगतशास्त्रजन्यतत्त्वहितपुरुषार्थगोचरज्ञानवत्सु मुमुक्षुषु साधकेषु विषयव्याकुलबुद्धयोऽविजितमनसः साधकाः कर्मयोगेऽधिक्रियन्ते। अव्याकुलबुद्धयो विजितमनसस्तु साधका ज्ञानयोगेऽधिक्रियन्ते।

तत्र कर्मयोगो नाम प्राप्तशास्त्रजन्यजीवपरमात्मयाथात्म्यज्ञानेन साधकेन स्वेन कर्तुं शक्यैः फलसङ्गादिरहितैः काम्यकर्मभिर्नित्यनैमित्तिकैश्च सह सनियमं परिगृहीतः कर्मविशेषः। अस्यावान्तरभेदाः "दैवमेवापरे यज्ञम्" इत्यादिभिर्गीता देवार्चनतपस्तीर्थदानयज्ञादयः। अयं कर्मयोगो ज्ञानयोगं द्वारीकृत्याद्वारीकृत्याऽपि योगमुखेन सपरिकरमात्मावलोकनं साधयति।

ज्ञानयोगो नाम कर्मयोगसेवनादवाप्तान्तःकरणजयेन साधकेन क्रियमाणं देहादिविलक्षणस्य ईश्वरं प्रति आधेयत्वविधेयत्वशेषत्वनियमैः शरीरतया प्रकारभूतस्य स्वकीयात्मस्वरूपस्य निरन्तरचिन्तनम्।

आभ्यां कर्मयोगज्ञानयोगाभ्यां योगमुखेनात्मावलोकने साधिते सति वैषयिकसुखवैतृष्ण्यावहेनात्मानुभवसुखरूपेणाकर्षकेणानाकृष्टस्य विशिष्टाधिकारिणः परमपुरुषार्थस्य भगवत्प्राप्तेरुपायभूते भक्तियोगे प्रवृत्त्यर्थं वस्त्रग्रन्थिनिहितरत्नदर्शनार्थं वस्त्रग्रन्थिदर्शनमिवान्तर्यामिदर्शनार्थं तच्छरीरभूतजीवात्मदर्शनमुपयुज्यमानं सद्भक्तियोगाधिकारकोटौ निविशते। अत एव यथा बाल्ये बालक्रीडाप्रसङ्गेन नरेन्द्रभवनान्निष्क्रान्तस्य मार्गाद् भ्रष्टस्य व्याधगृहीतस्य पक्कणे वर्तमानस्य राजकुमारस्य आप्तोपदेशात् स्वात्मनस्तथात्वं मत्वा विमृशतः स्वात्मनि राजसाम्यमङ्गप्रत्यङ्गादिषु पश्यतो राज्ञि पितृत्वनिबन्धना प्रीतिर्वर्धते, तथाऽस्यापि मुमुक्षोः साधकस्य यथाचार्योपदेशं भगवच्छेषभूते स्वात्मनि कर्मयोगज्ञानयोगाभ्यां तत्साम्याकारेण साक्षात्कृते स्वगतशेषत्वप्रतिसम्बन्धिनि शेषिणि भगवति परा भक्तिः स्वयमेवोदेति, भक्तिसिद्ध्यर्थं न किञ्चिदन्यत् कर्तव्यमवशिष्यत इत्यभिप्रेत्य

भगवता श्रीरामानुजाचार्येण द्वादशाध्यायस्थस्य "अथैतदप्यशक्तोऽसि" इत्यस्य श्लोकस्य व्याख्यायां भाष्यते—"ततोऽनभिसंहितफलेन मदाराधनरूपेण कर्मणा सिद्धेनात्मध्यानेन निवृत्ताविद्यादिसर्वतिरोधाने मच्छेषतैकस्वरूपे प्रत्यगात्मनि साक्षात्कृते सति मयि परा भक्तिः स्वयमेवोत्पद्यते" इति ।

भक्तियोगो नाम अनन्यनिष्ठस्यानन्याधीनस्यानन्यशेषभूतस्य भगवतः स्वरूपादिकं विषयीकुर्वन् निरतिशयप्रीतिरूपो ध्यानविशेषः । स च तैलधारावदविच्छिन्नस्मृतिरूपः साक्षात्कारतुल्यवैशद्यवान् परमपदप्रयाणदिवसपर्यन्तमहरहरनुष्ठानेन वर्धमानोऽन्तिमप्रत्ययाधिको ज्ञानसन्ततिविशेषः । अस्य वर्णाश्रमधर्मा ज्ञानविकासहेतुभूतसत्त्वविवृद्धिप्रतिबन्धकरजस्तमोमूलभूतपापनिबर्हणेनेतिकर्तव्यतां भजन्ते । अयं मोक्षोपायतया विहितो भक्तियोगः परा भक्तिरिति गीयते । प्रीतिरूपायां भक्तौ तरतमभावो न्यायप्राप्तः । विषयस्वभावविशेषाभिमानाभ्यासभेषजादिभिः प्रेमवृद्धिः कामशास्त्रादिष्वपि वर्ण्यते । भक्तौ भोग्याकाराविर्भावतारतम्यात् तारतम्यं योयुज्यते । अस्याः परभक्तेः परम्परया हेतुभूतः सात्त्विकपरिशीलनादिजनितो भगवद्विषये प्रीतिविशेषः सर्वेश्वरः सम्यग् ज्ञातव्य इत्यभिनिवेशस्य कारणं सन् भक्तिरित्याख्यायते । अनया भक्त्या "शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्" इत्युक्तरीत्या शास्त्रजन्यतत्त्वज्ञानकर्मयोगादिपरम्परया जनिता परा भक्तिः 'श्रीभगवान् साक्षात्करणीयः' इत्यभिनिवेशमुत्पादयन्ती "योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम्" इति न्यायेन भगवत्प्रार्थनायां प्रवर्तयन्ती एतत्प्रार्थनामात्रनिबन्धनभगवत्प्रसादविशेषेण तत्कालनियतं परिपूर्णं भगवत्साक्षात्कारमुपजनयति । अयं साक्षात्कारः परज्ञानमित्यभिधीयते । इत्थं निरतिशयभोग्यस्य भगवत्स्वरूपस्य साक्षात्कारेण अतिपिपासार्तस्य जलदर्शनेन जल इव भगवत्स्वरूपादिविषये जनितोऽत्युत्कटः प्रीत्यतिशयः परमभक्तिरित्याख्यायते । इयं परमभक्तिरसंकुचितं भगवदनुभवमन्तरात्मधारणस्याशक्यतामापादयन्तं भगवत्प्राप्तावभिनिवेशमुत्पादयन्ती भगवत्प्राप्तिसिद्ध्यर्थं सशपथं सनिर्बन्धं च भगवत्प्रार्थने साधकं प्रेरयन्ती झटिति स्वप्राप्तिप्रतिपादनार्थं सर्वेश्वरस्य त्वरातिशयमुत्पाद्यैनं साधकमभिनिवेशोपशमनपूर्वं भगवन्तं प्रापयति, मोक्षपदे प्रतिष्ठापयति, नित्यासंकुचितभगवदनुभवतज्जनितप्रीतिकारितभगवत्कैङ्कर्यसाम्राज्येऽभिषेचयति, पुनरावृत्तिं प्रतिबध्नीते—अत्रेदमवधेयम्-परा भक्तिरुपायकोटौ निविशते । परज्ञानपरमभक्ती फलकोटौ निविशेते इति ।

यद्यपि शास्त्रजन्यतत्त्वज्ञानवतो मुमुक्षोः साधकस्य चित्तक्षेत्रे कर्मज्ञानभक्तिबीजानि सममेवोप्यन्ते, अत एवास्य कर्मयोगः "कर्मण्यकर्म यः पश्येत्" इत्येतत्प्रकरणभाष्योक्तरीत्यात्म-

याथात्म्यानुसन्धानगर्भतया ज्ञानाकारः "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति गीतावचनानुसारेणाराध्येश्वरभक्तिगर्भः प्रवर्तते। ज्ञानयोगोऽपि "काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः" इत्युक्तेः काम्यकर्मसंन्याससंवलितः सन्नपि "नहि कश्चित् क्षणमपि जातु तिष्ठत्य-कर्मकृत्" ( ३।५ ), "नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः" ( १८.११ ) इत्युक्तेर्नित्यनैमित्तिकवर्णाश्रमधर्मसंवलितस्तदाराध्येश्वरभक्तिगर्भश्च प्रवर्तते। भक्तियोगोऽपि—"यत्करोषि यद-श्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥" ( ९।२७ ) इत्युक्ते-र्भगवदर्पणबुद्ध्यानुष्ठीयमानैर्वर्णाश्रमधर्मैरितिकर्तव्यताकोटिनिविष्टैः संवलितः स्वपरयाथात्म्यज्ञान-मिश्रितः प्रवर्तते। एवं त्रयाणां योगानां त्रिभिः परस्परसंगमे सत्यपि क्षीरशर्करान्यायेन गुण-भावेनेतरानुप्रवेशो न विभागभञ्जक इति योगत्रैविध्यमुपपद्यते।

साधकस्य चित्तक्षेत्रे सममुप्तेषु कर्मज्ञानभक्तिबीजेषु अङ्कुरोद्भेदनपूर्वं स्कन्धशाखाप्रशाखा-रूपेण प्रवर्धमानेष्वपि साधकजीवने आदौ निष्कामकर्मप्रचुरता ततस्ततोऽपि ज्ञानविकासप्राचुर्यं ततस्तस्मादपि भक्तिप्राचुर्यं कृतपदं भवति। तत्रेदमेव कारणम्, यत् संसारी जीवोऽनादेः कालात् क्रियासमभिहारेण कर्म कुर्वन्नेव संसरतीति तस्य चिराभ्यस्तकर्मणां शास्त्रोदितरीत्या निष्काम-भावेनानुष्ठाने नातीव क्लेशः। अत एव मुमुक्षुः साधकः प्रथमतो ज्ञानभक्त्यपेक्षयाऽतिमात्रप्रवृद्ध-निष्कामकर्ममयजीवनः संपद्यते। पूर्वानभ्यस्तस्यासंभावनाविपरीतसंभावनास्पदस्य शास्त्रजन्यात्म-याथात्म्यज्ञानस्य स्वानुभवरूपतासंपादनं निष्कामकर्मयोगापेक्षयाऽधिकक्लेशसाध्यम्। देहादि-विविक्तं निर्विकारं सततैकरूपं ज्ञानानन्दमयमात्मस्वरूपं विदन्नपि विद्वान् देहात्माभिमानवशंवदो हि लौकिककर्मसु चेष्टते। निष्कामकर्मानुष्ठानेन बुद्धौ विशुद्धायां स्वानुभवात्मिकात्मयाथात्म्य-चिन्तनधारा लब्धपदा भवतीति कर्मयोगपरिपाकोत्तरं साधकस्य जीवनमात्मयाथात्म्यानुभवप्रचुरं संपद्यते। आत्मयाथात्म्यानुसंधानगर्भस्यात एव ज्ञानाकारस्य कर्मयोगस्य सततानुष्ठानेनापि जीवने आत्मयाथात्म्यानुभवप्राचुर्यं सुसंपादम्। विधिप्रेरितः साधकः कर्मयोगज्ञानयोगावनुतिष्ठति। विधिमात्राद्भक्तियोगे उत्कटा प्रवृत्तिर्नानुभविकी। निरतिशयप्रीतिरूपायां परभक्तौ प्रवृत्तिः सुदृढे विषयवैलक्षण्यज्ञाने साशेषविशेषतन्महिमज्ञाने एवायतते। नहि "मयि प्रीयस्व, नोचेदत्याहितं भविष्यति" इति विधिमात्रेण कस्यचित्कस्मिंश्चिदुत्कटा प्रीतिरुदेति। अत एव "परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि" इति वर्णिता परभक्तिरत्यन्तक्लेशसाध्या। सा भगवद्विषयिणी परा भक्तिः "अथैतदप्यशक्तोऽसि" ( १२।११ ) इति श्लोकभाष्योदितरीत्या स्वकीये परशेषतैकरसे आत्मस्वरूपे साक्षात्कृते एव समुदेतीति तृतीयपर्वण्येव साधकस्य जीवनं ज्ञानकर्मप्राचुर्यमभि-

भूयाभिवर्धमानेन परभक्तिरसेनाप्लुतं भवति। कर्मज्ञानभक्तीनामयं परिपाकक्रमो भगवद्गीताया अष्टादशाध्याये उपसंहारप्रकरणे "स्वे स्वे कर्मण्यभिरतः" इत्यत आरभ्य "विशते तदनन्तरम्" इत्यन्तैः श्लोकैः प्रतिपाद्यते।

तथा हि—"स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः। स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥" (१८।४५), "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥" इति कर्मयोगफलभूतां संसिद्धिमभिधाय, ततः "सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे। समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥" इति ज्ञानयोगसाध्यां ब्रह्मशब्दाभिधेयपरिशुद्धात्मस्वरूपप्राप्तिं प्रस्तुत्य "बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च। शब्दादीन् विषयाँस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥ विविक्तसेवी लघ्वाशी यतवाक्कायमानसः। ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥ अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम्। विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥" इत्यन्तैः श्लोकैर्ध्यानयोगरूपतामापन्नेन ज्ञानयोगेन ब्रह्मशब्दाभिधेयपरिशुद्धात्मस्वरूपप्राप्तिं प्रतिपाद्य, ततः "ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥" इत्याविर्भूतपरिशुद्धात्मस्वरूपस्य साधकस्य वैशिष्ट्योद्घाटनपूर्वं परभक्तिलाभोऽवर्णि। अनेन ब्रह्मभावलाभमात्रेण न पुरुषार्थपर्यवसानमिति गम्यते। ततो "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥" इति श्लोके पूर्वार्धेन परभक्त्या जायमानं तत्कालनियतपरिपूर्णभगवत्साक्षात्काररूपं परज्ञानं "मां तत्त्वतो ज्ञात्वा तदनन्तरं तत्त्वज्ञानानन्तरं ततो भक्तितो मां विशते" इत्यर्थकेनोत्तरार्धेन परमभक्तिर्निर्दिश्यते। तदनन्तरमित्यनेन पौनरुक्त्यापातात् तत इत्यस्यानन्तर्यार्थकत्वं न युज्यते, किन्तु भक्तिपरामर्शपूर्वकं तत्त्वतः प्रवेशे भक्तिहेतुत्वार्थकत्वमेव युक्तम्। किञ्च, एकादशाध्याये "भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥५४॥" इति सात्त्विकपरिशीलनादिजनितायाः "सर्वेश्वरस्तत्त्वतो ज्ञातव्यः" इत्यभिनिवेशहेतुभूताया भगवति प्रीतिविशेषरूपाया भक्तेस्तत्त्वतो भगवद्ज्ञानहेतुत्वस्य तस्या एव परभक्तिरूपतामापन्नायास्तत्त्वतो भगवद्दर्शनहेतुत्वस्य तस्या एव परमभक्तिरूपतामासेदुष्यास्तत्त्वतो भगवत्प्रवेशहेतुत्वस्य चाभिधानात् तदनुरोधेनात्र "भक्त्या मामभिजानाति" इति परभक्तेर्भगवत्साक्षात्कारहेतुत्वस्याभिहितत्वात् "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" इति

परमभक्तेस्तत्त्वतो भगवति प्रवेशं प्रति हेतुत्वमेव प्रतिपाद्यत इति स्थानप्रमाणान्निर्णीयते। तत्सिद्धमष्टादशाध्यायोपसंहारे गीतासारप्रतिपादकप्रकरणस्थैरेभिः श्लोकैः कर्मज्ञानभक्तियोगानां परिपाकक्रमः सुस्पष्टमभिधीयत इति।

अथ कर्मयोगज्ञानयोः कतरस्य श्रैष्ठ्यं श्रीभगवानभिप्रैतीत्येतद् तद्वचोभिरेव प्रतिपाद्यते। तत्र कुत्र कुत्र कैः कैः शब्दैरेतावेतन्निष्ठाश्चाभिधीयन्ते? किमेतयोः समुच्चयो विकल्पो वा भगवतोऽभिप्रेत इति विशदीकृत्य विकल्पे प्रमाणिते कतरस्य श्रैष्ठ्यं भगवदभिप्रेतमिति मीमांस्यते।

गीतायां कर्मयोगयोगशब्दाभ्यां कर्मयोगो ज्ञानयोगसांख्ययोगसांख्यकर्मसंन्याससंन्यासशब्दैर्ज्ञानयोगश्च तत्र तत्र प्रतिपाद्यमानो दृश्यते। तन्निष्ठाश्च सांख्ययोगियोगशब्दैरभिधीयन्ते। तत्र "ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्" (३।३), "अन्ये सांख्येन योगेन कर्मयोगेन चापरे" (१३।२४), "संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ। तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते॥" (५।२), "सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः। एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्॥ यत् सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते। एकं सांख्यं च योगं च यः पश्यति स पश्यति॥" (५।४-५) इत्यादिनिर्देशा अत्र मानम्। अत्र "काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः" (१८।२) इत्युक्त्या ज्ञानयोगस्य काम्यकर्मस्वरूपत्यागविशिष्टत्वात् संन्यासकर्मसंन्यासशब्दाभ्यां ज्ञानयोग उच्यते। कर्मयोगाङ्गभूतार्थप्रतिपादकः संन्यासशब्दस्तु फलत्यागपरः। अत्र "यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते" (१८।११) इत्यभिधाय "अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित्॥" (१८।१२) इत्यत्र संन्यासिशब्देन कर्मफलत्यागी ह्यभिधीयते। क्वचित् "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते" इत्यादौ नैष्कर्म्यशब्देन ज्ञानयोगेऽभिधीयते।

"सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः। एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्॥५।४॥ यत् सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते। एकं सांख्यं च योगं च यः पश्यति स पश्यति॥ ५।५॥" इति श्लोकाभ्यां कर्मयोगेन ज्ञानयोग एव साध्यते, ज्ञानयोगेनैव योगद्वारा आत्मदर्शनं साध्यते, इत्येतत् कर्मज्ञानयोगयोर्भिन्नफलकत्वं निरस्य एकफलकत्वपक्षस्य स्थिरीकरणात्, समानफलकयोस्तयोर्विकल्पोऽविशिष्टफलत्वादिति न्यायेन विकल्पोऽभिप्रेत इति गम्यते। एतयोः कर्मज्ञानयोगयोः "ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना। अन्ये सांख्येन योगेन कर्मयोगेन चापरे

॥ १३। २४ ॥" इति श्लोकेनात्मदर्शनं फलमिति सिध्यति । तत्र "ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन । तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे । तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥" ( ३।१-२ ) इत्यर्जुनानुयुक्तेन भगवता मया अव्यामिश्रितमेवाभ्यधायीत्यभिधित्सया "लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ । ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥" ( ३।३ ) इति प्रतिपादनाद् ज्ञानयोगकर्मयोगयोर्विभिन्नाधिकार्यधिकर्तव्यता सिध्यति । तथा च समानफलकयोर्विभिन्नाधिकारिकयोरेतयोरधिकारिभेदेन व्यवस्थितविकल्पः सिध्यति । विषयव्याकुलबुद्धियुक्तानां कर्मयोगेऽधिकारः अव्याकुलबुद्धीनां विजितान्तःकरणानां ज्ञानयोगेऽधिकार इति व्यवस्था सर्वपरामर्शेन सिध्यति । तदुपपादनं यथा— "प्रकृतिविविक्तमीदृशमात्मस्वरूपं तदेव सर्वदाऽनुसन्धेयमिति शास्त्राणि प्रतिपादयन्तीति ज्ञानवानपि स्वस्याः प्रकृतेः प्राचीनवासनायाः सदृशं चेष्टते" इति भाषितार्थकेन "सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि" ( ३।३३ ) इत्यनेन "अविनष्टपापतया अजितान्तःकरण आत्मज्ञानाय प्रवृत्तो विषयप्रवणतया आत्मनि विमुखीकृतमना विषयानेव स्मरन् य आस्ते, अन्यथा संकल्प्यान्यथा चरतीति स मिथ्याचार इत्युच्यते । आत्मज्ञानायोद्युक्तो विपरीतो विनष्टो भवतीत्यर्थः" इति भाषितार्थकेन "कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥" ( ३।६ ) इति श्लोकेन च सहसा ज्ञानयोगस्य दुःसाधतायाः प्रतिपादनात् फलति नहि सर्वो लौकिकः पुरुषः संजातमोक्षाभिलाषस्तदानीमेव ज्ञानयोगे प्रभवतीति । द्वितीयाध्याये "कर्मण्येवाधिकारस्ते" इत्यादिना अनभिसंहितफलं कर्मानुष्ठेयं विधाय "यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति । तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥" ( २।५२ ) इति विषयव्याकुलतारूपमोहादुत्तीर्णबुद्धेः "श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला । समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥" ( २।५३ ) इति श्लोकेन योगाख्यात्मावलोकनसाधनभूतायाः स्थितप्रज्ञतारूपाया ज्ञाननिष्ठायाः प्रतिपादनात् फलति कर्मयोगानुष्ठानेन क्रमेण जितमनसामव्याकुलबुद्धीनां ज्ञानयोगेऽधिकारः, विषयव्याकुलबुद्धिमतामात्यन्तिकमनोनिग्रहविधुराणां कर्मयोगेऽधिकार इति ।

ज्ञानयोगसिद्ध्यर्थं कर्मयोगस्यावश्यकता "संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः" ( ५।६ ) इत्यनेन "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । न च संन्यसनादेव सिद्धिं समधिगच्छति ॥" ( ३।४ ) इति श्लोकेन च स्फुटीभवति । ययोरयमर्थः श्रीरामानुजाचार्येण बभाषे— "संन्यासो ज्ञानयोगस्तु कर्मयोगादृते प्राप्तुमशक्यः" इति, "न शास्त्रीयाणां कर्मणामनारम्भादेव पुरुषो नैष्कर्म्यज्ञाननिष्ठां प्राप्नोति, न चारब्धस्य शास्त्रीयस्य त्यागात् । यतोऽनभि-

संहितफलस्य परमपुरुषाराधनवेषस्य कर्मणः सिद्धिः सा" इति। तत्सिद्धमधिकारिभेदात् कर्मज्ञानयोर्व्यवस्थितविकल्प इति।

ननु भाषितरीत्या ज्ञानयोगाङ्गस्य कर्मयोगस्य कथं ज्ञानयोगेन सह विकल्पो युज्यत इति चेदित्थम्—अधिकारिविशेषस्य ज्ञानयोगमारुरुक्षोर्विषये ज्ञानयोगाङ्गं भवन्नप्ययं कर्मयोग आफलोदयमभ्यस्यमानकर्मयोगेनैव योगमुखेनात्मदर्शनं लिप्समानस्याधिकारिविशेषस्य विषये "सांख्ययोगौ पृथग् बालाः" इत्यादिश्लोकद्वयोक्तन्यायेन ज्ञानयोगमद्वारीकृत्य साक्षादेव योगमुखेनात्मावलोकनं साधयतीति निरुक्ताधिकारिभेदेन व्यवस्थितविकल्पो युज्यते। अत्रोदाहरणं प्रणवः। प्रणवो हि स्वयं मन्त्रो भूत्वा परमपुरुषार्थं साधयति, नारायणादिमन्त्राङ्गतामुपेत्य स्वविशिष्टतन्मन्त्रद्वारापि तं साधयति।

गीता बहुभिः प्रकारैर्ज्ञानयोगापेक्षया कर्मयोगस्य श्रैष्ठ्यं सुस्पष्टमुद्घोषयति "कर्म ज्यायो ह्यकर्मणः" (३।८), "संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ। तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते॥" (५।२) इति। तत्र ज्ञानयोगात् कर्मयोगस्य श्रैष्ठ्ये गीतयोपस्थाप्यमाना हेतव इमे अवधेयाः—

(१) ज्ञानयोगो दुष्करः कर्मयोगः सुकरः। अत एव शास्त्रतो ज्ञानं प्राप्य सहसा ज्ञानयोगाय प्रवृत्तोऽपि विषयप्रवणतया आत्मनि विमुखीकृतमना विषयानेव स्मरन् मिथ्याचार इति निगद्यते—"कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्। इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते॥" (३।६) इति श्लोकेन। शास्त्रतस्तत्त्वज्ञानं प्राप्य कर्मयोगे प्रवर्तमानः पूर्वस्माद्विशिष्यत इति "यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन। कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते॥" (३।७) इति श्लोकेन प्रतिपाद्यते। कर्मयोगस्य सौकर्येऽयमेव हेतुर्यत् संसरतो जीवस्य कर्मकरणस्यानादिकालसिद्धत्वात् पूर्वाभ्यस्तविषयसजातीयस्य शास्त्रीयस्य कर्मणः कर्मप्रवणैः कर्मेन्द्रियैर्निर्वहणमक्लेशसाध्यम्। प्रकृतिविविक्तात्मविषयकज्ञानस्य पूर्वानभ्यस्तत्वात् तस्य चञ्चलेन मनसा निर्वहणं क्लेशसाध्यमिति।

(२) सुकरत्वादेव कर्मयोगोऽसंभावितप्रमादः। दुष्करत्वाज्ज्ञानयोगः संभावितप्रमादः।

(३) कर्मयोगो न स्वोत्पत्तौ ज्ञानयोगमपेक्षते, किन्तु शास्त्रजन्यज्ञानमेवापेक्षते, यज्ज्ञानयोगेनाप्यपेक्ष्यते। किन्तु अधिकारिविशेषविषयेऽन्तर्गतात्मज्ञानतया ज्ञानाकारः सन् ज्ञानयोगमद्वारीकृत्यैव स्वयमेव योगमुखेनात्मावलोकनं साधयतीति कर्मयोगो ज्ञानयोगनिरपेक्षः। ज्ञानयोगस्तु स्वोत्पत्तौ कर्मयोगमपेक्षते, तथा स्वरूपनिष्पत्त्युत्तरमपि फलसिद्धिपर्यन्तं "शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः" (३।८) इत्युक्तेः कर्मापेक्षते।

( ४ ) सुकरः कर्मयोगः सुखेन शीघ्रमात्मावलोकनं साधयति। दुष्करो ज्ञानयोगस्तु विलम्बेनात्मावलोकनं साधयति। अयमर्थः—"ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति। निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ॥" (५।३), "संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः। योगयुतो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥" (५।६) इत्याभ्यां श्लोकाभ्यां प्रतिपाद्यते। एतयोरयमर्थो भगवता श्रीरामानुजाचार्येण भाष्यते—"यः कर्मयोगी तदन्तर्गतात्मानुभवतृप्तस्तद्व्यतिरिक्तं किमपि न काङ्क्षति, तत एव च किमपि न द्वेष्टि, तत एव द्वन्द्वसहश्च; स नित्यसंन्यासी नित्यज्ञाननिष्ठ इति ज्ञेयः। स हि सुकरकर्मयोगनिष्ठतया सुखं बन्धाद्विमुच्यते। संन्यासो ज्ञानयोगस्तु अयोगतः कर्मयोगादृते प्राप्तुमशक्यः। योगयुक्तः कर्मयोगयुक्तः स्वयमेव मुनिरात्ममननशीलः सुखेन कर्मयोगं साधयित्वा न चिरेण अल्पेनैव कालेन ब्रह्माधिगच्छति, प्राप्नोति। ज्ञानयोगस्तु महता दुःखेन ज्ञानयोगं साधयति, दुःखसाध्यत्वादात्मानं चिरेण प्राप्नोति" इति।

( ५ ) कर्मयोगो लोकसंग्रहसाधकः। ज्ञानयोगो लोकसंग्रहविघातकः। अत एव गीयते-"लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हति। यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥" (३।२०), "सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत। कुर्याद्विद्वान् तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥" (३।२५) इत्यादि। गीता एभिः पञ्चभिर्हेतुभिर्ज्ञानयोगात् कर्मयोगस्य श्रैष्ठ्यं प्रसाधयति।

ननु—"कर्मणा बध्यते जन्तुर्विद्यया तु विमुच्यते। तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥" इत्युक्तरीत्या कर्मणां बन्धकत्वात् कर्मयोगस्य परम्परयापि मोक्षसाधनत्वं कथं युज्यते, कथन्तरां च ज्ञानयोगाच्छ्रैष्ठ्यम्? कर्मस्वरूपसंन्यास एव हि मुमुक्षोर्युज्यत इति चेत्, अत्रेदं प्रतिवचनम्—यद्यपि निषिद्धानि सकामभावेन क्रियमाणानि काम्यानि च कर्माणि बन्धकानि, अत एव काम्यकर्माधिकृता भगवता "यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः" (२।४२) इत्यादिना निन्द्यन्ते। यज्ञार्थं क्रियमाणानि कर्माणि फलसंगकर्तृत्वत्यागपूर्वं निष्कामभावेन क्रियमाणानि युद्धादीन्यपि काम्यकर्माणि बन्धकानि न भवन्ति। अयमर्थः—"यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः। तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ३।९ ॥ अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १८।१२ ॥ यस्य नाहं कृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वापि स इमान् लोकान् न हन्ति न निबध्यते ॥ १७ ॥" इति श्लोकैः प्रतिपाद्यते। निष्कामकर्मणा कर्ता न बध्यते इत्यत्रात्मानं दृष्टान्ततयोपस्थापयन् भगवान् स्वमादर्शीकृत्य लोकेन निष्कामं कर्म कर्तव्यमिति "चातुर्वर्ण्यं

मया सृष्टं गुणकर्मविभागशः । तस्य कर्तारमपि मां विद्धयकर्तारमव्ययम् ॥ न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा । इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥" (४।१३-१४) इति श्लोकाभ्यामनुशास्ति । किञ्च, "पञ्चैतानि महाबाहो कारणानि निबोध मे । सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥ शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥" १८।१३-१५ ॥, "तत्रैवं सति कर्तारमात्मानं केवलं तु यः । पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥" ( १८।१६ ) इत्युक्तरीत्या सर्वेषु कर्मसु पञ्चकारणकेषु सत्सु तत्राहमेवास्य कर्तेति कर्तृत्वाभिमानस्य बन्धकत्वात् तमुत्सृज्य "तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः । गुणा गुणेषु वर्तन्ते इति मत्वा न सज्जते ॥" ३।२८ ॥ इति श्लोकोदितरीत्या सत्त्वादिगुणेषु, "इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्" ( ५।९ ) इत्युक्तरीत्येन्द्रियेषु, "सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी । नवद्वारे पुरे देहे नैव कुर्वन्न कारयन् ॥" १५।१३ ॥ इति देहे, "ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥" ५।१० ॥ इति श्लोकोक्तरीत्या ब्रह्मणि च प्राप्ताप्राप्तविवेकन्यायेन सांसारिककर्मकर्तृत्वमनुसंदधानेन "कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन । सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥" १८।९ ॥ इति श्लोकविवक्षितं "भगवानेव स्वनियाम्यस्वरूपस्थितिप्रवृत्तिकेन मया स्वीयैश्चोपकरणैः स्वाराधनैकप्रयोजनाय परमपुरुषः सर्वशेषी स्वशेषभूतमिदं कर्म स्वस्मै स्वप्रीतये स्वयमेव कारयति" इत्येवंविधानुसन्धानरूपं सात्त्विकत्यागं पुरस्कृत्य क्रियमाणानि, तथा "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत् तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥" ॥ ९।२० ॥ इत्युक्तदिशा भगवदर्पणबुद्ध्या क्रियमाणानि अनिषिद्धानि सर्वाणि कर्माणि न केवलं पूर्वोक्तरीत्या अबन्धकानि, किन्तु "असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः" ( ३।१९ ), "कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः । जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥" (२।५१), "शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः । संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥" इत्युक्तरीत्या आत्मकल्याणाय कल्पन्ते । तदेवं कर्मयोगस्य बन्धकत्वचोद्यं समाहितम् । "कर्मणा बध्यते जन्तुः" इति वचनं तु निषिद्धं सकामभावेनानुष्ठितं काम्यं कर्म च गोचरयति, न त्वतथाविधं कर्मेति न तद्विरोधः । किञ्च, निष्कामभावेन क्रियमाणो यज्ञादिकर्मयोगः "देवान् भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥"

इत्युक्तदिशा लोकद्वयस्थानां श्रेयसे कल्पते। यज्ञादिचक्रस्याननुवर्तने निष्फलजीवितत्वरूपः प्रत्यवायो गीयते—"एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः। अघायुरिन्द्रियारामो मोघं पार्थ स जीवति॥" (३।१६) इति। किञ्च, सर्वकर्मस्वरूपसंन्यासोऽसाध्यत्वान्नोपायो भवितुमर्हति। तथा च तस्यासाध्यता गीयते—"नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्। कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥" (३।५), "शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः" (३।८), "नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः" (१८।११) इति। तत्सिद्धं निष्कामकर्मयोगोऽबन्धको मोक्षहेतुश्चेति, सर्वकर्मस्वरूपसंन्यासोऽसाध्य इति च।

तदेवमस्मिन् निबन्धे (१) अस्य श्रीकृष्णार्जुनसंवादस्य भगवद्गीतेति नामकरणे किं बीजम्? (२) प्रवृत्ते शस्त्रसंपाते कथं भगवद्गीतोपदेशस्य पर्याप्तोऽवसरो भगवताऽलम्भि? (३) कथं तात्कालपर्यन्तं क्रोधान्धा योधा जोषमासाञ्चक्रिरे? (४) कथं रूक्षोऽशान्तिमयश्च समय एव गीताचार्येणोपदेशानुकूलत्वेन पर्यग्राहि? (५) कथं तदा युद्धप्रोत्साहनार्थेष्वेवार्थेषूप-देष्टव्येषु सत्सु प्रकृतविरुद्धस्य सर्वनिर्वेदावहस्य अध्यात्मशास्त्रार्थस्योपदेशो युज्यते? (६) गीतायाः कस्यार्थस्य प्रतिपादने परमं तात्पर्यम्? (७) गीतोदितार्थानां मध्ये कस्मिन्नर्थे शाब्द-प्राधान्यम्? कस्मिन्नर्थे आर्थं तात्पर्यम्? (८) गीतोदितानां कर्मज्ञानभक्तियोगानां स्वरूपं किम्? किं कर्मज्ञानभक्तियोगानां विकासे कश्चित् क्रमोऽस्ति? यद्यस्ति तत्र किं प्रमाणम्? (९) कर्म-ज्ञानयोः कतरस्य श्रैष्ठ्यम्? तत्र च के हेतवः? (१०) किं कर्मज्ञानयोः समुच्चयो विकल्पो वा? (११) कर्मणां बन्धकत्वात् कर्मयोगस्य कथमुपादेयता? सर्वकर्मस्वरूपसंन्यासः कुतो नोपा-देयः? इत्येकादशार्था यावद्बुद्धिबलोदयं निष्पक्षपातया शैल्या विचार्य निरणायिषत॥

सारासारविवेकज्ञा गरीयांसो विपश्चितः।
प्रमाणतन्त्राः सन्तीति कृतो गीतार्थसंग्रहः॥
इति शम्॥

---

# वैष्णवेषु तदितरेषु चागमेषु षडध्वविमर्शः

श्रीव्रजवल्लभद्विवेदः, अनुसन्धानसंस्थानम्, वा०सं०वि०वि०वाराणसी।

### शब्दब्रह्म

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति॥

पुराणेष्वागमेषु चैष श्लोको नैकत्र दरीदृश्यते। व्याकरणे विशेषतो वाक्यपदीये ब्रह्मकाण्डे शब्दब्रह्म प्रतिपादितम्, तत् परब्रह्मस्थानीयमेव। आगमेषु तदनुवर्तिषु पुराणेषु च शब्दब्रह्म विशेषतः, संक्षेपतश्च परब्रह्म निरूप्यते। शैवशाक्तवैष्णवेषु सर्वेष्वागमेषु स्वस्वप्रक्रियया चर्चितोऽयं विषयः।ताननुरुद्ध्य षडध्वभिन्नस्य शब्दब्रह्मणोऽत्र विचारः प्रस्तूयते।

### आगमप्रतिपाद्यम्

सर्वेष्वागमेष्वविशेषेण चत्वारः प्रतिपाद्या विषया भवन्ति ज्ञानक्रियाचर्यायोगनामानः। तत्र शिवपुराणे इत्थं वर्तन्ते लक्षणान्येतेषाम्—

पशुपाशपतिज्ञानं ज्ञानमित्यभिधीयते।
षडध्वशुद्धिर्विधिना गुर्वधीना क्रियोच्यते॥
वर्णाश्रमप्रयुक्तस्य मयैव विहितस्य च।
ममार्चनादिधर्मस्य चर्या चर्येति कथ्यते॥
मदुक्तेनैव मार्गेण मय्यवस्थितचेतसः।
वृत्त्यन्तरनिरोधो हि योग इत्यभिधीयते॥[1] इति।

अत्र ज्ञानं विहायान्येषां लक्षणानि सर्वत्र समानान्येव। क्रियाया लक्षणस्यावलोकनेन परिज्ञायते यत् कियद् वर्तते षडध्वपरिज्ञानस्य प्रयोजनम्।

### वैष्णवागमाः

"पाञ्चरात्रं भागवतं तथा वैखानसाभिधम्"[2] इत्यत्र वैष्णवागमानां भेदत्रयं निर्दिष्टम्।

---

१. शि० पु० ७।२।१०।३१-३३।

२. नित्याषोडशिकार्णवसेतुबन्धे भास्कररायरचिते उद्धृतम्। द्रष्टव्यम्—पृ० ४।

तत्र वैखानसागमः प्रसिद्धचरः, दक्षिणभारते तिरुपतिक्षेत्रे भगवतः श्रीनिवासस्य पूजोत्सवादिकं वैखानसागमप्रक्रिययैव भवति। तत्रत्यवेङ्कटेश्वरशोधसंस्थानतश्चानेके ग्रन्थास्तदागमप्रतिपादकाः प्रकाशिताः। तत्र दक्षिणभारतेऽन्येषु स्थलेषु च तदागमीया नैका मातृका अद्यावध्यप्रकाशिताः सन्ति। पाञ्चरात्रस्य भागवतस्य च मतस्य पृथक्त्वेनोल्लेखो हर्षचरिते[1] बाणभट्टरचिते दृश्यते। हयशीर्षपञ्चरात्रे[2] पाञ्चरात्रसंहितानां भागवतसंहितानां च पृथक् पृथगुल्लेखो वर्तते। अत्रत्यं भागवततन्त्रं मध्वाचार्येण भागवततात्पर्यप्रकाशे[3] जीवगोस्वामिना च षट्सन्दर्भे[4] उद्धृतम्। एवं सत्यपि साम्प्रतं भागवतागमस्य कापि संहिता सम्प्रदायो वा नोपलभ्यत इव।

## पाञ्चरात्रागमः

पाञ्चरात्रमतं महाभारते शान्तिपर्वणि नारायणीयोपाख्याने विस्तरेण चर्चितम्। "सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः"[5] इत्यत्र पाञ्चरात्रागमस्य प्रधानतमायाः सात्त्वतसंहिताया एवोल्लेख इति प्रतिभातीव। अस्यागमस्य सिद्धान्तानां साहित्यस्य च विशिष्टः परिचयः शर्मण्यदेशीयेन विदुषा डॉ० श्रादरमहोदयेन अहिर्बुध्न्यसंहिताया भूमिकायां विस्तरेण प्रदत्तः। हयशीर्षपञ्चरात्र-अग्निपुराण-कपिञ्जलसंहिता-विष्णुतन्त्र-पाद्मतन्त्राख्येषु पञ्चसु ग्रन्थेषु संकलितानां संहितानाम्नामन्येषां च कतिपयग्रन्थानां साहाय्येन[6] श्रादरमहोदयेन २१५ संख्याकानां संहितानाम्नां संकलनं कृतम्। मार्कण्डेयसंहितायां भारद्वाजसंहितायामपि च संहितानामान्युट्टङ्कितानि सन्ति।

---

१. ...भागवतै...पाञ्चरात्रिकैः...पृ० २३६-२३७ निर्णयसागरसंस्करणम्।

२. द्रष्टव्याः २।२-४ श्लोकाः। अत्र प्रथमं पाञ्चरात्रसंहितानां २५ संख्याकानामुल्लेखः (इमानि च नामानि पाठभेदेन सहाऽग्निपुराणेऽपि ३९ अध्यायारम्भे दृश्यन्ते), तदनन्तरं भागवतसंहितानामथ च सामान्यसंहितानां नामानि सन्ति। अत्र डॉ० श्रादरमहोदयेन अहिर्बुध्न्यसंहिताभूमिकायां सर्वा एताः संहिताः पाञ्चरात्रस्यैवेत्युक्तम्।

३. द्रष्टव्यम्—पृ० १, सर्वमूल-निर्णयसागरसंस्करणम्।

४. द्रष्टव्यम्—पृ० १७,२२ इत्यादिकम्।

५. महाभारते भीष्मपर्वणि, ६६।४० गीताप्रेससंस्करणम्।

६. द्रष्टव्यम्—पृ० ६-१२

तानि च नामानि लक्ष्मीतन्त्रभूमिकायां[1] द्रष्टव्यानि। [2]अनिरुद्धसंहिताभूमिकायामद्यावधि २७५ संख्याकाः पाञ्चरात्रसाहित्यग्रन्था विस्तृते संस्कृतवाङ्मये उद्धृता उपलभ्यन्त इति संसूचितम्। अस्य च विस्तृतस्य साहित्यस्य परिचयः सत्यवसरे पश्चादुपस्थापयिष्यते। उत्पलवैष्णवकृतायां स्पन्दप्रदीपिकायां[3] पाञ्चरात्रश्रुतय उद्धृताः सन्ति। पाञ्चरात्रागमाधारभूत एकायनो वेदः सुबहुशस्तत्र तत्र चर्च्यते। सोऽयमागमः कदाचित् काश्मीरेषु लब्धप्रचार आसीत्। साम्प्रतं तु दक्षिणभारते एवास्य दृश्यते विशिष्टा मान्यता, यत्र श्रीरङ्गक्षेत्रे श्रीविष्णुकाञ्च्यादिषु च पाञ्चरात्रागमप्रक्रिययैव शेषशायिनो भगवतः पूजोत्सवादिकं संपाद्यते।

## पाञ्चरात्रदर्शनम्

रामानुज-निम्बार्क-माध्व-वल्लभ-चैतन्यानां पञ्चानामपि वैष्णवदर्शनानां विकासो वैष्णवागममूलक एव। सर्वदर्शनसंग्रहकारेण[4] माधवेन रामानुजमाध्वयोः पाञ्चरात्रप्रामाण्याङ्गीकाररूपं साम्यं प्रदर्शितम्। निम्बार्कमतीया विचारसरणिः पाञ्चरात्रमूलिकैव प्रायशः। चैतन्यदर्शने भागवततन्त्र-नारदपाञ्चरात्र-ब्रह्मसंहितादीनां विशिष्टः प्रभावः, वल्लभवेदान्ते च प्रायशो भागवतपुराणस्य। एवं सत्यपि सर्वेषामेषां दर्शनानां ब्रह्मसूत्रव्याख्यानपद्धत्या विकासः समजायतेति पाञ्चरात्रपद्धत्या कियद्वैषम्यमिवावलोक्यते। [5]दर्शनानामेषां प्रचारेण पाञ्चरात्रागम उत्तरभारते विद्वत्सभासु साम्प्रतं विस्मृत इव दृश्यते, अथापि वैयाकरणमूर्धन्येन भट्टोजिदीक्षितेन[6] तन्त्राधिकारि-

---

१. द्रष्टव्यम्—पृ० १०-१३

२. द्रष्टव्यम्—पृ० ३

३. द्रष्टव्यम्—पृ० २, ८, २२, २६, ४० इत्यादिकम्।

४. पाञ्चरात्रोपजीव्यत्व···साम्येऽपि···पृ० ४६ ( पूनासं० )

५. रामानुजशिष्याणां कूरेशप्रभृतीनां परम्परासु पश्चात् 'टेंगलै' इत्याख्यया प्रसिद्धे विभागे आलवारोपदिष्टस्य द्रविडवेदस्य प्राधान्येन प्रामाण्यमङ्गीक्रियते। दक्षिणदेशे लोकाचार्यप्रभृतीनां ग्रन्थेषु, उत्तरभारते च कूरेशशिष्यपरम्परायामाविर्भूतस्य रामानन्दस्य च ग्रन्थेषु वैशद्येन दृश्यते पाञ्चरात्रप्रभावः। अद्यापि च तत्राधीयन्ते पाञ्चरात्रसंहिताग्रन्थाः।

६. वाराणस्यां नेपालीसौभाग्यपुस्तकालयतः प्रकाशितम्।

निर्णयाख्ये ग्रन्थे पाञ्चरात्रप्रामाण्यं व्यवस्थापितम्। शक्तिसंगमाख्ये तन्त्रे[1], यस्य रचना प्रायः पातशाह-अकब्बरराज्यकाले समजायत, दशविधवैष्णवदर्शनेषु पाञ्चरात्रस्याप्युल्लेखो वर्तते। महिम्नस्तोत्रे उल्लिखितस्य "त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति"[2] इति सिद्धान्तपञ्चकस्य पुराणवाङ्मये विस्तरेण विवेचनं दृश्यते[3]। तत्र वैष्णवपदेन पाञ्चरात्रमेवाङ्गीकुर्वन्ति सूरयो मधुसूदनसरस्वती-प्रभृतयः। शैवशाक्तागमेषु, स्मृतिग्रन्थेषु, धर्मशास्त्रनिबन्धेषु च प्राचीनार्वाचीनेषु दृश्यते पाञ्चरात्र-चर्चा। "अन्तः शाक्ताः, बहिः शैवाः, लोके वैष्णवाः"[4] इति कौलोपनिषदुक्तिर्वैष्णवागमेषु रहस्यशून्यत्वं सन्देहातीतत्वं सर्वविधदोषशून्यत्वं च ख्यापयति।

महाभारतीये नारायणीयोपाख्याने दृश्यते पाञ्चरात्रसिद्धान्तस्योल्लेख इत्युक्तं प्राक्। सात्त्वत-पौष्कर-जयाख्यसंहिताः पाञ्चरात्रागमेषु रत्नत्रयनाम्ना प्रसिद्धाः। ईश्वर-पारमेश्वर-पाद्मसंहिताः क्रमश आसां संहितानामुपबृंहिकाः। अहिर्बुध्न्यसंहिता लक्ष्मीतन्त्रं च दार्शनिकसामग्रीपरिपूर्णे प्रथिते संहिते। परमसंहिता श्रीमता रामानुजाचार्येण[5] श्रीभाष्ये स्मृता। अगस्त्यसंहिता-सुदर्शन-संहिता-सनत्कुमारसंहिता दक्षिणे उत्तरे च भारते समानरूपेण संमानार्हाः। नारदपाञ्चरात्रस्य ब्रह्मसंहितायाश्च वर्तते वङ्गेषु विशेषतश्चैतन्यदेवानुयायिषु प्रभावः। हयशीर्षपञ्चरात्रं वर्तते प्राचीनः संहिताग्रन्थः सर्वत्र लब्धप्रसरः। अग्निपुराणस्था अनेकेऽध्याया एतत्समानानुपूर्वीका दृश्यन्ते, अथ च तत्र ३९ अध्याये उद्धृतेषु पाञ्चरात्रसंहितानामस्वस्यैव नाम प्रथमं दृश्यते। प्रायः सर्वे एते संहिताग्रन्था मुद्रिता उपलभ्यन्ते, तथापि ज्ञान-योग-क्रिया-चर्याख्यविषयचतुष्टयप्रतिपादकेषु शैव-

---

१. वैखानसो भवेदादौ श्रीराधावल्लभस्तथा।
गोकुलेशो महेशानि तथा वृन्दावनी भवेत् ॥
पाञ्चरात्रः पञ्चमः स्यात् षष्ठः श्रीवीरवैष्णवः।
रामानन्दी हरिव्यासी निम्बार्कश्च महेश्वरि ॥
ततो भागवतो देवि दशभेदाः प्रकीर्तिताः।
[ १।८।३८-४० ]

२. द्रष्टव्यम्—श्लो० ७

३. द्रष्टव्यः—पुराणपत्रिकायां डॉ० वासुदेवशरण-अग्रवालमहोदयस्य 'षट्-कुलीयाः' इति शीर्षको निबन्धः। व० २, अ० १-२, जुलाई १९६०, पृ० २३-४२

४. द्रष्टव्या—भास्कररायभाष्योपबृंहिता कौलोपनिषद्, पृ० ६

५. द्रष्टव्यम्—२-२-४२ सूत्रम्।

## वैष्णवेषु तदितरेषु चागमेषु षडध्वविमर्शः

शाक्तागमेष्विव वैष्णवागमेष्वपि शानमागस्याल्पीयानेवांश उपलभ्यते । तत्र सात्त्वतसंहितां लक्ष्मी-तन्त्रं चाधृत्य षडध्वविचारः शैवशाक्तागमाभ्यां तुलनात्मकया पद्धत्योपबृंहित उपस्थाप्यते ।

डॉ० श्रादरमहोदयेन अहिर्बुध्न्यसंहिताभूमिकायां पाञ्चरात्रागमस्य दार्शनिकाः सिद्धान्ताः सुविशदं व्याख्याताः । परं तत्र तेषां सिद्धान्तानामागमेतरदर्शनैरेव मुख्यतस्तौलनिकी परीक्षा वर्तते । आगमेषु शब्दब्रह्मविषयको विद्यते महान् प्रपञ्चः । स च परित्यक्तः श्रादरमहोदयेन । अत एव तत्र षडध्वविषये न किमप्युक्तम् । डॉ० उडरफमहोदयेन आगमिकदर्शन-साधनापद्धत्यो-र्गहनमनुशीलनमाचरितम्, विशेषतः शाक्तागमानाम् । अनेके ग्रन्थाश्च निबद्धास्तेन महानुभावेन । तत्र "गारलैण्ड आफ लेटर्स" ( वर्णमाला ) नाम्नि ग्रन्थे सप्तविंशे परिच्छेदे शैवशाक्तदर्शन-पद्धत्या षडध्वविचारः समुपस्थापितः । शिवपुराणे, अभिनवगुप्तरचितयोस्तन्त्रसारतन्त्रालोकयोः, स्वच्छन्दतन्त्रादिषु च चर्चितया चर्चयोपबृंहितः सोऽप्यत्रोपस्थाप्यते ।

### पाञ्चरात्रागमे षडध्वानः

सात्त्वतसंहितायाः १९ परिच्छेदे १९४-१९७ पृष्ठेषु संक्षेपेण, लक्ष्मीतन्त्रस्य १८-२२ अध्यायेषु विस्तरेण षडध्वप्रक्रिया प्रतिपादिता । साऽत्र प्रथमं प्रस्तूयते—

[1]वार्णः कलामयश्चैव तात्त्विको मान्त्रिकस्तथा ।
पादिको भौवनश्चैव षडध्वानः प्रकीर्तिताः ॥

[2]वेद्यवेदकनिर्मुक्तं परं ब्रह्माखिलजीवानां मुक्तये स्वशक्त्या स्वयमेव शब्दब्रह्मभावेनोदेति । तत्रेयं प्रक्रिया—

[3]व्यापकं यत्परं ब्रह्म नारायणमनामयम् ।
शान्तता नाम यावस्था साहं शान्ताखिलप्रसूः ॥
तस्या मे य उदेति स्म सिसृक्षाख्योऽल्प उद्यमः ।
स शब्दार्थविभेदेन शान्त उन्मेष उच्यते ॥
शब्दोदयपुरस्कारः सर्वत्रार्थोदयः स्मृतः ।

---

१. लक्ष्मीतन्त्रे, २२।१०-११

२. सात्त्वतसंहितायाम्, १९।१२७-१२८

३. लक्ष्मीतन्त्रे १८।१९-२७ ।

अर्थशब्दप्रवृत्त्यात्मा शब्दस्य स्थूलता हि सा ॥
बोधोन्मेषः स्मृतः शब्दः शब्दोन्मेषोऽर्थ उच्यते ।
उद्यच्छब्दोदयः शक्तेः प्रथमः शान्ततात्मनः ॥
स नाद इति विख्यातो वाच्यतामसृणस्तदा ।
नादेन सह शक्तिः सा सूक्ष्मेति परिगीयते ॥
नादात् परो य उन्मेषो द्वितीयः शक्तिसंभवः ।
बिन्दुरित्युच्यते सोऽत्र वाच्योऽपि मसृणः स्थितः ॥
पश्यन्ती नाम सावस्था मम दिव्या महोदया ।
ततः परो य उन्मेषस्तृतीयः शक्तिसंभवः ॥
मध्यमा सा दशा तत्र संस्कारयति संगतिम् ।
वाच्यवाचकभेदस्तु तदा संस्कारतामयः ॥
चतुर्थस्तु य उन्मेषः शक्तेर्माध्यमिकात् परः ।
वैखरी नाम सावस्था वर्णवाक्यस्फुटोदया ॥

एवं वैखर्यात्मना परिस्फुरितस्य शब्दब्रह्मणः[1] प्रथम उन्मेषो वर्णाध्वा परिकीर्त्यते । वर्णाध्वन आद्या मध्यमा चरमा च रीतिः सूक्ष्मस्थूलवर्णानां मातृकायाश्च स्वरूपप्रदर्शनमुखेन व्याख्याता लक्ष्मीतन्त्रे १९-२० अध्याययोर्द्रष्टव्या ।[2] ततः स शब्दमूर्तिर्भगवान् ज्ञानाद्येन कलाध्वना विवर्तते । पारमेश्वरा ज्ञानादयः[3] षड् गुणा अत्र कलापदेनोच्यन्ते ।[4] अनन्तरं तमिममुपादाय शब्दब्रह्म वासुदेवादिरूपेण तत्त्ववर्त्मना प्रवर्तते ।[5] ज्ञानादीनां षड् गुणानां समष्ट्या व्यूहवासुदेवस्य[6] द्वयोर्द्वयोर्गुणयोस्त्रिकेन च संकर्षणादिव्यूहत्रयस्याविर्भावो भवति ।

---

१. ल० त० २२।११-१२

२. ल० त० २२।१३

३. ल० त० २१।७; ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि षड् गुणाः ।

४. ल० त० २२।१४

५. ल० त० २।५३-५४

६. अहिर्बुध्न्यसंहितायाम्, ५।२५-२८,१७-१८

## वैष्णवेषु तदितरेषु चागमेषु षडध्वविमर्शः

[1]व्यूहाश्च [2]विभवाश्चैव यच्चान्यद्भगवन्मयम् ।
तत्त्वाध्वनो विवृत्तिः सा कीर्तिता परमात्मनः ॥

[3]ततस्तेभ्य आराधनस्य सिद्ध्यर्थं मनसालम्बनाय च परमोदारो मन्त्राध्वा वर्णव्यक्तिकरमुखेन प्रवर्तते । असौ मन्त्राध्वा वासुदेवादिदेवानां मूर्तिभावं व्रजति । [4]स च क्वचिद्बीजरूपेण क्वचित् पिण्डरूपेण, क्वचित् संज्ञारूपेण, क्वचित् पदरूपेणेति चतुर्द्धा प्रवर्तते । [5]जाग्रत्स्वप्नौ सुषुप्तिस्तुर्यं चेति चतुष्टयं पदाध्वनो रूपं ज्ञेयम् । तत्र जाग्रत्स्वप्नसुषुप्तयः प्रसिद्धाः । तुर्यं च पदम्—"[6]तमसानभिभूतस्य सत्त्वस्थस्य विपश्चितः । बाह्यान्तःकरणस्याया वृत्तेरुपरमे सति ॥ शुद्धसत्त्वप्रसादस्य सन्ततिस्तुर्यसंज्ञिता ॥" इति लक्षणलक्षिता तुरीयावस्था । [7]मायादिक्षितिपर्यन्ता भुवनपद्धतिर्भुवनाध्वा विज्ञेयः । प्राकृतोऽसौ भुवनाध्वा [8]चतुर्दशविभागवान् ।

[9]एतेषु षडध्वसु भुवनाध्वा, तुर्यपदं विहाय पदाध्वा च हेयौ, शेषा अध्वान उपादेयाः । हातव्यहानाय प्राप्तव्योपादानाय च मुमुक्षुणा षडध्वशोधनं विधेयम् । [10]तत्रेश्वरेच्छया लब्धगुरुकरुणाकटाक्षस्य मुमुक्षोर्मन्त्राः प्रसादसुमुखाः सन्तो भुवनाध्वन उत्तार्य पदाध्वनश्च पदे पदे वैराग्यं जनयन्त आज्ञाप्रतीक्षका अवतिष्ठन्ते, मायीयाध्वद्वयादुत्तार्य च तमणिमादीनां भोगानां प्राप्तये

---

१. ल० त० २२।१६

२. विभवा एकोनचत्वारिंशत्संख्याकाः सात्वतसंहितायां ६।७७-८३, अहिर्बुध्न्यसंहितायां ५।५०-५६ च द्रष्टव्याः ।

३. ल० त० २२।१६-२०

४. ल० त० २१।१०

५. ल० त० २२।२२-२४

६. ल० त० २२।२५-२६

७. ल० त० २२।२७-२८

८. सा० सं० १६।१३८; ल० त० २१।१५ अत्र चतुर्दशभुवनानि पुराणादिप्रसिद्धान्येव प्रतीयन्ते ।

९. सा० सं० १६-१३६-१४०; ल० त० २१-२५

१०. ल० त० २१।२६-२७; २२।२८-३१; सा० सं० १६।१४५-१४८

स्वस्थानं नयन्ति । अणिमादीनां भोगाद्विरतं तं पश्चादमृतोपमे तत्त्वाध्वनि प्रेरयन्ति । ततस्तत्र [1]सङ्कर्षणादयोऽनुग्रहपराः सन्तस्तं शाश्वते कलाध्वन्यव्ययतां नयन्ति । तत्रस्थः षाड्गुण्यमयो वासुदेवस्तं पश्चात्[2] शब्दब्रह्माभिधेऽध्वनि नित्ये स्वात्मनि योजयति । तत्परिज्ञानाच्च मुमुक्षुः सुशान्तं भगवत्पदमधिगच्छतीति । एवमत्र चिदचिदीश्वरविषयकः, बन्धमोक्षविषयकः, उपायोपेयविषयकश्च सर्वोऽपि दार्शनिकः प्रपञ्चोऽन्तर्भवति ।

## शिवपुराणे तन्त्रसारे च षडध्वानः

[3]शिवपुराणेऽयं वर्तते षडध्वक्रमोद्देशस्तत्लक्षणपुरस्सरः—

कलां तत्त्वं च भुवनं वर्णं पदमतः परम् ।
मन्त्रश्चेति समासेन षडध्वा परिपठ्यते ॥
निवृत्त्याद्याः कलाः पञ्च कलाध्वा कथ्यते बुधैः ।
व्याप्ताः कलाभिरितरे त्वध्वानः पञ्च पञ्चभिः ।
शिवतत्त्वादिभूम्यन्तं तत्त्वाध्वा समुदाहृतः ।
षड्विंश[द्त्रिंश]संख्ययोपेतः शुद्धाशुद्धोभयात्मकः ।
आधाराद्युन्मनान्तश्च भुवनाध्वा प्रकीर्तितः ।
विना भेदोपभेदाभ्यां षष्टिसंख्यासमन्वितः ॥
पञ्चाशद् रुद्ररूपास्तु वर्णा वर्णाध्वसंज्ञिताः ।
अनेकभेदसंपन्नः पदाध्वा समुदाहृतः ॥
सर्वोपमन्त्रैर्मन्त्राध्वा व्याप्तः परमविद्यया ।
कलाध्वनो व्यापकत्वं व्याप्यत्वं चेतराध्वनाम् ॥ इति ।

पाञ्चरात्रागमे सात्त्वतसंहितायां ( पृ० १९६ ) वर्णाध्वनः शब्दब्रह्मापरपर्यायस्य प्राधान्यमन्येषां च गौणत्वं प्रतिपादितम्, अत्र तु कलाध्वनो व्यापकत्वमन्येषां च व्याप्यत्वमिति । तत्र कलाध्वनि पारमेश्वरस्य गुणषट्कस्य समावेशः, अत्र तु निवृत्त्यादिकलापञ्चकस्य । यद्यपि—

---

१. सा० सं० ११।१४६-१५०

२. सा० सं० ११।१५०-१५३

३. द्रष्टव्यम्—७।२।१७।२-७

## वैष्णवेषु तदितरेषु चागमेषु षडध्वविमर्शः

"निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च। शान्त्यतीताऽभिमाना च प्राणा गुणवती तथा॥"[1] इत्यत्र निवृत्त्यादिपञ्चकस्यापि समावेशो वर्तते, तथापि शैवशाक्तेष्वागमेष्विव नासामत्र तथाविधं प्रतिपादनम्। शिवपुराणे[2] पराशक्तेः चित्-आनन्द-इच्छा ज्ञान-क्रियाशक्तयः संजाताः। एताभ्य एव निवृत्त्याद्याः कलाः समुत्पन्नाः। अनुग्रह-तिरोभाव-सृष्टि-स्थिति-संहाराख्यपञ्चकृत्यकारित्वं भगवति निवृत्त्यादिवशादेवेत्युक्तम्। [3]तन्त्रसारेऽभिनवगुप्तेन कलासामान्यस्य निवृत्त्यादीनां च लक्षणान्येवं निरूपितानि—

"तत्त्वेषु वर्गशो यदनुगामि रूपं तत् कला, एकरूपकलनासहिष्णुत्वात्। तद्यथा—पृथिव्यां निवृत्तिः, निवर्तते यतस्तत्त्वसर्ग इति। जलादिप्रधानान्ते वर्गे प्रतिष्ठा, कारणतयाप्यायन-पूरणकारित्वात्। पुमादिमायान्ते विद्या, वेद्यतिरोभावे संविदाधिक्यात्। शुद्धविद्यादिशक्त्यन्ते शान्ता, [4]कञ्चुकतरङ्गोपशमात्। एतदेवाण्डचतुष्टयं पार्थिव-प्राकृत-मायीय-शाक्ताभिधम्।

---

१. लक्ष्मीतन्त्रे, ३२।१२-१६; ४३।११-१२

२. पराशक्तेस्तु संजाता चिच्छक्तिस्तु तदुद्भवा।
आनन्दशक्तिस्तज्जा स्यादिच्छाशक्तिसमुद्भवा॥
ज्ञानशक्तिस्ततो जाता क्रियाशक्तिस्तु पञ्चमी।
एताभ्य एव संजाता निवृत्त्याद्याः कला मुनेः॥
अनुग्रहादिकृत्यानां हेतुः पञ्चकमिष्यते।
(शि० पु० ६।१६।२४-२५,६१)

३. त० सा० पृ० १०६-११०

४. कञ्चुकपञ्चकं शिवपुराणे इत्थं प्रतिपादितम्—
नियतिः कालो रागश्च विद्या च तदनन्तरम्।
कला च पञ्चकमिदं मायोत्पन्नं मुनीश्वर॥
एतत्पञ्चकमेवास्य पञ्चकञ्चुकमुच्यते।
(६।१३।२८,३०)

तन्त्रसारेऽभिनवगुप्तेन मायामत्रैवान्तर्भाव्य कञ्चुकषट्कमुक्तम्। द्रष्टव्यम्—तन्त्रसारे, पृ० ८३। अत्र विशेषजिज्ञासुभिः "काश्मीर शैविज्म"नामको ग्रन्थो द्रष्टव्यः, डॉ० श्रादरनिर्मिताया अहिर्बुध्न्यसंहिताभूमिकायाः ६४, ६०, ११२ पृष्ठानि च।

पृथिव्यादिशक्तीनामत्रावस्थानेन शक्तितत्त्वे[ त्त्वं ] यावत् परस्पर्शो विद्यते, स्पर्शस्य च सप्रतिघत्वमिति तावति युक्तमण्डत्वम्। शिवतत्त्वे शान्त्यतीता, तस्योपदेशभावनार्चादौ कल्यमानत्वात्। स्वतन्त्रं तु परं तत्त्वम्। तत्रापि यदप्रमेयं तत्कलातीतम्। एवं पञ्चैव कलाः षट्त्रिंशत्तत्त्वानि" इति।

शिवादिभूम्यन्तानि [1]शुद्धाशुद्धाध्वमयानि षट्त्रिंशत्तत्त्वानि शैवशाक्तागमेषु प्रसिद्धानि। "यत्तु कतिपयकतिपयभेदानुगतं रूपं तत्तत्त्वम्" इति तत्त्वलक्षणमुक्तं तन्त्रसारे[2]।

अभिनवगुप्तेन तन्त्रसारे षष्ठाह्निके कालाध्वा, सप्तमाह्निके देशाध्वा, अष्टमनवमाह्निकयोस्तत्त्वाध्वा, दशमाह्निके कलाद्यध्वा च निरूपितः। "तत्र वर्णमन्त्रपदाध्वनः कालाध्वनि स्थितिः, परसूक्ष्मस्थूलरूपत्वात्। देशाध्वस्थितिस्तु तत्त्वपुर( भुवन )कलात्मना" ( पृ० ४७ ) इति षष्ठाह्निकोक्त्या, "मेयांशगामी स्थूलसूक्ष्मपररूपत्वात् त्रिविधो भुवनतत्त्वकलात्माध्वभेदः, मातृविश्रान्त्या तथैव त्रिविधः। तत्र प्रमाणतायां पदाध्वा, प्रमाणस्यैव क्षोभतरङ्गशाम्यत्तायां मन्त्राध्वा, तत्प्रशमे पूर्णप्रमातृतायां वर्णाध्वा। स एवासौ तावति विश्रान्त्या लब्धस्वरूपो भवतीत्येकस्यैव षड्विधत्वं युक्तम्" ( पृ० १११-११२ ) इति दशमाह्निकोक्त्या च त्कालाध्वा देशाध्वा च न पृथगध्वानौ, किन्तु षडध्वसु पृथक्स्वभावीयत्रिकद्वययोरेकैका संज्ञेति सूच्यते[3]।

---

१. अत्र "सारस्वत्याः सुषमायाः" १५ व०, १-४ अ०, २४५-२६२ पृष्ठेषु प्रकाशितः श्रीरघुनाथपाण्डेयमहोदयस्य 'शुद्धाध्वस्वरूपविमर्शः' इति शीर्षको निबन्धोऽवलोकनीयः।

२. द्रष्टव्यम्—पृ० ६६

३. सरस्वतीभवनस्य २४६१८संख्याकसौभाग्यकल्पद्रुमसौरभमातृकायां २३ तमे पत्रे उद्धृतेन त्रिपुरारहस्यवचनेन निम्नस्थेनायमर्थः स्फुटीभवति—

अध्वं तु द्विविधं प्रोक्तं कालदेशविभेदतः।
कालः क्रियामयो ज्ञेयो देशो मूर्तिमयः स्मृतः॥
वर्णः पदं तथा मन्त्र इति कालस्त्रिधा स्थितः।
कला तत्त्वं च भुवनमिति देशोऽपि वै त्रिधा॥
षडध्वनाम्ना चैतत्तु प्रोक्तं षट्संवरूपतः॥

शिवपुराणे तु प्रकारान्तरेण प्रतिपादितोऽयं विषयः । "इयं सृष्टिः परब्रह्मपरिणामः··· । सा च सृष्टिर्द्वेधा–अर्थमयी शब्दमयी चेति । ······सा च द्विविधापि सृष्टिः समकालिकोत्पत्तिका समकालिकाभिवृद्धिशालिनी च, यथा बीजादङ्कुरतच्छाये······'वागर्थाविव संपृक्तौ' इत्याद्यभियुक्तोक्तेश्च" इत्युक्तं भास्कररायेण वरिवस्यारहस्यप्रकाशे[1] । "स वागर्थमयश्चाध्वा षड्विधो निखिलं जगत् । अस्यैव विस्तरं प्राहुः शास्त्रजातमशेषतः ॥" इति च[2] शिवपुराणम् । अपि च—

शब्दात्मिका विभूतिर्या सा त्रिधा कथ्यते बुधैः ।
स्थूला सूक्ष्मा परा चेति स्थूला या श्रुतिगोचरा ॥
सूक्ष्मा चिन्तामयी प्रोक्ता चिन्तया रहिता परा ।
या शक्तिः सा परा शक्तिः शिवतत्त्वसमाश्रया ॥

---

स्वकारणात्मकं कार्यं तरोर्बीजात्मता यथा ॥
तेन वर्णादयः कालः कलादिर्देश उच्यते ॥
द्रष्टुस्तद्द्वयनिर्भानाद् द्रष्ट्रात्मकमुदीरितम् ॥
तस्मादखिलमेतद्धि द्रष्टृरूपं प्रकीर्तितम् । इति ।

( माहात्म० ६।८१-८३ )

अभिनवगुप्तरचिते तन्त्रालोकेऽपि–"द्विधा च सोऽध्वा क्रियया मूर्त्या च प्रविभज्यते" ( ६।२२ ) इति । "मूर्तिवैचित्र्यतो देशक्रममाभासयत्यसौ । क्रियावैचित्र्यनिर्भासात् कालक्रममपीश्वरः ॥" (२।१२) इतीश्वरप्रत्यभिज्ञायाम् । "तत्र क्रियाभासनं यत् सोऽध्वा कालाह्व उच्यते । वर्णमन्त्रपदाभिख्यमत्रास्तेऽध्वत्रयं स्फुटम् ॥ यस्तु मूर्त्यवभासांशः स देशाध्वा निगद्यते । कलातत्त्वपुराभिख्यमन्तर्भूतमिह त्रयम् ॥ त्रिकद्वयेऽत्र प्रत्येकं स्थूलं सूक्ष्मं परं वपुः । यतोऽस्ति तेन सर्वोऽयमध्वा षड्विध उच्यते ॥" (६।३-३६) इत्यपि तन्त्रालोक एव । "पदानि मन्त्रारब्धानि मन्त्रा वर्णैकविग्रहाः । वर्णाः स्वनिष्ठा इत्येषां स्थूलसूक्ष्मपरात्मता ॥" ( ६।३६ ) इति च तन्त्रालोकटीकायाम् ।

1. द्रष्टव्यम्—पृ० ४७, अड्यारपुस्तकालयद्वितीयसंस्करणम् ।

2. द्रष्टव्यम्—७।१।२१।३६-३७

## सारस्वती सुषमा

ज्ञानशक्तिसमायोगादिच्छोपोद्बलिका तथा ।
सर्वशक्तिसमष्ट्यात्मा शक्तितत्त्वसमाख्यया ॥
समस्तकार्यजातस्य मूलप्रकृतितां गता ।
सैव कुण्डलिनी माया शुद्धाध्वपरमा सती ॥
सा विभागस्वरूपैव षडध्वात्मा विजृम्भते ।
तत्र शब्दास्त्रयोऽध्वानस्त्रयश्चार्थाः समीरिताः ॥
मन्त्राध्वा च पदाध्वा च वर्णाध्वा चेति शब्दतः ।
भुवनाध्वा च तत्त्वाध्वा कलाध्वा चार्थतः क्रमात्[1] ॥ इति ।

### उडरफप्रतिपादितः षडध्वा

अयमेव चार्थः "गारलैण्ड आफ लेटर्स" इत्यत्रापि २५० पृष्ठे प्रतिपादितः । तदित्थम्—वर्णपदमन्त्राध्वानः शब्दात्मकाः, कलातत्त्वभुवनाध्वानोऽर्थात्मकाः । पदाध्वा वर्णाध्वानमपेक्षते, मन्त्राध्वा च पदाध्वानम् । कलातत्त्वभुवनाध्वानस्तु परस्परनिरपेक्षा इति ।

---

१. द्रष्टव्यम्—७।१।२१।४-८,११-१२; गोरक्षनाथापरनामधेयमहेश्वरानन्दनाथेन महार्थमञ्जर्यां तद्व्याख्याने परिमले च अनन्तशयनसंस्कृतग्रन्थमालायां मुद्रिते प्रकारान्तरेण प्रतिपादितोऽयमर्थः । तदेवम्—

यदध्वनां च षट्कं तत्र प्रकाशार्थलक्षणमर्धम् ।
विमर्शशब्दस्वभावमर्धमिति शिवस्य यामलोल्लासः ॥ २७ ॥

एवं च सति यदेतदध्वनामुक्तरूपाणां षट्कम्, तत्र यदेकमर्धं भुवनतत्त्वकलास्वभावम् । अन्यत्तु मन्त्रपदवर्णात्मकम् । प्रत्येकं च स्थूलसूक्ष्मपरप्रक्रियया त्रैविध्यम् । तत्र प्रथममभिधेयभूतं द्वितीयमभिधानमिति विभागः । तथा च सति वाच्यवर्गः सर्वोऽपि प्रकाशपरमार्थः, वाचकोल्लेखस्तु विमर्शवपुरिति शिवस्य प्रकाशविमर्शात्मनः परमेश्वरस्य यामल उभयविसर्गारणिस्वभाव उल्लासः । उन्मेषनिमेषशक्तिद्वितययौगपद्यानुभूतिचमत्कार इत्यर्थः । एष एव चार्थः पर्यन्तपञ्चाशिका-विरूपाक्षपञ्चाशिका-चिद्गगनचन्द्रिका-सौभाग्यहृदयस्तोत्रादिषु प्रकाशितः । स चात्रैव परिमले उद्धृतो द्रष्टव्यः ।

## वैष्णवेषु तदितरेषु चागमेषु षडध्वविमर्शः

टी०ए०गोपीनाथरावविरचिते "एलिमेण्ट्स आफ हिन्दु आइकॉनोग्राफी"[1] नाम्नि ग्रन्थे सिद्धान्तसारावलीप्रभृतीनां ग्रन्थानामाधारेण षडध्वानो विवेचिताः। तदाधारेण च डॉ० उडरफमहोदयेन स्वकीये "गारलैण्ड आफ लेटर्स" नाम्नि ग्रन्थे २५०-२५७ पृष्ठेषु [2]शाम्भव-दर्शनदृष्ट्या षडध्वपरिचयश्चित्रादिपुरस्कारेणोपस्थापितः। संक्षेपेणात्र तस्योद्धारः क्रियते कृतज्ञताज्ञापनपुरःसरम्।

तत्र वर्णपदमन्त्राध्वनां क्रमशः ५१, ८१, ११ भेदाः, कलातत्त्वभुवनाध्वनां च ५, ३६, २२४ भेदा निरूपिताः। [3]एकपञ्चाशद्वर्णा आगमेषु प्रसिद्धा एव। एकाशीतिपदानामुल्लेखस्तन्त्रसारे ६१ पृष्ठे वर्तते। ५ कलाः, ३६ तत्त्वानि च पूर्वं निरूपितानि। तत्र शुद्ध-शुद्धाशुद्ध-अशुद्धभेदेन तत्त्वानां त्रयो विभागाः शिव विद्या-आत्मनामानः। अविनाभावेनावस्थितौ शक्तिशिवौ शिवाख्यं प्रथमं तत्त्वम्, सदाशिवतः शुद्धविद्यापर्यन्तं शुद्धाशुद्धतत्त्वानि विद्याख्यानि, मायातः पृथिवी-पर्यन्तमशुद्धतत्त्वान्यात्मनामधेयानि। योगिनीहृदये मन्त्रसंकेतप्रकरणे षड्विधमन्त्रार्थनिरूपणावसरे त्रीणीमानि तत्त्वानि व्याख्यातानि।

भवत्यस्मादिति भुवनमिति व्युत्पत्त्या भुवनशब्दो जगत्पर्यायः। भुवनान्यपि शुद्ध-शुद्धा-शुद्ध-अशुद्धभेदेन विभागत्रयवन्ति। इमानि २२४ संख्याकानि भुवनानि ५ कलाभिः, ३६ तत्त्वैश्च यथायथं संयोज्य सारणीरूपेण स्थापितानि पूर्वचर्चितयोरुभयोरपि ग्रन्थयोः। तत्रत्या सारणी स्वच्छ-न्दतन्त्र-ईशानशिवगुरुदेवपद्धति-तन्त्रालोक-रत्नत्रयादिग्रन्थसाहाय्येन परिष्कृत्य समुद्ध्रियतेऽत्र—

---

१. द्रष्टव्यम्—भा० २, ख० २, पृ० ३६२-३६७

२. शैवशाक्तदर्शनयोः संमेलनेन शाम्भवदर्शनस्योद्भवः, यत्र हि शिवशक्तिसामरस्य-माराध्यते। द्रष्टव्यमत्रैव, पृ० २५०

३. वर्णानां ५१ भेदाः शाक्तागमेषु, शैवागमेषु तु सर्वत्र ५० वर्णानि निरूपितानि। वर्णाद्यध्वपञ्चकस्य सभेदस्य पञ्चभेदभिन्ने कलाध्वनि समावेशः संक्षेपेण रत्नत्रये प्रदर्शितस्तत एव विलोकनीयो मनीषिभिः। एकाशीतिपदविषये चात्रैवाग्रे विशेषो द्रष्टव्यः।

| कलाः | तत्त्वानि | भुवनसंख्या | भुवननामानि |
|---|---|---|---|
| १. शान्त्यतीतकला | **(क) शुद्धतत्त्वानि** | | |
| | १. शिवतत्त्वम् | १० | अनाश्रित - अनाथ - अनन्त - व्योमरूपिणी-व्यापिनी-ऊर्ध्वगा-मोचिका - रोचिका - दीपिका-इन्धिकाख्यानि (एतेषु पञ्च शाक्तभुवनानि, अवशिष्टानि पञ्च नादोर्ध्वभुवनानि)। |
| | २. शक्तितत्त्वम् | ५ | शान्त्यतीत - शान्ति - विद्या - प्रतिष्ठा - निवृत्ति-भुवनानि (एतानि बैन्दवपुरनाम्ना प्रसिद्धानि)। |
| | योगः | १५ | |
| २. शान्तिकला | ३. सदाशिवतत्त्वम् | १ | सदाशिवाख्यम्। |
| | ४. ईश्वरतत्त्वम् | ८ | शिखण्डि - श्रीकण्ठ- त्रिमूर्ति - एकरुद्र - एकनेत्र-शिवोत्तम-सूक्ष्म-अनन्तेशाख्यानि। |
| | ५. शुद्धविद्यातत्त्वम् | ९ | मनोन्मनी-सर्वभूतदमनी-बलप्रमथिनी- बलविकरणी-कलविकरणी-काली-रौद्री-ज्येष्ठा-वामाख्यानि। |
| | योगः | १८ | |
| ३. विद्याकला | **(ख) शुद्धाशुद्धतत्त्वानि** | | |
| | ६. माया | ८ | अङ्गुष्ठमात्र - भुवनेश–ईशान - एकनेत्र - एक - पिङ्गल-उद्भव-वामदेव-महादेवाख्यानि। |
| | ७. कालः | २ | शिवद-एकवीराख्ये। |
| | ८. कला | २ | पञ्चान्त-सूकराख्ये। |
| | ९. विद्या | २ | संवर्त-ज्योतिषी इत्याख्ये। |
| | १०. नियतिः | २ | चण्ड-क्रोधाख्ये। |
| | ११. रागः | ५ | एकरुद्र-अनन्त-अज-उमापति-प्रचण्डाख्यानि। |
| | १२. पुरुषः | ६ | एकवीर-ईशान-भव-उग्र-भीम-वामाख्यानि। |
| | योगः | २७ | |
| | **(ग) अशुद्धतत्त्वानि** | | |
| | १३. प्रकृतिः | ८ | श्रीकण्ठ - औम - कौमार- वैष्णव - ब्राह्म - भैरव-कृत-अकृताख्यानि। |
| | १४. बुद्धिः | ८ | ब्राह्म - प्राजेश - सौम्य - ऐन्द्र - गान्धर्व - याक्ष-राक्षस-पैशाचाख्यानि। |

| कलाः | तत्त्वानि | भुवनसंख्या | भुवननामानि |
|---|---|---|---|
| ४. प्रतिष्ठाकला | १५. अहङ्कारः | १ | स्थलेश्वरम् । |
| | १६. मनस्<br>१७. श्रोत्रम्<br>१८. त्वक्<br>१९. चक्षु<br>२०. जिह्वा<br>२१. नासा | १ | शङ्कुकर्णम् । |
| | २२. वाक्<br>२३. पाणिः<br>२४. पादः<br>२५. पायुः<br>२६. उपस्थः | १ | दारुवनम् । |
| | २७. शब्दः<br>२८. स्पर्शः<br>२९. रूपम्<br>३०. रसः<br>३१. गन्धः | ५ | कालञ्जर - मण्डलेश्वर - माकोट - द्विरण्ड - छगलण्डाख्यानि । |
| ५. निवृत्तिकला | ३२. आकाशः | ८ | स्थाणु - स्वर्णाक्ष - भद्रकर्ण - गोकर्ण - महालय - अविमुक्त-रुद्रकोटि-वस्त्रापदाख्यानि । |
| | ३३. वायुः | ८ | भीमकेश्वर-महेन्द्र - अट्टहास - कनखल - नोखल - कुरुक्षेत्र-गयाख्यानि । |
| | ३४. तेजस् | ८ | भैरव - केदार- महाकाल - मध्यमेश - आम्रात - केश्वर-जल्पीश-श्रीशैल-हरिश्चन्द्राख्यानि । |
| | ३५. जलम् | ८ | भारभूति - मुण्डि - डिण्डि - आषढी - पुष्कर-नैमिष - प्रभास - अमरेशाख्यानि । |
| | योगः | ५६ | |
| | ३६. पृथिवी | १०८ | भद्रकालीतः कालाग्निपर्यन्तानि |
| | सर्वेषां योगः | २२४ | |

शिवतत्त्वेन शक्तितत्त्वेन च संयुक्तानि अनाश्रित-अनाथ-अनन्त-व्योमरूपिणी-व्यापिनी-ऊर्ध्वगामिनी-मोचिका-रोचिका-दीपिका-इन्धिकाख्यानि भुवनानि सन्ति। इमानि शान्त्यतीत-कलामयानि। एतेषु पञ्च शाक्तभुवनानि, अवशिष्टानि पञ्च च नादोर्ध्वभुवनानि। अन्यैस्तत्त्वैः संयुक्तानि शान्त्यादिकलामयानि भुवनानि तत्तद्देवताविग्रहनाम्ना प्रसिद्धानि। सर्वाणीमानि भुवनानि परमशिवेन तत्रत्यानां प्राणिनामुपभोगाय सृष्टानि।

शुद्धादिभुवनेषु विद्यमाना जीवा अपि शुद्ध-शुद्धाशुद्ध-अशुद्ध-भेदेन त्रिविधाः। मल-माया-कर्मभेदेनाविद्या त्रिविधा। मलावृता जीवा विज्ञानाकलाः, मलमायावृताः प्रलयाकलाः, मलमायाकर्मावृताश्च सकला उच्यन्ते। विज्ञानाकला एव मन्त्राख्याः। येषां जीवानां मलावरणं परिपाकावस्थायामवतिष्ठते ते विज्ञानाकला अष्टौ विद्येश्वराः। विद्येश्वरेभ्य ऊर्ध्वं मन्त्रेश्वरा अवतिष्ठन्ते। शुद्धतनुकरण-भुवनभोगा इमे सर्वथा मलरहिताः। मन्त्रेश्वरेभ्य ऊर्ध्वं मन्त्रमाहेश्वराः, एभ्यश्चोर्ध्वं शक्ति-शिवौ विराजेते। मन्त्रमाहेश्वराः सदाशिवापरपर्याये सादाख्ये तत्त्वे, माहेश्वरा मन्त्रेश्वरा वा ईश्वराख्ये तत्त्वे, मन्त्राश्च शुद्धविद्याख्ये तत्त्वे तिष्ठन्ति (अष्टौ विद्येश्वरा मन्त्राख्येभ्यो भिन्नाः)। विज्ञानाकलाः शुद्धविद्यातो नीचैर्मायातश्चोर्ध्वं तिष्ठन्ति। प्रलयाकलाः, मुक्तेभ्यो भिन्नाः सकलाश्च मायायामवतिष्ठन्ते। एष चार्थोऽनया सारण्या स्फुटीभविष्यति—

## वैष्णवेषु तदितरेषु चागमेषु षडध्वविमर्शः



## शैवागमेषु षडध्वा

तत्त्वप्रकाशस्य अनन्तशयनसंस्कृतग्रन्थमालायां मुद्रितायां कुमाररचितायां व्याख्यायां गुरुदेवपद्धतिमनुसृत्य ३३-४२ पृष्ठेषु षडध्वनां विस्तृतः परिचयः समुट्टङ्कितः। गुरुदेवपद्धतिश्चेयमनन्तशयनसंस्कृतग्रन्थमालायामेव ईशानशिवगुरुदेवपद्धतिनाम्ना चतुर्षु भागेषु मुद्रिता। तत्र तृतीये भागे १४९-१७० पृष्ठेषु षडध्वनिर्णयो नाम सप्तदशः पटलो वर्तते। अत्रत्या सामग्री संक्षिप्य कुमारटीकायां संगृहीता। एकाशीतिपदानां नामान्यस्मिन् पटले न सन्ति। तानि मन्त्रपादात्मके द्वितीयभागे १७२-१७४ पृष्ठेषु सन्ति। कुमारेण त्वत्रैकाशीतिपदानां नामान्यन्यस्मादेव कस्माच्चिद् ग्रन्थाद् गृहीतानि। तदेतत्सर्वं विस्तरेण तत्रैव द्रष्टव्यम्। अत्र केवलं गुरुदेवपद्धत्यनुसारिणी षडध्वोद्देशलक्षणे दीयेते—

अथ निर्वाणदीक्षादिक्रियानिष्पत्तिसाधनम्।
यथावदध्वनां षण्णां स्वरूपं तु निगद्यते॥

तत्त्वाध्वा चैव वर्णाध्वा मन्त्राध्वाऽध्वा च भौवनः।
पदाध्वा च कलाध्वा च षट्प्रकारोऽध्वनिर्णयः॥

व्याप्यास्तत्त्वादयः पञ्च [1]मलाद्या व्यापकास्त्रयः।
पुनर्मलादयो व्याप्याः कलाध्वा व्यापकः स्मृतः॥

तत्र तत्त्वानि षट्त्रिंशत् तत्त्वाध्वा स्याद्विलोमतः।
क्षकारादिरकारान्तो वर्णाध्वाक्षरसन्ततिः॥

सद्यादिकानि ब्रह्माणि मन्त्राश्च हृदयादयः।
मूलमन्त्रश्च मन्त्राध्वा प्रागेवात्र प्रदर्शितः॥

कालाग्न्यादीनि शक्त्यन्तं भुवनानि शतद्वयम्।
सचतुर्विंशतिपुरं भुवनाध्वेति कथ्यते॥

व्योमव्यापिपदान्यत्र यान्येकाशीतिसंख्यया।
विलोमतः पदाध्वा स्यान्मन्त्रोद्धारे स चोदितः॥

---

१. मलं कर्म माया च।

## वैष्णवेषु तदितरेषु चागमेषु षडध्वविमर्शः

निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्च पञ्चमी ।
शान्त्यतीतेति हि कलाः कलाध्वा सोऽपि दर्शितः ।।
तन्त्रेऽस्मिन् प्रागनुक्तत्वाद् भुवनाध्वाऽथ कथ्यते ।[1] इति ।

तदयमत्र निष्कर्षः—

मुक्तानां शिवताव्यक्तिकारणं विश्वमेव हि ।।
शिवताव्यक्तिमार्गत्वात् ते सर्वेऽपि कलादयः ।
अध्वशब्देन कथ्यन्ते ते सर्वे बन्धना अपि ।।

इति [2]महार्थमञ्जरीपरिमलधृतस्वच्छन्दतन्त्रनीत्या,

अमूर्तायाः सर्वगत्वान्निष्क्रियायाश्च संविदः ।
मूर्तिक्रियाभासनं यत् स एवाध्वा महेशितुः ।।
अध्वा क्रमेण यातव्ये पदे संप्राप्तिकारणम् ।

इति [3]तन्त्रालोकनीत्या च विश्वमेव शिवताव्यक्तिमार्गत्वादध्वशब्देनोच्यते । अत एवोच्यते शिवपुराणे[4]—"षड्विधाध्वमयस्यास्य सर्वस्य जगतः पतिः" इति । अयं च षड्विधाध्वा संविदो मूर्तिक्रियाभासनमेव, नान्यत् किञ्चित् । तदुक्तम्—

अध्वा समस्त एवायं षड्विधोऽप्यतिविस्तृतः ।
यो वक्ष्यते स एकत्र प्राणे तावत् प्रतिष्ठितः ।।[5] इति,
"प्राक् संवित् प्राणे परिणता"[6] इति,
अध्वा समस्त एवायं चिन्मात्रे संप्रतिष्ठितः ।
यत्तत्र नहि विश्रान्तं तन्नभःकुसुमायते ।।
संविद्द्वारेण तत्सृष्टे शून्ये धियि मरुत्सु च ।
नाडीचक्रानुचक्रेषु बहिर्देहेऽध्वसंस्थितिः ।।[7] इति,

---

१. द्रष्टव्यम्—ई० गु० प०, ३ भा० ९० पृ०
२. द्रष्टव्यम्—पृ० ७३
३. द्रष्टव्यम्—६।२९-३०
४. द्रष्टव्यम्—७।१।३।१८ ।
५. तन्त्रालोके, ६।५
६. तन्त्रालोके, ६।१२ उद्धृतं कल्लटवचनम् ।
७. तन्त्रालोके, ८।३-४

वर्णः कला पदं तत्त्वं मन्त्रो भुवनमेव च ।
इत्यध्वषट्कं देवेशि भाति त्वयि चिदात्मनि ॥[1] इति च ।

अध्वशुद्धिप्रक्रियया च षडध्वसु शिवताव्यक्तिकारणत्वमायाति । तदुक्तं विज्ञानभैरवे—

भुवनाध्वादिरूपेण चिन्तयेत् क्रमशोऽखिलम् ।
स्थूलसूक्ष्मपरस्थित्या यावदन्ते मनोलयः ॥
अस्य विश्वस्य सर्वस्य पर्यन्तेषु समन्ततः ।
अध्वप्रक्रियया तत्त्वं शैवं ध्यात्वा महोदयः ॥[2] इति ।

अध्वशुद्धिप्रक्रिया च—

ज्ञात्वा समस्तमध्वानं तदीशेषु विलापयेत् ।
तान् देहप्राणधीचक्रे पूर्ववद् गालयेत् क्रमात् ॥
तत्समस्तं स्वसंवित्तौ सा संविद्भरितात्मिका ।
उपास्यमाना संसारसागरप्रलयानलः ॥[3] इति,
श्रीदेव्यायामले चोक्तं षट्त्रिंशत्तत्त्वसुन्दरम् ।
अध्वानं षड्विधं ध्यायन् सद्यः शिवमयो भवेत् ॥[4] इति च ।

## उपसंहारः

एतच्च षडध्ववर्णनं सिद्धान्तादितन्त्रेष्वत्यन्तं वितत्योपपादितम्[5] । सिद्धान्तशब्दश्च पङ्कजादिशब्दवद् योगरूढ्या शिवप्रणीतेषु कामिकादिषु दशाष्टादशसु तन्त्रेषु प्रसिद्धः[6] । अङ्गो-

---

१. चिद्वल्ल्यां ( पृ० १८ ) कामकलाविलासटीकायामुद्धृतं सौभाग्यहृदयवचनम् ।

२. द्रष्टव्यम्—श्लो. ४६-४७ अत्रत्या शिवोपाध्यायनिर्मिता टीका द्रष्टव्या । शिवोपाध्यायेन चैषा टीका क्षेमराजकृतविज्ञानभैरवोद्योतमनुसृत्य निर्मिता । अत एवात्रत्यः "अस्य सर्वस्य अध्वग्रन्थस्यायं पिण्डार्थः" इत्यादिको ग्रन्थः क्षेमराजकृतस्वच्छन्दतन्त्रोद्योतेऽप्युपलभ्यते । द्रष्टव्यम्—४।६७

३. तन्त्रालोके, ८।७-८

४. तन्त्रालोके, ८।१६-१७

५. महार्थमञ्जरीपरिमले, का. २७

६. रत्नत्रयोल्लेखिन्यामघोरशिवाचार्यकृतायाम्, पृ. ५

पाञ्चभेदेन[1] नानाशाखोऽयं शैवागमः साम्प्रतमत्यल्पमुपलभ्यते। उपलब्धा अपि सिद्धान्तशैवागमग्रन्था बाहुल्येन दक्षिणभारतीयलिपिषु मुद्रिता न देवनागर्याम्। अतः षडध्वशुद्धिप्रक्रियाया न वैशद्येन प्रतिपादनमत्र संभवति, तथापि रत्नत्रय-ईशानशिवगुरुदेवपद्धत्यादिषु, स्वच्छन्दतन्त्रे ४, १० पटलयोः, तन्त्रालोके ६-१२ आह्निकेषु, शिवपुराणादिषु च कृतस्य षडध्वप्रसङ्गस्य साहाय्येनात्र किमप्युक्तम्। पाञ्चरात्रागमेषु सात्त्वतसंहितायामतीव संक्षेपेण, लक्ष्मीतन्त्रे च किञ्चिद्विस्तरेण षडध्ववर्णनं कृतम्। शैवशाक्तागमेषु दार्शनिकी परम्परा बहुकालव्यापिनी यथा दृश्यते, न तथा वैष्णवागमेषु। वैष्णवागमेषु संहिताग्रन्थेभ्योऽतिरिक्ता दार्शनिका ग्रन्था नैवोपलभ्यन्ते। पाञ्चरात्रप्रामाण्यमङ्गीकृत्यैव यद्यपि रामानुजमध्वादीनां वैष्णवदर्शनानि प्रवृत्तानि, तथापि तानि प्रस्थानत्रयीमेव प्राधान्येनाङ्गीकुर्वन्ति। अत एव तत्रत्यकर्मकाण्डेषु पाञ्चरात्रागमानुसरणे सत्यपि दार्शनिकचिन्तनधारायां प्रस्थानत्रय्या एव प्राधान्यम्। फलतो वैष्णवागमेषु प्रतिपादितानां दार्शनिकसिद्धान्तानां प्रतिपादकः कोऽपि स्वतन्त्रो ग्रन्थः साम्प्रतं नोपलभ्यते। रामानुजशिष्यकूरेशपरम्परायां लोकाचार्यप्रभृतयः केचन आचार्याः प्राधान्येन पाञ्चरात्रसंहिताप्रामाण्यवादिनोऽथ च तमिलवेदानुयायिन आसन्, तथापि शैवशाक्तागमग्रन्थवन्न दृश्यते तत्र षडध्वचर्चा। अथापि यावदुपलब्धामत्रोद्धृतां सामग्रीमाकलय्य किमप्यत्र निष्कृष्यते।

शब्दब्रह्मणः सकाशात् षडध्वोन्मेष इति पाञ्चरात्रा आहुः। परब्रह्मणः सिसृक्षाख्य उद्यमः शब्दार्थभेदेनोन्मिषति। तत एव षडध्वभेदभिन्नस्य जगतः प्रादुर्भाव इति। कुण्डलिनी विभागस्वरूपा सती षडध्वात्मना विजृम्भत इति शिवपुराणेऽपि प्रकारान्तरेणायमेवार्थः प्रतिपादितः। त्रयोऽध्वानः शाब्दाः, त्रयश्चार्था इति विभागः शिवपुराणेऽन्यत्र च दृश्यमानः पाञ्चरात्रसंहितासु न दृश्यते। महार्थमञ्जरीकारेण प्रकाशविमर्शरूपेणायं विभागः प्रदर्शितः। वाच्यवर्गः सर्वोऽपि प्रकाशपरमार्थः, वाचकोल्लेखस्तु विमर्शवपुरिति वदता तेन शब्दान्तरैः स एवार्थ उक्तः। तन्त्रालोक-तन्त्रसार-त्रिपुरारहस्यादिषु तु शब्दार्थविभागयोः स्थाने कालदेशविभागोऽङ्गीकृतः। क्रियात्मके काले वर्णमन्त्रपदात्मनो वाचकवर्गस्य, मूर्तिमये देशे च कलातत्त्वभुवनात्मनो वाच्यवर्गस्यात्र समावेशो वर्तते। अस्य समस्तस्यापि षड्विधस्याध्वनः संविदि चिदात्मनि वा, संविद्-

---

१. पाण्डिचेरीनगरे प्रकाशिते रौरवागमे २०७ उपागमानां नामानि सारणीपद्धत्या प्रदर्शितानि।

द्वारेण शून्ये, धियि, मरुत्सु, नाडीचक्रानुचक्रेषु, बहिर्देशे चावस्थितिस्तन्त्रालोके षष्ठाऽष्टमाह्निकयोर्विस्तरेण प्रतिपादिता तत एव द्रष्टव्या। एतच्च तन्त्रालोकप्रतिपादितं व्याख्यानमन्यत्र न दृश्यते।

कलादयः षडध्वानः शिवताऽभिव्यक्तिमार्गत्वादध्वशब्देनोच्यन्ते। यद्यपि जगदन्तःपातित्वादेषां बन्धनत्वमेव, तथापि युक्त्या योजितं सद् विश्वमेव हि शिवताभिव्यक्तिकारणं भवति। यतो हि निष्क्रियाया अमूर्तायाश्च संविदो मूर्तिक्रियाभासनं देशकालरूपेण परिणतिरेव खलु। तदेव चाध्वशब्देनोच्यते। अध्वा च क्रमेण यातव्ये पदे संप्राप्तिकारणं भवति। एतच्च षडध्वशुद्धिप्रक्रियया साध्यते। षडध्वशुद्धिसंपादनार्थं प्रथममेतेषां व्याप्यव्यापकभावः परिचिन्तनीयः। तत्र सात्वतसंहितायां शब्दब्रह्मस्थानीयस्य वर्णाध्वनो व्यापकत्वमन्येषां व्याप्यत्वं चोक्तम्[1]। शैवशाक्तागमेषु तु कलाध्वनो व्यापकत्वमितराध्वनां च व्याप्यत्वमुक्तम्[2]। स्वच्छन्दतन्त्रेऽपि—

अध्वावलोकनं पश्चाद्व्याप्यव्यापकभेदतः।
भुवनव्यापिता तत्त्वेष्वनन्तादिशिवान्तके॥
व्यापकानि च षट्त्रिंशद् मन्त्रवर्णपदात्मकाः।
तत्त्वान्तर्भाविनः सर्वे वाच्यवाचकयोगतः॥
कलान्तर्भाविनस्ते वै निवृत्त्याद्याश्च ताः स्मृताः।[3]

इत्येवं षडध्वनां व्याप्यव्यापकभावः परिदर्शितः। स्पष्टार्थजिज्ञासुभिरत्रत्यः क्षेमराजकृतः स्वच्छन्दोद्योतो द्रष्टव्यः।

शैवशाक्तागमेषु पञ्च अध्वानो निवृत्त्यादिपञ्चकात्मकेन कलाध्वना व्याप्ताः। निवृत्त्यादिकलापञ्चकस्य पाञ्चरात्रसंहितासु प्रसङ्गेऽस्मिन् कुत्राप्युल्लेखो न दृश्यते। षाड्गुण्यस्यैव कलात्मना व्याख्यानम्, वर्णाध्वनः शब्दब्रह्मरूपत्वेन व्यापकत्वम्, पदाध्वनो जाग्रत्स्वप्नसुषुप्तितुर्यात्मकभेदप्रदर्शनम्, भुवनाध्वनश्चतुर्दशभेदभिन्नत्वं च पाञ्चरात्रसंहिताप्रतिपादितं सूचयति यदत्रत्यं षडध्वविवेचनं शैवशाक्तागमापेक्षया प्राक्कालिकं प्रतिभातीति। अधुना एतावदेवोक्त्वा विरम्यत इति शिवम्॥

**०**

---

१. द्रष्टव्यम्—पृ० १९६

२. व्याप्यास्तत्त्वादयः पञ्च मलाद्या व्यापकास्त्रयः।
पुनर्मलादयो व्याप्याः कलाध्वा व्यापकः स्मृतः॥
(ई० प्र० प०, ३ भा० ९० पृ०)

# रागभक्तिः

श्रीराजेन्द्रचन्द्रः, नवद्वीपस्थराजकीयसंस्कृतमहाविद्यालयाध्यापकः ।

अद्वैतवादिनो निर्विशेषं चित्स्वरूपमेव ब्रह्मेत्यामनन्ति । द्वैतवादिनये "परास्य शक्तिर्विविधैव श्रूयते" इत्यादिश्रुत्या स्वरूपशक्तिमदेव ब्रह्मेति, शक्तिश्च स्वरूपानतिरेकिण्यपि तद्विशेषतया भासते । अन्यथा तस्य शक्तिरिति व्यपदेशासिद्धिः, अतस्तन्मते भक्तिर्हि भगवत्स्वरूपभूता शक्तिरेव । सा च ह्लादिनीसारसमवेतसंवित्साररूपा । तत्सारत्वञ्च तन्नित्यपरिकराश्रयकतदानुकूल्याभिलाषविशेषः । सा हि भक्तिस्तन्नित्यपरिकरमारभ्याधुनिकेष्वपि भक्तेषु सुरसरित्प्रवाहवत् प्रचरति । तस्याञ्च भक्तौ भगवान् स्वयमेव वशीभूय तिष्ठति, तामरसकोषे मधुप इव रसिकयुवयुवत्यां रसिकयुवेवेति । सा भक्तिः साधनं भावः प्रेमा चेति त्रिधा । साधनलक्षणापि वैधी रागानुगा चेति द्विधा । यत्र भक्तौ पुंसः प्रवृत्तिः रागेणानवाप्ता, किन्तु शास्त्रस्य साधनेनैव सा वैधी भक्तिरित्युच्यते । तस्याञ्च भक्तौ अधिकारी प्रोक्तो भक्तिरसामृतसिन्धौ—"यः केनाप्यतिभाग्येन जातश्रद्धोऽस्य सेवने । नातिसक्तो न वैराग्यभागस्यामधिकार्यसौ ॥" इति ।

रागानुगायाञ्च विषयिणः स्वाभाविको विषयसंसर्गेच्छातिशयमयः प्रेमा राग इति । यथा चक्षुरादीनां सौन्दर्यादौ तथैव भक्तस्य भगवत्यपि राग इत्युच्यते । स च रागो बहुधा दृश्यते—"येषामहं प्रिय आत्मा सखा गुरुः सुहृदो दैवमिष्टम्" इत्यादौ श्रीमद्भागवतीयपद्ये । तथा हि तत्र प्रियस्तदीयप्रेयसीनाम्, आत्मा परब्रह्मरूपः श्रीसनकादीनाम्, सुतः श्रीव्रजेश्वरादीनाम्, सखा श्रीश्रीदामादीनाम्, गुरुः श्रीप्रद्युम्नादीनाम्, कस्यापि भ्राता कस्यापि मातुलेयः कस्यापि वैवाहिक इत्यादि बहुप्रकारेण सुहृदः सम्बन्धिनाम्, दैवमिष्टं तदीयसेवकादीनां दारुकप्रभृतीनामिति ज्ञेयम् । तदेवं तत्तदभिमानलक्षणभावविशेषेण स्वाभाविकरागस्य वैशिष्ट्ये सति तत्तद्रागप्रयुक्ता श्रवणकीर्त्तनस्मरणपादसेवनवन्दनात्मनिवेदनप्राया भक्तिस्तेषां रागात्मिका भक्तिरित्युच्यते । सा च साध्या एव, न तु साधनप्रकरणे अस्याः प्रवेशः । उक्तं हि श्रीलरूपगोस्वामिचरणैः—"इष्टे स्वारसिकी रागः परमाविष्टता भवेत् । तन्मयी या भवेद्भक्तिः सैव रागात्मिकोदिता" इति । अस्यार्थस्तु—इष्टे स्वानुकूल्यविषये स्वारसिकी स्वाभाविकी या परमाविष्टता आवेशः, अत्राविष्टतापदं तद्धेतुपरम्, तथा चावेशजनकीभूतप्रेममयतृष्णेत्यर्थः, तन्मयी तदेकप्रचुरा, तथा चेष्टे स्वारसिकावेशजनकीभूता या प्रेममयतृष्णा, तत्प्रेरिता या माल्यगुम्फनादि-

रूपा परिचर्या सा रागात्मिका भक्तिः। कामरूपा सम्बन्धरूपा चेति रागात्मिका द्विधा, कामेन रागविशेषरूपेण रूप्यते क्रियत इति। एवं सम्बन्धेन तद्धेतुकरागविशेषेण रूप्यते क्रियत इति। तथा च कामप्रेरिता परिचर्या, सम्बन्धप्रेरिता परिचर्येति द्विविधा रागात्मिकेत्यर्थः। यद्यपि कामरूपाया-मपि सम्बन्धविशेषोऽस्त्येव, तथापि पृथगुपादानं सम्बन्धानां मध्ये कामस्य प्राधान्यप्रतिपाद-नार्थमिति।

रागानुगा च यस्य पूर्वोक्ते रागविशेषे रुचिरेव जातास्ति, न तु रागविशेष एव स्वयं तस्य ताद्दशरागसुधाकरकिरणाभाससमुल्लसितहृदयस्फटिकमणेः शास्त्रादिश्रुतासु ताद्दश्या रागात्मिकायां भक्तेः परिपाटिषु रुचिर्जायते। अतस्तदीयरागरुच्यनुगच्छन्ती सा रागानुगा तस्मिन्नेव भक्ते प्रवर्त्तते। एषैवाविहितेति केषाञ्चित् संज्ञा, रुचिमात्रप्रवृत्त्या विधिप्रयुक्तत्वेना-प्रवृत्तत्वात्। न च वक्तव्यं विध्यनधीनस्य न सम्भवति भक्तिरिति—"प्रायेण मुनयो राजन् निवृत्ता विधिषेधतः। नैर्गुण्यस्था रमन्तेऽस्य गुणानुकथने हरेः॥" इति श्रीमद्भागवतद्वितीयस्कन्धे श्रूयते। एवञ्च विधिमार्गभक्तिर्विधिसापेक्षेति सा दुर्बला। इयन्तु रागानुगा स्वतन्त्रैव प्रवर्त्तत इति प्रबला। अत एवास्या जन्मलक्षणं भक्तिव्यतिरेकेणान्यत्रानभिरुचित्वमित्यादिकं ज्ञेयम्। ननु चोदना-लक्षणोऽर्थो धर्म इत्यनेन पूर्वमीमांसायां विधिनैवापूर्वं जायत इति श्रूयते। तथा "श्रुतिस्मृतिपुरा-णादिपञ्चरात्रविधिं विना। ऐकान्तिकी हरेर्भक्तिरुत्पातायैव कल्प्यते॥" इति यामलवचनात् श्रुत्या-द्येकतरोक्तक्रमनियमं विना दोषः श्रूयते। अपि च—"श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते। आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णवः॥" इत्यत्र श्रुत्याद्युक्तावश्यकक्रियानिषेधयोरुल्लङ्घनं वैष्णवत्वव्याघातकं श्रूयते। कथं तर्हि विधिनिरपेक्षया तया भक्त्या सिद्धिः? उच्यते, श्रीभग-वन्नामगुणादिषु वस्तुशक्तेः सिद्धत्वान्न धर्मवद्भक्तेश्चोदनासापेक्षत्वम्, अतो ज्ञानादिकं विनापि फललाभो बहुत्र श्रुतोऽस्ति। चोदना तु यस्य स्वतः प्रवृत्तिर्नास्ति तद्विषयैव। एवं क्रमविधिश्च तद्विषये एव। तथा च सति नानाविक्षेपवतो रुच्यभावेन च रागात्मकभक्तिशैलीमनभिजानतः "धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह" इत्यादिवचनबलेन यथाकथञ्चिदनुष्ठानतः सिद्धौ सत्यामपि तस्य पुंसः सुष्ठुवर्त्मप्रवेशाय क्रमशश्चित्ताभिनिवेशाय च मर्यादारूपश्चोदना क्रम-विधिश्च ज्ञेयः, अन्यथा अन्ततस्तद्भक्त्युन्मुखताकरताद्दशरुच्यभावाद् भक्तिमर्यादारक्षणासंभवाच्चा-ध्यात्मिकादिभिरुत्पातैर्विहन्यत एव स इति। न तु स्वयं प्रवृत्तिमत्यपि मर्यादारक्षणस्य विधानम्, तस्य रुच्यैव भगवन्मनोरमरागात्मिकक्रमविशेषाभिनिवेशात्। तदुक्तं श्रीमद्भागवते एकादश-स्कन्धे—"ज्ञात्वाऽज्ञात्वाथ ये वै मां यावान् यश्चास्मि याद्दशः। भजन्त्यनन्यभावेन ते मे भक्ततमा मताः॥" इत्यनेन।

## रागभक्तिः

रागात्मकभक्तिमतां दुरभिसन्धिनाप्यनुकरणमात्रेण तादृशत्वप्राप्तिः श्रूयते। तदुक्तं श्रीमद्भागवते दशमस्कन्धे—"सद्वेषादिव पूतनापि सकुला त्वामेव देवापिता यद्धामार्थ-सुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते" इत्यादौ। किमुत रुचिमद्भिस्तादृशनिरन्तरभक्त्यनुष्ठानेन ? यथोक्तम्—"पूतना लोकबालघ्नी राक्षसी रुधिराशना। जिघांसयापि हरये स्तनं दत्वाप सद्गतिम्॥ किं पुनः श्रद्धया भक्त्या कृष्णाय परमात्मने। यच्छन् प्रियतरं किं नु रक्तास्तन्मातरो यथा॥" इति। अत एवोक्तम्—"न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः। साधूनां समचित्तानां बुद्धेः परमुपेयुषाम्॥" इति। एकान्तित्वं खलु भक्तिनिष्ठैवेति वक्तव्यम्। सा रुच्या एव वा शास्त्र-विध्यादरेणैव वा जायते। एवञ्च रुचेर्विरलत्वात् शास्त्रविध्यादराभावेनापि यदैकान्तिकत्वं तत्स्यै-कान्तिकत्वमानिनो दम्भमात्रयुतस्तानुद्दिश्यैव निन्दा—"श्रुतिस्मृतिपुराणादिपाञ्चरात्रविधिं विना। ऐकान्तिकी हरेर्भक्तिरुत्पातायैव कल्प्यते॥" इति, न तु रुचिसद्भावेऽपि निन्दा युक्ता "पूतना लोकबालघ्नी राक्षसी" इत्यादेः। गौतमीयतन्त्रेऽपीदमुक्तम्—"न जपो नार्चनं नैव न ध्यानं न विधिक्रमः। केवलं सन्ततं कृष्णचरणाम्भोजभावनम्॥" इति।

अजाततादृशरुचिना तु सद्विशेषमात्रादृता रागात्मिकापि वैधीभक्तिसंवलितैवानुष्ठेया। तथा लोकसंग्रहार्थं प्रतिष्ठितेन तादृशजातरुचिनापि तथैव कार्या। अत्र मिश्रत्वे च यथायोग्यं रागानुगयैकीकृत्यैव वैधी कर्तव्या। इदमत्रावधातव्यम्—रागानुगायां रुचेरेव सद्धर्मप्रवर्त्तकत्वात् "श्रुतिस्मृती ममैवाज्ञे" इत्यादिवाक्यस्य न तद्धर्मविषयत्वम्, किन्तु बाह्यशास्त्रनिर्दिष्टबुद्धर्षभदत्तात्रेयादिभजनवर्त्मविषयत्वमेव। तथोक्तम्—"वेदधर्मविरुद्धात्मा यदि देवं प्रपूजयेत्। स याति नरकं घोरं यावदाभूतसंप्लवम्॥" इति। रागानुगायान्तु विध्यप्रवर्त्तितायामपि न वेदबाह्यत्वम्, वेदवैदिकप्रसिद्धैव सा, तत्र तत्र जातरुचित्वात्। वैदिकेषु शास्त्रेषु बुद्धादीनां वर्णनन्तु वेदबाह्यत्वेनैव। तथाहि—"ततः कलौ संप्रवृत्ते सम्मोहाय सुरद्विषाम्। बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति॥" (६·८) इति। तस्माद्भवत्येव रागानुगा समीचीना वैधभक्तितोऽप्यतिशयवती च सा। मर्यादावचनञ्च भक्तौ आवेशार्थमेवेति प्रागेव दर्शितम्। स पुनरा-वेशो यथारुचि विशेपलक्षणेन मानसभावेन स्यान्न तथा विधिप्रेरणया, स्वारसिकमनोधर्मत्वाद् रुचेः। तत्रास्तां तावदनुकूलभावः, परमनिषिद्धेन प्रतिकूलभावेनाप्यावेशो झटिति स्यात्। तदा-वेशसामर्थ्येन प्रातिकूल्यदोषहानिः, सर्वानर्थनिवृत्तिश्च स्यादिति ज्ञेयम्। भावमार्गस्य बलवत्त्वे दृष्टान्तोऽपि दृश्यते। तत्र यद्यनुकूलभावः स्यात्तदा परमैकान्तिकसाध्य एवासौ। उक्तं हि युधिष्ठिरेण "अहो अत्यद्भुतं ह्येतद् दुर्लभैकान्तिनामपि। वासुदेवे परे तत्त्वे प्राप्तिश्चैद्यस्य विद्विषः॥" इति।

अत्रायमाशयः—"तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्" इति। तथा—"सकृद् यदङ्गप्रतिमान्तराहिता मनोमयी भागवतीं ददौ गतिम्। स एव नित्यात्म-सुखानुभूत्य-भिव्युदस्तमायोऽन्तर्गतो हि किं पुनः॥" इत्यादिवत् तदाभासमपि ध्यायतस्तदावेशात्तथा तत्र वैरेणापि ध्यायतस्तदावेशेनैव निन्दादिकृतपापस्यापि नाशात् शिशुपालादेः श्रीकृष्णसायुज्यादिकं युक्तमेव। तथा ह्युक्तम्—"तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा। स्नेहात् कामेन वा युञ्ज्यात्

कथञ्चिन्नेक्षते पृथक् ॥" इति। युञ्ज्यादित्यत्र स्नेहकामादीनां विधातुमशक्यत्वात् सम्भावनायामेव लिङ्। वैरानुबन्धादीनामेकतरेणापि युञ्ज्याद् ध्यायेच्चेत्तदा भगवतः पृथग् नेक्षते तदाविष्टो भवतीत्यर्थः। वैरानुबन्धो वैरभावाविच्छेदः, निर्वैरं वैराभावमात्रमौदासीन्यमुच्यते, तेन कामादिराहित्यमप्यायाति, तेन वा वैरादिभावराहित्येन युञ्ज्याद् विहितत्वमात्रबुद्ध्या ध्यायेत्। ध्यानोपलक्षितं भक्तियोगं कुर्यादित्यर्थः। स्नेहः कामातिरिक्तः परस्परमकृत्रिमः प्रेमविशेषः, स तु साधके तदभिरुचिरेव। तदेवं सर्वेषां तदावेश एव फलमिति स्थिते झटिति तदावेशसिद्धये तेषु भावमयमार्गेषु निन्दितेनापि वैरेण विधिमय्या भक्तेर्न साम्यमित्याह श्रीनारदः श्रीयुधिष्ठिरम्—"यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात्। न तथा भक्तियोगेन इति मे निश्चिता मतिः ॥" इति। वैरानुबन्धेनेति भयस्याप्युपलक्षणम्। वैरानुबन्धेन शैघ्र्येण तन्मयतां तदाविष्टताम्। भक्तियोगेन विहितत्वमात्रबुद्ध्या क्रियमाणे तु न तथा।

आस्तां तावत्तादृशमहाप्रभावस्य भगवद्ध्यानस्य वार्त्ता, प्राकृतेऽपि तद्भावमात्रस्यावेशफलं महद् दृश्यते। तदुक्तम्—"कीटः पेशस्कृता रुद्धः कुड्यायां तमनुस्मरन्। संरम्भभययोगेन विन्दते तत्स्वरूपताम् ॥ एवं कृष्णे भगवति मायामनुज ईश्वरे। वैरेण पूतपाप्मानस्तमापुरनुचिन्तया ॥" इति। शास्त्रविहितेनैव भगवद्धर्मेण सिद्धिर्न तदविहितेन कामादिनेत्यपि वक्तुं न युज्यते—"कामाद् द्वेषाद्भयात् स्नेहाद्यथा भक्त्येश्वरे मनः। आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥" इति श्रीभगवद्वचनेन यथा विहितया भक्त्येश्वरे मन आवेश्य तद्गतिं गच्छन्ति, तथाऽविहितेनापि कामादिना बहवो गता इत्यर्थः।

केचित्तु काममप्यघं मन्यन्ते, तन्न समीचीनम्। "उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः। द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥" इत्यत्र द्वेषादेर्न्यक्कृतत्वादस्य तु स्तुतत्वात्, "प्रेमैव गोपरामाणां काम इत्यगमत्प्रथाम्। इत्युद्धवादयोऽप्येतं वाञ्छन्ति भगवत्प्रियाः ॥" इति गौतमीयतन्त्रवचनेन च तासामभ्यर्हितत्वश्रवणात्। उक्तञ्च भगवत्प्रियतमेनोद्धवेन—"वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः। यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥" इति, "गोपीनां तत्पतीनाञ्च सर्वेषामेव देहिनाम्। योऽन्तश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक् ॥" इति च शुकेन, तथा स्वयं भगवता चोक्तम्—"न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः। या मा भजन् दुर्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुना ॥" इति। एवञ्च गोपीभावस्य परमोत्कृष्टत्वं प्रमाणसिद्धमेव। इदमत्र मन्तव्यं यद् दास्यसख्यादयो ये ये रागात्मकाः साध्या भावा व्रजवासिजने प्रसिद्धास्तांस्तांश्च भावाननुसृत्य प्रवर्तते या या भक्तिः, सैव रागानुगाभिधा साधनभक्तिरिति ॥

**:०:**

# अद्वैतविशिष्टाद्वैततुलना

श्रीतिरुवेङ्कलाचार्यः, हैदराबादस्थवेदान्तवर्धनीकलाशालाध्यापकः ।

भो भो महाशयाः सुविदितमेवैतद्भवतां यदवतारपुरुषाः श्रीशङ्करभगवत्पादाः प्रस्थानत्रयं निर्माय मायावादव्यायाममायामितवन्त इति । एवमेव सुविदिततत्त्वा भगवद्रामानुजाचार्या विशिष्टाद्वैतं श्रुतिगीताब्रह्मसूत्राद्वैतेन निरणैषुः, यदर्थमेव च वेदार्थसंग्रहो गीताभाष्यं श्रीभाष्यमिति रत्नत्रयं बोधायनमुनिमतेन वितेनुरिति । इदानीं केचन संन्यासिनः सामान्यतो वादद्वयमिदमुद्भावयन्तः सन्तः कियन्तो मतद्वयमद्वयमद्वयमपीदं मुदा कदाप्येवमुपमन्वानास्तन्वाना वादकोलाहलं हालाहलं सामाजिकेषु केषुचित्प्रदेशेषु वाचेषुभिरभीषुभिश्च पत्रिकनां विकिरन्ति, अद्वैतस्याप्यस्य द्वैतमेव भावमाविष्कुर्वन्ति । अत एव चातन्ति ते मते मतौ कियत्त्वं यतश्चानयोर्द्वयोरप्याचार्यवर्ययोरवगच्छामोऽद्वैतम् अवतारतः स्ववाक्यतश्च । तद्यथा—उभावपीमावाचार्यौ वैशाखमासे शुक्लपक्षे षष्ठीतिथौ आर्द्रानक्षत्र एवावतेरतुस्तारणाय अस्मादृशां मोहदृशां भारतखण्डे दक्षिणदेशे एव च । ययोरिमाववतारौ श्रीशेषशङ्करयोस्तावुभौ भूष्यभूषकभावेन, विशिष्टमेवाद्वैतं निद्वयैतं व्यञ्जयतः, साधारणो भूषणभूष्यभाव इतीमां सूक्तिमरिक्तां कुर्वाते इत्यग्रे वितनिष्यामः । स्ववाक्यतोऽपीदमेव तत्त्वं तत्त्ववित्तमेषु वित्तममिदमाचार्यद्वयं प्रचारयति । अविद्यानिवृत्तिर्मोक्षः, सा च ब्रह्मविज्ञानादेवेति श्रीशङ्करभगवत्पादानां सूक्तसूक्तिरत्नमेव भगवद्रामानुजाचार्याः स्वीये श्रीभाष्ये लघुसिद्धान्तस्य मकुटमिव धारयन्ति "यदुक्तमविद्यानिवृत्तिरेव मोक्षः, सा च ब्रह्मविज्ञानादेव भवतीति, तदभ्युपगम्यते" इति भाषणेन । अतश्च यदभिमन्यन्तेऽनयोराचार्ययोर्वैमत्यं कियन्तस्तत्तेषां कियत्त्वमेव व्यञ्जयतीति निरूपयिष्यामः । अतः प्रथमतो वैमत्ये निदर्श्यमानानमानानेतान् हेतून् प्रदर्शयामः ।

### भगवत्पादमते

( १ ) ब्रह्मैकमेव तत्त्वं सत्यं च । जीवप्रकृती तु मिथ्यैव । व्यावहारिकमेवानयोः सत्यत्वं न पारमार्थिकम्, अत इमे द्वे अपि मिथ्यैवेत्येकमेव ब्रह्म सत्यमिति प्रथमो हेतुः ।

### भगवद्रामानुजमते

( १ ) चित्, अचित्, ईश्वरश्चेति त्रीणि तत्त्वानि, सत्यान्येव च । परस्परं भिन्नानि चापि । सूक्ष्मचिदचिद्विशिष्टः परमात्मा स्थूलचिदचिद्विशिष्टतया परिणमते । विशेषणयो-

(२) ब्रह्मैकमेव तत्त्वं सत्यञ्च, तत्र च न पात्रता सत्यानां गुणानां विशेषाणां वा। तत इदं ब्रह्म निर्गुणं निर्विशेषमेव चेति द्वितीयः।

(३) ब्रह्मैवाविद्या वा जीवभावमवाप्नोति। जीवरूपस्य तस्यैवायं संसारबन्धः। स चायं जीव आभासरूपो मिथ्या, यतोऽयं जीवोऽन्तःकरणे चैतन्यस्य प्रतिबिम्बमात्रमिति तृतीयः।

(४) तत्र प्रकृतिर्नाम तिरोदधद्ब्रह्मणः स्वरूपं विविधविचित्रविक्षेपकरः सदसदनिर्वचनीयो मिथ्याभूतो दोषविशेष इति चतुर्थः।

(५) ब्रह्मस्वरूपातिरिक्तं सर्वं ज्ञानं न प्रमा भ्रान्तिकल्पितं चेति पञ्चमः।

(६) विग्रहाराधनं साधनमिति षष्ठः।

(७) सर्वोऽपि शब्दो लक्षणावृत्त्या सन्मात्रावगाही भवतीति सप्तमः।

(८) चिन्मात्रेऽद्वैते परमात्मन्यध्यासवशादियं सृष्टिरित्यष्टमः।

शिचदचितोः स्थूलसूक्ष्मत्वरूपे भेदे विद्यमानेऽपि विशेष्यांशे तदभावाद्विशिष्टाद्वैतमेव तत्त्वं भवतीति प्रथमो हेतुः।

(२) गुणै रहितं वस्तु नैव सम्भवति। अतः सत्ये परस्मिन् ब्रह्मणि गुणा विशेषाश्च विद्यन्त एव, सत्या एव च। निर्गुणत्वं निर्विशेषत्वं च श्रुत्यारूढं हेयगुणविशेषनिषेधपरम्। अतश्च ब्रह्मोभयलिङ्गम्। तत्त्वं च हेयप्रत्यनीकत्वम्, कल्याणगुणाकरत्वं चेति द्वितीयः।

(३) जीवो नाम परमात्मनोंऽशस्तस्यायं जीवः शरीरम्, तत एव च तस्माद्भिन्नः सत्यस्वरूपः। एवं च जीवपरमात्मनोः शरीरशरीरिभावोंऽशांशिभावश्च। संसारसम्बन्धस्त्वंशस्य जीवस्यैव, न परमात्मन इति तृतीयः।

(४) परमात्मनो लीलोपकरणं तस्य सङ्कल्पवशाद् अनादितया निर्मितो ब्रह्मणोऽपृथक्सिद्धो द्रव्यविशेष एव प्रकृतिः। सा च सत्या इति चतुर्थः।

(५) सर्वं ज्ञानं प्रमैव, भ्रान्तौ तु विषयबाध एव, न तु ज्ञानस्य प्रमात्वं व्याहन्यत इति पञ्चमः।

(६) विग्रहाराधनं साध्यमिति षष्ठः।

(७) अपर्यवसानवृत्त्या सर्वोऽपि शब्दः परमात्मपर्यन्तानुसन्धानो भवतीति सप्तमः।

(८) सूक्ष्मचिदचिद्विशिष्टस्य परमात्मनः स्थूलचिदचिद्विशिष्टतापत्तिरेव सृष्टिरित्यष्टमः।

(९) अशेषविशेषप्रत्यनीके चिन्मात्रे ब्रह्मणि स्वरूपतिरोधायकस्य विविधविचित्रविक्षेपकरस्यानादेरविद्याख्यदोषस्य अध्यासः सृष्टिं प्रति कारणमिति नवमः ।

(१०) सृष्टेरादिमं कारणमविद्याशबलितं ब्रह्मैव चिन्मात्रमिति दशमः ।

(११) प्रलयो नाम अविद्यायाः समूलविनाशात्तत्कार्येऽध्यासे विनिष्टे तदध्यासमूलकं जगद्रूपं निवर्तते । यतश्च ब्रह्मणः स्वरूपापत्तिः सैवेत्येकादशः ।

(१२) अविद्यानिवृत्तिरेव मोक्ष इति द्वादशः ।

(१३) जीवभावे विनष्टे ब्रह्मस्वरूपप्राप्तिरेव मोक्षानुभव इति त्रयोदशः ।

(१४) मोक्षसाधनं चात्मैकत्वप्रतिपादकेन वाक्येन जन्यं साक्षात्काररूपं ज्ञानमेवेति चतुर्दशः ।

(१५) नित्यानित्यवस्तुविवेकः शमदमादिसाधनसम्पत्तिरिहामुत्रार्थफलभोग विरागः,

(९) परिपूर्णस्य परात्परस्य परमात्मनः केवलं लीलैव सृष्टेः हेतुरिति नवमः ।

(१०) सूक्ष्मचिदचिद्विशिष्टः परमात्मैव सृष्टेरादिमं कारणमिति दशमः ।

(११) प्रलयश्चात्र मते स्थूलचिदचिद्विशिष्टस्य परमात्मनः सूक्ष्मचिदचिद्विशिष्टतामात्रमित्येकादशः ।

(१२) परब्रह्मणः सायुज्यमवाप्य तज्जनितस्य ब्रह्मानन्दस्य सम्पत्तिरेव मोक्ष इति द्वादशः ।

(१३) प्राकृतदेहदेशौ विसृज्य अप्राकृतदेहविशिष्टो ब्रह्मणः सालोक्यम्, सारूप्यम्, सामीप्यम्, सायुज्यञ्च योऽधिगच्छति जीवस्तस्य परमात्मकैङ्कर्यजनितो नित्यो निरवद्यो निरतिशयश्च ब्रह्मानन्दोऽनुभवगोचरो भवति । स एव मोक्षानुभव इति त्रयोदशः ।

(१४) कर्मज्ञानसहकृतं तैलधारावदविच्छिन्नस्मृतिसन्तानरूपं दर्शनसमानाकारं प्रीतिरूपापन्नमसकृदावृत्तमभ्यासाधेयातिशयमाप्रयाणादनुवर्तमानं ध्यानोपासनादिशब्दवाच्यं भक्तिरूपापन्नं च यद् ज्ञानं तदेव मोक्षसाधनमिति चतुर्दशः ।

(१५) विवेक-विमोकाभ्यास क्रियाकल्याणादीनिसाक्षान्मोक्षसाधनज्ञानाङ्गानीति पञ्चदशः ।

मुमुक्षुत्वं चेत्येतत्साधनचतुष्टयेन सहकृतानि श्रवणमनननिदिध्यासनानि साक्षान्मोक्षसाधनज्ञानाङ्गानीति पञ्चदशः ।

( १६ ) यश्च ब्राह्मण उपनीतः संन्यासी निवृत्तौ निष्ठितः स एव मोक्षेऽधिक्रियत इति षोडशः ।

( १७ ) यज्ञयागादिकं च कर्म चित्ते नैर्मल्यमादधद् विविदिषोत्पत्तावेवोपकरोति । तच्च न साक्षाज्ज्ञानस्याङ्गं भवति, अतस्तन्निरसनीयमेवेति सप्तदशः ।

( १६ ) सर्वेऽपि द्विजा उपनयनानन्तरमध्ययनेऽधिक्रियन्ते, त एव साधनात्मकं भक्तियोगमवलम्ब्य तन्मूलतो मोक्षमधिकुर्वत इति षोडशः ।

( १७ ) अनभिसंहितफलं कर्म परमपुरुषाराधनरूपं सद् ध्रुवानुस्मृतिरूपाया भक्तेः साक्षादङ्गं भवति, अतो देहावसानपर्यन्तं तमेव नियममनुसृत्य कर्म आचरणीयं तत्सहकारि च भवतीति सप्तदशः ।

एतैः सप्तदशभिर्विशेषैर्हेतुभिः शाङ्करादध्वनो रामानुजीयोऽध्वा माध्वाध्ववद् विध्वस्ताद्वैतभाव एवेति मन्यमानाः सामान्यतो मान्या धन्यम्मन्या भवन्ति । वस्तुतस्त्वेते भेदहेतव इति प्रदर्शनेन तेषामुभयमतापरिज्ञानमुभयभाष्यानवलोकनमेव च सम्यग् ज्ञापितं भवति यथा तथा निरूपयामः । एते तु प्रायशः शाङ्करभगवत्पादानुगृहीतं प्रस्थानत्रयम्, प्रस्थानत्रयमिति किं सूत्रभाष्यमपि न कलयन्ति । न कलयन्तीति किं श्रीशङ्करनिर्मितप्रस्थानानामालोकनेनाऽपि तत्स्पर्शेनाप्यात्मानमशुचिं मन्यन्ते । एवमेव भगवद्रामानुजीयेष्वपि ग्रन्थेषु नैव सम्यग् विमर्शरूपं तात्त्विकं ज्ञानमेतैर्लब्धमिति च स्पष्टं भविष्यति । एतादृशाश्चैतेऽनुत्पन्नानामेव शिशूनां नामान्यादधति । यतोऽत्र बहवो विषयाः श्रीशङ्करभगवत्पादैर्भगवद्रामानुजाचार्यैर्वा अप्रस्तुताः, केचन विषया अन्ततो न विभेदमातन्वते । अन्ये च नैव विभेदमाधातुं प्रभवन्ति । तदेतत् प्रस्तुतमस्तितायां निरूपयामः ।

तत्र योऽयं प्रथमो विषयो ब्रह्मैकमेव सत्यं जीवप्रकृती तु मिथ्ये, व्यावहारिकमेवाऽनयोः सत्यत्वं न पारमार्थिकमतो द्वैतमेव न तत्त्वमिति । सोऽयं भगवत्पादैर्नैवं प्रस्तुतो यत एते महाशया एवं भाषितवन्तः 'सत्त्वाच्चापरस्य' (२–१–१६) इति सूत्रं व्याचक्षाणाः—"यथा च कारणं ब्रह्म त्रिषु कालेषु सत्यं न व्यभिचरति, एवं कार्यमपि जगत् त्रिषु कालेषु सत्यं न व्यभिचरति ।

एकञ्च पुनः सत्त्वमतोऽनन्यत्वं कारणात् कार्यस्येति। किञ्चान्यत्रापि (२-१-६) एवमभाषिष्ट- "दृश्यते हि सत्तालक्षणो ब्रह्मस्वभाव आकाशादिष्वनुवर्तमान इत्युक्तम्—इदं सर्वं यदयमात्मा", "आत्मैवेदं सर्वम्", "ब्रह्मैवेदममृतं पुरस्तात्", "सर्वं खल्विदं ब्रह्म" इत्येवमादिभिर्हि श्रुतिभिरविशेषेण त्रिष्वपि कालेषु कार्यस्य कारणानन्यत्वं श्राव्यते" इति। एतेन च भाष्येण त्रयाणामपि चिदचिदीश्वराणां सत्त्वं त्रिकालाबाध्यमेवेति स्पष्टम्। न च वक्तुं युक्तं चिदचितोः सत्त्वं व्यावहारिकं ब्रह्मणस्तु पारमार्थिकमिति। एकञ्च पुनः सत्त्वमिति भगवत्पादीयं भाषणं प्रत्नं प्रयत्नेन स्मर्तव्यम्। इदञ्च व्यावहारिकत्वं नाम मिथ्यैवान्तत इति पूर्वपक्षिणां मतमनुसृत्योक्तम्। वस्तुतस्तु व्यावहारिकसत्यं नैव मिथ्यात्वे पर्यवस्यति। एतदपि श्रीशङ्करभगवत्पादीयैरेव भाषणैः सतां तोषणैः प्रदर्शयामः। तत्रैतत्सिद्धं भवति ब्रह्मप्रकरणे सर्वधर्मविशेषरहितब्रह्मदर्शनादेव फलसिद्धौ सत्यां यत्तत्राफलं श्रूयते ब्रह्मणो जगदाकारपरिणामित्वादि तद्ब्रह्मदर्शनोपायत्वेनैव विनियुज्यते। फलवत्सन्निधावफलं तदङ्गमितिवत्, न तु स्वतन्त्रं फलाय कल्प्यत इति। अत्र केचित् संशेरते किञ्चिदंशे—न चेयं परमार्थविषया सृष्टिश्रुतिः, अविद्याकल्पितनामरूपव्यवहारगोचरत्वाद् ब्रह्मात्मभावप्रतिपादनपरत्वाच्चेत्येतदपि न विस्मर्तव्यमिति (२-१-३३) भाषणात् सृष्टिर्मिथ्येति। तत्र प्रतिसमादध्महे—परमार्थपदं विवृणद्भिराचार्यपादानामेव वचोभिर्न चेयं परिणामश्रुतिः परिणामप्रतिपादनार्था, तत्प्रतिपत्तौ फलानवगमात्। सर्वव्यवहारहीनब्रह्मात्मभावप्रतिपादनार्था त्वेषा, तत्प्रतिपत्तौ फलावगमादिति (२-१-२७)। "नह्येवं सृष्ट्यादिप्रपञ्चः प्रतिपिपादयिषितो नहि तत्प्रतिबद्धः कश्चित्पुरुषार्थो दृश्यते श्रूयते वा। न च कल्पयितुं शक्यते, उपक्रमोपसंहाराभ्यां ब्रह्मविषयैर्वाक्यैः साकमेकवाक्यताया गम्यमानत्वात्। दर्शयति च सृष्ट्यादिप्रपञ्चस्य ब्रह्मप्रतिपत्त्यर्थताम्—"अन्नेन सोम्य शुङ्गेन अपोमूलमन्विच्छ, अद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ, तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ" इति। मृदादिदृष्टान्तैश्च कार्यस्य कारणेनाभेदं वक्तुं सृष्ट्यादिप्रपञ्चः श्राव्यत इति गम्यते। तथा च संप्रदायविदो वदन्ति—"मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा। उपायः सोऽवताराय नास्ति भेदः कथञ्चन॥" इति। ब्रह्मप्रतिपत्तिप्रतिबद्धं तु फलं श्रूयते—"ब्रह्मविदाप्नोति परम्", "तरति शोकमात्मवित्", "तमेव विदित्वातिमृत्युमेति" इति। प्रत्यक्षावगमं चेदं फलम्। 'तत्त्वमसि' इत्यसंसार्यात्मत्वप्रतिपत्तौ सत्यां संसार्यात्मव्यावृत्तेः" (१-४-१४) इति। एतेन च भाषणेन पारमार्थिकत्वं नाम परमप्रयोजनवत्त्वम्, व्यावहारिकत्वं नाम विद्यमानस्यैव न तु मिथ्याभूतस्य व्यवहारगोचरत्वम्। न तु कदाचिदप्यसत्यत्वम्। यदि ह्येवं स्यात् तर्हि शाङ्कराणां प्रायशः सर्वेषां वा व्यावहारिक-

त्वेनाभिमतेऽस्मिन् प्रपञ्चे ब्रह्मगतमेव सत्त्वं विद्यत इति कथं भाष्येत। अपि च कार्यकारणानन्यत्वं सिद्धान्तयतां तदनन्यत्वसूत्र( २–१–१४ )प्रमाणकानां परस्माच्च ब्रह्मणः प्राणादिकं जगज्जायत इति वेदान्तमर्यादा सर्वेषु च वेदान्तेषु प्रसिद्धं ब्रह्मशब्दस्यालम्बनं जगत्कारणमिति वदतामाचार्यपादानां ब्रह्मगतमेव सत्त्वं प्रपञ्चे विद्यत इति युक्तिरत्यन्तं समञ्जसैव खलु। अनेन भाष्येण प्रपञ्चकारणमेव ब्रह्म, ब्रह्मशब्दस्यालम्बनं ततो जातं जगत् तद्गतेन सत्त्वेन पारमार्थिकेनैव सत्त्वेन सम्पन्नमिति स्पष्टम्। उभयत्रैकरूपं हि सत्त्वं भाषितं यदि नाम प्रपञ्चे व्यावहारिकसत्त्वं तच्च शाङ्कराणामभिमतिमनुसृत्य मिथ्याभूतं च स्यात्, तर्हि तदेव सत्त्वं तत्कारणे ब्रह्मण्यपि स्यात्, एकञ्च पुनः सत्त्वमिति भाषणात्। किञ्च, मिथ्या सन्निति परस्परं व्याहतिरेव। एवञ्च प्रपञ्चः सन्निति व्यवह्रियते। नामरूपव्याकृतं हि वस्तु सच्छब्दार्हं लोके प्रसिद्धम् ( २-१-१२ ) इति भाषणमनुसृत्य (अत्र वस्तुपदं सविशेषमालोचनीयम्)। तथा चात्र जगति व्यावहारिकं सत्त्वं व्यवहारमात्रनिर्वर्तकमिति यावत्। न त्वनेन किञ्चिदप्यन्यत् परमं प्रयोजनं निष्पाद्यते। तथा चोक्तम्—सम्यग्व्यवहारस्य प्रसिद्धिः प्रयोजनं स्यादित्याचार्यपादैश्छान्दोग्यषष्ठे तृतीयमन्त्रे—परब्रह्मणस्तु सर्वव्यवहारातीतत्वात् तत्र सत्त्वं न व्यवहारगोचरः। यदुक्तं पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठत इति। अतोऽत्र ब्रह्मणि सत्त्वं न व्यवहारस्यालम्बनम्, किन्तु पारमार्थिकमेव परमप्रयोजनकमेव सद् ब्रह्मध्यानेन मोक्षः परमपुरुषार्थो लभ्यत इति यावत्, ब्रह्मणि निष्ठायाः परमप्रयोजनकत्वात्। यदुक्तमुभयत्रापि—"न चेयं श्रुतिः परिणामप्रतिपादनार्था तत्प्रतिपत्तौ फलानवगमात्। सर्वव्यवहारहीनब्रह्मात्मभावप्रतिपादनार्था त्वेषा, तत्प्रतिपत्तौ फलावगमात्" इति। अत एव च श्रीशङ्कराचार्याः कारणैकदृष्टय इति, मण्डनमिश्रास्तु कार्यैकदृष्टय इति च सम्प्रदायविदां व्यवहारः। एवञ्च सत्त्वं यावता भगवत्पादभाषणैरवगतं तदेकमेव चिदचिद्ब्रह्मसु सत्त्वं न तु मिथ्या, किन्तु सत्यमेव तत्। ब्रह्मणः "सत्यानामेव सत्यम्" इति निर्देशो बृहदारण्यके श्रूयते। यतः किञ्च तत्रैव सत्यस्य सत्यमित्युपनिषदिति च शङ्कराचार्यैर्भाषितम्, अतश्चैतावता ब्रह्म एव सत्यमन्यत्तु सर्वमसत्यमिति श्रीभगवत्पादैरुक्तमिति तद्धेदहेतुरिति च यदाहुर्विमतयस्तन्निरस्तं वेदितव्यम्।

अथ च भगवद्रामानुजीये विशिष्टाद्वैते यत्तत्त्वत्रयमभिहितम्, तदपि नैव श्रीशङ्करेभ्यो भेदमावहति। यथोक्तं तैर्माण्डूक्योपनिषद्विवरणे—"ननु तत्र सदेव सोम्येति प्रकृतं सद् ब्रह्म प्राणशब्दवाच्यम्, नैष दोषः, बीजात्मकत्वाभ्युपगमात् सतः। यद्यपि सद्ब्रह्म प्राणशब्दवाच्यं तत्र, तथापि जीवप्रसवबीजात्मकत्वमपरित्यज्यैव प्राणशब्दत्वं सतः सच्छब्दवाच्यता च" इति।

अयञ्च सच्छब्दः छान्दोग्यषष्ठप्रपाठके सद्विद्यायां वर्तते। स खलु प्रपाठकः सत्यार्थप्रतिपादक इत्येवं खलु संक्षेपशारीरककर्ताऽभ्यधात्। षष्ठप्रपाठकनिबद्धमुदीरितं यत् तत्सत्यमेव खलु सत्यसमाश्रयत्वादिति। एतेनायं तत्त्वत्रयविभागो मिथ्या, न शङ्करभगवत्पादाङ्गीकृत इति वादो निरस्तः। किञ्च, विशिष्टैक्यं च प्रतिपादितमिति न भेदावकाशः।

अथ द्वितीयं विषयं विमृशामः—ब्रह्मैकमेव तत्त्वं सत्यञ्च, तत्र च न पात्रता सत्यानां गुणानां विशेषाणां च, तत इदं ब्रह्म निर्गुणं निर्विशेषमिति भगवत्पादानां मतमिति। अत्र प्रथमोंऽशो ब्रह्मैकमेव सत्यमिति, स प्रथमविषयविचारणायामेव निराकृतः। अथावशिष्टोंऽशो विमृश्यते। एतच्च ब्रह्म निर्गुणं निर्विशेषमिति विषये भगवत्पादानां भावं निरूपयामः। प्राकृता गुणाः विशेषा वा ब्रह्मणि नावकाशं लभन्त इत्येव। अयञ्च विषयस्तेषां भाषणैरेव प्रमाण्यते। यथा—"एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इति चात्मत्वापहतपाप्मत्वादयो गुणा न भूताकाशे संभवन्ति। "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति" इति प्रकृतदहराकाशविज्ञानस्यानन्तफलत्वं वदन् परमात्मत्वमस्य सूचयति·····'दहरस्य ब्रह्मतां गमयति·····'एवं धृतेश्च हेतोः परमेश्वर एवायं दहरः। न चोपाधिधर्मानभिमन्यमानस्यापहतपाप्मत्वादयो धर्माः सम्भवन्ति····· "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति यदस्य पारमार्थिकं स्वरूपं परं ब्रह्म तद्रूपतया एनं जीवं व्याचष्टे न जैवेन रूपेण। यत्परं ज्योतिरुपसम्पत्तव्यं श्रुतं तत्परं ब्रह्म, तच्चापहतपाप्मत्वादिधर्मकम्, तदेव च जीवस्य पारमार्थिकं स्वरूपं तत्त्वमसीत्यादिशास्त्रेभ्यो नेतरदुपाधिकल्पितं·····'तदेव चास्य पारमार्थिकं स्वरूपं येन शरीरात् समुत्थाय स्वेन रूपेणाभिनिष्पद्यते·····'तस्मादविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृभोक्तृरागद्वेषादिदोषकलुषितमनेकानर्थयोगि, तद्विलयनेन तद्विपरीतमपहतपाप्मत्वादिकं पारमेश्वरं स्वरूपं विद्यया प्रतिपद्यते··"अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" इति समुच्चयार्थेन चशब्देन आत्मानं कामाधारमाश्रितांश्च कामान् विज्ञेयान् वाक्यशेषो दर्शयति" (१-३-५ अधि०) इति। एतेन दहराधिकरणभाष्येण भगवत्पादैरनुगृहीतेन परमात्मनि सगुणत्वं पारमार्थिकमेव निर्गुणत्वं चापहतपाप्मत्वादिके पर्यवस्यतीति स्पष्टमेव भवति। अथेदमत्र चोद्यमुपतिष्ठते—अपहतपाप्मत्वादिकं कथं नाम निर्गुणत्वं स्यादिति। अत्र ब्रूमो गुणास्सत्त्वं रजस्तम इति निघण्टुः। "सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः। निबध्नन्ति महाबाहो देहे देहिनमव्ययम्॥" इति गीता। तेषां कार्याणि च तत्रैव चतुर्दशाध्याये निरूपितानि। न च प्रमत्तव्यं

सत्त्वस्य कार्यं कथं पापं भवेदिति बन्धकत्वादिति गृह्णीष्व, यतस्तत्रैवोक्तम्-"तत्र सत्त्वं...सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ", "सत्त्वं सुखे सञ्जयति" इति। एवं सत्त्वकार्यमपि पुण्यं मुक्तिप्रतिबन्धकतया पापमित्येवोक्तं शास्त्रे। आस्तामिदं कथान्तरम्, प्रकृते कार्यनिवृत्तिमुखेन कारणानां गुणानां निवृत्तिं ज्ञापयति श्रुतिः। अत एवोक्तं छान्दोग्ये—"तस्योदिति नाम, उदेति ह वै सर्वेभ्यः पाप्मभ्यः" इति निर्गुणशब्दार्थोऽत्रैवमाचार्यपादैर्निष्कृष्ट इति। अतोऽपि स्पष्टतरं प्रमाणमुपन्यस्यामः—"अपि च यत्र निरस्तसमस्तविशेषं पारमेश्वरं रूपमुपदिश्यते भवति तत् शास्त्रम् "अशब्दमस्पर्शमरूपमव्ययम्" इत्यादि। अनेनान्तरधिकरणभाषणेन निर्गुणशब्दार्थः शब्दादिराहित्ये स्पष्टितः। किञ्च, "प्रतिषिद्धसर्वविशेषत्वाद् ब्रह्मणः...स एष नेति नेत्यात्मा" इत्यादिश्रुतिस्मृतिन्यायेभ्यो न देशकालादिविशेषयोगः परमात्मनि कल्पयितुं शक्यते" इति। न च कार्ये प्रत्यभिसन्धिरिति सूत्रभाष्येण च देशकालादिकृत एव विशेषस्तद्राहित्यमेव ब्रह्मणि निर्विशेषत्वमिति सम्यगेव स्फुटीकृतम्। कथं वा "आप्रणखात् सर्व एष हिरण्यः" इति श्रुत्यनुगृहीताऽप्राकृतदिव्यमङ्गलविग्रहे परमात्मनि प्राकृतानामेषां शब्दादीनां गुणानां देशकालादिविशेषाणां वा प्रसक्तिः स्यात्। तर्हि कथमप्रसक्तं निषिद्ध्यते। अत्रापि तेषामेव समाधानमस्ति—"सर्वकारणत्वात्तु विकारधर्मैरपि कैश्चिद्विशिष्टः परमेश्वर उपास्यत्वेन निर्दिश्यते सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस इत्यादिना" इति। किञ्चावृत्त्यधिकरणेऽप्येवं भाषितमाचार्यपादैः—"अपि च तत्त्वमसीत्येतद्वाक्यं त्वंपदार्थस्य तत्पदार्थभावमाचष्टे। तत्पदेन च प्रकृतं सद्ब्रह्म ईक्षितृजगतो जन्मादिकारणमभिधीयते—"सत्यं ज्ञानमनन्तं ब्रह्म", "विज्ञानमानन्दं ब्रह्म", "अदृष्टं द्रष्ट अविज्ञातं विज्ञातृ अजमजरममरम् अस्थूलमनण्वह्रस्वमदीर्घम्" इत्यादिशास्त्रे प्रसिद्धम्। तत्राजादिशब्दैर्जन्मादयो भावविकारा निवर्तिताः। अस्थूलादिशब्दैश्च स्थौल्यादयो द्रव्यधर्माः (निवर्तिता इति वाक्यशेषः), विज्ञानादिशब्दैश्च चैतन्यप्रकाशात्मकत्वमुक्तम्, एष व्यावृत्तसर्वसंसारधर्मकोऽनुभवात्मको ब्रह्मसंज्ञकस्तत्पदार्थो वेदान्ताभियुक्तानां प्रसिद्ध इति। एष व्यावृत्तसर्वसंसारधर्मक इत्यनेन परमात्मनि परब्रह्मणि निर्गुणश्रुतेरर्थोऽशङ्कनीयतया विवृतः। न चात्र सर्वगुणराहित्यमर्थ इति शङ्क्यम्, तत्पदार्थस्य ब्रह्मणि ईक्षितृत्वादिगुणानां स्पष्टमभिधानात्। एतेन च तत्र जहदजहल्लक्षणां कल्पयन्तः शाङ्करम्मन्याः परास्ताः, 'आचष्टे अभिधीयते' इत्यभिधावृत्तेरेव प्रतिपादनात्। कथं विरुद्धगुणयोरन्योन्यात्मत्वसम्भवो लक्षणां विना प्रत्येतव्यः स्यात्? अत्राप्याचार्या एवैवं समादधति—"यत्तूक्तं न विरुद्धगुणयोरन्योन्यात्म्यत्वसम्भव इति नायं दोषः, विरुद्धगुणताया मिथ्यात्वोपपत्तेः। यत्पुनरुक्तमीश्वराभावप्रसङ्ग इति, तदसच्छास्त्रप्रामाण्यादनभ्युपगमाच्च

नहीश्वरस्य संसार्यात्मत्वं प्रतिपाद्यत इत्यभ्युपगच्छामः, किं तर्हि संसारिणः संसारित्वापोहेन ईश्वरात्मत्वं प्रतिपिपादयिषितमिति । एवञ्च सत्यद्वैतेश्वरस्यापहतपाप्मत्वगुणता, विपरीतगुणतात्वितरस्य मिथ्येति ( ४–१–३ ) । अत्रेदमाकूतम्–इदं सर्वं श्रुतिः शब्दस्वभावेनैव निष्पादयतीति । तद्यथा–तच्छब्दः स्वस्य परामर्शकत्वस्वभावेन, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतिवशात् समधिगतसकलकल्याणगुणसनाथमेव ब्रह्मावगमयति । यतश्च सर्वशाखाप्रत्ययन्यायेन पूर्वोक्तरीत्या सकलगुणसनाथमेव सकलाप्राकृतकल्याणगुणानन्तसमुदायस्य आस्पदमनास्पदञ्च प्राकृतानां गुणानां विशेषाणाञ्च परं ब्रह्माभिधातुं शक्नोति, सर्वनाम्नामुपस्थितिरूपबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तिरिति हि न्यायः । तत्पदञ्च सर्वनाम त्वंपदन्तु नैवं, जीवं सकलविकारास्पदत्वेन तत्पदवाच्यब्रह्मविपरीतगुणास्पदत्वेन च वक्तुं शक्नोति, त्वंपदस्य पुरोऽवस्थित एव शक्तेः । यदि च प्रतिसन्धानेन जीवगता हेयगुणा मनस्युपस्थाप्यन्ते, ते नैव शब्दवृत्तेर्गोचराः । नहि शब्दमशब्देनान्वेतीति हि न्यायः । किञ्च, यावता कालेन सा विपरीतगुणता अनुसन्धानतः शक्यते उपस्थापयितुम्, तावत् प्रथममुपस्थितेन श्रवणानुभवतोऽनेन वाक्येनापहतपाप्मत्वादिगुणकेन ब्रह्मणाभेदोऽभिधाय प्रतिबोध्यते । ततश्चात्र त्वंपदार्थे या अपहतपाप्मतादेर्ब्रह्मगताया विपरीतगुणता पूर्वं विदिता, सा अनुत्थानोपहतैव मिथ्या भवितुमीष्टे, प्रमाणमूर्धन्यायाः श्रुतेः प्राबल्यात् । रज्जुप्रतिबोधात् प्रविदितसर्पवत् । न चोभयस्यापि गुणानां मिथ्यात्वमुक्तं विपरीतगुणता त्वितरस्येति तुशब्देन जीवगतमेव विपरीतगुणत्वं मिथ्येति ह्युक्तम् । यदि चोभयत्र मिथ्यात्वमभिमतं स्यात्तर्हि विपरीतगुणता चेति 'च'शब्दः प्रयुक्तः स्यात् । न चैवं चशब्दः प्रायोजि किन्तु 'तु' इत्येव, यतश्च वैलक्षण्यं परस्परं द्योतितं स्यात् । एवञ्च "तत्त्वमसि" इति वाक्येन परब्रह्मणः सगुणतैव भगवत्पादाभिमता तैरभिहिता च, न तु गुणहीनतेति । तथा च श्रीशङ्कराभिमता निर्गुणता प्राकृतगुणनिषेध एवेति निरूपितमेव प्राक् तेषामेव भाषणैः । एवं द्वितीयोऽपि विषयो न विभेत्तुमीष्टे श्रीशङ्करभगवत्पादेभ्यो भगवद्रामानुजाचार्यान् । यतस्ते आचार्यवर्या एवमवादिषुः–"न च निर्गुणवाक्यविरोधः प्राकृतहेयगुणविषयत्वात्तेषाम्" इति महासिद्धान्ते ।

अथ तृतीयं विषयं विचारयामः—ब्रह्मैवाविद्यावशाज्जीवभावं प्राप्तं संसारेण बध्यत इत्यस्मिन् भगवत्पादीयविषये भगद्रामानुजाचार्या विप्रतिपद्यन्त इति । नेदं युक्तम्, यतः "अंशो नानाव्यपदेशात्", "अन्यथापि दाशकितवादित्वमधीयत एके" इति सूत्रं विवृण्वाना भगवद्रामानुजाचार्या एवमभाषिषत—"नानाव्यपदेशस्तावत् स्रष्टृत्वसृज्यत्व' 'पतित्वशेषत्वादिभिरन्यथा च—अभेदेन व्यपदेशोऽपि "तत्त्वमसि", "अयमात्मा ब्रह्म" इत्यादिभ्यो दृश्यते, अपि दाशकितवा-

दित्वमधीयत एके। ततश्च सर्वजीवव्यापित्वेनाभेदो व्यपदिश्यत इत्यर्थ इति। अनेन च भाष्येण सर्वजीवाभिन्नं ब्रह्म संसरति दाशकितवादिक्षुद्रजीवात्मभावेनेति स्पष्टमेव। एवञ्च विकृतमेव ब्रह्म जीवभावमनुभवतीत्युभयाङ्गीकृतम्, यतो ब्रह्मांशस्य जीवत्वमुभाभ्यां भाषितं तत्र। अत एव च ब्रह्मशब्दो जीवेऽपि प्रवर्तत इति "स्याच्चैकस्य ब्रह्मशब्दवत्" इति पाराशर्यः सूत्रयामास। सा च विकृतिर्ब्रह्मण्यविद्यावशात् कर्मवशाद्वेति विकल्प्यम्। नहि ब्रह्मणि संसारहेतुः कर्म संभवति, किन्त्वविद्याभ्रान्तिरेव संसारकारणम्। संसारस्याविद्यामूलकत्वमुभाभ्यामप्यङ्गीकृतमेव। अत्र भगवत्पादा अविद्यात्मकनामरूपबीजव्याकरणापेक्षत्वात् सर्वस्येत्यूचुः। आचार्यवर्याश्च अविद्या नाम कर्मेत्यभिप्रयन्ति। उभयमपि जीवभावस्य कारणमेवेति न विभेदः।

अत्र जीवो मिथ्येति यदुक्तं तदयुक्तम्। जीवभावो मिथ्योभयत्रापि, जीवस्तु न मिथ्या। मिथ्यात्वञ्च विनाशपर्यवसितमित्यन्यदेतत्। यथाहुर्भगवत्पादाः—"अपरे तु वादिनः पारमार्थिकमेव जैव्यं रूपमिति मन्यन्ते, अस्मदीयाश्च केचित्। तेषां सर्वेषामात्मैकत्वदर्शनप्रतिपक्षभूतानां प्रतिरोधायेदं शारीरकमारब्धम्" इति। भगवद्रामानुजाचार्यैश्चात्रैवं प्रत्यपादि—जीवात्मानः कर्मरूपाविद्यावेष्टितास्तत्तत्कर्मानुरूपज्ञानसङ्कोचमापन्ना ब्रह्मादिस्तम्बपर्यन्तविविधविचित्रदेहेषु प्रविष्टाः।...एतेषां संसारमोचनं भगवत्प्रपत्तिमन्तरेण नोपपद्यत इति तदर्थं प्रथममेषां देवादिभेदरहितज्ञानैकाकारतया सर्वेषां साम्यं प्रतिपाद्यमिति (वेदार्थसंग्रहः)। अतश्चोभयोर्वाक्यवशाज्जीवभाव आविद्यक इत्येव सिद्धम्। एवञ्चात्र संप्रतिपत्तिरेव दृश्यते न काचिदपि विप्रतिपत्तिः। न च वाच्यम्—अविद्या अज्ञानमिति शङ्कराचार्याणाम्, कर्मेति रामानुजाचार्याणाञ्च विभेदो जागर्त्येवेति। यतोऽविद्यापदं प्रकृते संसारविषये कर्मवाचकमेव तावाचार्यौ मन्येते। यथा—ईशावास्येऽविद्यापदविवरणेऽविद्याम्—विद्याया अन्या अविद्या तां कर्मेत्यर्थः, कर्मणो विद्याविरोधित्वात्। उत्तरत्र च तत्रानेकवारं संसारकारणकर्मवाचकतया व्याचख्युः। तद्यथा—"अन्यदाहुरविद्यया", "कर्मणा क्रियत" इति। तथोक्तम्—"कर्मणा पितृलोको विद्यया देवलोकः" इति। सूत्रभाष्ये च भगवद्रामानुजाचार्यैर्यथाभ्युपगतं तथैवोचुः—"न चाविद्यादिक्लेशदाहे सति क्लेशबीजस्य कर्माशयस्यैकदेशदाहः" (३-३-३३) इति। एवञ्च यथा रामानुजाचार्याः कर्मणा रूप्यया अविद्यया वेष्टिता जीवा इत्यूचुः। तथा कर्माशय एव जीववेष्टनाविद्यादिक्लेशहेतुरिति स्पष्टमेवोक्तम्। ततश्चाविद्यापदार्थे न विमतिरिति स्पष्टम्। अथवाल्पमेतत्। अंशाधिकरणश्रीभाष्यतो दाशकितवादिरूपेण संसरद्ब्रह्म क्षुद्रजीवेभ्योऽभिन्नमेव ब्रह्मेत्यवगतम्। सर्वजीवव्यापित्वेनाभेदो व्यपदिश्यत इति हि तत्रोक्तम्। अथवा

ब्रह्मणः शरीरभूतो जीवः संसरतीत्युक्ते ब्रह्मैव संसरतीत्यर्थोऽकामेनाप्यङ्गीकर्तव्य एव। यथास्माकं करचरणादिभिः शरीरेण क्रियमाणं कर्म सर्वं वयमेव अकार्ष्मेति प्रसिध्यति। एवञ्च ब्रह्मैव जीव इत्युक्तं भवति सामान्यतः। यथा वयमेव शरीरमिति, तदात्मत्वात्। निष्कृष्टनिर्देशे तु मम शरीरमिति षष्ठीप्रसङ्गः सम्बन्धे पर्यवस्यति। तथा च तत्रापि ब्रह्मणो जीव इत्येव तादात्म्यसम्बन्धे पर्यवस्यति। अत एव नानाव्यपदेशादन्यथापि व्यपदेशाज्जीवो ब्रह्मणो भिन्नाभिन्नः। यथोक्तम्—"अतो भेदाभेदावगमाभ्यामंशत्वावगमः" इति भगवत्पादैरंशाधिकरणे। तत्रैव चाचार्यवर्या एवमाहुः—अत उभयव्यपदेशोपपत्तये जीवोऽयं ब्रह्मणोंऽश इत्यभ्युपेतव्यमिति। अत्रेदं तत्त्वम्—एकवस्त्वेकदेशत्वमंशत्वम्। यद्यप्यखण्डस्य ब्रह्मणो नैवांश इत्युभाभ्यामाचार्याभ्यामङ्गीक्रियते, तथापि माण्डूक्यविवरणमनुसृत्य सतो ब्रह्मणो विशिष्टत्वाभ्युपगमात् तदेकदेशत्वम् अंशत्वमुपपद्यत एव। अत एव गीताभाष्ये—"ममैवांशो जीवलोके जीवभूतः सनातनः" इत्यत्र ममैव परमात्मनोंऽशो भागोऽवयव एकदेश इत्यनर्थान्तरमित्युक्तमाचार्यपादैः। अखण्डस्य ब्रह्मणोंऽशो जीवो न भवितुमीष्टे इत्युभयसंप्रतिपन्नम्। भेदाभेदौ ब्रह्मणा सह जीवस्याम्नातावित्यप्युभयसंप्रतिपन्नम्। अंशत्वं चावश्यमङ्गीकार्यमित्यप्युभयसंप्रतिपन्नम्। अथ कुत्र विमतेर्मक्षिकायाः पदमत्र स्याद् निधातुम्। यदुक्तं जीवो मिथ्येति तत्तु मिथ्यावचनम्। कुतः ? ब्रह्मांशं जीवं वदन्तौ इमावाचार्यौ कथं वा जीवं मिथ्येति ब्रूतः। न कुत्रापि तद्भाष्येष्विदमर्थकं वचनं दृश्यते। जीवरूपापहतिस्तु आचार्यद्वयेनाङ्गीकृतैव। अत्र विषये भगवत्पादानां वचनमितः पूर्वमुदाहृतमेव। आचार्यवर्या अपि विरजास्नानोत्तरं प्राकृतं जीवरूपमपैतीत्यभ्युपगच्छन्ति। एवञ्च न कुत्रापि विमतेरवकाशः। यतो जीवाभिन्नं ब्रह्मेत्युभयाभ्युपगतम्, जीवब्रह्मणोरंशांशिभावोऽभ्युपगत उभयत्र। शरीरशरीरिभावोऽप्युभाभ्यामन्तर्याम्यधिकरणेऽङ्गीकृतः। जीवस्यैव संसारबन्ध इति श्रीरामानुजैरुक्तमिति विमता वदन्त्येव। भगवत्पादा अपि एवं व्यञ्जयन्ति—"नहीश्वरस्य संसार्यात्मत्वं प्रतिपाद्यत इत्यभ्युपगच्छामः। किं तर्हि संसारिणः संसारित्वापोहेनेश्वरात्मत्वं प्रतिपिपादयिषितम्" (४-१-३) इति भाषणेन। तथा च न तृतीयस्याप्यस्य भेदकत्वम्।

अथ चतुर्थं पर्यालोचयामः। दोषविशेषः प्रकृतिरिति नाचार्यपादैरभिहितम्। एवं प्रकृतेर्ब्रह्मस्वरूपतिरोधायकता विविधविचित्रविक्षेपकर्तृकता च न कुत्रापि तैर्भाषिते। रामानुजाचार्याणां मत इव परमात्मनः स्वरूपभूता नामरूपात्मिका जगतः सृष्टेः प्रागवस्था प्रकृतिरिति,

सैव मायेति ब्रह्मणः शक्तिरिति चोक्तं तदनन्यत्वाधिकरणे। किञ्च, तस्मात् कारणस्य आत्मभूता शक्तिः शक्तेश्चात्मभूतं कार्यमिति च तैरेव। यथा भगवद्रामानुजाचार्याणामभिमता प्रकृतिस्तथैव भगवत्पादानामपि। विचित्रार्थसर्गकरत्वं चोभयसंमतम्। यथाहुर्भगवत्पादाः—लोकेऽपि च देवादिषु कागल्यादिषु च स्वरूपानुपमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयो दृश्यन्ते। तथैकस्मिन्नपि ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिर्भविष्यतीत्येवं मम विमतिर्नास्त्येव। किञ्चायं विशेषो यदुक्तं ब्रह्मस्वरूपतिरोधानकरणं मायायाः कार्यं श्रीशङ्करमतेऽभिहितमिति न तैराचार्यैरत्र किमप्युक्तम्, किन्त्वाचार्या एव स्वीये शरणागतिगद्य एवमवादिषुः—मदीयानादिकर्मप्रवृत्तां भगवत्स्वरूपतिरोधानकरीम्''''''मायाम्''''''मां तारयस्वेति। मिथ्याभूतो दोषविशेष इति नैवोक्तमुभाभ्यामपि। अतो नायमपि चतुर्थो विषयो भेदमाधातुमीष्टे।

अथ पञ्चमं विषयमधिकुर्महे—ब्रह्मस्वरूपातिरिक्तं सर्वं ज्ञानं न प्रमेत्ययं विषयो भगवत्पादैः प्रस्तुतः। एनमेव विषयं भगवद्रामानुजाचार्या भङ्ग्यन्तरेण प्रत्यपादयन् "सदेव तु सर्वमभिधानमभिधत्ते च यदन्यबुद्ध्या। यथा रज्जुरेव सर्पबुद्ध्या सर्प इत्यभिधीयते" इति (छा० षष्ठप्रपाठके) भगवत्पादैर्भाषितम्। तत्रायं भावः—रज्जौ जायमानायां सर्पबुद्धौ रज्जुः सर्प इत्येव व्यवहरामः। तत्र सर्प इति ज्ञानं न प्रमा, किन्तु यथार्थम् अर्थं सर्पमालम्बनमनतिक्रम्यैव जातम्। तत् कथम्? त्रिवृत्करणप्रक्रियया तत्र सर्पो वर्तत एव। अत एवोक्तम्—यथा वा रज्ज्वादि सर्पाद्याकारेण बुद्धिपरिकल्पितेन। असदेव तर्हि सर्वं यद् गृह्यते रज्जुरिव सर्पाद्याकारेण? न, सत एवाद्वैतभेदेनान्यथा गृह्यमाणत्वात्। नासत्त्वं कस्यचित् क्वचिदिति ब्रूमः।''''''सर्वं च नामरूपसदात्मनैव सत्यम्, विकारजातं स्वतस्तु अनृतमेव।''''''अतः सदात्मना सर्वव्यवहाराणां सर्वविकाराणाञ्च सत्यत्वम्। सतोऽन्यत्वेन चानृतत्वम्। सर्वस्य त्रिवृत्करणस्योक्तत्वात् सर्वत्र सर्वोपपत्तेः (छा० प० प्र०)। एवं सर्वं ज्ञानं यथार्थमेव। रज्जौ रज्ज्ववयवा बहवः। अतस्तानवलम्ब्य रज्जुरिति व्यवहारः। सर्पावयवा अल्पाः। यानवलम्ब्यातो न व्यवहारः प्रवर्तते। भ्रान्तिदशायान्तु चक्षुर्दोषेण रज्ज्ववयवसाकल्यस्याग्रहणम्, सर्पावयवानां च ग्रहणम्। तत एव च तदानीं सर्पबुद्धिव्यवहारो दोषापगमे शुक्त्यवयवसाकल्ये गृहीते पूर्वमल्पावयवग्रहणेन प्रवृत्तयोः सर्पबुद्धिव्यवहारयोरवयवसाकल्यग्रहणप्रवृत्ताभ्यां शुक्तिबुद्धिव्यवहाराभ्यां बाधः। भूयसाल्पीयसा बाधो न्याय्य एवेति। अमुमेव च विषयं "त्र्यात्मकत्वात्तु भूयस्त्वम्" इति सूत्रं सूचयति। एवञ्च भूयस्त्वमूलकेन यथावस्थितव्यवहारेणाल्पत्वमूलकव्यवहारोऽयथावस्थित इति। एवञ्च व्यवहारबाध एव भ्रान्तिस्थले, न त्वर्थबाधः। तथा च यथावस्थितव्यवहारानुगुणं सर्प इति ज्ञानं प्रमा।

अतादृशं यथावस्थितव्यवहाराननुगुणं ज्ञानं भ्रान्तिरिति च संगच्छते रामानुजीयमते। आत्मस्वरूपव्यतिरिक्तस्य सर्वस्य ज्ञानस्य आविद्यकत्वं यथा श्रीशङ्करेणोक्तं तथा रामानुजाचार्या एव शरणागतिगद्ये प्रोचुरिति न्यरूपयाम। अतः कुत्रास्ति विमतिराचार्यद्वयस्य। न च वाच्यं सर्वं ज्ञानं प्रमैवेति रामानुजीयं मतमिति। यदि तथा स्यात् कुत्र वा भ्रान्तिरवकाशं प्राप्नुयात्? स्वयमेवोक्तं विमतैः 'भ्रान्तौ विषयबाधः' एवेति। एतेन नैवास्ति भ्रान्तिरिति वादः प्रत्युक्तः स्वव्याहतेः। किञ्च, भगवद्रामानुजाचार्यैरपि भ्रान्तिरङ्गीकृतैव, विपरीतं ज्ञानमिति (शरणागतिगद्ये) तैरेवोक्तत्वात्। अपरं चायुक्तमभिधीयते विमतैर्भ्रान्तौ विषयबाध एवेति। त्रिवृत्करणेन सर्वत्र सर्वस्य वर्तमानत्वेन शुक्तौ रजतावयवानां विद्यमानत्वात् कथमर्थबाधोऽमूढेन वक्तुं शक्येत। एवञ्च लोके सर्वं ज्ञानं यथार्थमेव, न किञ्चिदप्ययथार्थम्। तत्तु द्विविधम्—प्रमा, भ्रान्तिरिति। यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमा, अतथावस्थितं ज्ञानं भ्रान्तिरिति। एतस्य सर्वज्ञानयाथार्थ्यवादस्य प्रारम्भयिता प्रभाकरगुरुशिष्यः शालिकनाथः प्राचीन आचार्यद्वयतो भगवद्रामानुजाचार्य इव यथार्थं सर्वविज्ञानमित्युपक्रम्यैवमुपसमाहार्षीत्—

विषयाव्यभिचारित्वं साधयितुं सर्वसंविदामेषा।
निरमीयत नीतिविदा शालिकनाथेन नयवीथी॥

इति प्रकरणपञ्चिकायाम्। इत्यलमेतेन निरूपणेन।

अथान्यदपि समादध्महे। अस्याः प्रकृतेर्भगवदपृथक्सिद्धत्वमनन्यत्वाधिकरणे "आत्मस्थे नामरूपे" इति माण्डूक्योपनिषद्विवरणे बीजात्मकत्वाभ्युपगमात् सत इति वाक्याच्च भगवत्पादैरभ्युपगतपूर्वमेव भगवद्रामानुजाचार्या उपापीपदन्निति न किञ्चिदप्यत्र विषये आचार्यद्वयस्य विप्रतिपत्तिं पश्यामः। इदं त्वत्र समालोचनीयम्—यदनादितया निर्मितो द्रव्यविशेषः प्रकृतिरिति तदाचार्यवर्यमते नारूयेव। जीवप्रकृत्योर्नित्यत्वमजत्वं चैव तैरभ्यधायि। किञ्च, अनादितया निर्माणं किम्? यद्यनादि, तस्य कथं निर्माणम्? यदि निर्मितम्, तर्हि तस्य कथमनादित्वम्? इत्थं परस्परव्याहतानामप्रमाणानां च पदार्थानां प्रसङ्गे मूलानवलोकनमज्ञानं चैवापराध्यतः।

इदानीं षष्ठस्य विचारणा सकारणा भवति। यथा सर्वोऽपि शब्दो लक्षणावृत्त्या सन्मात्रावगाहि भवतीति भगवत्पादानां मतमिति ये खलु वदन्ति ते प्रस्थानत्रयभाष्यं भगवत्पादीयं नैवावालोकिषत इति स्पष्टम्। यतः खलु तत्र नायं विषयो वर्तते। ते स्वरूपाचार्या'' तत्त्वमसीत्यत्रैव न लक्षणामभ्युपगच्छन्ति। यत्र खलु शाङ्करम्मन्या जहदजहल्लक्षणेति कोलाहलं हाला-

हलमिव बहुलं वितन्वन्ति। यत्त्वद्वैतपरिभाषाकारः कश्चन किञ्चित् स्वमतिविभवेनात्र लक्षणामपहायैव समन्वाययति, तथाप्यन्ततो निष्पन्नार्थस्य श्रीभगवत्पादाभिमतार्थाननुगमेन हेयतैव भवति। ते खल्वाचार्यास्तत्त्वमसीत्यत्र तत्पदे परतत्त्वं ब्रह्म सगुणत्वावृत्तसकलसंसारधर्ममभिधयैव वाच्यमुपापीपदन्निति पूर्वमेव न्यरूपयाम। अस्त्वेतद् यद् रामानुजाचार्या अपर्यवसानवृत्त्या सर्वे शब्दाः परमात्मानमेवाभिदधतीत्याहुरित्युक्तम्। तत्र वदामः—श्रीभगवत्पादाश्छान्दोग्यषष्ठप्रपाठकभाष्ये इममर्थमेवं निरूप्य तस्य प्रक्रियां च प्रदर्शयामासुः। तमेवार्थमाचार्यवर्या विस्तृतवन्तः। तदविज्ञायैनं विषयं भेदहेतुतया विमताः संन्यासिनो वदन्तीत्यसत्यमेवात्र वैमत्यम्। छान्दोग्यभाष्यं यथा—न तथास्माभिः कदाचित्क्वाचिदपि स्वतोऽन्यदभिधानमभिधेयं वा वस्तु परिकल्प्येत। सदेव तु सर्वमभिधानम्। अभिधीयते च यदन्यबुध्या ..... तत् सृष्टं तेजः; ऐक्षत = तेजोरूपसंस्थितं सदैक्षतेत्यर्थः। पूर्ववदेवाकारसंस्थितं सदैक्षतेत्यर्थः ......... सर्वं च नामरूपादि सदात्मनैव सत्यं विकारजातम्। स्वतस्त्वनृतमेव, वाचारम्भणं विकारो नामधेयमित्युक्तत्वात्। तथा जीवोऽपि। अतः सदात्मना सर्वव्यवहाराणां सर्वविकाराणां च सत्यत्वम्। स्वतोऽन्यत्वे चानृतत्वमिति। रामानुजाचार्याश्च चराचरसूत्रे इत्थं विस्तारयामासुः, यथा—तेजःप्रभृतिभिः शब्दैस्तत्तद्वस्तुमात्रवाचकतया व्युत्पन्नैर्ब्रह्मणो व्यपदेशो भाक्तः स्यात् = अमुख्यः स्याद् इत्याशङ्क्य चराचरव्यपाश्रयस्त्वित्याद्युच्यते। चराचरव्यपाश्रयस्तद्व्यपदेशतद्वाचिशब्दश्चराचरवाचिशब्दो ब्रह्मणि अभाक्तो मुख्य एव। कुतः ? ब्रह्मभावभावित्वात् सर्वशब्दानां वाचकभावस्य। नामरूपव्याकरणश्रुत्या हि तथाऽवगतमिति।

अथ विग्रहाराधनं साधनमिति साध्यमिति च मतद्वयं विभेदहेतुरिति सप्तमो विषयः। न कुत्राप्युभयोर्ग्रन्थेष्विदमुपपादितम्। उभयत्र साधनमित्येव न साध्यमिति न विभेदः।

अष्टमश्चायं विषयः—चिन्मात्रेऽद्वैते परमात्मन्यध्यासवशादियं सृष्टिरुद्बभूवेति भगवत्पादा मन्यन्ते। आचार्यास्तु सूक्ष्मचिदचिद्विशिष्टस्य परमात्मनः स्थूलतापत्तिमेव सृष्टिं मन्यन्त इति। तत्र प्रतिब्रूमः—नह्यध्यासतः सृष्टिरिति भगवत्पादाः कुत्राप्यब्रुवन्। अध्यासतः संसार इत्येव। अत एवैष संसारो भ्रान्तिमूलको जीवस्यैवेत्युक्तम्। "नहीश्वरस्य संसार्यात्मत्वं प्रतिपाद्यत इत्यभ्युपगच्छामः, किं तर्हि संसारिणः संसारित्वापोहेनेश्वरात्मत्वं प्रतिपिपादयिषितमिति" (४-१-३) तद् आचार्या अपि अङ्गीचक्रुरेव। यथा—"सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः। निबध्नन्ति महाबाहो देहे देहिनमव्ययम्॥" इति गीताश्लोकविवरणे एवमभाषिषत—सत्त्वरजस्तमांसि त्रयो गुणाः प्रकृतेः स्वरूपानुबन्धिनः स्वभावविशेषाः प्रकाशादिकार्यैकनिरूपणीयाः, प्रकृत्यवस्थायामनुद्भूताः, तद्विकारेषु महदादिषूद्भूताः। महदादिविशेषान्तैरारब्धदेवमनुष्यादिदेहसंबन्धिनमेनं

देहिनमव्ययं स्वतो गुणसंबन्धानर्हं देहे वर्तमानं निबध्नन्ति देहे वर्तमानत्वोपाधिना निबध्नन्तीत्यर्थ इति। किञ्च–"आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा। कामरूपेण कौन्तेय दुष्पूरेणानलेन च॥" अत्र हि—अस्य जन्तोर्ज्ञानिनो ज्ञानस्वभावस्यात्मविषयं ज्ञानमेतेन कामाकारेण व्यामोहजननेन (व्यामोहो भ्रान्तिरित्यनर्थान्तरम्) नित्यवैरिणा आवृतं दुष्पूरेण प्राप्ययनर्हविषयेणानलेन च पर्याप्तिरहितेनेति। इन्द्रियाणीति तदनन्तरश्लोकस्य व्याख्यानेऽपि—अधितिष्ठत्येभिरयं काम आत्मानमिति, इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानम्। एतैरिन्द्रियमनोबुद्धिभिः कामाधिष्ठानभूतैर्विषयप्रवणं देहिनं = प्रकृतिसंसृष्टं ज्ञानमावृत्य विमोहयति विविधं मोहयति। आत्मज्ञानविमुखं विषयानुभव( अयमेव हि विषयानुभवः संसारः )परं करोतीत्यर्थ इति। एतेन भाषणेन संसारो भ्रान्तिमूल इति स्पष्टम्। अथवा पूर्वोदाहृतशरणागतिगद्येनैवेदं स्पष्टतरम्।

इयञ्च विस्तृतिरविद्याप्रत्युपस्थापितनामरूपकृतकार्यकारणसंघातोपाध्यविवेककृता हि भ्रान्तिहिंताकरणादिलक्षणः संसारः, न तु परमार्थतोऽस्तीत्यसकृदवोचाम (२-१-२२) इति भगवत्पादभाषणस्यैवेति गृह्णन्तु सहृदयाः। किन्तु न कुत्रापि प्रपञ्चस्याध्यासमूलकत्वं तैरुक्तम्। कुतः? प्रपञ्चस्य विद्यया अप्रविलाप्यमानत्वात्, कथञ्चिदपि प्रविलापयितुमशक्यत्वाच्च। विद्याबाध्या अविद्या अध्यासः, सा चाविद्या संसारबीजम्, तन्निवृत्तिरेव ह्यभिलष्यते वेदान्तमधिजिगांसमानैः। अयञ्च विषयस्तैरेव भगवत्पादैरुभयलिङ्गाधिकरणे ("प्रदर्शनाच्च" ३-२-२१) इति सूत्रविवरणे सम्यक् प्रतिपादितः। यथा—तत्र यदि तावद्विद्यमानोऽयं प्रपञ्चो देहादिलक्षण आध्यात्मिको बाह्यश्च पृथिव्यादिलक्षणः प्रविलापयितव्य इत्युच्येत स पुरुषमात्रेणाशक्यं प्रविलापयितुमिति। एवञ्च नाध्यासस्य प्रपञ्चकारणत्वम्, किन्तु मायाया एव। सा च न मिथ्या, किन्तु विविधविचित्रार्थकरीत्युक्तम्। यथा—अपि च नैवात्र विवदितव्यं कथमेकस्मिन् ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः स्यादिति। लोकेऽपि देवादिषु मायाव्यादिषु च स्वरूपानुपमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयो दृश्यन्ते, तथैकस्मिन्नपि ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिर्भविष्यतीति, अनेन च भाषणेन मायाशब्दार्थे विचित्रार्थसर्गकरत्वमुभावप्याचार्यावङ्गीचक्राते इति स्पष्टम्। ( रामानुजाचार्याणामुक्तिरितः पूर्वमेवोदाहृता शरणागतिगद्यस्था ) यतो विप्रतिपत्तिगन्धोऽप्यत्र नैवोदेति। अपि च सूक्ष्मचिदचिद्विशिष्टस्य परमात्मनः स्थूलतापत्तिरेव सृष्टिरित्याचार्यवर्याणामुक्तिर्भगवत्पादोक्तस्य सूक्ष्मस्य स्थूलतापत्तिरेव। यथा "पटवच्च" इति ब्रह्मसूत्रं विवृण्वाना आचार्यपादाः–"यथा च संवेष्टितः पटो न व्यक्तं गृह्यते··स एव च प्रसारितो यत्संवेष्टितं द्रव्यं तत्पट एवेति प्रसारणेनाभिव्यक्तो गृह्यते। अतः संवेष्टित-

प्रसारितन्यायेनैवानन्यत् कारणात् कार्यमित्यर्थ इत्यभाषिषत । अत्र भगवत्पादानां संवेष्टितपट आचार्यवर्याणां सूक्ष्मचिदचिच्छरीरकं ब्रह्म । एवं प्रसारितपटः स्थूलचिदचिद्विशिष्टं ब्रह्मैवेति नैव विवरणीयम् । उक्तञ्च कल्पतरुकारैः—"स्वशक्त्या नटवद् ब्रह्म कारणं शङ्करोऽब्रवीत् । जीवभ्रान्तिनिमित्तं तद् बभाषे भामतीपतिः ॥ अज्ञातं नटवद् ब्रह्म कारणं शङ्करोऽब्रवीत् । जीवाज्ञातं जगद्बीजं जगौ वाचस्पतिस्तथा ॥" इति ।

विशिष्टाद्वैतेऽद्वैते वा चिदचिती परमात्मनः शक्ती एव खलु, "नामरूपे मायाशक्तिः ।" इत्यनन्यत्वाधिकरणशाङ्करभाष्यात् । रामानुजमते च श्रीभाष्ये महासिद्धान्तादेवेदं स्पष्टम् । ब्रह्मणो विशिष्टत्वञ्च माण्डूक्यविवरणतोऽनुमन्वानाः श्रीशङ्कराचार्या रामानुजाचार्याणां विशिष्टाद्वैतं प्रारभन्त एव । अथवा प्रारभन्त इति किम् ? स्वयमेव सम्यग् विस्तृत्य निरूपयामासुरन्तर्याम्यधिकरणे चिदचितोर्भगवच्छरीरत्वं श्रुत्युपष्टम्भेन, गीताभाष्ये च "प्रकृतिं पुरुषं चैव" इत्यत्र । ईश्वरस्य प्रकृती तौ प्रकृतिपुरुषावुभावप्यनादी विद्धि । नित्यत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम् । प्रकृतिद्वयवत्त्वमेव हि ईश्वरस्य ईश्वरत्वम् । याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिप्रलयहेतुः, ते द्वे अनादी सत्ये संसारस्य कारणमिति भाषितम् । अतश्च नात्रापि विषये वैमत्यं किञ्चिदपि प्रतीमः ।

एतेन अष्टमविषयनिरूपणेन नवमोऽपि सृष्टिं प्रति कारणमशेषविशेषप्रत्यनीके चिन्मात्रे ब्रह्मणि स्वरूपतिरोधायकस्यानादेरविद्याख्यस्य विविधविचित्रविक्षेपकरस्य दोषस्याध्यास इति यदुक्तं तद्व्युदस्तं वेदितव्यम्, अध्यासस्य सृष्टिकारणता नैव भगवत्पादैरभिहिता इत्युपपादनात् । किञ्च, सृष्टेः कारणं परात्परस्य परमात्मनः केवलं लीलैवेति भगवद्रामानुजाचार्या अभिदधुरिति तत् "लोकवत्तु लीलाकैवल्यम्" ( २–१–३१ ) इति सूत्रारूढमेव । तत्र च भगवत्पादानां भाष्यम्—यद्यप्यस्माकमियं जगद्बिम्बरचना गुरुतरसंरम्भेव आभाति, तथापि परमेश्वरस्य लीलैव केवलेयमपरिमितशक्तित्वादित्यस्ति । अमुमेव विषयमाचार्यवर्या प्रत्यपादयन्निति कथमत्र वैमत्यमसत्यं परिकल्प्यते ।

अथ दशमो विषयः—सृष्टेरादिकारणं सूक्ष्मचिदचिद्विशिष्टं ब्रह्मैवेति भगवद्रामानुजाचार्याणामभिप्रायः श्रीशङ्करभगवत्पादानां माण्डूक्योपनिषद्विवरणेन सबीज एव । तत्र "सदेव सौम्येदमग्र आसीत्" इति सृष्टिप्रकरणीयं सत्पदं सबीजब्रह्मवाचकतया भगवत्पादा व्याचख्युरित्युक्तचरमेव । एवञ्च ब्रह्मणः सृष्टिं प्रति चिदचिद्विशिष्टस्यैव कारणत्वमिति यदुक्तं भगवत्पादैस्तदेव

आचार्यवर्या अनुययुरिति स्पष्टमेव। अपि च अविद्याशबलितं ब्रह्मैव जगत्कारणमिति भगवत्पाद-मतेऽविद्यापदेन किमभिप्रेतम्? यदि माया, तर्हि तद्वैशिष्ट्येनैव खलु ब्रह्म जगत्प्रसूते, तस्याः; प्रकृतित्वात्। "मायां तु प्रकृतिं विद्याद् मायिनं तु महेश्वरम्" इति श्रुतिरुभाभ्यामप्याचार्याभ्यां प्रमाण्यत एव। अथ कर्मशक्तिः? सापेक्षो हीश्वरो विषमां सृष्टिं निर्मिमीते। किमपेक्षत इति चेत्? धर्माधर्मावपेक्षत इति ब्रूमः। अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति भगव-त्पादभाष्यात्। धर्माधर्मौ हि कर्मशक्तिरिति चेत्, तदपि भगवद्रामानुजाचार्याणां सम्मतमेव। यतः—"विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा। अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते॥ यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा। संसारतापानखिलानवाप्नोत्यतिसंततान्॥" इति विष्णु-पुराणश्लोकमुदाहृतवतां "समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः। तद्विश्वरूपवैरूप्यं रूपमन्य-। द्धरेर्महत्॥" इत्यपि तत्पुराणीयमेव श्लोकं प्रदर्शयतामाचार्यवर्याणां कथमयं विषयोऽनभिप्रेतः स्यात्। तथा च ब्रह्मण्यविद्याशबलितत्वं च भगवत्पादैरिव भगवद्रामानुजाचार्यैरप्यङ्गीकृतमेवेति निर्विवादम्। सा चाविद्या कर्मशक्तिरिति सृष्टौ प्रसज्जत इति च तैरेवाचार्यवर्यैरभ्युपगतम्। यथा—सृज्यमानदेवादिक्षेत्रज्ञकर्मसापेक्षत्वाद् विषमसृष्टेरिति (२-१-३४) भाष्यगात्। न च कर्म ब्रह्मणि कथं प्रसज्यत इति वाच्यम्। तच्च धर्माधर्मौ प्रसूते। तौ च भगवदनुग्रहनिग्रह-रूपाविति। अथ अविद्येत्यज्ञानं विवक्ष्यते? तद्ब्रह्मणि न कथञ्चिदपि पदमाधातुं शक्नोति मतद्वयेऽपीति नात्रापि वैमत्यगन्धः।

अथैकादशमः प्रस्तूयते—प्रलयो नाम अविद्यायाः समूलविनाशात् तत्कार्योऽध्यासो विन-श्यति। ततश्च तदध्यासमूलकस्य जगद्रूपस्य निवृत्तौ ब्रह्मणः स्वरूपापत्तिरेवेति श्रीशङ्करमतत्वेन यदुपन्यस्तं तदसङ्गतम्, न कुत्राप्येवं तैरुपन्यस्तं प्रस्थानत्रये। अयं च मोक्षः स्यात्। मोक्षप्रलययोरविवेकादित्थमुक्तं स्यात्। प्रलयस्तत्र मते नैवंरूप इति न भेदावकाशः। यदुक्तं भगवद्रामानुजप्रक्रियायां सूक्ष्मचिदचिद्विशिष्टतापत्तिः प्रलय इति तत्र भगवत्पादा नैव विमन्यन्ते। यतस्तैरेव "पटवच्च" इति सूत्रभाष्ये प्रसारणे व्यक्तता संकोचे च अव्यक्तता प्रत्यपादीति। सा च स्थूलस्य सूक्ष्मताप्राप्तितो न विभज्यते। यन्न विभज्यते तत्कथं भेदकं भवेदिति।

अनन्तरं द्वादशो विषयः प्रस्तावमर्हति—अविद्यानिवृत्तिरेव मोक्ष इति श्रीशङ्करमतमिति। अयं च विषयो भगवद्रामानुजाचार्यैर्लघुसिद्धान्तारम्भे स्वकण्ठरवेणैवाभ्युपगत इत्येतस्योपन्यासस्य प्रारम्भ एव विस्तरेण निरूपितः। किञ्च, श्रीरामानुजाचार्यमते परब्रह्मणः सायुज्यमवाप्य

ब्रह्मानन्दसम्पत्तिरेव मोक्ष इत्युक्तमिति विमताः। सा च सम्पत्तिरविद्यानिवृत्त्यनन्तरं भवतु नाम, न मोक्षशब्दस्यार्थो भवितुमीष्टे। विकारासंसृष्टपरिपूर्णब्रह्मानुभव एव तस्य सुखमित्येव वेदार्थ इति साधितम्। सा च सम्पत्तिर्मोक्ष इति नैवोक्तम्। अतोऽविद्यानिवृत्त्युत्तरभाविनी ब्रह्मानन्दसंपत्तिरेव तन्मते, तथा सा भगवत्पादैरभ्युपगतैव। यथोक्तमाचार्यपादैः—"भोगमात्रसाम्यलिङ्गाच्चेत्यत्र भोगमात्रमेवैषामनादिसिद्धेनेश्वरेण समानमिति श्रूयते.......स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवं विदं सर्वाणि भूतान्यवन्ति.... ते नो एतस्यै देवतायै सायुज्यं सलोकतां जयति" इत्यादि भेदव्यपदेशलिङ्गेभ्य इति भाषणात्। अतश्च नैवायमपि विषय आचार्यद्वयस्य वैमत्ये प्रभवति।

अथ त्रयोदशं प्रस्तुमो यथा—प्राकृतदेहदेशौ विसृज्य अप्राकृतदेहविशिष्टो ब्रह्मणः सालोक्यं सारूप्यं सामीप्यं सायुज्यं चाधिगतो जीवः परमात्मकैङ्कर्यजनितनित्यनिरवद्यनिरतिशयब्रह्मानन्दमनुभवति। स एव मोक्षानुभवो रामानुजमते इत्युक्तम्। अयं विषय उभाभ्यामप्यङ्गीक्रियत एव। अत्र च कैङ्कर्यं न कायचेष्टा। यथोक्तं तैराचार्यवर्यैर्वेदार्थसंग्रहे शरणागतिगद्ये च—इयमेव भक्तिरूपा सेवा इति। शेषतैकरतिरूपनित्यकिङ्कर इति च। अनेन च भगवति प्रीतिपूर्वकमुपासनमेव भक्त्यभिधमत्र कैङ्कर्यं विवक्षितमिति स्पष्टम्। इदञ्च कैङ्कर्यं भगवत्पादैरवश्यमभ्युपगम्यते। तैश्चेत्थं भाषितमावृत्त्यधिकरणे यथा—अपि चोपासनं निदिध्यासनं चेत्यन्तर्णीतावृत्तिगुणैव क्रियाऽभिधीयते। तथा ध्यायति प्रोषितनाथा पतिमिति या निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा सैवमभिधीयत इति। अनेन च भाषणेनोपासनस्य प्रीतिपूर्वकस्य भक्तिशब्दस्य 'क्रिया'शब्देन कैङ्कर्यत्वमभ्यधायि। अस्य चोपासनस्य प्रीतिपूर्वकस्य भगवद्दर्शनोपायत्वमपि तैरेव प्रतिपादितम्। अत्रैव प्रकरणे यथा—दर्शनपर्यवसायित्वात्तेषां दर्शनपर्यवसायीनि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति (द्रष्टव्य इति श्रुतेरिति भावः) इति। एवं गीताभाष्ये (१०-५५) 'मद्भक्तः' इति पदं विवृण्वाना भगवत्पादाः "मामेव सर्वोत्साहेन भजत इति मद्भक्तः" इत्यूचिरे। इत्थञ्च भक्तिलभ्यः परमात्मसाक्षात्कारः कस्य नानन्दाय भवेत् "रसं ह्येवायं लब्ध्वा आनन्दी भवति" इति श्रुतिप्रमाणाः खल्विमे आचार्याः। यथोक्तं श्रीरामानुजाचार्यैर्वेदार्थसंग्रहे—"विकारासंसृष्टपरिपूर्णब्रह्मानुभव एव हि तस्य सुखम्" इति। भगवत्पादैश्च "मोक्षसाधनसामग्र्यां भक्तिरेव गरीयसी" इत्युक्त्वा बाह्यानन्दसाधनरहिता अप्यनीहा निरीषणा ब्राह्मणा बाह्यरसलाभादिव सानन्दा दृश्यन्ते विद्वांसो नूनं ब्रह्मैव रसस्तेषाम्। तस्मादस्ति तत्तेषामानन्दकारणं रसवद् ब्रह्म" (तैत्तिरीये) इति। एवं श्रीशङ्करभगवत्पादैः प्रतिपादितपूर्व एवार्थ आचार्यवर्यैः परिगृह्य विस्तारित इत्यतो नास्ति कथमपि वैमत्यमत्र।

एतेन मोक्षसाधनञ्च आत्मैकत्वप्रतिपादकेन वाक्येन जन्यं साक्षात्काररूपं ज्ञानमेव भगवत्पादमत इति यदुक्तं ( चतुर्दशो विषयः ) तदपि निरस्तं वेदितव्यम्। वाक्यात् साक्षात्काररूपं ज्ञानं जायत इति भगवत्पादैरनभिहितत्वाद् निदिध्यासनस्य दर्शनहेतुत्वाभ्यनुज्ञानाच्चेति द्रष्टव्यम्। एवञ्च श्रीरामानुजाचार्यमते यश्चतुर्दशो विषयो भक्तिरूपापन्नं ज्ञानमेव मोक्षसाधनमिति स च विषयः श्रीशङ्करभगवत्पादैरेवोपक्रान्तो भगवद्रामानुजाचार्यैस्ताननुसृत्य विस्तृत इति न वैमत्यमत्र। किन्तु वक्तव्यशेषोऽत्र विद्यते। तञ्च निर्वर्तयामहे। भक्तेर्मोक्षसाधनत्वे व्याख्यातारो भगवत्पादप्रस्थानत्रयस्य कलहायन्ते, तान् समाधास्यामः। गीताभाष्ये—"पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया" (८-२२) श्लोकव्याख्यायामुक्तम्—पुरुषः पुरि शयनात् पूर्णत्वाद् वा स पुरुषः पार्थ परो निरतिशयो यस्मात् पुरुषान्न परं किञ्चित् सः भक्त्या लभ्यस्तु ज्ञानलक्षणया अनन्यात्मविषयया इति। अतोऽयमपि विषयो गले गृह्णाति आचार्ययुगले भेदमावहतः। किञ्चेदमत्रावश्यमवधेयम्—एवमत्राचार्यपादैः सा भक्तिर्ज्ञानलक्षणेत्युक्तामुक्तिमनुरुध्यैवैतदविरोधं रक्षद्भिः रामानुजाचार्यैर्वेदार्थसंग्रहे भगवत्पादोक्तमेव श्लोकमुदाहृत्य विवृतम्—"भक्तिरपि निरतिशयप्रियानन्यप्रयोजनस्वेतरवैतृष्ण्यावहज्ञानविशेष एव" इति। अत्र ज्ञानविशेषणान्यपि भगवत्पादभाष्यानुरोधीन्येव। यतस्तैः "भक्त्या त्वनन्यया" ( ११-५४ ) इत्यत्र भक्त्या तु किं विशिष्टयेत्याह अनन्यया अपृथग्भूतया भगवतोऽन्यत्र न कदाचिदपि या भवति सा त्वनन्या भक्तिः सर्वैरपि करणैर्वासुदेवादन्यन्नोपलभ्यते यया सा अनन्या भक्तिः, तया भक्त्येत्युक्तम्। किञ्च, अनन्तरश्लोकभाष्ये—मद्भक्तो मामेव सर्वप्रकारैः सर्वात्मना सर्वोत्साहेन भजत इति मद्भक्त इति चोक्तम्। एवं चतुर्दशो विषयो विचारितः।

अथ पञ्चदशो विषयो निरूप्यते—मोक्षसाधनज्ञानस्याङ्गानीति भगवत्पादमते यान्युपन्यस्तानि तानि सर्वाण्यपि साधनसप्तके टङ्कद्रमिडाचार्याभ्यां निरूपिते विशिष्टाद्वैतीयत्वेनात्र निरूपितेऽन्तर्भवन्त्येव, यथा—विमोकः = कामानभिष्वङ्गः, स च नित्यानित्यवस्तुविवेकमूल इहामुत्रफलभोगविराग एव खलु। किञ्च, सत्यार्जवदयाहिंसानभिध्याः कल्याणानीत्युक्तम् , तत्र शमदमादिसाधनसम्पत्तिरन्तर्भवति। क्रिया च मुमुक्षां गर्भीकरोति। तन्निर्वचनं शृण्वन्तु भवन्तः—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति। एवमनवसादानुद्धर्षावपि शमदमाद्यन्तर्गतौ। तथा निर्वचनमिदं देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसाद इति तद्विपर्ययोऽनवसादस्तद्विपर्ययजा तुष्टिरुच्यत इति तद्विपर्ययोऽनुद्धर्षोऽतिसन्तोषश्च विरोधीत्यर्थ इति श्रीभाष्यम्। किञ्च, भगवत्पादभाषितं साधनचतुष्टयं टङ्कद्रमिडाचार्यावनुसृत्यैवेति

श्रीभाष्यकारा व्यञ्जयन्तः स्वाभिमतिं प्रकटयामासुस्तत्रेति मोक्षसाधनज्ञानाङ्गेष्वपि न वैमत्यप्रसक्तिः ।

इदानीं षोडशो विषयः प्रस्तावमर्हति । स च भगवत्पादमते एवं वर्तते—यश्च ब्राह्मण उपनीतः संन्यासी निवृत्तिनिष्ठः स एव मोक्षेऽधिक्रियते इति, भगवद्रामानुजाचार्या अप्यनुमन्यन्त एव । अत्रेदमवधेयम्—"ब्रह्मसंस्थोऽमृतत्वमेति" इति श्रुत्या ब्रह्मसंस्थाया एवामृतत्वप्राप्त्युपायत्व-श्रवणाज्जनकादिष्वाश्रमाणां प्रयोजकत्वं नास्त्येव मोक्षं प्रतीत्याचार्यवर्याणामाशयः परिव्राडाश्रमस्य कामक्रोधादिप्रसक्तिर्नास्ति, गृहस्थस्य त्ववर्जनीयावेव कामक्रोधाविति भगवत्पादा मन्यन्ते । ब्रह्म-संस्थाया मुक्तिहेतुत्वमुभयैरप्यङ्गीक्रियते, तां विना परिव्राजोऽपि नास्ति मुक्तिस्तत्सत्त्वे च निमित्तसत्त्वेन मुक्तेर्न प्रतिबन्ध इत्याचार्यवर्याश्चिह्नभूतमाश्रमं प्रत्यभिप्राये भेदो न तु मुक्तिसाधन इति । किन्तु ब्राह्मण एव मोक्षेऽधिक्रियत इति भगवत्पादमतमिति तु नास्ति, अभयं वै जनक प्राप्तोऽसीति तैरेवोदाहृतत्वात् । नहि जनको ब्राह्मणः, न वा संवर्गविद्यामधिगतवान् जानश्रुतिः ब्राह्मणः । किञ्च, पञ्चपादिकायां भगवत्पादसाक्षाच्छिष्यरचितायां तृतीये वर्णके "न खलु ब्राह्मणजातिरिह गृह्यते, ब्रह्मजिज्ञासायां त्रैवर्णिकाधिकारात्" इत्युक्तं मोक्षमपेक्ष्यैव खलु प्रवर्तन्ते ब्रह्मजिज्ञासायामिति नात्रापि वैमत्यमस्ति ।

अथ सप्तदशं विषयं विचारयामः । भगवत्पादानां मते यज्ञयागादिकं च कर्म चित्त-नैर्मल्यमादधद्विविदिषोत्पत्तिमेवोपकरोति । तच्च न साक्षादङ्गं ज्ञानस्यातो निरसनीयमेवेति । भगवद्रामानुजाचार्याणां मते तु यज्ञयागादिकं च कर्म चित्तनैर्मल्यमादधाति, अनभिसंहितफलं परमपुरुषाराधनवेषं सत्, ततश्च ध्रुवानुस्मृतिरूपा भक्तिरुदेति । एवं च भक्तेः साक्षादङ्गं कर्म । देहावसानपर्यन्तं तमेव नियममनुसृत्य कर्म आचरणीयं तत्सहकारि च भवतीति विभेद इति ।

इयमुक्तिरुभयमततत्त्वमविविच्य प्रादुर्भूता । मतद्वयेऽपि कर्मणां चित्तनैर्मल्य एवो-पयोग इति न विभेदः । अत्र कर्मणां यावज्जीवमनुष्ठेयता वा न वेति विप्रतिपत्तिर्वस्तुतस्तत्रापि न विप्रतिपत्तिः । कुतः ? "विहितत्वाच्चाश्रमकर्मापि" इति सूत्रोक्तदिशा आश्रमकर्म नैव हातुं शक्यते, परिव्राजोऽपि परब्रह्मध्यानसमाधिप्रमुखाणां कर्मणामत्याज्यतैव । अन्येषां तु कर्मणामननुष्ठेयतैवेति कुत्र विप्रतिपत्तिः ? किं नाम वैश्यस्तोमं ब्राह्मणो न करोतीति दोषः स्यात् ? इदं त्वत्रालोचनीयम्—भगवत्पादानां तावद् ज्ञाननिष्ठायामादरः । सा च संन्यासिना अधिकरणीयेति । अत एव गीताभाष्ये—"तत्र ज्ञानमेव योगस्तेन साङ्ख्यानामात्मविषयविवेकज्ञानवतां ब्रह्मचर्याश्रमादेव कृतसंन्यासानां

वेदान्तविज्ञानसुनिश्चितार्थानां परमहंसपरिव्राजकानां ब्रह्मण्येवावस्थितानां निष्ठा प्रोक्ता" (२अ० ३ श्लो०) इत्युक्तम्। अत एव—"आत्मविदो निवृत्तमिथ्याज्ञानस्य विपर्ययज्ञानमूलकर्मयोगो न संभवतीति युक्तमुक्तं स्यात्" (५-१) इत्युक्तं तत्रैव भाष्ये। अतो ज्ञाननिष्ठायां कर्मणोऽनवकाश एव युक्तो न तत्र श्रीरामानुजाचार्या विप्रतिपद्यन्ते। अथैतेषामाचार्यवर्याणां तु "संन्यासः कर्मयोगस्तु निःश्रेयसकरावुभौ। तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते॥ संयासस्तु महाबाहो दुःखमाप्तु-मयोगतः।" "कर्मण्येवाधिकारस्ते" "श्रेयान् स्वधर्मो विगुणात्" इति गीतासमालोचनात्, "इष्टोऽसि मे सखा चेति" इति परमात्मना श्रीकृष्णेन श्लाघितादर्जुनादवरा एव वयं तस्यैव कर्मण्येवाधिकार इति कर्मयोगाधिकारमुपदिशतः श्रीकृष्णपरमात्मनो गानाद् वयं सर्वेऽपि स्वधर्मे कर्मयोग एवाधिकारिणो न त्वस्माकं ज्ञानयोगेऽधिकार इति व्यक्तम्। अतः कर्मनिष्ठायामधिकृता-नामप्रयाणात् कर्मानुष्ठेयमेवेत्याशयः। नात्र भगवत्पादानां विप्रतिपत्तिः। यथोक्तं तैरीशावास्ये "कुर्वन्नेवेह" इति मन्त्रव्याख्याने—अतः शास्त्रविहितानि कर्माण्यग्निहोत्रादीनि कुर्वन्नेव जिजीविषेत्। कथं पुनरिदमवगम्यते पूर्वेण मन्त्रेण संन्यासिनो ज्ञाननिष्ठतोक्ता द्वितीयेन त्वशक्तस्य कर्मनिष्ठतेति। उच्यते—ज्ञानकर्मणोर्विरोधं पर्वतवदकम्प्यं यथोक्तं न स्मरसि किमित्यादि। भगवद्गीताभाष्येऽपि—"अथाप्राप्तसम्यग्दर्शना जनकादयस्तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्रमेण संसिद्धिमास्थिताः" (३—२०) इत्युक्तिरप्यमुमेवाशयमाविष्करोति। एवं च कथमत्र आचार्यद्वयस्य वैमत्यम्?

अपि च भगवद्रामानुजाचार्या लघुसिद्धान्ते यज्ञादीनां कर्मणां विविदिषायामुपयोगं पूर्वपक्षिणोपन्यस्तमपि नैव निराचक्रुः, सर्वधर्मानिति गीताचरमश्लोकस्य द्वितीयव्याख्याने भक्तेः कर्माङ्गतां वारयति भगवदनुग्रहादेव तन्निष्पत्तेस्तद्यथा—"सर्वपापविनिर्मुक्तात्यर्थभगवत्प्रियपुरुष-निर्वर्त्यत्वाद् भक्तियोगस्य तदारम्भविरोधिपापानामानन्त्यात् तत्प्रायश्चित्तरूपैर्धर्मैरपरिमितकाल-कृतैस्तेषां दुस्तरतया आत्मनो भक्तियोगानर्हतामालोच्य शोचतोऽर्जुनस्य शोकमपनुदन् श्रीभगवानुवाच–सर्वधर्मानित्यादि। भक्तियोगारम्भविरोधि····सर्वान् धर्मान् परित्यज्य मामेकम्···· शरणं प्रपद्यस्व। अहं त्वा सर्वपापेभ्यो·····मोक्षयिष्यामीति। अतो भाष्यात् किं प्रतिपद्यते मोक्षसाधनज्ञानस्य भक्तियोगस्य कर्मानुष्ठानं विनैव साधनं भगवच्छरणागतिरेकैवेति। अथवा किमनेन शरणागतिगद्ये भगवद्रामानुजाचार्यैः स्वकण्ठरवेणैवेत्थमुक्तम्—"अशेषशेषतैकरतिरूप-नित्यकैङ्कर्यप्राप्त्यपेक्षया·····शरणागतिः···अस्तु मे···अस्तु ते तयैव सर्वं सम्पत्स्यते" इत्यत्र भगवच्छरणागतिरेव भक्तिं सम्पादयतीति सुस्पष्टमेव। अत्र भगवत्पादानामप्यङ्गीकार एव। यथा—

"एवं भगवतः सत्यप्रतिज्ञत्वं बुद्ध्वा भगवद्भक्तेरवश्यम्भावि मोक्षफलमवधार्य भगवच्चरणैकपरायणो भवेदिति वाक्यार्थः।······कर्मयोगनिष्ठायाः परमरहस्यमीश्वरशरणतामुपसंहृत्य अथेदानीं कर्मयोगनिष्ठाफलं सम्यग्दर्शनं सर्ववेदान्तसारविहितं वक्तव्यमित्याह······'सर्वधर्मान् परित्यज्य'··'सन्न्यस्य सर्वकर्माणीत्येत्र मामेकं शरणं व्रज'' इति गीताभाष्यम्। अतश्च भगवच्छरणागतिर्भगवद्भक्तिं जनयित्वा भगवद्दर्शनं फलतीति स्पष्टोऽर्थः। तत्र चोभयत्र शरणागतिरेव भक्तिं फलति न कर्माणीत्याचार्यद्वयं संप्रतिपन्नम्, न खलु काचिदपि विमतिः। एवं सप्तदशस्वपि विषयेषु वैमत्यं न प्रसजतीति निरूपितम्।

यद्यप्येतादृशविमतेरवकाशो न भगवत्पादानां प्रस्थानत्रये वा भगवद्रामानुजाचार्याणां ग्रन्थेषु वा लेशतोऽप्यस्ति, अपि तु भगवत्पादानां प्रस्थानत्रयं प्रायशः सर्वे व्याख्यातारः स्वस्वमनीषिकया स्वस्वाभिमतमर्थं कल्पयन्तो व्याकुल्यकार्षुः। एतच्चान्यत्र निरूपयिष्यतेऽस्माभिः, किन्त्वत्र एतावन्मात्रं तूदाह्रियते निदर्शनतया—"स्वशक्त्या नटवद् ब्रह्म कारणं शङ्करोऽब्रवीत्। जीवभ्रान्तिनिमित्तं तद् बभाषे भामतीपतिः। अज्ञातं नटवद् ब्रह्म कारणं शङ्करोऽब्रवीत्। जीवाज्ञातं जगद्बीजं जगौ वाचस्पतिस्तथा॥" इति कल्पतरुकारा इति शिवम्। इदं निरूपणं सर्वं भगवत्पादानां प्रस्थानत्रयं पञ्चपादिकां चालम्ब्य आचार्यवर्याणां ग्रन्थचतुष्टयं चालम्ब्य निर्वर्तितम्॥

—:*:—

# वैष्णवसिद्धान्ते गीतायाः श्रीपुरुषोत्तमतत्त्वम्

श्रीवैद्यनाथझा, श्रीनिम्बार्कमहाविद्यालयः, वृन्दावनम् ।

प्रायो नाविदितं केषाञ्चिदपि भारतीयसंस्कृतिपरम्परारहस्यमर्मज्ञानां सुरभारतीसमुपासकानामन्तेवसतां विदुषां तत्रापि दर्शनशास्त्रमधीयानानां विपश्चिद्वराणां यदस्यां संस्कृतौ अधिकर्तव्याकर्तव्यम्, अधिभक्ष्याभक्ष्यम्, तत्राप्याध्यात्मिकविचारे–किं चित्स्वरूपं किमचित्स्वरूपम्, किं वा तत्प्रवर्तकेश्वरस्वरूपम्, का मुक्तिः, का चोपासनप्रणाली साधीयसीत्यादिप्रश्ने शास्त्रमेव परमं प्रमाणमिति, "तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ" इति भगवदुक्तेः। "मुण्डे मुण्डे मतिर्भिन्ना" इति नियमादाहारभेदाच्च मानवीयतर्काणामप्रतिष्ठितत्वात्तेषु तेषु विषयेषु तन्निर्णयस्याकिञ्चित्करत्वात्, "तर्काप्रतिष्ठानात्" इति व्यासोक्तेश्च । शास्त्रानुकूलतर्कस्तु ग्राह्य एवेति त्वन्यदेतत् । अत एव सर्वैः खल्वास्तिकदार्शनिकाचार्यवर्यैस्तत्रापि वेदान्तभाष्यकारैः सर्वप्रथमं शास्त्रप्रामाण्यमेव समर्थितं स्वस्वभाष्य इति नापरोक्षं वेदान्तविदुषाम् ।

तानि च प्रमाणभूतानि शास्त्राणि भूयांसि । प्राय एतावदधिकानि साहित्यानि विश्वस्य कस्यामपि संस्कृतौ न सन्तीति कथनं नातिशयोक्तिं लभेत । चत्वारो वेदास्तत्राप्येकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, नवधाऽथर्वणो वेदः, एकविंशतिधा बाह्वृच्यम्, तेषां षडङ्गानि व्याकरणादीनि, अष्टादश स्मृतयः, अष्टादश पुराणानि, तथैवोपपुराणानि, लक्षश्लोकात्मकं महाभारतं योगवासिष्ठादयश्चेति ।

चिदचिदीश्वराणां विचारेऽपि द्वादश दर्शनानि । तत्र नास्तिकदर्शनं विहायास्तिकदर्शनान्यपि विभिन्नऋषिप्रणीतानि कियन्ति । कश्चनारम्भवादसमर्थकः, कश्चन विवर्तवादसमर्थकः, कश्चन परिणामवादपरिपोषक इति न जाने कियन्तो वादाः सन्ति प्रचलिताः । परमध्यात्मविचारे सर्वान्तिमनिर्णायकं शास्त्रं वेदान्तशास्त्रमेवेत्यपि नापरोक्षं तटस्थदार्शनिकाचार्यवर्याणाम् । न्यायवैशेषिकादिशास्त्राणां मन्मते नास्तिकयुगे सृज्यमानानां केवलं निखिलजगत्स्रष्टा अस्त्येकः कश्चनेश्वरः, शरीरात्मवादं निराकृत्य शरीरेन्द्रियादिभिन्नस्त्रिकालाबाध्यसत्ताको नित्य आत्मेत्येतत्संसाधनमेव परमं प्रयोजनम् । स चेश्वरः कीदृग्रूपः—सविशेषः निर्विशेषो वा, साकारो निराकारो वा, अभिन्ननिमित्तोपादानं केवलनिमित्तं वा, तथैवात्मा ( जीवात्मा ) विभुर्वाऽणुर्वा, ज्ञानाधि-

करणं ज्ञानस्वरूपं वा, ब्रह्मभिन्नस्तदभिन्नो वेत्यादिविचारस्तु वेदान्तकार्यमेव। इत्थमेव सांख्यस्य तत्त्वत्रयोत्पत्तिविचारः ( सृष्टिप्रक्रिया ), त्रिगुणकार्यं त्रिगुणस्वरूपं च कीदृगित्याद्येव। एवमेव योगदर्शनस्य चित्तवृत्तिनिरोधः कथं कार्यः, वृत्तिस्वरूपं कीदृगित्याद्येव प्रधानतया ज्ञेयम्। तत्र सांख्ययोगशास्त्रीयप्रक्रियाणां तु सर्वविधसाधकानां नितरामुपयोगित्वं ज्ञेयम्। परं जीवजगन्मोक्षादिनिर्णयो नैनयोः परममुद्देश्यम्। एवमेव पूर्वमीमांसायाः कर्मकाण्डभागस्य वेदस्य कया रीत्याऽर्थो विधेय इति तदर्थशैलीनिर्धारणमेव तदीयं चरमं लक्ष्यं प्रतीयते। अतः पारिशेष्याज्जीवजगद्ब्रह्ममुक्त्यादिपदार्थानां वास्तविकस्वरूपपरिज्ञानाय वेदान्तशास्त्रमेव परमं शरणमिति नाविदितं सहृदयानाम्। अन्यान्यदर्शनशास्त्रीयमुक्त्यादिविचारस्त्वांशिक एव ग्राह्यः, लोकाभिरुच्यर्थमेव तत्र तत्र तत्तत्पदार्थानां विचारदर्शनात्। अन्यथा विरोधपरिहारासंभवात्।

तत्र कस्तावद् वेदान्त इति विषये बहूनामद्यतनानां भूयान् विपर्ययः। कियन्तो ह्याधुनिका भाष्यविशेषमेव वेदान्तं मन्यमाना दृश्यन्ते। शाङ्करभाष्यमथवाऽद्वैतवेदान्तमेव वेदान्तं मन्यमानानां नाधुनापि खल्वल्पीयसी संख्या, परमियं भ्रान्तिः। "वेदान्तो नामोपनिषत्प्रमाणं शारीरिकसूत्रादीनि च" इत्यादिना मुख्यतयोपनिषदामेव वेदान्ततत्त्वप्रतिपादनात्। तदुपकारकतया ब्रह्मसूत्राणि तद्भाष्याण्यपि वेदान्तपदेन ग्रहीतुं शक्यान्येव, तस्य च वैष्णवादिभाष्येष्वपि समानत्वमेव।

उपनिषदामर्थः कया रीत्या कार्य इत्येतदर्थं भगवता व्यासेन ब्रह्मसूत्राणि रचितानि। ब्रह्मसूत्राणामर्थनिर्धारकत्वं यथा—"सदेव सौम्येदमग्र आसीत्" इत्यत्र सत्पदेन ब्रह्म ग्राह्यमथवा प्रकृतिरिति संदेहे "ईक्षतेर्नाशब्दम्" इत्यादीक्षत्यधिकरणसूत्रैः सत्पदेन ब्रह्मैव ग्राह्यमित्यस्य, तथा "तस्माद् विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयः" इत्यत्रानन्दमयपदेन जीवो ग्राह्यो ब्रह्म वेति संदेहे "आनन्दमयोऽभ्यासात्" इत्याद्यानन्दमयाधिकरणसूत्रैरानन्दमयः परमात्मैवेत्यस्य निर्धारणदर्शनात्। एवमेवाकाशस्तल्लिङ्गादित्यादावपि तत्त्वनिर्णयावधारणं विज्ञेयम्।

इत्थमेव श्रीमद्भगवद्गीताया उपनिषत्साररूपत्वात् तदर्थज्ञाननिर्धारणाय साधनरूपत्वाच्च वेदान्तत्वं सकलदार्शनिकाचार्यवरैः स्पष्टमुद्घोषितम्। त्रयोऽमी ग्रन्था एवाधिवेदान्तं सर्वप्रमुखाः प्रस्थानत्रयीपदेनाभिधीयमाना इत्यत्र नास्ति कस्यापि वैमत्यम्। अस्या एव प्रस्थानत्रय्या भाष्यकारा आचार्यपदेनाभिधीयन्ते। यथा श्रीनिम्बार्कशङ्करवल्लभादयः।

एष्वप्युपनिषदां बाहुल्येन गाम्भीर्येण च तथा ब्रह्मसूत्राणां संक्षिप्ततया गूढाशयत्वेन विभिन्नवादिसम्पादितविभिन्नद्वैताद्वैतादिव्याख्यानपरतयैकस्याप्यर्थस्यानिर्णयात् तत्त्वनिर्णयाय

साधककल्याणाय च श्रीमद्भगवद्गीतैव पारिशेष्यात् परमं प्रमाणं साधनं चेति समेषां विदुषां निश्चयः, "एकं शास्त्रं देवकीपुत्रगीतमेको देवो देवकीपुत्र एव। एको मन्त्रस्तस्य नामानि यानि कर्माऽप्येकं तस्य देवस्य सेवा ॥", "गीता सुगीता कर्तव्या किमन्यैः शास्त्रसंग्रहैः। या स्वयं पद्मनाभस्य मुखपद्माद् विनिःसृता ॥" इत्यादावेकस्यैव श्रीमद्भगवद्गीताशास्त्रस्य सकलात्मकल्याणाय सर्वश्रेष्ठसाधनत्वेन प्रतिपादितत्वात्। "किमन्यैः शास्त्रसंग्रहैः" इत्यादिनान्य-शास्त्रसंग्रहस्य निषेधितत्वाच्च। तच्चेदं गीताशास्त्रं सकलोपनिषदां सारभूतमित्यपि—"सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः। पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥" इत्यादिना स्पष्टमेव।

गीता अप्यनेकाः, यथा—शिवगीता, गणेशगीता, पाण्डवगीता, शक्तिगीताऽनुगीतेत्यादयः। परं यादृशं महत्त्वं श्रीमद्भगवद्गीताया वरीवर्ति, न तथान्यस्या गीताया इत्यपि विदुषां नापरोक्षम्। कस्यापि सम्प्रदायस्य भवतु, कस्यापि मतस्य भवतु, कस्यापि देशस्य निवासी तिष्ठतु, शैवो भवतु शाक्तो वा, स्मार्तो भवतु वैष्णवो वा, प्राच्यो वा प्रतीच्यो वा उदीच्यो वा अवाच्यो वा, अद्वैती भवतु विशिष्टाद्वैती वा, गीतायाः प्रचारः सर्वत्र समानरूपेण वरीवर्ति। भारतवर्षस्याध्यात्मिकं कीदृशं कस्यापि वा मतं भवतु, तावत्कालं निर्दुष्टं प्रामाणिकं वा न मन्यते, यावन्मतं श्रीगीताभागवतादिप्रमाणितं न भवति। अत एव श्रीशङ्कराचार्यो भवतु श्रीरामानुजो वा, श्रीनिम्बार्को भवतु वल्लभो वा, पाशुपतो वा गाणपत्यो वा, समे स्वमतसमर्थनाय श्रीमद्भगवद्गीतावाक्यं समुद्धरन्त्येव। ब्राह्मणो वा शूद्रो वा, ब्रह्मचारी भवतु गृहस्थो वा, वनी वा यतिर्वा, समे समानमादरन्ति यदि किमपि शास्त्रं चेत्तदेवंविधं भगवद्गीताशास्त्रमेव। न खलु भारतीया एव दार्शनिकवरा अपि तु पाश्चात्त्यदेशीया अप्यनेके दार्शनिकशिरोमणय एतस्या श्रीमद्भगवद्गीताया ज्ञानगरिम्णोऽग्रे स्वशिरो नमयन्त्येव। इदं खलु भगवद्गीताया अस्या एव परमं वैशिष्ट्यं यदास्तिका भवन्तु नास्तिका वा सर्वेषां स्वमतपुष्टिर्मिलत्यस्याम्। यदि केनचिल्लोकतन्त्रवादिनात्र लोकतन्त्रं दृश्यते चेत्साम्यवादिना साम्यवादः। अहिंसकेनाहिंसा दृश्यते चेद्धिंसकेन तद्विपरीतमित्यहो श्रीभगवद्गीताया परमं गाम्भीर्यम्।

तच्चेदं शास्त्रं यदि भगवता शङ्कराचार्येण ज्ञानमयं विलोक्यते, पूज्यैः वैष्णवाचार्यैस्तत्र सर्वत्र प्रपत्तिरेव दरीदृश्यते। तिलकेन कर्मयोगश्चेद् गान्धिनाऽनासक्तियोग एव तत्र समालोक्यते इति किमिह नेति न शक्यतेऽभिधातुम्। इत्येवालोच्योक्तं भगवता व्यासेन—"यदिहास्ति तदन्यत्र

यन्नेहास्ति न तत् क्वचित्" इति, गीतामालक्ष्यैव महाभारते तदुक्तेः। अतश्चिदचिदीश्वराणाम्, तेषां पारस्परिकसम्बन्धस्य च विषये तथा भक्तेर्मुक्तेर्वा वास्तविकस्वरूपविषये श्रीमद्गीताशास्त्रमेव परमं साधनमितीह निबन्धे तत्साक्ष्यप्राधान्येनैव श्रीपुरुषोत्तमतत्त्वं तावत् प्रस्तूयते।

अत्रेदमवधेयम्—यद्यपि भक्तभावनया श्रीकृष्णतत्त्वमनेकविधम्। अनेके श्रीकृष्णा इति वदन्ति भावुकाः। व्रजस्य श्रीकृष्णोऽन्यः, कुञ्जस्यान्यः। कुञ्जेऽपि व्रजसुन्दरीणामन्यो भानुनन्दिन्या अन्यः। मथुरावास्तव्योऽन्यः, द्वारकावास्यन्यः, गीतावक्ता श्रीकृष्णोऽन्यः, श्रीवृन्दावनेश्वरोऽन्य इति भणन्ति कतिपये भावुका भक्ताः। परमियं भावुकतैव, य एव व्रजस्थः श्रीकृष्णः स एव मथुरावासी, यश्च वृन्दावनवास्तव्यः स एव गीतावक्तेति मम मतं शास्त्रसम्मतञ्च, "सर्वोपनिषदो गावः" इत्यत्र नन्दनन्दनस्यैव वृन्दावनचन्द्रस्य श्रीकृष्णस्य गीतावक्तृत्वप्रदिपादनात्। सति भेदाङ्गीकारे—"वेदैश्च सर्वैरहमेव वेद्यः", "मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय", "अहं सर्वस्य प्रभवः" इत्यादिना गीतावक्तुरेव (वृन्दावनेश्वरादन्यस्य) परात्परतत्त्वरूपत्वमापद्येत, वृन्दावनेश्वरस्य द्विभुजवंशीधरश्रीकृष्णस्य सर्वोत्कृष्टत्वानापत्तेस्तस्याश्चानिष्टत्वात्। "वंशीविभूषितकरान्नवनीरदाभात् पीताम्बरादरुणबिम्बफलाधरोष्ठात्। पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात् कृष्णात् परं किमपि तत्त्वमहं न जाने॥" (मधुसूदनसरस्वती), "ब्रह्माण्डानि बहूनि पङ्कजभवान् प्रत्यण्डमत्यद्भुतान् गोपान् वत्सयुतानदर्शयदजं विष्णूनशेषांश्च यः। शम्भुर्यच्चरणोदकं स्वशिरसा धत्ते स मूर्तित्रयात् कृष्णो वै पृथगस्ति कोऽप्यविकृतः सच्चिन्मयो नीलिमा॥" (आदिशङ्कराचार्यः), "अन्तःकरणमद्वाक्यं सावधानतया शृणु। कृष्णात्परं नास्ति दैवं वस्तुदोषविवर्जितम्॥ तस्मात्सततमित्येव श्रीकृष्णः शरणं मम॥" (वल्लभाचार्यः), "आराध्यो भगवान् व्रजेन्द्रतनयस्तद्धाम वृन्दावनं रम्या काचिदुपासना व्रजवधूवर्गेण या कल्पिता। श्रीमद्भागवतं प्रमाणममलं प्रेमा पुमर्थो महान् श्रीचैतन्यमहाप्रभोर्मतमिदं तत्राग्रहो नापरः॥" (महाप्रभुचैतन्यः), "नान्या गतिः कृष्णपदारविन्दात् संदृश्यते ब्रह्मशिवादिवन्दितात्। भक्तेच्छयोपात्तसुचिन्त्यविग्रहादचिन्त्यशक्तेरविचिन्त्यसाशयात्॥" (श्रीनिम्बार्काचार्यः), "एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्" (श्रीमद्भागवतम्), "कृष्ण एव हि लोकानां भावनो मोहनस्तथा। संहारकारकश्चैव :कारणं च विशाम्पते॥" (महाभारतम्) इत्यादिपरःसहस्रवाक्येषु द्विभुजवंशीधरश्रीकृष्णस्यैव परात्पररूपत्वप्रतिपादनात्, अतो गीतावक्ता श्रीवृन्दावनेश्वरः श्रीगोपीजनवल्लभ एवेति विज्ञेयम्। तथा चास्मिन् गीताशास्त्रेऽस्मच्छब्देन सर्वत्र सर्वविशेषविशिष्टः, स्वभावतोऽपास्तदोषः, अशेषकल्याणगुणाकरः,

अनन्ताचिन्त्यस्वाभाविककल्याणगुणगणनिलयः पुरुषोत्तमो द्विभुजः श्रीकृष्ण एव। अक्षरशब्देन च निर्विशेषो निराकारो वा ब्रह्म ग्राह्यमिति। एवञ्च तत् पुरुषोत्तमस्वरूपं कीदृगिति गीतामुखेनैव सम्प्रति विशिष्य विचार्यते।

तत्रेदं पुनरवधेयम्—यथा पृथिव्यादिदेवतानां द्विविधं रूपं भवति, एकं पुरुषविधमपरमपुरुषविधम् (निराकारं), तथैव परमात्मनोऽपि द्विविधं रूपं साकारनिराकारभेदेन शाश्वतिकमेव। तद्[1] ब्रह्म सदेकमपि सूर्यतत्प्रकाशवद्वा प्रदीपतत्प्रभावद्वा वाय्वग्निजलपृथिव्यादिष्वधिष्ठेयाधिष्ठातृवद्वा पुरुषविधापुरुषविधरूपाभ्यां प्रकाशते। तत्र यत्पुरुषविधं रूपं तत् सर्वाश्रयम्, यच्चापुरुषविधं तदितरस्य सर्वस्याश्रयभूतमपि पुरुषविधस्य तस्याश्रितं तदपेक्षया गुणीभूतञ्च, सूर्यतत्प्रकाशादिषु पूर्वोक्तनिदर्शनस्थलेषु तथैव दर्शनात्। तत्र यदपुरुषविधं तदेव लोके वेदे च विशेषतोऽक्षरब्रह्मशब्देनोपदिश्यते। यच्च तस्याप्याश्रयं वस्तु तदेव लोके वेदे च परमात्मशब्देन पुरुषोत्तमशब्देनेश्वरशब्देन चोपदिश्यते। तदुक्तं गीतायां पञ्चदशे—"उत्तमः पुरुषस्त्वन्यः" इत्यादिनेति। इदमेव परमं ज्ञेयतत्त्वम्, एतज्ज्ञानमेव सर्वगुह्यतमं ज्ञानम्। तदुक्तं गीतायां तत्रैव—"इति गुह्यतमम्" इत्यादिनेति।

इदमेव गीतायां श्रीकृष्णाख्यं वस्तु। इदमेव च गीतायां "मामेव ये प्रपद्यन्ते", "अहं कृत्स्नस्य जगतः", "मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते", "मत्तः परतरं नान्यत्", "मामेकं शरणं व्रज" इत्यादावन्यत्र चास्मच्छब्देन, "पुरुषः स परः पार्थ", "तमेव चाद्यं पुरुषं प्रपद्ये" इत्यादौ पुरुषशब्देन चोच्यते। अक्षरब्रह्म तु गीतायाम्—"अव्यक्तोऽक्षर इत्युक्तः", "ये त्वक्षरमनिर्देश्यम्", "कूटस्थोऽक्षर उच्यते", "ब्रह्मणो हि प्रतिष्ठाऽहम्" इत्यादावक्षरशब्देन ब्रह्मशब्देन चोपदिश्यते। तदेव श्रीपुरुषोत्तमाख्यं तत्त्वं वेदेषु प्रणवे परमात्मशब्देन, गायत्र्यां भर्गशब्देन, पुरुषसूक्ते पुरुषशब्देनोच्यते। उपनिषत्सु—"तं त्वौपनिषदं पुरुषं पृच्छामि", "पुरुषान्न परं किञ्चित् सा काष्ठा परा गतिः", "अन्योऽन्तर आत्मा आनन्दमयः", "अन्वयं पुरुषविधः", "दिव्यो ह्यमूर्तः पुरुषः", "आत्मैवेदमग्र आसीत् पुरुषविधः", "तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः" इत्यादौ

---

१. 'तद् ब्रह्म सदेकमपि' इत्यारभ्य 'धामत्वेन च निरूप्यते' पर्यन्तं यावत् प्रातःस्मरणीयानामस्मद्गुरुवर्याणां तत्रभवतां पण्डितश्रीभगीरथझाशर्मणां 'श्रीभगवत्तत्त्वसुधानिधि'ग्रन्थोपोद्घातस्याविकलोंऽशो ज्ञेयः।

पुरुषपरमात्मादिशब्दैरक्षरादधिकत्वेन च विशिष्योपदिश्यते। अक्षरं ब्रह्म तु–"अक्षरात्परतः परः", "ब्रह्मपुच्छं प्रतिष्ठा" इत्यादिश्रुतौ विभूतित्वेन श्रीगोपालोत्तरतापिन्याम्–"तासां मध्ये साक्षाद् ब्रह्म गोपालपुरी भवति" इत्यत्र श्री गोपालस्य परमात्मनो धामत्वेन च निरूप्यते।

अयमाशयः—अद्वैतवादिनां वेदान्तिनां मते त्रिविधा सत्ता भवति—प्रातिभासकी, व्यावहारिकी, पारमार्थिकी चेति। शुक्तौ रजतस्य, रज्जौ सर्पस्य च सत्ता प्रातिभासिकी। जगतस्तदभिन्न-निमित्तोपादानस्य सविशेषेश्वरस्य जीवब्रह्मणोर्भेदस्य च व्यावहारिकी सत्ता। सजातीयविजातीय-स्वगतभेदविवर्जितनिराकारनिर्गुणनिर्धर्मकज्योतिःस्वरूपाक्षरब्रह्मणस्तु सत्ता पारमार्थिकी। इदमेव परमं सत्, अन्यत् सर्वं मिथ्येति। एतदेव च परमं सद्ब्रह्म अविद्यासाचिव्येन जगदाकारेण विवर्तते। एतदेव चाविद्याप्रतिबिम्बितं सज्जीवतां मायाप्रतिबिम्बितं सदीश्वरतां लभते। अस्योपाधेर्मायायाः शुद्धसत्त्वप्रधानतयेश्वरस्य सर्वज्ञत्वम्, मलिनसत्त्वप्रधानाविद्योपाधिकतया च जीवस्याल्पज्ञत्वम्। अविद्याप्रतिबिम्बितं तदवच्छिन्नं वा जीवः, एवं मायाप्रतिबिम्बितं तदवच्छिन्नं वेश्वर इत्यादि न जाने का का कल्पनाऽस्ति तेषाम्। एवञ्चैतन्मते ईश्वराभिधानस्य सविशेषेश्वरस्य पुरुषोत्तमस्य गौणत्वन्यूनत्वे, तथा निर्विशेषनिराकारब्रह्मणस्तु प्राधान्यं श्रेष्ठत्वञ्च प्रतिपादितं भवति। परमीदृशं मतं नोपनिषदां न च ब्रह्मसूत्राणां न च तत्सारभूतायाः सकलाचार्यवन्द्याया भगवद्गीताया एव सम्मतमिति नापरोक्षं दुराग्रहरहितानां विदुषाम्। यत्राद्वैतसिद्धान्तस्य परिसमाप्तिस्ततोऽग्रे ततोऽप्युत्तमं किञ्चित्तत्त्वं प्रतिपादयति भगवतीयं गीतेति वास्तविकतान्वेषकाणां दुराग्रहरहितानां नो मनागपि संशयः। अद्वैतसम्प्रदाये यदन्तिमं तत्त्वं सजातीयविजातीयस्वगतभेद-विवर्जितं निर्विशेषज्योतिःस्वरूपं ब्रह्म, तदेवेह गीताशास्त्रेऽक्षरशब्देन निर्दिष्टमिति निर्णीतं द्वादशाध्याये "ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते", अष्टमाध्याये "अव्यक्तोऽक्षर इत्युक्तम्", चतुर्दशाध्याये च "ब्रह्मणो हि प्रतिष्ठाहम्"इत्यादौ। तत्र तत्राक्षरपदेन निर्विशेषब्रह्मग्रहणस्य प्रायः सर्ववादिसम्मतत्वाद्। एवञ्च "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तम" इत्यनेन भगवद्वाक्येनाक्षरपदार्थान्निर्विशेषब्रह्मणः पुरुषोत्तमस्य सविशेषस्य श्रैष्ठ्यं प्रतिपादितमिति नात्र केषाञ्चिदपि प्रेक्षावतां मनागपि कुशङ्कावसरः। अत्र च सकलवैष्णवाचार्य्याणामेकमत्यम्, द्वादशाध्यायादिप्रश्नवाक्येऽक्षरपदेन निर्विशेषनिराकारग्रहणस्य सर्ववादिनिश्चितत्वे इह पञ्चदशाध्यायेऽक्षरपदेनान्यग्रहणे प्रमाणाभावात्। एवं च स्पष्टतया निर्विशेषनिराकारब्रह्मापेक्षया पुरुषोत्तमस्योत्कृष्टत्वं गीतासमर्थितमिति प्रायः कस्यापि तटस्थस्य नापरिचितम्।

## वैष्णवसिद्धान्ते गीतायाः श्रीपुरुषोत्तमतत्त्वम्

स्पष्टभाषायां गीतायामक्षरादुत्कृष्टत्वं श्रीपुरुषोत्तमे प्रतिपाद्य तदुपासकानामक्षरोपासकापेक्षया श्रेष्ठत्वं च प्रतिपादितमिति न कस्यापि संदेहावसरः। अर्जुनो मध्यमाधिकारीति कृत्वैव तदर्थं भक्त्युपदेशः, निराकारापेक्षया साकारस्य श्रेष्ठत्वप्रतिपादनमपि चेति कथनं त्वात्मवञ्चनमेव, परमं दुस्साहसमेव वेति मन्तव्यम्। भगवतः प्राणप्रियस्यार्जुनस्य मध्यमाधिकारित्वे को वाद्यतनो मोदकमुद्राप्रियः शिष्यशिष्याप्रियो वोत्तमाधिकारितां लभेत, "इष्टोऽसि मे सखा चेति" इत्यादिनाऽर्जुनस्य परमप्रियत्वं परमेष्टत्वञ्च स्वयमभिधाय तत्कृते कृतोपदेशस्य परमगोप्यत्वं परमरहस्यत्वञ्च श्रीमुखेनैव प्रतिपादनात्। अतोऽक्षरादुत्कृष्टत्वेन पुरुषोत्तमोपदेशस्य, सर्वमार्गापेक्षया श्रेष्ठत्वेनाभिहितस्य भक्तिमार्गस्य प्रपत्तिमार्गस्य वा न मध्यमाधिकारिसापेक्षत्वम्, न वा कालविशेषसापेक्षत्वम्, किन्तु वस्तुस्थितिकथनमेवेत्यत्रापि समेषां वैष्णवाचार्याणामैकमत्यमेव।

स चायं पुरुषोत्तमो द्विभुजो वंशीधरः श्रीकृष्ण एव। अयमेव छान्दोग्यस्य भूमा, बृहदारण्यकस्य प्रेयः, तैत्तिरीयस्य रस इति सुस्पष्टमुक्तं श्रीनिम्बार्कमहामुनीन्द्रैः 'भूमा सम्प्रसादादध्युपदेशात्' (१।३।८) इति सूत्रे–परमाचार्यैः श्रीकुमारैरस्मद्गुरवे श्रीमन्नारदायोपदिष्टः 'भूमा त्वेव विजिज्ञासितव्यः' इत्यत्र भूमा प्राणो न भवति, किन्तु श्रीपुरुषोत्तम इति। अक्षरब्रह्म यस्य रसब्रह्मणः श्रीकृष्णस्य नखमणिचन्द्रिकाप्रकाश इति न केवलं व्रजभावुकानां भावुकतैव, अपि तु "ब्रह्मपुच्छं प्रतिष्ठा", "ब्रह्मणो हि प्रतिष्ठाऽहम्", "अव्यक्तोऽक्षर इत्युक्तः" इत्यादिपरःसहस्रवाक्यसिद्धमपि। ज्ञानिनो हि तदङ्गप्रकाशमेव परमं तत्त्वमभिमन्यमानास्तदेवान्तिमं तत्त्वमङ्गीकृत्य सन्तुष्यन्ति, परं वैष्णवास्तन्न मन्यन्ते। "मद्भक्ताः सूक्ष्मबुद्धयः" इति शिवोक्तिरीत्या भगवत्कृपापूतया सूक्ष्मदृष्ट्या तत्तेजोमण्डले परमं रसमयं पुरुषविधं श्रीपुरुषोत्तममनुभवन्ति, कथयन्ति च 'तेजः कुतस्तेजस्वितां विना' इति।

इदमेव श्रीपुरुषोत्तमतत्त्वं "अथातो ब्रह्मजिज्ञासा" इत्यारभ्य "अनावृत्तिः शब्दात्" इत्यन्तपर्यन्तं समग्रसूत्राणां परमो विचार्यविषयः। नात्र कुत्रापि निर्विशेषगन्धलेशोऽपीति ईक्षत्यधिकरणानन्दमयाधिकरणानामेव तावद्विशेषतया समीक्षकाणां सहृदयानां न संशयः, श्रीचैतन्यमहाप्रभुसदृशावतारिपुरुषाणामपि रागद्वेषादिहीनानां तथैव प्रतीयमानत्वात्। "रसो वै सः", "तदेतत्प्रेयः पुत्रात्", "यत्र नान्यत्पश्यति", "तस्माद् विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयः" इत्यादिश्रुतीनामपि न कथमपि निराकारविषयता, निराकारस्य रसत्वासंभवादानन्दमयत्वासंभवाच्च। अतः सकलश्रुतीनां सकलसूत्राणाञ्च परमो विषयो गीताया अयमेव पुरुषोत्तमः श्रीकृष्णः। सोऽपि द्विभुजो वंशीधर एव, तत्रैव रसत्वं सर्वाकर्षकत्वं चेति सहृदयहृदयवेद्यम्।

विषयीभवतु आत्मारामो वा, समेषामाकर्षकारित्वमत्रैव। शुकसदृशा आत्मारामाः, पण्डितराजजगन्नाथसदृशा विषयारामाः, वल्लभसदृशाः सनातनधर्मावलम्बिनः, रसखानसदृशा विधर्मिणोऽपि यत्र समानाकृष्टा भवन्ति, सोऽयं वंशीधरः श्रीकृष्ण एव। इदमेवास्य श्रीकृष्णत्वम्, यत्र माधुर्यमेव माधुर्यम्। "अधरं मधुरं वदनं मधुरं हसितं मधुरं मधुराधिपतेरखिलं मधुरम्", यस्य रुदितमपि मधुरम्। अत्र न केवलमङ्गान्येव मधुराणि, न च शृङ्गारबाललीला एव मधुराः, अपि त्वसुरवधाद्यैश्वर्यलीला अपि मधुरा एव, यथा—पूतनाशकटतृणावर्तवधादि।

अत्रैव सौन्दर्यस्य, माधुर्यस्य, ज्ञानस्य, वीरत्वस्य, कूटनीतिज्ञतायाः, दार्शनिकतायाश्च परिपूर्णतेत्यहो पुरुषोत्तमस्य पूर्णत्वम्। गीतासदृशं ज्ञानम्, श्रीवृन्दावनसदृशो विलासः, कंसादिवधसदृशं वीरत्वम्, महाभारतकालिकं तस्य कूटनीतिपरिज्ञानं क्वास्ति ऋते श्रीकृष्णात्। यदि क्वापि ज्ञानं न तत्र शक्तिः, यत्रोभौ न तत्रानन्दः, यत्र त्रयं न तत्र सकलकामनापूरकत्वम्। ज्ञानमपि भवतु, शक्तिरपि भवतु, आनन्दोऽपि भवतु, कर्तुमकर्तुमन्यथाकर्तुं सर्वसमर्थोऽपि भवतु, न च भवतु सकलोपभोग्यत्वम्, न भवतु भक्ताखिलकामनापूरकत्वं दीनदुःखहर्तृत्वं न्यायपक्षपातित्वं चेत् कथं स परमात्मा ? कथं चेश्वरः स शक्यते वक्तुम्।

ईदृशः करुणावरुणालयः सकलकामनापूरकस्त्वस्माकं श्रीश्यामसुन्दर एव, गोपीजनवल्लभ एव। को ह्येवं भगवानपरः, यो हन्तुमागतायापि मोक्षसुखं दद्यात्। को हीदृशो भगवान् ऋते वृन्दावनेश्वरात्, यो हि भक्तस्य शिशुसखा प्रियतमो वा भवितुं सोद्यतः। विश्वस्येतिहासे नैवंविधोऽपरो विलोक्यते यत्र पूर्णमानवत्वं पूर्णपरमात्मत्वं च स्यातामित्येवंविधस्तु पुरुषोत्तमः श्रीकृष्ण एव नापर इति प्रत्यपादि प्रकाण्डपण्डितैः श्रीमधुसूदनसरस्वतीपादैः—"कृष्णात्परं किमपि तत्त्वमहं न जाने" इति। विषयेऽस्मिन्नधिकं जिज्ञासुभिर्विविधशास्त्रविचक्षणैरस्मद्गुरुचरणैर्विरचितो मुद्रितश्च 'श्रीभगवत्तत्त्वसुधानिधि'नामको ग्रन्थोऽध्येतव्यः, यत्र प्रणवादिसमस्तवैदिकमन्त्राणामुपनिषदां च सर्वासां श्रीपुरुषोत्तमे सम्यक् समन्वयः प्रदर्शित इति साम्प्रतमेतावदेवोक्त्वा विरम्यते॥



# गीतातात्पर्यानुसन्धानम्

श्रीचन्द्रदेवत्रिपाठी, बेतिया ( चम्पारन )राजसंस्कृतोच्चविद्यालये, प्रधानाध्यापकः ।

गीताशास्त्रं खलु सर्वदर्शनसमन्वयात्मकं मोहापनोदाय लोकानां भगवता प्रकाशितम् । तद्यथा—दर्शनशब्दे दृश्धातोर्ज्ञानार्थत्वाद्दर्शनं नाम ज्ञानम् । तस्य शास्त्रं नाम शासनकरणम्, अर्थाद् ज्ञानोपदेशस्यासाधारणं कारणं यत्तद्दर्शनशास्त्रमित्यर्थः ।

ज्ञानं च प्रकृतिविकृतितत्सङ्घातजीवात्मतद्बन्धमोक्षपरमात्मविषयकं मानवानां शाश्वतशान्त्युपलब्ध्यनुगुणम् । अशेषविषयाणामत्रैवान्तर्भावान्नात्रानुसन्धेयं किञ्चिद् वैगुण्यम् । एतद्विषयकजिज्ञासाया निदानञ्च भौतिकप्रपञ्चे नितान्तं व्यस्तानां विविधाधिव्याधिग्रस्तानामशान्तानां जन्तूनां कृते शान्तिमार्गान्वेषणमेव । तदेतद्दर्शनं नास्तिकदर्शनमास्तिकदर्शनमिति द्विधा भिद्यते । नास्तिकदर्शनस्य विषये न मे किञ्चिद् वक्तव्यम्, तत्र भौतिकवादस्य निरीश्वरवादस्य शून्यवादक्षणिकवादादीनाञ्च प्राधान्यादास्तिकदर्शनाचार्यैर्बहुधा तन्निराकरणाच्च ।

आस्तिकदर्शनानां सर्वे सिद्धान्ताः श्रुतिमूलकाः । तत्रापि परमाणुवादविशेषवादप्रकृतिपुरुषवादकर्मवादद्वैताद्वैतविशिष्टाद्वैतशुद्धाद्वैतादिवादा आचार्याणामन्योन्यविरुद्धा इवावभासन्ते, किन्तु शान्तविविक्तबुद्ध्या विचारेण तत्र समन्वय एव प्रतिभाति ।

वेदैकचक्षुष्काणां तपोनिष्ठानां निष्कल्मषाणां प्रकृतिविकृत्योस्ततः परस्य च परमतत्त्वस्यानुसन्धानशीलानां शमायनानामृषीणां बुद्धौ सदसतोस्तदुद्भवस्थितिनिरोधाधिष्ठानस्य च तत्त्वस्य सत्यपि सम्यगवभासे यो यत्तत्त्वमधिकृत्य स्वप्रवचनमारब्धवांस्तस्य तत्रैव पूर्णाभिनिवेशदर्शनाल्लोकदृष्ट्या सोऽन्येभ्यो विरुध्यते, अन्ये च ततो विरुध्यन्ते, किन्तु वस्तुतः सर्वेषां सर्वज्ञत्वान्न कश्चिद् विरोधः ।

एकस्यैव वृक्षस्य मूलस्कन्धशाखापत्रपुष्पफलादीनां तत्तद्रूपरसगन्धादीनां चानुक्षणं विभिन्नतया परिवर्तमानानां प्रत्यक्षतो विवेकवत्स्वपि विवेकिषु कश्चित् केवलं मूलमेवाधिकृत्य प्रवक्ति कश्चित् स्कन्धमन्यः शाखामपरः पत्रपुष्पे इतरश्च फलम् । बहवस्तद्रूपस्य रसस्य वा विशेषेषु बद्धादरास्तानेव स्वप्रबन्धस्य लक्ष्यं निर्धारयन्ति । न तेष्वन्योन्यं विरोधो न वा कश्चित् स्वविषयातिरिक्तविषयं न वेत्तीति वक्तुं शक्यते । तद्वदेव एकस्यैव परमात्मनो विभूतिभूतेषु विभिन्नानुभूय-

मानजागतिकवस्तुषु सर्वज्ञत्वेऽपि विभिन्ना ऋषयो विभिन्नाधिकारिणामुपकाराय कञ्चिद् विषय-विशेषमेवाधिकृत्य स्वबुद्धिव्यापारं विस्तारयामासुरिति न तेषु कश्चिद् विसंवादः। तदेतत्सत्यम्,

यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः।
तथाक्षराद् विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति॥

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥

यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्।

इत्यादिश्रुतिभ्य एकस्यैव परमात्मनो विलसितमिदं सर्वं विभिन्नतया भासमानं प्रपञ्चात्मकं जगत् शून्यपरमाणुपृथिव्यादिभूतप्रकृतिपुरुषद्वैताद्वैताद्यनेकविशेषविशिष्टम्। तत्र यत्किञ्चित्तत्त्वमेवाधिकृत्य यः कश्चित् स्वविचारं प्रवर्तयामासेति न कस्यचिन्मतमसत्, कस्यचिदेव च सत्; किन्तु विचारतः सर्वेषां मतं सदेव। इत्थं सर्वत्र समन्वयः, सर्वेषामृषीणां सर्वज्ञत्वात्। इत्थमृषीणां तद्ग्रन्थानाञ्च परस्परविरोधाभावे तदालोचकानां बुद्धौ तत्र परस्परं विरोधः प्रतीयते चेदसौ तेषां विशेषाग्रहमूलक एव। इदञ्च सर्वसमन्वयात्मकं सम्यग्दर्शनं श्रीमद्भगवद्गीतोपनिषदि सुस्पष्टं प्रतीयत इति दर्शनानां सर्वसिद्धान्तसारसमन्व-यात्मकोऽयं गीताग्रन्थः सर्वतः स्ववैशिष्ट्यमात्मनि सन्निधापयति। तदेत् सर्वं श्रीगीताशास्त्रस्य विषयाणां सम्यगनुसन्धानतः स्फुटमवगम्यते।

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना।
अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे॥
अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः॥

इत्यादीनि वचनानि सर्वसमन्वयात्मकान्येव भगवतः।

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः॥

इति च विविधवादिनामपि ऋषीणां समन्वयात्मकदृष्ट्या प्रामाण्यमेवाङ्गीकरोति भगवान्।

अथ च विविधसंशयान्दोलिते चेतसि परितापतप्तानां जीवानां संशयनिवारणाय ज्ञानप्रका-शनमेव तात्पर्यं भगवतो गीतोपदेशस्येत्यपि तद्विषयानुसन्धानतः प्रतीयते। तथाहि—

## गीतातात्पर्यानुसन्धानम्

जगदिदं कात्स्न्येंन कर्मात्मकम्। कर्म च द्विविधम्—शारीरं मानसञ्च। प्रायेण मानसं मूलमितरस्य। तच्च कर्म प्राप्तिपरिहारात्मकम्, यतः कर्मणा किञ्चित् प्राप्यते किञ्चिच्च परिह्रियते। प्रकृत्यैव हि कश्चित् किञ्चित् प्राप्नोति, कश्चिच्च किञ्चित् परिहरति। अतः सर्वविधं कर्म प्राकृतिकम्। प्रकृतिः स्वभाव इत्यनर्थान्तरम्। आकाशादीनि भूतानि, शब्दादयो विषयाः, तद्ग्राहकाणीन्द्रियाणि, बहिःकरणम्, अन्तःकरणम्, विविधा वासनाः, सुखदुःखपुण्यपापजरामृत्युरागद्वेषादिकं सर्वं प्राकृतिकम्। अतः प्रकृतिरेव त्रिविधं कारणं कर्ममात्रस्य। सा च जडात्मिका सत्त्वरजस्तमोमयी, तस्याः स्फुरणञ्च चैतन्यात्मकपुरुषापेक्षम्। स च पुरुषो द्विविधः—बद्धो मुक्तश्च। प्रकृतिप्रभावापन्नो बद्धस्तदन्यो मुक्तः। तस्य बद्धत्वं प्राकृतिकविषयासक्तिहेतुकम्, मुक्तत्वञ्च तदनासक्तिहेतुकम्। बन्धमुक्त्योरपि तारतम्यमासक्त्यनासक्त्योस्तारतम्यापेक्षम्। यो यावानासक्तः स तावानेव बद्धः, यश्च यावाननासक्तः स तावानेव मुक्त इति। अतः कश्चिदीषद् बद्धः कश्चिद् बहु बहुतरं बहुतमञ्च। एवं कश्चिदीषन्मुक्तः कश्चित्ततोऽधिकमधिकतरमधिकतमं चेत्यादि निभाल्यते तारतम्यं बद्धमुक्तानां श्रूयते स्मर्यते च बहोः कालात्। अतो जीवेषु तद्बन्धनमात्रापेक्षया निकृष्टत्वनिकृष्टतरत्वनिकृष्टतमत्वानि, मुक्तिमात्रापेक्षया चोत्कृष्टत्वोत्कृष्टतरत्वोत्कृष्टतमत्वानीति लोके पाञ्चभौतिके समानेऽपि वैषम्यबाहुल्यं दृढतरमुपलभ्यते। एवञ्च बद्धतारतम्ये पतिता उच्चावचभावापन्ना जीवा मुक्ततारतम्ये पतिताः सन्तो महात्मानो देवाश्च। सर्वथा मुक्त ईश्वर इति व्यवस्था द्रढीयसी सर्वत्रानुभूयते।

प्रकृतिपुरुषयोर्नित्यत्वात्तत्समवेतं जगत् प्रवाहरूपेण नित्यं यद्यपि, तथापि सर्वस्य प्राकृतिकप्रपञ्चस्य बुद्धाववभासमानत्वात्तन्निरोधे सर्वलय इतीषदपि बन्धने जगतो नित्यत्वेन भानम्, क्रमिकमुक्तौ च क्षणिकत्वेन, सर्वथा मुक्तौ नितान्तमभानमिति जगतो नित्यत्वक्षणिकत्वासत्त्वानि विभिन्नवादिभिरभ्युपगतानि न तावदसमञ्जसानि।

सर्वलयेऽपि सन्मात्रस्य ब्रह्मपरमात्माद्यपरपर्यायस्य शाश्वती कूटस्था स्थितिर्निर्बाधा, तस्य सर्वविधभानाधिष्ठानत्वात्, प्रकृतेस्तद्विकृतिभ्यश्च सर्वथा बहिर्भूतत्वाच्च। अत एव तन्नित्यमविक्रियमनामयमिति श्रुत्युद्घोषोऽनुभवश्च महीयसाम्।

प्रकृतेः स्वरूपेण नित्यत्वादवभासमानतया च परिणामित्वात् तन्निष्ठस्य कर्मणोऽपि स्थूलसूक्ष्मव्यक्ताव्यक्तरूपेण तथैव नित्यत्वं परिणामित्वञ्च, अत एवानिवार्यं कर्म प्रकृतेर्गुणानुसारं सर्वत्र संसारसरणौ। एवञ्च सत्त्वरजस्तमःप्रभावात्तद्बद्धत्वात् सात्त्विकराजसतामसजीवानां तत्तद्गुणानुरूपस्य कर्मणोऽनिवार्यत्वे तत्र तत्फले च प्रसक्तानां लाभालाभप्रहाणाद्यनुभाविनां तत्तन्नि-

मित्तकहर्षविषादविक्षोभशोकमोहादिद्वन्द्वजुषां किं कार्यम्, किमकार्यम्, त्याज्यं वा सर्वं कर्म, लाभतारतम्यदृष्ट्या चेदं कार्यम्, [पुनस्तत्कार्यमित्यादि हानिदोषदृष्ट्या चेदं त्याज्यं तद्ग्राह्यं पुनस्तत्त्याज्यमन्यद् ग्राह्यमित्यादि विविधः संशयोऽनिवार्यतया प्राप्नोत्येव।

संशयात्मनः पुरुषस्य च विनाशोऽवश्यंभावी, मनःशरीरयोः स्वास्थ्याभावादात्मालाभादसदाग्रहाच्च। स च संशयः सर्वथाऽज्ञानमूलक इति तस्य समूलोन्मूलनाय तादृशाज्ञानावरणस्य निवारणार्थं ज्ञानप्रकाशस्यैव नितान्तमपेक्षा, अन्यतस्तन्निराकरणासम्भवात्। "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुतेरनुभवाच्च तदनुभाविनाम्।

एतत्सर्वं स्वयं विविच्य, अर्जुनेन च विवेच्य, श्रीकृष्णरूपी भगवान्नारायणोऽर्जुनं प्रति यं ज्ञानस्य पन्थानं सनातनमपि तदानीं कालप्रभावात्तिरोहितं प्राचीकशत्तदुद्बोधकमेव गीताशास्त्रमिति नात्र विप्रतिपत्तव्यं मनीषिभिः। तद्यथा—

प्रकृतेर्नित्यत्वे गुणानुसारं तन्निष्ठकर्मणोऽवश्यम्भावात्तत्त्यागासम्भवः, किन्तु कर्मणस्तत्फलस्य च पुरुषेणासंसर्गः पुरुषस्य सूक्ष्मत्वान्नित्यत्वात् प्रकृतिविकारासम्पृक्तत्वात् कर्मतत्फलयोश्च स्थूलत्वादनित्यत्वाद् विपरिणामित्वात् प्रतिक्षणं परिवर्तित्वादत एवासत्त्वात् सदसतोश्च सम्पर्कस्य तमःप्रकाशयोरिव नितान्तमसम्भवात्। अत एव गुणानुसारं प्राप्तस्य कर्मणः कर्तव्यबुद्ध्या करणेऽपि तत्र तत्फले च सङ्गाभाव पुरुषस्य स्वभावसिद्धः।

प्रकृतिपुरुषयोर्यथार्थज्ञानस्य तिरोधानादेव प्रकृत्या प्राप्तस्य कर्मणः करणे तत्र तत्फले चासक्त्या पूर्वोक्तविविधसंशयोदयेन हर्षविषादशोकमोहाद्युपद्रवप्राप्तिस्तदेव महद्दुःखम्। सति च ज्ञाने प्राकृतिके कर्मणि प्रवर्तमाने तत्र तत्फले चासक्त्यभावात् सर्वसंशयनिराकरणे आत्मनो नित्यत्वशुद्धत्वबुद्धत्वमुक्तत्वाकलनात् सर्वदुःखपरिहाणिरिति।

एवं गीतायामनुवाद्यप्रतिपाद्यविषयाणां सम्यगवधारणेन प्राधान्येन ज्ञानप्रकाश एव गीतायास्तात्पर्यमिति वयमाकलयामः।

यत्तु "तस्माद् युध्यस्व भारत", "तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः", "तस्मादसक्तः सततं कार्यं कर्म समाचर", "कुरु कर्मैव तस्मात्त्वम्" इत्यादिवचनैः कर्मकरण एव भूयो भूयः प्रवर्तनम्, कर्मकरण एव बलप्रदानम्, तत्रैव च भूयानाग्रह इति; तत्सर्वं कर्मणो ज्ञानाङ्गत्वेन तदावश्यकत्वसूचनार्थम्, न तु ज्ञानापेक्षया कर्मणः प्राधान्यप्रतिपादनार्थम्, कर्मापेक्षया ज्ञानस्य वा गौणत्वप्रबोधनार्थम्। कर्मणो ज्ञानाङ्गत्वं च—"स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति सुस्पष्टं प्रतिपादितम्। अत्र सिद्धिर्ज्ञानमेव, "सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे"

इत्यादिवचनविवेचनात्, "यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्" इति चित्तशुद्धिद्वाराऽपि कर्मणो ज्ञानाङ्गत्वबोधनात्।

"तस्माद् युध्यस्व भारत" इत्यत्र तस्मात् कस्मादित्याकाङ्क्षायाम्—"अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः। अनाशिनोऽप्रमेयस्य" इति शरीरिण आत्मनो नित्यत्वानाशित्वाप्रमेयत्व-प्रबोधनम्, शरीरस्य च तद्विरुद्धत्वज्ञापनमेव भगवतस्तात्पर्यम्, युद्धे मृत्युभयाद्धिंसाभयाद्वा तस्माद् विमुखीभवतोऽर्जुनस्य तादृशभयस्यावारणार्थमात्मनो नित्यत्वज्ञापनमेव मुख्यमुद्देश्यम्। भये निराकृते युद्धं तु तस्य प्रकृत्यैव प्राप्तम्। तदर्थं भगवत्प्रेरणस्यानावश्यकत्वमेव। "सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ। ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि॥" इति वचनेनापि युद्धाय प्रवृत्तस्यार्जुनस्य पापभयवारणाय सुखदुःखलाभालाभादिद्वन्द्वे साम्यमापादयितुं ज्ञानप्रकाशन-मेव मुख्यं लक्ष्यं भगवत इति सुस्पष्टं प्रतीयते। "तस्मादसक्तः सततं कार्यं कर्म समाचर" इत्यत्रापि तस्मात् कस्मादिति जिज्ञासायाम्—"यस्त्वात्मरतिरेव स्यात्···नैव तस्य कृतेनार्थः" इति वचनद्वयेन आत्मनि कार्यस्य तत्फलस्य चासम्पर्कबोधनमेव लक्ष्यम्, कर्माचरणं तु "असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः" इति परतत्त्वस्य प्राप्त्यर्थमेव, तच्च चित्तशुद्धिद्वारैवेति ज्ञानाङ्गत्वमेव कर्मणः।

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते॥

इत्यत्रापि स्पष्टमवगम्यते यत् कर्मभिर्यथा बन्धनं न भवेत्तादृशोपायप्रबोधनमेव भगवत-स्तात्पर्यम्, कर्म तु प्रकृत्यैव प्राप्तम्। स चोपायः—"न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा। इति मां योऽभिजानाति" इतीदृशज्ञानमेवेति तत्प्रकाशनमेव गीतोपदेशस्य मुख्यं लक्ष्यम्। अत एव—"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन। नहि ज्ञानेन सदृशं पवित्रमिह विद्यते॥" इति ज्ञानस्य सर्वकर्मध्वंसकत्वम्, सर्वातिशायिपवित्रत्वं च स्फुटमुद्घुष्यते।

"एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः" मुमुक्षुभिरपि कर्म कृतम्। कथम्? प्रकृत्या प्राप्तम्, "यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे। मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियो-क्ष्यति॥" इति प्रकृतेर्नियोगादेव कर्मणोऽवश्यकर्तव्यतायां प्राप्तायां तद्बन्धनं यथा न भवेत्तदर्थम्। एवं ज्ञात्वा तैः कर्म कृतम्, तस्मात्त्वमप्येवं जानीहीत्यर्थतो ज्ञानोपदेशस्यैव प्राधान्यमापतति भगवद्गीतायाम्।

एवं विवेचनेन सर्वत्र गीतायां ज्ञानस्यैव प्राधान्यं सुस्पष्टमवेक्ष्यते, कर्म तु प्रकृते-र्गुणानां नियोजनात् स्वत एवावश्यकर्तव्यत्वेन प्राप्नोतीति भगवतैव स्थले स्थले प्रतिपाद्यते, प्राप्तस्य

पुनः प्रापणमुपदेशद्वारा पिष्टपेषणमेवेति कथं तद् भगवान् कुर्यात् ! अर्जुनस्तु न सर्वथा कर्मत्यागे प्रवृत्तः, तदसम्भवात् ; किन्तु क्षत्रियोचितं युद्धरूपं स्वकर्म तत्र दोषदृष्ट्या विविधसंशयापन्नतया त्यक्त्वा भैक्ष्यादिकं परकर्म कर्तुं प्रवृत्तस्तत्र ज्ञानोपदेशेन दोषदर्शनस्य संशयानाञ्च निराकरणस्यैव प्रसङ्गप्राप्तत्वात्तदन्यत् किञ्चित् कथं भगवान् कुर्यात्, दोषदर्शनप्रयुक्तसंशयानां निराकरणे कर्मणस्तु स्वत एव तत्रोपस्थितत्वात्तदुपस्थापनस्य निष्प्रयोजनत्वात् । यच्च—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

इत्यभियुक्तोक्त्या उपक्रमादिदृष्ट्या गीताया तात्पर्यपरीक्षणम्, तदपि ज्ञानप्राधान्यपक्षमेव पुष्णाति तस्याः, न तु कर्मप्राधान्यपक्षम् । तथाहि—

उपक्रमे तावत् "कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वा धर्मसंमूढचेता" इत्युक्त्या अर्जुनः कार्पण्यदोषाद् धर्मविषये स्वमोहमेवोपस्थापयति ।

उपसंहारे च "कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय" इति प्रश्नेन भगवान् मोहप्रणाशमेव जिज्ञासते, यदुत्तरे "नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत । स्थितोऽस्मि गतसन्देहः" इत्युत्तरेणार्जुनः स्वमोहविनाशमात्मस्मरणप्रादुर्भावं सर्वसंशयनिवृत्तिं चाभिधत्ते, "करिष्ये वचनं तव" इति तु यत एवं तस्मात्तव वचनं करिष्य इत्यर्थात् प्राप्तम् ।

अभ्यासोऽपि "निस्त्रैगुण्यो भवार्जुन, बुद्धौ शरणमन्विच्छ, एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना, तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः । छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥, मय्येव मन आधत्स्व मयि बुद्धिं निवेशय । बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥, एवं बुद्ध्या बुद्धिमान् स्यात्कृतकृत्यश्च भारत" इत्यादि ज्ञानप्राधान्यपक्ष एवोपलभ्यते ।

अपूर्वताऽपि "इमं विवस्वते योगं प्रोक्तवानहमव्ययम्" इत्याद्युपक्रम्य "स कालेनेह महता योगो नष्टः परन्तप । स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ॥" इति चिरान्नष्टस्य योगस्योद्धार एव । योगोऽत्र ज्ञानयोगः, "एवं बुद्धेः परं बुद्ध्वा, बहवो ज्ञानतपसा पूता मद्भावमागताः" इति पूर्वापरानुसन्धानात् । फलमज्ञाननिवृत्तिपूर्वकः संशयोच्छेद एव ।

अर्थवादोऽपि "श्रेयान् द्रव्यमयाद् यज्ञाद् ज्ञानयज्ञः परन्तप । सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥" इत्यादि यथास्थानं ज्ञानप्राधान्यपक्ष उपलभ्यत एव ।

उपपत्तयोऽपि निबन्धेऽस्मिन् यथास्थानं प्रदर्शिता इति । तस्माद् गीताशास्त्रस्य मुख्यं तात्पर्यं ज्ञानप्रकाशन एवेति दिक् ॥

**:०:**

# वैष्णवदर्शनानां लोकसेवानुगुण्यम्

श्रीखेमराज उपाध्यायः, श्रीनिम्बार्कमहाविद्यालयः, वृन्दावनम् ।

इह खलु सुखदुःखादिनिखिलगुणाकूपारेऽसारेऽस्मिन् संसारे लब्धजनुषामशेषाणां देहभृतां मनसि "अहं सर्वतन्त्रतः स्वातन्त्र्यं कथं लभेय" इत्येवाहरहः समुदञ्चति । दुःखादिभ्यो मनसः, परकीयाधिकाराच्छरीरस्य, सांसारिकविविधमायाबन्धनेभ्यश्चात्मनः स्वातन्त्र्याय स्वान्तेऽनन्तां लालसां बिभ्राणाः स्वस्वकार्येषु प्रवरीवृत्यन्ते जनाः । कतमोऽपि नैतत्समीहेत यन्मदीयं मनो दुःखादिना परकीयप्रभावेण चाधिकृतं भवेदिति । स्वकीयाभीष्टार्थसम्पादनद्वारा साकल्येन दुःखात् स्वातन्त्र्यमधिजिगमिषवः केचन कर्षकपदव्यां पदं निदधति, कतिचित् सुखपर्यवसायिजीवनं सम्पिपादयिषवो विद्यामभ्यस्यन्तश्चक्षुर्गोचरायन्ते, अन्ये च प्रकामधनिनमात्मानं विधाय दारिद्र्यपारवश्यादात्मानं मुमोचयिषवो वाणिज्यवर्त्मनि पान्थीभवन्ति, इतरे च क्षणभङ्गमलीमसेभ्यो मायिकबन्धनेभ्यो मुक्तिमभिकामयमाना निरतिशयसुखाय कैवल्यायेश्वरं समारिराधयिषन्ति, केचित् स्वराष्ट्रे परकीयशासनमात्मनोऽहितं मन्वानास्तन्निराचिकीर्षया स्वातन्त्र्यान्दोलनाय परिकरं बध्नन्तो दृष्टिविषयतामुपयन्तीत्थं सर्वोऽप्ययं लोकः—

> यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
> अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम् ॥
> स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं जरया बिभेति ।
> उभे तीर्त्वा असनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥

इत्यादिश्रुतिस्मृत्याद्युक्तदिशा कालत्रयेऽप्यपरिहेयमभिलाषानुरूपं च निरतिशयं सुखं तत्तत्साधनैः समधिगम्य सर्वतन्त्रस्वतन्त्रमात्मानं विधित्सतीति सार्वभौमोऽयं राद्धान्तः । एषैव समीहा समयक्रममनुसृत्य प्रजातन्त्रशासनप्रणालीमग्रसरीकुरुते । एतद्धर्मैव चेयं साम्प्रतिकी प्रजातन्त्रप्रणालीति नात्र विप्रतिपत्तिप्रसङ्गः । परं भारतीयदर्शनानां प्रमुखतममंशं पूरयिष्णूनि वैष्णवदर्शनान्यस्मिन् प्रसङ्गे कियदनुकूलानीति प्रस्तुतनिबन्धविषयतावगाही विषयः ।

वैष्णवास्तावच्चातुर्विध्यं भजन्ते । केचन द्वैताद्वैतपथपान्थाः, अपरे विशिष्टाद्वैताध्वनि सञ्चरिष्णवः, इतरे भेदसिद्धान्तमुररीकुर्वाणाः, केचिच्छुद्धाद्वैतपदवीमदाश्रयमाना इति प्राधान्येन

चत्वारः सम्प्रदायाश्चतुर्व्यूहरूपेण विराजन्ते। तत्र सर्वेषामेव सम्प्रदायप्रवर्तयितॄणां श्रीनिम्बार्क-श्रीरामानुजश्रीमाध्वश्रीवल्लभाचार्यपादानां माधुर्यैश्वर्यवात्सल्यादिभाववैभिन्न्येनेश्वरमुपासीनानामपि सकलेभ्यः क्षणभङ्गुरेभ्यस्त्रिविधतापास्पदीभूतेभ्यो विषयसुखेभ्य आत्मानं समुन्मोच्य भगवतः श्रीकृष्णस्य चरणारविन्दमकरन्दमिलिन्दीभवनसम्बन्धे साम्यमस्ति सिद्धान्ते। सर्वेषामेव वैष्णवा-चार्याणामनुसारेण "सर्वं खल्विदं ब्रह्म", "नेह नानास्ति किञ्चन", "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति", "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः", "सर्वं कृष्णमयं जगत्", "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इत्यादिश्रुतिस्मृतिपुराणेतिहासोक्तवर्त्मना सर्वमपीदं विश्वं भगवद्वि-ग्रह एव। विश्वस्मिन् समोऽपि जीवलोको भगवदंशतां तद्भृत्यतां चावगाहते। ततश्च "मद्भक्तानां तु ये भक्तास्ते तु भक्ता मता मम" इति पद्मपुराणस्थश्रीभगवद्वचनानुसारेण भगवद्भक्तजीवानां सेवामेव भगवतः परां सेवां वैष्णवाः समामनन्ति।

ननु सांसारिकजीवेषु भगवद्भक्तास्तु नितरां न्यूनाः। तेषामङ्गुलिगणनीयानां सेवया कथं लोकसेवा सम्पद्येत? भगवद्भक्ततदभक्तादीनां विवेचने चोत्तमाधमादिवर्गभेदसमुन्मेषे कथं लोकसेवा साफल्यमासादयेदिति चेन्न, "सच्चिदानन्दघन एव आत्मा", "विज्ञानमानन्दं ब्रह्म", "रसो वै सः", "तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्" इत्यादिश्रुत्युक्तपथेन परं ब्रह्मैव सुखस्वरूपम्। तच्च सुखं सर्वैर्भगवद्भक्तैस्तदभक्तैश्च निर्विशेषं लिप्स्यत इति हेतोः परब्रह्मैक-स्वरूपस्य सुखस्य सेवकतया सर्वेषामेव जीवानां भगवद्भक्तत्वं नापगच्छति। ततश्चोपर्युक्तश्लोके 'मद्भक्त'पदेन सर्वेषां जीवानां ग्रहणे सर्वजीवलोकसेवनमेव मम सेवनम्, तत्सेवक एव च मम भक्त इति भगवदुक्तिः संगच्छते। "ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः", "लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि" इत्यादिना गीतावचनजातेन च भगवता स्वभक्तकृत्यप्रदर्शनात् सर्वलोको-ज्जिहीर्षया सततं परोपकृतिप्रवणतैव च वैष्णवानां परमो धर्म इति निर्णयः समुदयते। एनमेव निसर्गं मूलीकृत्य लोकसेवातत्पराणां वैष्णवानां सरणिमनुसरद्भिरितरैरपि समुद्घोषि—"सेवाधर्मः परमगहनो योगिनामप्यगम्यः" इति। "पञ्चरात्रविदो ये तु तस्य गेहे महात्मनः। प्राशनं भगवत्प्रोक्तं भुञ्जते स्माग्रभोजनम्॥ इदं महोपनिषदं चतुर्वेदसमन्वितम्। सांख्ययोगकृतं ह्येतत्पञ्चरात्रानुशब्दितम्॥ पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयम्।" इत्यादिना महाभारते, "अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन ये। आचारेण प्रपद्यन्ते मामायास्यन्ति मानवाः॥" इति वाराहपुराणे, "पञ्चरात्रविधानेन सम्पूज्य मधुसूदनम्" इति ब्रह्मपुराणे, "तन्त्रं शाश्वतमाचष्टे नैष्कर्म्यकर्मणां यतः" इति भागवते च स्तुतत्वात्

## वैष्णवदर्शनानां लोकसेवानुगुण्यम्

पञ्चरात्रमागममूर्धन्यमिति वैष्णवा मन्यन्ते। तदनुसारेणापि—"वैष्णवानां त्रयं कर्म दया जीवेषु नारद। श्रीगोविन्दे पराभक्तिस्तदीयानां समर्चनम्॥" इत्युक्तदिशा अनन्तकोटिब्रह्माण्डानां भगवद्विग्रहान्तःपातित्वात्तदीयपदेन विश्वस्थसकलजीवग्रहणात् समस्तस्य जीवलोकस्य सेवनं तेषु दया च वैष्णवानां कृत्यमिति निश्चयोतितं भवति। निखिलवेदशाखाविभाजकेन सप्तदशपुराणानि महाभारतञ्च निर्मायापि शान्तिमनासादयता भगवता कृष्णद्वैपायनेन सकलवैष्णवैकगुरोर्भागवतकुलकुमुदकुमुदबान्धवस्य देवर्षेरनुशिक्षया सकलश्रुतिसारसमुद्भूतं निगमकल्पतरोर्गलितफलायितं भगवद्भक्तिरसस्निग्धं श्रीमद्भागवतं विरचय्यैव शान्तिरलम्भीति हेतोः, "जन्माद्यस्य यतः", "अन्वयादितरतः", "अर्थेष्वभिज्ञः", "तेजोवारिमृदां यथा विनिमयः", "सत्यं परं धीमहि" इत्यादीनां तदुपक्रमस्थवाक्यानाम्, "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति", "यथा भगवो ह्येकेन मृत्पिण्डेन ज्ञातेन सर्वं मृण्मयं ज्ञातं भवति", "जन्माद्यस्य यतः", "ईक्षतेर्नाशब्दम्", "भर्गो देवस्य धीमहि" इत्यादिभिः श्रुतिब्रह्मसूत्रगायत्रीवाक्यैः साकं तुल्यतां समानोद्देश्यतां चाकलय्य वैष्णवाः "अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः। गायत्रीभाष्यभूतोऽसौ श्रीमद्भागवताभिधः॥" इति मन्वते। तथा च वैष्णवसिद्धान्तपरिज्ञानाय भागवतमपि प्रामुख्यं बिभर्ति। तदनुसारेणापि भागवतोत्तमलक्षणप्रतिपादनप्रसङ्गे एकादशस्कन्धे—

सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः॥

"सरित्समुद्राश्च हरेः शरीरं यत्किञ्चभूतं प्रणमेदनन्यः"

इति चोक्तत्वात् समस्ते जगति भगवद्विग्रहकल्पनया—

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते॥

इति श्रुत्युक्तवर्त्मना जुगुप्सां परिहाय करुणापारीणेन चेतसा सेवकभावावलम्बनमेव वैष्णवकृत्यमिति फलति।

न तथा ह्यघवान् राजन् पूयेत तपआदिभिः।
यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया॥
यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम्।
हित्वार्चां भजते मौढ्याद्भस्मन्येव जुहोति सः॥

इत्यादिप्रतिपादनाच्छ्रीभगवतः सेवालीनस्यापि स्वेतरजीवेषु दयामनालम्बमानस्य दुःखिन उपेक्षाकुटिलैर्नेत्रैः संपश्यतः सर्वं भगवत्समाराधनं वैकल्यमेति। यतः पूर्वोक्तप्रकारेण समस्तमपि जगद् भगवद्विग्रह एव, ततश्च यदि कोऽपि भगवद्भक्तत्वाडम्बरेणात्मानं विभूषयन्नेकदेशवर्तिनीं काञ्चिन्मूर्तिमेव भगवद्विग्रहं मन्वान आर्तान् जीवान् न्यक्कुरुते, तर्हि नूनं भगवद्विग्रहावहेलनेन पातकपुञ्जमञ्चतीत्ययं वैष्णवानां द्रढीयान् निश्चयः। तपोयोगसमाधिषु न तावत्पावनत्वं वरीवृत्यते यावद्भगवद्विग्रहीभूतस्य लोकस्य सेवन इति कृष्णार्पितप्राणानां वैष्णवानां सिद्धान्त उपरितनाच्छ्लोकादुदञ्चति। विविधानवतारान् विधाय कदाचिद्दण्डकारण्यकण्टकैः स्वचरणौ व्यथयन्, क्वचित् करीलकण्टककान्तारीभूतं वृन्दारण्यमटाट्यमानः, कुत्रचिद् निहन्यमानभटरुधिरार्द्रासु समरभूमिषु सारथ्यमुररीकृत्याहिण्डयमानो लोकसेवायै स्वयमेव—

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः॥

इति निर्भरं शोशुच्यमानो भगवान् येषां निरवच्छिन्नाया अनन्याया रतेरालम्बनम्, कथं ते वैष्णवा लोकसेवैकचुञ्चोर्भगवतो भक्ता भूत्वापि लोकसेवां विस्मरेयुरिति समीक्षितं तावत् सामान्येन वैष्णवदर्शनानां लोकसेवानुगुण्यम्।

वैष्णवदर्शनानुरोधेन प्रजातन्त्रप्रणाल्याः पोषकत्वापोषकत्वविवेचनप्रसङ्गे त्वस्ति किञ्चिदन्यदेव निरूपणीयम्। स्वातन्त्र्यं तावच्चतुर्विधं भवति—शारीरं मानसं बौद्धिकमात्मीयञ्चेति। ऐहिकविषयभोगेषु निःस्पृहाणां निःस्वार्थलोकसेवापराणां वैष्णवानां दर्शनानि चतुर्ष्वेव स्वातन्त्र्यं स्वातन्त्र्यं मन्यन्ते। यावद्भोगलालसाभ्यः स्वार्थेभ्यो हिंसास्तेयादिभ्यश्च निगडायितेभ्यो मनसो बुद्धेरात्मनश्च स्वातन्त्र्यं न जायेत तावत् संप्राप्तमपि प्रजातन्त्रं क्षणाद्धीयत इति वयमितिहासपरम्परया वेत्तुं प्रभवामः। विगतासु शताब्दीषु पाश्चात्यजातिषु कियत्यो ज्ञातयो महत्या प्रयासपरम्परया सौभाग्यवशात् स्वातन्त्र्यं समधिजग्मुः, परं तासां सौभाग्यमपि दुर्भाग्यगर्भितमभूत्। इदं परमं तथ्यं यत्कामेनार्थेन च विश्वस्मिन् कापि जातिः कोऽपि वा देशः केवलं क्षणभङ्गुरं दैहिकं स्वातन्त्र्यं समासादयितुमवश्यमेवालम्भवति, परमाध्यात्मिकस्वातन्त्र्यमन्तरेण तत्सिकतोद्भवं भवनमिव क्षणभङ्गनिघ्नं भवतीति नात्र शङ्कापङ्ककलङ्कलवः। क्षुद्रभौतिकेषु भोगेषु कृतप्रसङ्गः कापि जातिः कोऽपि वा देशः केवलस्य कामस्यार्थस्य च सेवनेनोन्माद्यन्नचिरादेव विध्वंसपथपान्थीभवतीति ध्रुवोऽयमध्वा। दृष्टान्तरूपेण

## वैष्णवदर्शनानां लोकसेवानुगुण्यम्

वयं 'बेबिलोनियन्', 'ऐसिरियन्', 'इजिप्सियन्', 'ग्रीसियन्', 'रोमन्' इत्येता यूरोपदेशीया जातीर्ग्रहीतुं पारयामः। एताभिः कियता प्रयासेन स्वातन्त्र्यमलभ्यत ! परमात्मस्वरूपज्ञानहीनाभ्यामर्थकामाभ्यां केवलाभ्यां पाशविकबलमात्रसमर्जनपरायणाभ्यां ताः सर्वा एव जातयः साकल्येन क्षयमनायिषत। साम्प्रतं यशसा साकं नामापि तासां चिराय व्यलीयत। समस्तविश्वस्येतिहाससमीक्षणेन वयमवगन्तुं शक्नुमो यदेतासां जातीनां समूलघातं नाशायान्तःस्वातन्त्र्यरहितं केवलदैहिकस्वातन्त्र्यमेव तादृशं दुष्परिणामं पर्यपचत्। अतः प्रजातन्त्रसुरक्षायै स्वार्थं परित्यज्य लोकं सिषेवयिषवो वैष्णवाः सकलब्रह्माण्डलक्ष्मीमपि दातुं समुत्सुके भगवति सर्वं परिहाय केवलां लोकसेवां समीहन्ते।

न कामयेऽहं गतिमीश्वरात्परामष्टर्द्धियुक्तामपुनर्भवं वा।
आर्तिं प्रपद्येऽखिलदेहभाजामन्तःस्थितो येन भवन्त्यदुःखाः॥
न कामयेऽहं स्वाराज्यं न स्वर्गं नापुनर्भवम्।
कामये दुःखतप्तानामार्तानामार्तिनाशनम्॥

इति स्वर्गम्, श्रुतिभिर्जेगीयमानं मोक्षमपि च परित्यज्य केवलं लोकसेवामेव समीहमानानां वैष्णवदर्शनानां निष्प्रपञ्चं प्रजातन्त्रानुकूल्यम्।

अपि च प्रजातन्त्रसमवाप्तये यदि पञ्चषा एव नेतारः प्रयतेरन् तेषामूर्जस्वलेन प्रभावेण दैवगत्या समधिगतञ्च तद्भवेत्, परन्तु प्रजासु यदि स्वयमेव प्रजातन्त्रस्य महत्त्वसम्बन्धे नास्त्यवधानम्, नो वा तद्रक्षायै परिकरं बध्नीयुस्तदा समासाद्यमानमपि प्रजातन्त्रं स्वप्नायत इत्यस्मिन् विषये "ज्ञानस्वरूपञ्च हरेरधीनम्", "ज्ञातृत्ववन्तं यदनन्तमाहुः" इत्यादि प्रतिपादयद्भिराद्याचार्यश्रीनिम्बार्काचार्यपादैः स्वकीयवेदान्तकामधेनौ जीवस्य ज्ञानस्वरूपत्वं ज्ञातृत्ववत्त्वं चाभिधाय प्रजातन्त्रार्थिनीनां प्रजानां कृते कापि महनीया परमावश्यकी सरणिः समदर्शि। यावत्कालं प्रजा आत्मनो ज्ञानस्वरूपत्वं ज्ञातृत्ववत्त्वञ्च न निर्णयन्ति तावच्छिक्षाभिमुखं नैव प्रसिसीर्षन्ति। शिक्षाया अभावे च स्वातन्त्र्यं नैव द्रढीयो भवति, दार्ढ्याभावे च पुनः परतन्त्रनियन्त्रिताभिः प्रजाभिर्भाव्यमिति पुनरनर्थपरम्परापातसम्भावनापत्तेः कस्यापि देशस्य प्रजासूपर्युक्तं गुणद्वयं समुन्मेषयितुं प्रयत्नः परमावश्यकः। "हरेरधीनम्" इत्यस्यापि सिद्धान्तांशस्यास्त्युपकारो महान् प्रजातन्त्रसुरक्षायै। विश्वस्मिन् समस्तोऽपि जीवनिवहः केवलमनन्तकोटिब्रह्माण्डनायकस्य परात्परस्य परब्रह्मणो भगवतः श्रीकृष्णस्यैव वशंवदो नान्यस्य 'तानाशाह' 'नादिरशाह' इत्यादिपदलाञ्छितस्य क्षणविध्वंसिजागतिकनेतुरिति निश्चयोऽयं कुत्रापि राष्ट्रे परकीयशासननियन्त्रिताः प्रजाः स्वातन्त्र्यसंग्रामाय राष्ट्रिया-

न्दोलनाय सत्याग्रहाय च प्रोत्साहयतीति नात्र विवादावसरः। श्रीरामानुजाचार्यपादा अपि जीवस्य ज्ञानस्वरूपत्वं भगवतो नैसर्गिकदासत्वं चोरीकुर्वाणा इमां सरणिं नैवातिपतन्ति, प्रत्युत तेषामप्यत्र विषये निर्विशेषं स्वारस्यमवगच्छन्ति। विश्वस्मिन् पारमार्थिको नेता भगवानेवेत्यत्र सर्वेऽपि वैष्णवाचार्याः समसिद्धान्ताः। अतो वैष्णवानाम् 'अन्यभक्ति'शब्दस्यापि प्रजातन्त्रतायै आनुकूल्यमेवेति प्रतिपन्नं भवति। श्रीवल्लभाचार्यचरणा अपि जीवस्य ब्रह्मणश्च तुल्यं शुद्धत्वं प्रतिपाद्य शुद्धाद्वैतसिद्धान्तं प्रचारयिष्णवः प्रजासु स्वाभिमानमेव विजिज्ञापयिषवः प्रतीयन्ते। यावत्कालमहं ब्राह्मणोऽहं क्षत्रियोऽहमेतत्प्रान्तीयोऽहमेतद्ग्रामस्थ इत्यादीन् क्षुद्रभेदान् निरस्य 'स्वदेशवास्तव्योऽहम्' इति सार्वदेशिकी बृहती भावना प्रजासु न समुदेति, तावत् कस्यापि देशस्य स्वातन्त्र्यमव्याहतं नैव स्थातुं प्रभवतीत्यस्मिन् विषये श्रीचैतन्यमहाप्रभोः—

नाहं विप्रो न च नरपतिर्नापि वैश्यो न शूद्रः
नो वा वर्णी न च गृहपतिर्नो वनस्थो यतिर्वा।
किन्तु प्रोद्यन्निखिलपरमानन्दपूर्णामृताब्धे-
र्गोपीभर्तुः पदकमलयोर्दासदासानुदासः॥

इति सिद्धान्त एवावलम्बनीयतां बिभर्ति। इत्थमेवात्मानं ग्रामविशेषावच्छिन्नम्, प्रान्तविशेषावच्छिन्नम्, जातिविशेषावच्छिन्नं चानाकलय्य सर्वस्य राष्ट्रस्यैवाहमस्मीति विनिर्णयः कस्यापि लोकसंग्रहपरस्य योग्यनेतुः कृते परमावश्यकः। विशेषतस्तु साम्प्रतं चीनद्वाराक्रम्यमाणस्य भारतवर्षस्य स्वातन्त्र्यसंरक्षणाय तादृशीं वर्गविशेषानवच्छिन्नामुदारां भावनामन्तरेण न वयं साफल्यं लभेमहीति सम्भावयन् सर्वोऽपि राजनीतिकगणः स्वार्थं दूरतोऽपास्य स्वराष्ट्रोद्धरणमात्रमुद्देश्यीकृत्य प्रवर्तमानो वैष्णवानां दर्शनान्येवानुसरन् दृष्टिगोचरायते।

किमधिकवावदूकतया। यदीयेन लोकोत्तरसाहसप्रतापेन, अद्वितीयायाः सहिष्णुताया महिम्ना, अलौकिकस्य तपसश्च प्रभावेण वयमधुना स्वातन्त्र्यमधिगम्यानन्दनिर्भराः संवृत्ताः स्म, यस्य पावनं यशो विदिशो धवलयति, यस्य नामापि ग्रहीतुं विश्वस्य सर्वोऽपि राष्ट्रसमूहो भृशं लोलायते, सोऽसावस्माकं राष्ट्रपिता महात्मा गान्धी वैष्णवतनूजन्मासीदिति तदीयात्मकथापरिशीलनादवगन्तुं पारयामः। इत्थं वैष्णवाः प्राच एवानेहसो लोकसेवैकपरायणा आसन्नित्यत एव—"कुलं पवित्रं जननी कृतार्था वसुन्धरा भाग्यवती च धन्या। स्वर्गस्थितास्तत्पितरोऽपि धन्याः येषां कुले वैष्णवनामधेयम्॥", "ते वैष्णवा भुवनमाशु पवित्रयन्ति" इत्यादिना पद्मपुराणं वैष्णवान् स्तौतीति बाढमेतन्निष्कृष्टं भवति यद्वैष्णवदर्शनानां प्रजातन्त्रपोषकत्वं निर्व्यलीकमिति शम्॥

# वैष्णवदर्शनेषु पुराणानां प्रभावः

श्रीश्रीकृष्णमणित्रिपाठी, वा० सं० वि० वि० वाराणसी ।

प्राणिमात्रस्य सुखेच्छा स्वाभाविकी परं लौकिकैरुपायैर्न संभवति निरतिशयसुखस्योपलब्धिः। अतस्तदुपलब्धयेऽपौरुषेयवेदबोधितेतिकर्तव्यताश्रयणमेव श्रेयस्करं मन्यन्ते वेदविदो विद्वांसः। तथा चोक्तम्—

प्रत्यक्षेणानुमानेन यस्तूपायो न लभ्यते।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥

एवञ्च भारतीयतत्त्वज्ञानस्योद्गमविकासयोरनुसन्धानाय वेदानां परिशीलनं नितान्तमावश्यकम्। यतो हि वेदा भारतीयधर्मस्य दर्शनस्य च सन्ति प्राणाः। वैदिकरहस्यानां यथार्थज्ञानाय पुराणानां पर्यालोचनमत्यन्तमुपकारि।

## पुराणानां वेदमूलकत्वम्

मनुष्यो महानपि बुद्धिमान् कथं न स्यात्, परं तस्मिन् भ्रमप्रमादादीनां सम्भावना भवत्येव। अत एव मानवरचितं ग्रन्थमधीत्य निर्भ्रान्तं पूर्णं च ज्ञानं भवितुं नार्हति। वेदा न केनापि पुरुषेण रचिता नापीश्वरेण निर्मिताः, किन्तु परमेश्वरनिःश्वासवन्नित्या अनादयोऽनन्ताश्च सन्ति। अत एवापौरुषेया उच्यन्ते। "यो ब्रह्माणं विदधाति पूर्वं वेदांश्च तस्मै प्रहिणोति नित्यम्" इति वचनानुसारं परमेश्वरः सृष्ट्यादौ प्रथमं ब्रह्माणं वेदं बोधयति। ततो य ऋषिर्यादृशीं तपस्यां कुरुते तस्य समक्षं तदनुरूप एव वेदस्यांशः प्रादुर्भवति। ततः स ऋषिः स्वं शिष्यं वेदं शिक्षयति, सोऽपि स्वं शिष्यं शिक्षयतीत्येवं शिष्यप्रशिष्यतच्छिष्याणामविच्छिन्नया गुरुशिष्यपरम्परयाऽद्यत्वेऽपि वेदानां प्रचारो बोभूयते। वेदा एव सर्वश्रेष्ठनिर्भ्रान्तज्ञानसाधनानि सन्ति।

पुरा द्विजबालका उपनयनसंस्कारानन्तरं ब्रह्मचर्यपूर्वकं चिरकालं गुरुगृहे उषित्वा वेदान् अभ्यस्य तदर्थमवगन्तुं षण्णां शिक्षा-कल्प-व्याकरण-निरुक्त-ज्यौतिष-छन्दसामङ्गानामध्ययनं कुर्वन्ति स्म। अत एवोक्तं—"ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति।

साधारणा जना अधिकसमयपर्यन्तं न गुरुगृहे स्थातुं शक्नुवन्ति, नापि सम्यग् वेदार्थमवगन्तुं सब्रह्मचर्यं तादृशं कठिनं परिश्रमं कर्तुं प्रभवन्ति । अतो व्यासवाल्मीकिप्रभृतयो महर्षयोऽलौकिक-तपस्याबलेन परमात्मनोऽनुकम्पया वेदानां यथार्थमर्थं ज्ञात्वा तत्प्रचारस्यावश्यकतामनुभूय सुरुचि-पूर्णायां संस्कृतभाषायां रामायणं महाभारतं पुराणानि च व्यरचयन् । अत एवोक्तं महाभारते—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥

ये च पुराणानामध्ययनं विना वेदानामर्थमवगन्तुं चेष्टन्ते, तेषां वास्तविकं वेदार्थज्ञान-मसंभवि; यत एकस्यैवाखण्डस्य सर्वजनीनस्य धर्मस्य प्रतिपादकानि, एकस्या एवाखिललोक-कल्याणकारिण्या भारतीयसंस्कृतेश्च परिपोषकाणि वेदा रामायणं महाभारतं पुराणानि च सन्ति । अत एवोक्तं मत्स्यपुराणे—

यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः ।
न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः ॥

यदा भूमण्डलस्य समस्ता जातयो भोजन-पान-शयन-सन्तानोत्पादनातिरिक्तं किमपि न जानन्ति स्म, तस्मिन् घोरान्धकारसमयेऽपि सभ्यताया ज्योतिःप्रज्वालका आर्याणां वेदा एवासन् । प्राच्याः पाश्चात्याश्च विद्वांस एकेन स्वरेण स्वीकुर्वन्ति यद् ऋग्वेदात्पूर्वतनं किमपि पुस्तकं विश्वस्य समक्षं नेदानीं यावदुपलब्धं विद्यते । ऋग्वेद एव सर्वप्राचीनं पुस्तकमस्ति ।

विंशतिशताब्दी विज्ञानस्य मध्याह्नं कथ्यते । इदानीं विज्ञानं चरमं सीमानमुपगतं श्रूयते । किन्त्वद्यत्वे यावन्ति विज्ञानान्युच्चभूमिकायामुपगतानि विद्यन्ते, यावन्ति चापूर्णानि सन्ति, तेष्वेकमपि विज्ञानमेतादृशं नास्ति यस्योल्लेखो येन केनापि प्रकारेण वेदवाङ्मये न स्यात् । सम्प्रति यावन्तोऽप्यार्थिक-सामाजिक राजनीतिकादयो वादा उपलभ्यन्ते, तेषु कस्यचित् संक्षेपेण कस्यचन विस्तरेण कस्यचित् पूर्वपक्षरूपेण कस्यचन च निन्दारूपेणोल्लेखो वेदवाङ्मये विद्यत एव । तेषामेव वेदार्थानां सुगमतया ज्ञानाय पुराणानामाविर्भावोऽभवत् । तथा चोक्तम्—

विस्ताराय च वेदानां स्वयं नारायणः प्रभुः ।
व्यासरूपेण कृतवान् पुराणानि महीतले ॥

## वैष्णवदर्शनेषु पुराणानां प्रभावः

गूढतया वर्णितानामर्थानां यावत् सुरुचिपूर्णया शैल्या वर्णनं न क्रियेत, तावत् पुराणानां निर्माणस्य प्रयोजनं पूर्णं न भवितुमर्हेत् । अत एव आख्यानोपाख्यानगाथाकल्पशुद्ध्यादिभिस्तेषां विस्तारं कृतवान् व्यासदेवः । तदुक्तं विष्णुपुराणे—

आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः ।
पुराणसंहितां चक्रे पुराणार्थविशारदः ॥

तथा च वेदानां वास्तविकं रहस्यमवगन्तुं प्राचीनाख्यानोपाख्यानादिवर्णनव्याजेन विविधानुपदेशान् दातुं विभिन्नविषयाणामुत्कटलालसां परिहायान्तःकरणं भगवदुन्मुखं कर्तुं च पुराणानामपूर्वं कौशलं विद्यते । सर्वासां पौराणिकीनां कथानां मूलं वेदा एव विद्यन्ते । पुराणेषु यत्किमपि लिखितं वर्तते तत्सर्वं वेदमन्त्राणां विस्तृता व्याख्यास्ति । यथा ऋग्वेदे "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्" इत्यादिना सूक्ष्मतया वर्णिता वामनावतारकथैव वामनादिपुराणेषु विस्तरेण वर्णिता विद्यते । यथा वा "स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम्" इत्यादिना केनोपनिषदि ब्रह्मविद्याया हैमवत्या उमारूपेण प्राकट्यं प्रदर्शितमस्ति । तथैव शिवपुराणे जगन्मातुर्गिरिराजकुमार्या भगवत्या पार्वत्या उमारूपेण जन्मग्रहणकथा दरीदृश्यते । एवमेवाथर्ववेदे महाराजस्य पृथोः पृथिवीदोहनं श्रीमद्भागवते सविस्तरं वर्णितं विद्यते । यतो हि वेदा नोपाख्यानमूलका ग्रन्थाः सन्ति । अतस्तेषु स्थलविशेषे एवोदाहरणरूपेणोपाख्यानमस्ति । किन्तु पुराणेषूपाख्यानानामेकत्र समावेशः कृतोऽस्ति । अत एव पुराणेषूपाख्यानानामाधिक्यं दरीदृश्यते । वेदाः पुराणानि चैकस्य सनातनधर्मस्याभिवृद्धये लोककल्याणाय च विभिन्नकालेष्वाविर्भूता महाग्रन्था मन्यन्ते । पुराणेषु वेदात् कथमपि भिन्नता नास्ति । यदि भिन्नतास्ति, तद्धुभयोर्वर्णनपद्धतावेव । तस्मात् पुराणेषु वेदार्थानां विवरणाद्वेदपुराणयोरैक्यं निर्बाधं सिद्ध्यति ।

## पुराणानां महत्त्वम्

पुराणानां महत्त्वं विविधाभिर्दृष्टिभिरवगम्यते । धार्मिकदृष्ट्या पुराणानि वेदविहितस्यैव धर्मस्य भावगम्यया सरलया भाषया विशदं वर्णनं कुर्वन्ति । पुराणानां सामाजिकं महत्त्वमपि न्यूनं नास्ति । प्राक्तनस्य समाजस्य स्वरूपमस्माभिः पुराणैरेवोपलभ्यते । पौराणिकस्येतिहासस्य पुष्टिस्तु तत्र तत्रोपलब्धैः शिलालेखैर्वैदेशिकानां यात्रावर्णनेन चेदानीं प्रचुरमात्रायां बोभूयते । भौगोलिकदृष्ट्या च पुराणेषु तीर्थानां विशदं वर्णनं विद्यते, येन तत्तत्स्थानानां विस्तृतस्य भूगोलस्य

सम्यग्ज्ञानं भवति । यत्सहयोगेन प्रसिद्धानां भूभागानां समीचीनतया ज्ञानं भवितुमर्हति । श्रूयते—विदेशीया विद्वांसः पुराणानां साहाय्येनैव नीलनद्या अन्वेषणं कृतवन्तः ।

पुराणानां प्रमुखं प्रयोजनं वेदविहितानां तत्त्वानां जनसाधारणेषु प्रचारो विद्यते । नहि केवलं भारतवर्षे एव, किन्तु भारताद्बहिर्देशेष्वपि पुराणैर्वैदिकविचारधारायाः प्रवाहविस्तारस्य सुयशो लब्धम् । पुराणानां कृपया सर्वसाधारणा मनुष्याः स्वं स्वं जीवनं संयमशीलं विधाय कल्याणमार्ग-प्रवृत्तेरधिकारं प्राप्तवन्तः । वैदिकधर्मस्य लोकप्रियत्वनिर्माणश्रेयः पुराणैरेव प्राप्तमस्ति । पुराणानि समस्तानां विद्यानामक्षयाः कोषाः सन्ति । अतो विविधानां दरिद्रतानां लक्ष्यीभूतमपीदं भारत-वर्षमद्यत्वेऽपि पुराणानां प्रभावेण धनवानिव स्वकीयं शिरो विश्वस्य समक्षे समुन्नतं कर्तुं प्रभवति । पुराणानि गौरवदृष्ट्या अत एव दृश्यन्ते, यदत्र वेदानां शिक्षायाः पुष्टिः कृतास्ति, दृष्टान्तद्वारा च वेदार्थानामेव विशदीकरणं विद्यते । विश्वस्मिन् कस्या अपि सभ्यजातेः पार्श्वे पुराणसदृशः सर्वाङ्गपूर्णो न कोऽपि ग्रन्थो विद्यते ।

अद्यत्वे धर्मरक्षाया वर्णाश्रमव्यवस्थाप्रचारस्य भारतीयायाः संस्कृतेरुद्बोधस्य, भक्तेर्विकासस्य च यद्दर्शनं बोभवीति, तस्य श्रेयः पुराणानामेवास्ति । पुराणान्येव भारतीयादर्शजीवनस्य सभ्य-तायाः संस्कृतेर्विद्याया वैभवस्य ज्ञानगरिम्ण उत्कर्षस्य च वास्तविकं स्वरूपमुपस्थापयन्ति । प्राचीनकाले भारतीया आधिभौतिकाधिदैविकाध्यात्मिकीनामुन्नतीनां चरमं सीमानमुपगता आसन्, एतस्य सङ्केतः पुराणद्वारैव मिलति ।

अद्यत्वे यद्यपि वेदानां सर्वाः शाखा नोपलभ्यन्ते, तथापि दिव्यज्ञानसम्पन्नस्त्रिकालदर्शी महर्षिर्वेदव्यासस्तासां मूलविषयं पुराणेषु यत्र तत्राङ्कितवानस्ति, येनाद्यापि बह्वीनां वेदशाखाना-मनुपलब्धावपि तासां प्रतिपाद्यविषयाणामवगाहनं क्रियत एव ।

पुराणानां जगन्न केवलं जडजगदेवास्ति, किन्तु तत् सच्चिदानन्दघनस्य भगवतो लीला-भूमिरस्ति । भगवान् विशुद्धेन सत्त्वमयेनालौकिकेन देहेनाविर्भूयास्मिन् देवश्लाघ्ये भव्ये भारतभूभागे भ्रमन् सर्वत्र विशुद्धसत्त्वस्याविच्छिन्नां धारां प्रवाहयति । पुराणेषु सर्वेषां कृते नैकमेव किमपि तीर्थं निश्चितमस्ति, किन्तु भारतवर्षस्य सर्वेषु प्रान्तेषु पवित्राणि तीर्थानि सन्ति, सर्वत्र च भगवतो लीलाऽभवत् । एवं पुराणानि समस्तां भारतभूमिं चिन्मयस्य भगवतो लीलाधाम-रूपेणोपस्थापयन्ति ।

## वैष्णवदर्शनेषु पुराणानां प्रभावः

पुराणानां कृपया एकैकस्य भारतवर्षवासिनः कृते सर्वा भारतभूमिः सत्कार्या स्नेहमयी जननीव पूज्या आदरणीया रक्षणीया चास्ति ।

## पुराणानामुपयोगित्वम्

पुराणानां कथाभिः सरलतया सर्वं साधनं शीघ्रं बुद्धिगम्यं कर्तुं शक्यते । यथा यजुर्वेदस्य ईशावास्यमन्त्रे मनुष्यतायाः पूर्णविकासस्य साधनं निर्दिष्टमस्ति, किन्तु केवलेन मन्त्रपाठेनार्थज्ञानेन वा सा भावना हृदये न जागर्ति । अतः पुराणप्रतिपादिताभिर्महर्षेर्दधीचेः, राज्ञः शिबेः, मोरध्वजस्य च कथाभिरुपकारभावना, सत्यवादिनो हरिश्चन्द्रस्य महाराजस्य युधिष्ठिरस्य चोपाख्यानेन सत्यनिष्ठा, दानवीरस्य बलेः कर्णस्य च कथानकेन दाननिष्ठा, वसिष्ठागस्त्यच्यवनादीनां कृत्यैरद्रोहनिष्ठा, अनसूया-सती-सीता-सावित्री-मदालसा-दमयन्ती-नर्मदा-सुकन्या-सुलोचनादीनां सतीनां पवित्राचरणैः पातिव्रत्यधर्मपरायणतायाः सञ्चारो नरेषु नारीषु च सहसा समुद्भवति । एवं "सत्यं वद, धर्मं चर" इत्याद्युपदेशमात्रेण कश्चित् सत्यवादी धर्मात्मा वा भवितुं नार्हति, अतो वेदवाक्यबोधितामितिकर्तव्यतां पुराणेषु कथानकरूपेण मनोग्राह्यां विधातुमैहलौकिकं पारलौकिकं च जीवनं सफलयितुमादेशो दत्तोऽस्ति ।

पुराणेषु सर्वेषां दर्शनानां सिद्धान्तस्य सूत्ररूपेण निरूपणमस्ति । सांख्ययोगवेदान्तदर्शनानां तु पुराणेषु विशेषतो विवेचनमुपलभ्यते । किञ्च व्याकरणसाहित्यच्छन्दोज्यौतिषनिरुक्तशिक्षाकल्पायुर्वेदधनुर्वेदगान्धर्ववेदस्थापत्यवेदराजनीतिसमाजनीतिविविधधर्माङ्गादिषु विषयेष्वपि पुराणेभ्यः पर्याप्तः प्रकाशः प्राप्यते । अत एव पुराणानि भारतीयसंस्कृतेर्विश्वकोषा उच्यन्ते ।

लौकिकविषयातिरिक्तं पुराणेषु पारलौकिकविषयाणामपि प्रचुरं विवेचनं कृतमस्ति । भौतिकपदार्थानुसन्धानकर्तार आधुनिकवैज्ञानिका बहुना व्यापारेण दिवि प्रेतलोकस्य मङ्गललोकस्य च किञ्चिद् ज्ञानमुपलभ्य आत्मनो धन्यान् मन्यमाना आश्चर्यचकितीकुर्वन्ति जगत् , परं पुराणदृष्ट्या तेषां ज्ञानमिदानीं यावदप्यपूर्णमेवास्ति । इतः परोऽपि कश्चित् सूक्ष्मतमो लोको विद्यत इति निश्चेतुं न ते पारयन्ति । किन्तु पुराणेषूर्ध्वमधश्च स्थितानां चतुर्दशानां लोकानां तत्रत्यनिवासिनामायुषः, आहारस्य, विहारस्य, तत्र प्रचलितस्य कालमानस्य च निश्चितं वर्णनं विद्यते । येनेदं ज्ञायते यदस्माकं पूर्वजानां महर्षीणां लक्ष्यं ज्ञानं कियदतिनिर्मलं विस्तृतं बहुज्ञतापूर्णं चासीत् ।

मानवजन्मनः प्रधानं लक्ष्यं भगवत्प्राप्तिरस्ति, तत्साधनानि च पुराणानि सन्ति। निष्काम-कर्मद्वारा त्यागवृत्तिग्रहणपूर्वकं स्वर्गापवर्गयोर्मार्गस्य सुलभानि साधनानि पुराणान्येव सन्ति। पुराणानि सर्वसाधनयोगक्रियासिद्धितन्त्रमन्त्रसिद्धान्तैः परिपूर्णानि सन्ति। अत एव सर्वशास्त्रेषु पुराणानां गौरवं गीतमस्ति।

विश्वस्य सर्वासां समस्यानां सरलतया सुगमीकर्तुं साधनैः सम्पन्नानि पुराणानि त्रिताप-तप्तानांप्र ाणिनां प्रबोधम्, अज्ञानान्धकारे निपतितानां प्रकाशम्, भ्रान्तानां सन्मार्गम्, निराशाना-माशाज्योतिः, शोकसंतप्तानामुल्लासमयं प्रसादम्, पथभ्रष्टानां कर्तव्यज्ञानम्, पापिनां पापनाशन-साधनम्, नीतिविशारदानां नीतिनैपुण्यम्, निष्कर्मिणां साधनोपदेशम्, भक्तानां भक्तिभावम्, ज्ञानिनामलौकिकज्ञानस्य प्रकाशञ्च ददति। तात्पर्यमिदमस्ति यद् ये जिज्ञासवो येनोद्देश्येन पुराणानां स्वाध्यायं कुर्वन्ति, ते समुद्रादमूल्यं रत्नमिवोभयलोककल्याणकारिणं बहुमूल्यं सदुपदेशं प्राप्य स्वं जीवनं सफलयितुं समर्था भवन्ति।

पुराणेषु भूगोलखगोलयोः स्थावरजङ्गमसृष्टेश्च सूक्ष्मं विवेचनं विद्यते। पौराणिकभू-विवरणप्रसङ्गेषु विविधसिद्धपीठतीर्थक्षेत्रवनपर्वतादीनां वर्णनमस्ति, येनाधुनिकानामनुसन्धानकर्तॄणां महत्साहाय्यं प्राप्यते। एवंप्रकारेण सर्वोपयोगिनां पुराणानामध्ययनस्य महतीमावश्यकतामनुभूय सर्वसम्प्रदायवादिनोऽविरोधेन पुराणान्युपपुराणानि च समाद्रियन्ते।

## पुराणेषु सम्प्रदायः

संस्कृतवाङ्मये उपासनार्थं सम्प्रदायद्वयमुपलभ्यते। एको निर्गुणोपासकसम्प्रदायः, द्विती-यश्च सगुणोपासकसम्प्रदायः। तत्र निर्गुणोपासकाः परमात्मानं निर्गुणं निराकारञ्च मन्यन्ते। सगुणो-पासकाश्च तं सर्वगुणसम्पन्नमाकारविशिष्टं स्वीकुर्वन्ति। सगुणोपासनानुसारं परमात्मैव रामकृष्णा-दिरूपैर्भूमाववतीर्य जगदानन्दयति। वेदवर्णितस्य ब्रह्मणो निर्गुणत्वात् केवलं स्मरणमेव कर्तुं शक्यते, किन्तु मनुष्याः पुराणप्रतिपादितस्य परमेश्वरस्य सेवां दर्शनं स्पर्शनञ्च कर्तुं प्रभवन्ति, तन्मुखेऽनेकविधं भोज्यपदार्थं दातुं तेन सह वार्तालापं च कर्तुं शक्नुवन्ति। पुराणप्रपञ्चितः पर-मेश्वरः स्वस्मात् चिन्मयधाम्नो भूमाववतीर्य प्राणिमात्रमध्ये विचरति प्राणिनां कष्टञ्च दूरीकरोति। पुराणपरमेश्वरो वेदस्य ब्रह्मेव न केवलं ज्ञेयं जीवस्य जगतश्च मूलकारणं निर्गुणं निर्विकारमद्वितीयं चित्स्वरूपमेवास्ति, किन्तु साकाररूपेण प्रत्यक्षविषय उपास्यः, सर्वास्ववस्थास्वाश्रयणीयः, करुणाप्रेमसहानुभूतिसम्पन्नः, शरणागतानां दीनानां दुःखिनां चार्तत्राणतत्परश्च दृश्यते।

## वैष्णवदर्शनेषु पुराणानां प्रभावः

यत्र वेदानां ब्रह्म नामरूपाभ्यां परं विद्यते, तत्र पुराणानि तं सर्वनामिनं सर्वरूपिणं सर्वभावमयञ्च वदन्ति। वेदस्यैव ब्रह्म पुराणेष्वसंख्यैर्नामरूपभावैर्विभिन्नरूपेणात्मानं प्रकटयति। तदेव ब्रह्मा विष्णुर्महेशो गणेशः सूर्यश्चास्ति, तदेव ब्रह्म रामः कृष्णो वामनो नृसिंहो मत्स्यो वराहो बुद्धश्चास्ति। यत्र वेदेषु ब्रह्म एकमेवाद्वितीयमस्ति, तत्र पुराणेषु सम्प्रदायमान्यानां विविधानां देवानां देवीनां चोपासनं स्वीकृत्य सर्वेषां माहात्म्यं गौरवञ्च गीतमस्ति। वेदप्रोक्तमेकमेव परमात्मानं विभिन्नसम्प्रदायानुसारं विभिन्ननामरूपभावैर्वर्णयद्भिः पुराणैः सर्वे सम्प्रदाया एकत्वसूत्रे निबद्धाः सर्वाणि धर्ममतसाधनप्रणालीवैशिष्ट्यादीन्यक्षुण्णानि स्थापितानि, तेषामान्तरिका भेदाश्च सुरक्षिताः।

पुराणानुसारं सर्वे सम्प्रदाया विभिन्ननामरूपभावेष्वेकस्यैव विश्वात्मन उपासनं कृत्वा स्वं स्वं जीवनं कृतार्थयन्ति। पुराणानां प्रभावेण भारतीया धर्मजिज्ञासवस्तत्तत्संप्रदायेषु विभक्ता अप्येकस्यैव वैदिकस्य सनातनधर्मस्यानुसरणं कुर्वन्ति। विविधानां देवानां देवीनामुपासका सन्तोऽप्येकस्यैवाद्वितीयस्य ब्रह्मण उपासकाः सन्ति। सर्वसम्प्रदायोपासका इदं जानन्ति यद्वैष्णवा विष्णोर्विभिन्नैर्नामरूपभावैर्यमुपासते, शैवाः शिवस्य विभिन्ननामरूपप्रभावैः, शाक्ता तारा-काली दुर्गा-चण्डी-भगवतीत्यादिरूपैः, गाणपत्याश्च गणपतिरूपेण तमेवाराधयन्ति। तत्तत्पुराणानि तत्तन्नामरूपलीलानामाश्रयं कृत्वा एकस्यैव ब्रह्मणो विशिष्टाविर्भावस्य महिमानं कीर्तयन्ति विभिन्नोपासकसम्प्रदायहृदयानि चावर्जयन्ति।

## वैष्णवसम्प्रदायः

यद्यपि पद्मपुराणे उत्तरखण्डे ८२ अध्याये वैष्णवलक्षणवर्णनप्रसङ्गे "के दासा वैष्णवाः के तु के भक्ता भुवि कीर्तिताः" इति पार्वतीप्रश्ने—"शूद्रा भवन्ति वै दासा वैष्णवा नारदादयः। प्रह्लादश्चाम्बरीषाद्या भक्तास्ते नगनन्दिनि!" इत्यादिना शिवेन नारदादयो वैष्णवा उक्ताः, तथापि प्रधानतया श्रीवल्लभाचार्यो रामानुजाचार्यो मध्वाचार्यो निम्बार्काचार्यश्चेति चत्वारो वैष्णवसम्प्रदायप्रवर्तका आचार्या बभूवुः। एभिश्चतुर्भिः स्वस्वसिद्धान्ताविरोधेन गीतोपनिषद्भागवतव्याससूत्रभाष्याणि कृतानि, निबन्धाश्च पृथक् पृथग् लिखिताः, यद्वाक्यतो नित्यनैमित्तिकभक्तिकार्येषु तत्तत्संप्रदायानुयायिनः प्रवर्तन्ते। एतेषां चतुर्णां वैष्णवसम्प्रदायानां चैतन्य स्वरूप-प्रकाश-नन्द-नामानश्चत्वार उपसम्प्रदाया अपि सन्ति। तत्र वल्लभाचार्यस्य चैतन्यः, रामानुजाचार्यस्य नन्दः, मध्वाचार्यस्य प्रकाशः, निम्बार्काचार्यस्य च स्वरूप उपसम्प्रदायः।

तत्र मुख्यतया पद्मपुराणोक्तः सिद्धान्तो रामानुजीयानाम्, भारतरामायणीयः सिद्धान्तो मध्वमार्गीयाणाम्, गीताभागवतोक्तः सिद्धान्तो वल्लभाचार्यमतावलम्बिनाम्, श्रुत्यादिसम्मतः सिद्धान्तो निम्बार्काचार्यमतानुयायिनाम्। तथा चोक्तं पद्मपुराणे—

चत्वारस्ते कलौ भाव्याः सम्प्रदायप्रवर्तकाः।
भविष्यन्ति प्रसिद्धास्ते ह्युत्कले पुरुषोत्तमात्॥

किञ्च—

सम्प्रदायविहीना ये मन्त्रास्ते निष्फला मताः।
अतः कलौ भविष्यन्ति चत्वारः सम्प्रदायिनः॥
श्री-ब्रह्म-रुद्र-सनका वैष्णवाः क्षितिपावकाः।

गर्गसंहितायां ६१ अध्याये च—

विष्णुस्वामी वामनांशस्तथा मध्वस्तु ब्रह्मणः।
रामानुजस्तु शेषांशो निम्बार्कः सनकस्य च॥

भार्गवपुराणानुसारं तु—

मध्वो ब्रह्मा शिवो विष्णुर्निम्बार्कः सनकस्तथा।
शेषो रामानुजः प्रोक्तश्चत्वारो वैष्णवा मताः॥

एभिर्वचनैः स्पष्टं प्रतीयते यत् श्री-ब्रह्म-रुद्र-सनकादिकाश्चत्वारः सन्ति वैष्णवसम्प्रदायाः। श्रीरामानुज-मध्व-विष्णुस्वामि-निम्बार्काचार्याश्च सन्ति क्रमशश्चतुर्णां सम्प्रदायानां संस्थापकाचार्याः। तत्र श्रीरामानुजाचार्यः श्रीसम्प्रदायस्य, मध्वाचार्यो ब्रह्मसम्प्रदायस्य, विष्णुस्वामी रुद्रसम्प्रदायस्य, निम्बार्काचार्यस्तु सनकादिकसंप्रदायस्य संस्थापकः। श्रीवल्लभाचार्यो विष्णुस्वामिमतानुयायी। स हि कालेन लुप्तप्रायस्य विष्णुस्वामिनो मतस्य प्रवर्तको जातः। इतरेषां वैष्णवसम्प्रदायानामेतेषु चतुर्ष्वेवान्तर्भावात् प्राधान्येन चातुर्विध्यमेव वैष्णवसम्प्रदायस्य स्पष्टम्।

एवमेव भविष्यपुराणे प्रतिसर्गपर्वणि सप्तमसर्गाच्चतुर्दशसर्गपर्यन्तं धर्माचार्याणां वैष्णवसम्प्रदायप्रवर्तकानां विदुषां विस्तृतं वर्णनं विद्यते।

## वैष्णवेषु पुराणानां प्रभावः

वैष्णवसम्प्रदायस्य भारतीयधार्मिकेतिहासे प्रमुखं स्थानमस्ति। वैदिककालत एव विष्णोः पूजा प्रचलिता। महाभारतकालेऽपि तस्याः प्रामुख्यमासीत्। अतः पुराणेष्वपि वैष्णवानां पूर्णतया

प्रभावः पतितः। विष्णुपूजया सहैव शनैः शनैर्भक्तेरपि प्रादुर्भावः समजनि। स्वकीयपूर्वजानां पूज्यानां गुरूणाञ्च मार्गस्यानुसरणेन भक्तिरुत्तरोत्तरं समुज्जृम्भते। कठोपनिषदि स्पष्टमेवोक्तं यद् यस्य पुरुषस्य न देवतायां नापि गुरौ न च पूज्येष्वनुरागात्मिका भक्तिर्जायते, तेन ब्रह्मज्ञानमवाप्तुं न शक्यते किन्तु एतेषु श्रद्धालव एव ब्रह्मज्ञानमवाप्तुं शक्नुवन्ति।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥

भक्तिसिद्धान्तः समस्तवैष्णवसम्प्रदायेषु मालायां सूत्रमिवानुस्यूतमस्ति। वैष्णवाचार्याणां मते लोककल्याणाय भक्तिमार्ग एव निष्कण्टकः सर्वसुलभो मार्गः। अत एवोक्तं श्रीमद्भागवते— "धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह" इति। यज्ञजपतपोयोगसमाधिकर्मणां दुःसाध्यत्वाद् ज्ञानस्य च कृपाणधारासमत्वेन तत्र सर्वैर्गन्तुमशक्यत्वाद् भक्तिरेव भगवत्तत्त्वज्ञानाय कल्याणप्राप्तये च सर्वसुलभं प्रधानं साधनम्। कलियुगे सर्वतोभावेन हरेः समाश्रयणमेव श्रेयस्करम्। यतो हि भगवति प्रसन्ने तदंशभूता देवादयोऽपि प्रसीदन्त्येव। अत एवोक्तम्—

वात्सल्यादभयप्रदाननियमादार्त्तार्तिनिर्वापणा-
दौदार्यादघशोषणादगणितश्रेयःपदप्रापणात्।
सेव्यः श्रीपतिरेक एव जगतामेते च षट् साक्षिणः
प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्याध्रुवाः॥

समस्तभारतीयदर्शनानि मुक्तिं शाश्वतिकीं मन्यन्ते। अत एव "न स पुनरावर्तते" इति श्रुतिः सङ्गच्छते। गीतायाञ्च—"यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इति। ऋते शङ्कराचार्यात् सर्वे वैष्णवाचार्या भक्तिमेव मोक्षस्य सुलभं साधनं स्वीकुर्वन्ति। विस्तृतं तद्विवेचनं तु पुराणेष्वेवोपलभ्यते। तत्रापि श्रीमद्भागवतमहापुराणे भक्तेः साङ्गोपाङ्गं विवेचनं दरीदृश्यते। श्रीमद्भागवतवर्णितासु नवधासु भक्तिष्वेकविधयाऽपि भक्त्या भगवन्तं साक्षात्कृत्य भक्ता अनायासेन संसारसागरमुत्तर्तुं शक्नुवन्ति। वेदविभाजनमहाभारतरचनासप्तदशपुराणनिर्माणानन्तरमपि भगवता व्यासदेवेन यदा शान्तिर्न लब्धा तदा देवर्षिनारदोपदेशात्तेन भक्तिरसप्रधानं पुराणमूर्धन्यं सर्ववेदान्तसारं वैष्णवानां परमं धनं श्रीमद्भागवतं विरचय्य सन्तोषो लब्धः। तथा चोक्तम्—

श्रीमद्भागवतं पुराणतिलकं यद् वैष्णवानां धनं
यस्मिन् पारमहंस्यमेवममलं ज्ञानं परं गीयते।

यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं
तच्छृण्वन् प्रपठन् विचारणपरो भक्त्या विमुच्येन्नरः ॥

अपि च—

विष्णुप्रियं सकलकल्मषनाशनं च मुक्त्येकहेतुमिह भक्तिविलासकारि ।
सन्तः कथानकमिदं पिबतादरेण लोके हि तीर्थपरिशीलनसेवया किम् ॥

वैष्णवसिद्धान्तप्रवर्तकाः समस्ता आचार्या सर्वेष्ववतारिषु श्रद्धाना अपि कञ्चिदेकमेवावतारिणमादर्शं मन्यमानास्तं भक्त्या सेव्यभावेन समुपासते । यो यदंशः स तं भजेदिति सिद्धान्तानुसारं पूर्णत्वबुद्ध्या स्वीयोपास्यस्यावतारिण उपासना सर्वसम्मता । श्रीरामानुजाचार्यो रामं मध्ववल्लभनिम्बार्काचार्यास्तु श्रीकृष्णमेव सर्वोत्कृष्टत्वेन समुपासते । एवञ्च भगवद्विषयकरतिरेव सर्वेषामुपकारिणीति सिध्यति ।

शान्तदास्यसख्यवात्सल्यमाधुर्यरूपाणां रतीनां वास्तविक उपयोगो भगवद्भजने एव । अत्र पूर्वपूर्वाभ्यो रतिभ्य उत्तरोत्तरासामुत्कर्षः । तथा च मधुरैव रतिः सर्वोत्कृष्टेति वैष्णवशास्त्रनिष्कर्षः । अन्येभ्यो रतिभावेभ्योऽस्ति माधुर्यरतेः कश्चिद्भावातिशयो यः खलु कान्ताय स्वदेहार्पणरूपायां प्रेमसेवायामुपयुज्यते । मधुराया एव रतेरुत्कर्षं द्योतयितुं तदुपजीवकानि लीलाधामावतारादीन्यनुशीलयन्ति राधागोविन्दपदारविन्दोपासका वैष्णवप्रवराः ।

सैषा मधुरा रतिस्त्रिविधा—साधारणी समञ्जसा समर्थाभेदात् । तत्र साधारणी रतिर्नातिगाढा, प्रायेणास्यां श्रीकृष्णदर्शनवशादात्मसुखैकवृत्तिका सम्भोगाभिलाषा प्राधान्येन सम्भवति, यथा कुब्जादिषु । तल्लक्षणं यथा—

नातिसान्द्रा हरेः प्रायः साक्षाद्दर्शनसम्भवा ।
सम्भोगेच्छानिदानेयं रतिः साधारणी मता ॥

पत्नीभावाभिमानरूपा रूपगुणादिश्रवणसम्भवा समञ्जसा तु रतिर्गाढा । सत्यामपीह श्रीकृष्णेन्द्रियसुखेच्छायां स्वसुखतात्पर्यवृत्तिकस्य सम्भोगाभिलाषस्याभ्युदयः सम्भवत्येव । यथा—रुक्मिण्यादिषु पट्टमहिषीषु । अस्यां रतौ लोकधर्ममर्यादाया अपेक्षा विद्यते । एतल्लक्षणं यथा—

पत्नीभावाभिमानात्मा गुणादिश्रवणादिजा ।
क्वचिद्भेदितसंभोगतृष्णा सान्द्रा समञ्जसा ॥

अथ सैव रतिः समर्था या खलु लोकं धर्मं चातिक्रम्य चरमोत्कर्षां पुष्टिमवाप्तुं समर्था। अस्यां तु न सम्भोगाभिलाषः पृथक् जायते, किन्तु कृष्णसुखैकवृत्तिकाया रत्यास्तादात्म्यमापद्यते। यथा कृष्णप्रेयसीषु गोपिकासु। तासां सर्वोऽप्युद्योगः कृष्णसुखार्थमेव जातः। एतल्लक्षणञ्च—

क्वचिद्विशेषमायान्त्या सम्भोगेच्छा यथाऽभितः।
रत्या तादात्म्यमापन्ना सा समर्थेति भण्यते॥
स्वस्वरूपात्तदीयाद्वा जाता यत्किञ्चिदन्वयात्।
समर्था सर्वविस्मारिगन्धा सान्द्रतमा मता॥

तिसृष्वासु रतिषु कृष्णेन्द्रियसुखतात्पर्यवृत्तिका समर्था रतिरेवेतराभ्यामुत्कृष्यते, यतो ह्यस्यां प्रियजनसुखभावनाभिलाषस्य सद्भावाद्बहिरपि केनचिद्भावान्तरेण भेत्तुमशक्या कृष्णविषयकरतिः सान्द्रतमा भवति। अत्र कुलधर्मधैर्यलोकलज्जादि नितान्तं निःसार्यते। समञ्जसायां तु रतौ सम्भोगाभिलाषस्य पार्थक्येन विद्यमानत्वात् श्रीकृष्णस्य वश्यता सुदुर्लभा। समर्थायां तु सम्भोगाभिलाषस्यापार्थक्येन सत्त्वात् श्रीकृष्णस्य वश्यत्वं स्पष्टमेवेत्यत्र गुणाधिक्यम्। किञ्च, पत्नीभावात्मिकायां समञ्जसायां रतौ गौरवादरसत्कारपरिचर्यादिना चित्तसंकोचाद्भवत्येव प्रेम्णः संकोचः, समर्थायां तु तदभावेन सङ्कोचस्य सर्वथैवाभावाच्चित्तस्य स्फारतया प्रेमापि स्फारीभवति। अनयैव रत्या गोप्यो लोकधर्ममर्यादामतिक्रामितुं वशीकर्तुं च परमस्वतन्त्रमपि भगवन्तं श्रीकृष्णं समर्था भवन्तीति सर्वातिक्रमसामर्थ्यादियं रतिः समर्था नाम। प्रणयोत्कर्षरूपस्य रागस्यैष स्वभावो यत् प्रियजनस्य हेतोः परमदुःसहमपि दुःखं सुखत्वेनानुभूयते। श्रीकृष्णानुरागवतीनां गोपीनां दुस्त्यजाभ्यां स्वजनार्यपथाभ्यां भ्रंशाद् दुःखस्य या परा काष्ठा सापि श्रीकृष्णसम्बन्धात् सुखायैव कल्पिता। तथा च समर्थैव रतिश्चरममुत्कर्षमासाद्य महाभागवतामापद्यमानां कामरूपा सर्वानुगा वेत्युच्यते इति भक्तिशास्त्रसिद्धान्तः।

श्रीकृष्णप्रेमपयोधिमग्नानां गोपीनामपूर्वं प्रेम पर्यालोच्य तासां चरणरेणुस्पृहया वृन्दावनस्थानां गुल्मलतौषधीनां मध्ये किमपि जन्म वाञ्छता श्रीमदुद्धवेन साधूक्तं श्रीमद्भागवते—

आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम्।
या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्॥

व्रजेन्द्रनन्दनस्य भगवतः श्रीकृष्णचन्द्रस्य तत्परिकरस्य च सङ्गमभीप्सवो नवनवानुरागवन्तो

वैष्णवभक्ता व्रजनिवासिनां गोपगोपीजनानांपद्धत्यैव भजनमाचरन्ति। तेषु सन्ति प्रमुखाः श्रीवल्लभाचार्यमहाराजाः। तन्मते परब्रह्मस्वरूपः श्रीकृष्ण एव सर्वोत्तमं तत्त्वम्।

वैष्णवसम्प्रदाये विष्णुनारदपद्मश्रीमद्भागवतादिसात्त्विकपुराणानां प्रभावे सत्यपि वल्लभाचार्यचैतन्यप्रभुसम्प्रदाये श्रीमद्भागवतमहापुराणस्य सर्वाधिकः प्रभावः प्रतिभाति। तन्मते श्रीमद्भागवतं महापुराणं वेदान्तसारत्वेन स्वीकृतमस्ति। तद्रसामृततृप्तायान्यत्किञ्चिन्न रोचते। तथा हि—

सर्ववेदान्तसारं हि श्रीमद्भागवतमिष्यते।
तद्रसामृततृप्तस्य नान्यत्र स्यात् क्वचिद्रतिः॥

वल्लभाचार्यः सिद्धान्तरूपेण शुद्धाद्वैतमतस्य प्रतिपादनमकार्षीत्। भक्तिसम्प्रदाये तन्मतं पुष्टिमार्गेति नाम्ना प्रसिद्धमस्ति। स हि जीवब्रह्मणोर्नितान्तमैक्यं स्वीकरोति। अतो मायाशबलब्रह्मपक्षपातिनः शाङ्करवेदान्तात् स्वमतस्य पार्थक्यप्रदर्शनाय तेनाद्वैतात् प्राक् शुद्धशब्दं व्यवहरता स्वीयं मतं शुद्धाद्वैतेति नाम्ना व्यवहृतम्। तथा चोक्तं शुद्धाद्वैतमार्तण्डे—

मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः।
कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम्॥

श्रीवल्लभाचार्यमतेऽखिलरसामृतमूर्तिर्लीलापुरुषोत्तमः श्रीकृष्ण एव परं ब्रह्मास्ति। तदनुग्रह एवैकं सर्वश्रेष्ठं साधनम्। तदर्थं तच्छरणागतिरेव श्रेयस्करी। अत एव नवरत्ने तेन सिद्धान्तितम्—

तस्मात् सर्वात्मना नित्यं श्रीकृष्णः शरणं मम।
वदद्भिरेव सततं स्थेयमित्येव मे मतिः॥

श्रीमद्भागवतद्वितीयस्कन्धदशमाध्यायस्थचतुर्थश्लोकीयं "पोषणं तदनुग्रहः" इत्यंशमाधारीकृत्य वल्लभाचार्येण स्वकीयः पुष्टिमार्गः प्रवर्तितः। तत्रात्मनिवेदनमेव जीवस्य परमं कल्याणकारि। तथा हि—

समस्तविषयत्यागः सर्वभावेन यत्र हि।
समर्पणं च देहादेः पुष्टिमार्गः स उच्यते॥

## वैष्णवदर्शनेषु पुराणानां प्रभावः

श्रीवल्लभाचार्यः सिद्धान्तरूपेण चतुर्णां वेद-गीता-व्याससूत्र-श्रीमद्भागवतमहापुराणानामेव प्रामाण्यं स्वीकरोति । तथा हि शुद्धाद्वैतमार्तण्डे—

वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि ।
समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम् ॥

हरिराया अपि—

नाश्रितो वल्लभाधीशो न च दृष्टा सुबोधिनी ।
नाराधि राधिकानाथो वृथा तज्जन्म भूतले ॥

सर्वेषामाचार्याणां परवर्तित्वाद् वल्लभाचार्येण तेषां सिद्धान्तानां पूर्वापरपर्यालोचनस्य पर्याप्तोऽवसरो लब्धः, वास्तविको वेदार्थश्च शुद्धाद्वैतस्वरूपे स्थापितः, अन्याचार्यसिद्धान्तग्रन्थेषु च समुपलब्धदोषेभ्यः स्वसिद्धान्तो विशुद्धतया प्रदर्शितः । तथा हि—

श्रीकृष्णस्य प्रसादेन मायावादो निराकृतः ।
स्थापितो ब्रह्मवादो हि सर्ववेदान्तगोचरः ॥

पुराणद्वारा समस्तान् जीवान् कल्याणपथपथिकान् विधातुं वल्लभाचार्यातिरिक्तेन केनाप्याचार्येण सर्वोत्तमोऽवसरो न लब्धः । परमभागवतश्चैतन्यमहामहाप्रभुः, हिन्दीकाव्यसूर्यः सूरदासः, भक्तिरससागरशशी रामचरितमानसकारो गोस्वामी तुलसीदासश्च भक्तिसुरसरित्प्रवाहेण समस्तं भारतवर्षमाप्लावितवन्तः । नानापुराणनिगमागमसम्मतं रामायणं विरचयतो वैष्णवाग्रगण्यस्य गोस्वामिनस्तुलसीदासस्य कृतिषु पुराणानां प्रचुरः प्रभावो दरीदृश्यत एव । पुराणमधिकृत्यैव स्वामिना रामानन्देन वैष्णवमताब्जभास्करः रामार्चनपद्धतिश्चेति ग्रन्थद्वयं निर्माय वैष्णवसमाजे भक्तिप्रचारः कृतः । एवमेकनाथ-रामदास-कबीरदास-गौराङ्गमहाप्रभुरामकृष्णपरमहंसादिभिश्च पौराणिकभक्तिसमाश्रयणेनैव महान् सन्तोषो लब्धः ।

मध्वाचार्यमते सच्चिदानन्दस्वरूपो हरिर्नारायणो वा स्थिरं तत्त्वम्, नहि तत्समन्यत् किमपि तत्त्वं विद्यते । अत एवाधस्तनं हरिवंशपुराणीयं पद्यं सङ्गच्छते—

वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च हरिः सर्वत्र गीयते ॥

मध्वाचार्यो हरिभक्तिमेव सर्वश्रेष्ठं सुखं स्वीकरोति । तन्मते भक्तिर्न केवलं साधनरूपास्ति, किन्तु साध्यरूपाप्यस्ति । तथा हि—

हरेरुपासना चैव सदैव सुखकारिणी ।
ननु साधनरूपा सा सिद्धिरेवात्र सा यतः ॥

श्रीशङ्कराचार्यो यत्र "ऋते ज्ञानान्न मुक्तिः" इति सिद्धान्तेनाज्ञानलिप्तत्वात् स्त्रीशूद्रौ मोक्षाधिकारिणौ न मन्यते । तत्र मध्वाचार्यः "भक्तिश्च तत्साधनम्" इति मन्यमानः सर्वसाधरणीं मुक्तिं स्वीकरोति किमिति स्त्रीशूद्रयोरपि । अत एव तेन छान्दोग्योपनिषद्भाष्ये स्पष्टमुक्तम्—

सर्ववर्णाश्रमाणाञ्च ज्ञानान्मोक्षो विनिश्चितः ।
अन्त्यानां स्थावराणां वा तथापि यतिरुत्तमः ॥

बृहदारण्यकभाष्येऽपि—

साधनानि तु सर्वाणि भक्तिज्ञानप्रवृद्धये ।
नैवान्यसाधनं भक्तिः फलरूपा हि सा यतः ॥

एवञ्च यत्र शङ्कराचार्यो ज्ञानमेव मुक्तेरनन्यं साधनं मनुते, तत्र मध्वाचार्यो भक्तिमेव मुक्तेरेकमात्रं साधनं स्वीकरोति । मध्वाचार्योऽतीन्द्रियप्रश्नविषये वेदमेव प्रमाणं मन्यते । तन्मते जीवब्रह्मणोर्नितान्तं पार्थक्यमस्ति । एतन्मतं द्वैतवाद इति नाम्ना दार्शनिकजगति प्रसिद्धमस्ति । मध्वसम्प्रदायानुसारं श्रीविष्णुरेव सर्वोच्चं तत्त्वम् , जगत् सत्यम् , जीवब्रह्मणोश्च भेदो वास्तविकः, जीवानां हर्यनुचरत्वं तारतम्यं च, आत्मन आन्तरिकसुखस्यानुभव एव मोक्षः, शुद्धभक्तिरेव तत्साधनम् , प्रत्यक्षानुमानागमा एव त्रीणि प्रमाणानि, वेदैरेव हरिः ज्ञातुं शक्यः । तथा हि—

श्रीमन्मध्वमते हरिः परतरः सत्यं जगत्तत्त्वतो
भेदो जीवगणा हरेरनुचरा नीचोच्चभावं गताः ।
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनं
ह्यक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः ॥

धर्मो द्विविधः, प्रवृत्तिनिवृत्तिभेदात् । तत्र निवृत्तिलक्षणस्यैव धर्मस्य तत्त्वज्ञानद्वारा निःश्रेयसहेतुत्वात् तादृशधर्मानुष्ठानेनैव ब्रह्मस्वरूपावगतिरिति वेदविदां मतम् । एवञ्च संसारार्णव-निमग्नानां जीवानां श्रुतिस्मृतिपुराणेतिहासाद्युक्तयज्ञदानादिकं कर्म कुर्वतामपि भगवत्प्रतिपत्तिमन्तरा

## वैष्णवदर्शनेषु पुराणानां प्रभावः

न तावद् भगवत्प्राप्तिलक्षणं निःश्रेयसं सिद्ध्यतीति पुराणैर्मोक्षसाधनत्वेन भगवद्भक्तिरूपप्रतिपत्तेरेव प्रतिपादितत्वाद् दुःखमयं संसाराब्धिपारं जिगमिषोर्जीवनिवहस्य महानुपकारः कृतः श्रीरामानुजाचार्येण । "रामानुजेन मुनिना कलौ संस्थामुपेष्यति" इति बृहत्संहितावचनानुसारं श्रीरामानुजः षडक्षरतारकब्रह्मश्रीराममन्त्रस्य प्रचारकत्वेन दैवदुर्विपाकाद् लुप्तप्रायं परमैकान्तिकं वैष्णवधर्मं पुनरुज्जीवितवान् प्रस्थापितवांश्च विशिष्टाद्वैतसंप्रदायम् । तस्य श्रीसंप्रदायेऽनन्तब्रह्माण्डनायकोऽसंख्येयकल्याणगुणगणमहोदधिः परात्परः श्रीसीतानाथः श्रीरामचन्द्र एव परमोपास्यः सर्वदा ध्येयः षडक्षरमन्त्रराजो जाप्यः, वेदपुराणनारदपञ्चरात्रवाल्मीकिरामायणमहाभारतादिसद्ग्रन्थसमन्वयात्मकश्रीभाष्यं परमं प्रमाणम् । एतन्मते पदार्थानां त्रित्वमेव—

ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः ।
ईश्वरश्चिदिति प्रोक्ता जीवा अचिदिदं जगत् ॥इति ।

श्रीरामानुजानुमोदितो राममहिमा पुराणेषु बहुशो वर्णितः । तथाहि श्रीमद्भागवते—

यस्यामृतं नृपसदः सुयशोऽधुनापि गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टम् ।
तन्नाकपालवसुपालकिरीटजुष्टं पादाम्बुजं रघुपतेः शरणं प्रपद्ये ॥

स्कन्दपुराणे च—

विश्वरूपस्य ते राम ! विश्वशब्दा हि वाचकाः ।
तथैव मूलमन्त्रस्ते विश्वेषां बीजमक्षयम् ॥

पद्मपुराणेऽपि—

रामान्नास्ति परो देवो रामान्नास्ति परं व्रतम् ।
नहि रामात्परो योगो नहि रामात्परो मखः ॥
ब्रह्मविष्णुमहेशाद्या यस्यांशा लोकसाधकाः ।
तमादिदेवं श्रीरामं विशुद्धं परमं भजे ॥

रामानुजसम्प्रदाये यथा वैष्णवैर्भगवतो विष्णोः प्राप्तौ हेतवः—तप्तेन चक्रेण भुजयोर्मूले समङ्कनम्, ऊर्ध्वपुण्ड्रधारणम्, वेदविहितनामकरणम्, मालापरिधानम्, मन्त्रग्रहणं चेत्येते संस्काराः स्वीक्रियन्ते, तथैव पुराणेष्वप्यूर्ध्वपुण्ड्रचक्रादिधारणं स्पष्टमुक्तम् । वैष्णवमताब्जभास्करेऽपि—

तप्तेन मूले भुजयोः समङ्कनं चक्रेण शङ्खेन तथोर्ध्वपुण्ड्रम् ।
श्रुतिश्रुतं नाम च मन्त्रमाले संस्कारभेदाः परमार्थहेतवः ॥

कण्वशाखायाञ्च—

धृतोर्ध्वपुण्ड्रः श्रुतचक्रधारी विष्णुं परं ध्यायति यो महात्मा ।
स्वरेण मन्त्रेण सदा हृदिस्थं परात्परं यन्महतो महान्तम् ॥

पद्मपुराणेऽपि—

ऊर्ध्वपुण्ड्रं मृदा शुभ्रं यो धत्ते नित्यमात्मवान् ।
तस्य प्रसादं कुरुते विष्णुर्लोकनमस्कृतः ॥

स्कन्दपुराणे च—

यो मृत्तिकां द्वारवतीसमुद्भवां करे समादाय ललाटपट्टके ।
करोति नित्यं नर ऊर्ध्वपुण्ड्रं क्रियाफलं कोटिगुणं तदा भवेत् ॥

किञ्च—

शङ्खञ्च पद्मञ्च गदां रथाङ्गं मत्स्यञ्च कूर्मं रचितं स्वदेहे ।
करोति नित्यं सुकृतस्य वृद्धिं पापक्षयं जन्मशतार्जितस्य ॥

एतत्सर्वं समालोच्याऽसंशयं वक्तुं शक्यते यत् श्रीसम्प्रदायस्यापि पुराणेषु पर्याप्तः प्रभावोऽस्तितराम् ।

निम्बार्काचार्यमते आत्मानात्मभेदेन तत्त्वं द्विविधम् । प्रकृतिस्तत्कार्यं चानात्मतत्त्वम्, आत्मतत्त्वञ्च जीवात्मपरमात्मभेदेन द्विविधम् । तत्र जीवो ज्ञानस्वरूपो ज्ञातृत्वादिधर्माधारः सर्वदा परतन्त्रोऽणुपरिणामः प्रतिशरीरं भिन्नो बन्धमोक्षयोग्यश्च । ईश्वरस्तु सर्वशक्तिमान् प्रकृतिपुरुषकालकर्मादीनां निन्यता परब्रह्मस्वरूपो भगवान् श्रीकृष्ण एव । अत एवोक्तम्—

शोभाया गुणदोषलेशरहितः स्वाभाविकैः सद्गुणैः
स्वातन्त्र्याखिलविज्ञताद्यगणितैर्युक्तोऽब्जजादिस्तुतः ।
भक्ताभीष्टप्रदो रमैकरमणो वेदैकगम्यो हि य-
स्तं वन्दे मनसा गिरा च शिरसा गोपीप्रियं श्रीहरिम् ॥

## वैष्णवदर्शनेषु पुराणानां प्रभावः

एतत्सिद्धान्तानुसारं "आत्मैव सर्वम्", "वासुदेवः सर्वम्" इत्यादिश्रुतिस्मृतिप्रतिपादितं चेतनाचेतनजगदात्मकत्वं परमात्मनः स्पष्टमेव प्रतिभाति। एवं च निम्बार्काचार्यस्यापि श्रीमद्भागवतमहापुराणे विशेषपक्षपातदर्शनात् पुराणानां वैष्णवेषु प्रभाव इत्यत्र नास्ति शङ्कापङ्ककलङ्कलेशस्य कश्चिदवसरः।

## उपसंहारः

एतावता विवेचनेनेदं सिध्यति यत्पुष्टिमार्गस्योपरि विवेचितं रूपं श्रीमद्भागवतमहापुराणमाधारीकृत्यैव प्रवर्तितम्, तथा रामोपासना विशेषतः पद्मपुराणप्रभाविता, श्रीकृष्णोपासना श्रीमद्भागवतप्रभाविता, राधोपासना च ब्रह्मवैवर्तप्रभाविताऽस्ति। अत एव सर्वैर्वैष्णवाचार्यैः सिद्धान्तरूपेण प्रस्थानत्रयानन्तरं पुराणानामेव प्रामाण्यं स्वीक्रियते। तथा च वैष्णवानामुपासनापद्धतेर्दार्शनिकज्ञानस्य धार्मिकसिद्धान्तस्य व्यवहारविधेश्च तत्तत्पुराणेषु समुपलम्भात् पुराणानां वैष्णवेषु प्रभाव इत्यत्र न काचित् संशीतिः।

किञ्च, बहूनामालोचकानां मते वैष्णवानां पुराणेषु प्रभावादेवेदानीं प्रक्षेपस्याधिक्यमुपलभ्यते। शनैः शनैः पुराणेषु प्रक्षेपस्य एवंविधं प्राचुर्यं जातं येन सत्यासत्ये विवेक्तुं न प्रभवन्ति साधारणा जनाः। प्रक्षेपप्राचुर्यादेव भविष्यपुराणं सम्प्रत्यविश्वसनीयतामुपगत्योपेक्षणीयं जातमस्ति। एसियाटिकसोसाइटीतः प्रकाशितस्य भविष्यपुराणस्यान्यद्रूपम्, वेङ्कटेश्वरमुद्रणालयमुद्रितस्य च तस्यान्यदेव स्वरूपमुपलभ्यते। अन्यत्रोपलभ्यमानस्यान्यद्रूपम्, हस्तलिखितस्य चान्यदेव स्वरूपं दृश्यते। किमस्ति वास्तविकं कारणमिति समालोचका विद्वांस एव विवेचयन्तु।

इति शम्॥

---

# निम्बार्कदर्शनदुर्लभग्रन्थपरिचयः

श्रीव्रजवल्लभशरणः, श्रीसर्वेश्वरसंस्कृतशोधविद्यालयः, वृन्दावनम् ।

अनन्तब्रह्माण्डाधिपतेः सर्वनियन्तुः सर्वाधारस्य श्रीसर्वेश्वरस्याचिन्त्यविचित्रागाधमहिमेति सर्वैरेवाङ्गीक्रियते श्रद्धाविश्वासशीलैः । निरीश्वरवादनिरतनास्तिका अपि दुःखावस्थायामघटित-घटनापटीयस्यास्तन्मायाया महत्त्वमनुभूय कदाचित् कथञ्चित् परमात्मानं तन्महिमानञ्च स्वीकुर्वन्ति । प्रत्यक्षानुभूतिरियम् । तन्माययैव विश्वस्योन्नतेरवनतेश्च चक्रमनिशं परिभ्रमति । स्थूलदृष्ट्याऽपि सर्वैरनुभूयते तत् ।

तथा हि—कदाचित् कस्यचिदेकस्य देशस्य, मण्डलस्य, नगरस्य, कुलस्य वा प्रशंसनीयोन्नति-रनुभूयते, तस्यैव च कालान्तरे शोचनीया स्थितिरपि निभाल्यते । यस्मिन् कुले कस्मिँश्चित् समये सर्वनिगमागमनिष्णातविदुषां वृन्दः, तस्मिन्नेव कुले समयान्तरे मूढमतयो निरक्षराः सन्ततयः समुत्पद्यन्ते । यत्र च लेखनकलाकोविदाङ्कितदुर्लभो ग्रन्थनिचयस्तत्रैव च कदाचिद् लेखनीमसि-पात्रपत्रादिविहीनानि शून्यागाराणि परिलक्ष्य विषीदन्ति विदुषां मनांसि ।

दुर्लभग्रन्थरत्नानां विषये विदेशीयानां विधर्मिणां चाक्रमणत एतादृशी स्थितिर्भारते मुहुर्मुहु-रनेकत्र सञ्जाता, पातकाचरणचण्डैस्तैराक्रामकविधर्मिभिरस्माकं बहवो धर्मग्रन्थाः, स्मृतयः, वेद-शाखाः, शिल्पविषयकग्रन्थाश्च विध्वंसिताः प्रज्वालिताश्च । अत एव बहुषु ग्रन्थेषु समुपलब्धेष्वपि नामनिर्देशे तदुद्धरणादिषु च बहवो ग्रन्था नोपलभ्यन्ते । पूज्यपादाद्याचार्यभगवन्निम्बार्कमहा-मुनीन्द्राणां तत्परवर्त्याचार्याणां च निबन्धनिधेरपि स्थितिरियमेव । श्रीनिम्बार्काचार्यचरणानां गीताभाष्यम्, उपनिषदां भाष्यम्, प्रपत्तिचिन्तामणिः, सदाचारप्रकाश इत्यादयो ग्रन्थाः कृतेऽप्यन्वेषणेऽद्यावधि नोपलब्धाः । श्रीनिम्बार्करचितवेदान्तकामधेनुभाष्यभूतायां वेदान्तरत्न-मञ्जूषायां श्रीपुरुषोत्तमाचार्यचरणैः प्रपत्तिचिन्तामणिसदाचारप्रकाशयोर्विषये स्पष्टमुक्तम्—"प्रपत्ति-कर्मणोर्विषये विस्तरतस्तत्रैव द्रष्टव्यम्" इति । श्रीदेवाचार्यविरचितायाः सिद्धान्तजाह्नव्या (ब्रह्मसूत्रवृत्तेः) व्याख्यातृभिः श्रीसुन्दरभट्टपादैः "तत्तु समन्वयात्" इतिसूत्रव्याख्याने सेतु-कायामुक्तम्—"तच्च प्रपत्तिचिन्तामणौ भगवच्चरणैराद्याचार्यैस्तद्व्याख्यातृभिः श्रीचरणैर्विश्वाचार्यैश्च चरमश्लोकव्याख्यायां निपुणं प्रपञ्चितम्, विस्तरभयादुपरम्यते"[1] इति । अनेन सन्दर्भेण श्रीनिम्बार्ककृतप्रपत्तिचिन्तामणेः, श्रीविश्वाचार्यकृतायास्तट्टीकायाश्च परिचयो दत्तः । एवमेव ख्यातिनिर्णयसिद्धान्तक्षीरार्णवयोर्विषयेऽपि तैरभिव्यञ्जितम्—"ख्यातिनिर्णये, व्याख्यातं चैतत् श्रीनिवासाचार्यचरणैः—अवस्थाभेदेनैकत्वानेकत्वयोर्विरोधाभावात् सर्वं घटितमेवेत्यादिना ।

१. चौखम्बासंस्कृतसिरीजकाशीतः प्रकाशिता सिद्धान्तसेतुका, पृ० १७२, पङ्क्तयः १०-१२ द्रष्टव्याः ।

एतदपि सिद्धान्तक्षीरार्णवे श्रीपुरुषोत्तमाचार्यचरणैराक्षेपसिद्धान्ताभ्यां निरूपितम्, विस्तर-भयादुपरम्यते"[1] ।

इत्थं सेतुकादीनामनुशीलनतः सदाचारप्रकाश-प्रपत्तिचिन्तामणि-तट्टीका-ख्याति-निर्णय-सिद्धान्तक्षीरार्णवेति ग्रन्थरत्नपञ्चकं श्रीसुन्दरभट्टपादानां समये आसीदित्यत्र न काऽपि विप्रतिपत्तिः । एवमेव अध्यात्मसुधातरङ्गिण्यां पञ्चकालानुष्ठानमीमांसायाञ्च श्रीनिवासाचार्य-विरचितपारिजातसौरभभाष्यरहस्यप्रबन्धयोश्चोल्लेखोऽस्ति । तत्कृतकठोपनिषद्भाष्यस्याऽपि श्रीमानदासमहानुभावैः स्वकृतकठोपनिषद्भाष्ये निदर्शनं कृतम् । परञ्चैते ग्रन्था अद्यावधि नोपलब्धाः ।

ख्यातिवादाख्यग्रन्थोऽधुना समुपलब्धः, परं चैतस्य परीक्षणमावश्यकं यच्छ्रीनिवासाचार्य-रचितख्यातिनिर्णय एवायमुत तस्माद्भिन्नः कस्यचिदन्यस्यैव रचनेति । औदुम्बरसंहिता, वादिभूषणं च ग्रन्थद्वयं समुपलब्धम्, तयोराद्यः श्रीनिम्बार्कान्तेवासिश्रीऔदुम्बरपिणा सम्पादितः, द्वितीयस्य रचयिता श्रीपुरुषोत्तमाचार्यः । स च मञ्जूषाकारतो विभिन्नः प्रतिभाति । तत्र मिथ्यात्वलक्षणानि निपुणमालोचितानि । नित्यनिकुञ्जगतैः श्रीमदमोलकरामशास्त्रिवर्य्यैस्तस्य टीकाऽपि कृता । एते ग्रन्था अद्यावधि क्वापि नो मुद्रिता इति मदीया धारणा । हस्तलिखिताः प्रतयस्तु यत्र तत्र समुपलभ्यन्ते, ता अपि स्वल्पा एव । एवञ्च भावनप्रकाशादयोऽन्येऽपि दुर्लभा ग्रन्था इह श्रीनिम्बार्कशोध मण्डलागारे वृन्दावनस्थश्रीनिकुञ्जे सुरक्षिताः सन्ति । तेषु च सदाचारसारसंग्रहनामकं ग्रन्थ-रत्नमेकं महत्त्वपूर्णमस्ति । अस्यैका प्रतिः श्रीगिरधारीमन्दिरे पुरानाशहरवृन्दावने समुपलब्धा । वङ्गदेशे वर्तमाननगरस्य श्रीनिम्बार्कभुवनराजगञ्जस्थलेऽपि श्रूयतेऽस्ति प्रतिरेका, परञ्च तद्दर्शनस्य सौभाग्यं न जातम् । अन्यत्राऽपि पाण्डववने, किलोलकुण्डे ( गोवर्धने ) च सन्ति पूर्णापूर्णाः प्रतय इति कर्णपरम्परया श्रुतम् ।

आजमीढनगर( अजमेर )मण्डलीयाखिलभारतीयश्रीनिम्बार्काचार्यपीठे या प्रतिः समुपलब्धा सा सर्वासु प्राचीना विभाति । बाणनिधिमुनीन्दुमिते १७९५ विक्रमाब्दे चैत्रशुक्ल दशम्यां रविवासरे रूपनगरपत्तने भीषचन्देन लिखितेयमिति तदन्तिमपुष्पिकातः स्पष्टम्[2] । अस्याः

---

१. सिद्धान्तसेतुका ( चौखम्बासंस्कृतसिरीजवाराणसीतः प्रकाशिता ) पृ० १६१, पं० ३-६ द्रष्टव्याः ।

२ इति श्रीसदाचारसारसङ्ग्रहे विष्णुभक्तिविषयवर्णने वार्षिकपर्वसु क्रियाविधानवर्णनं नाम नवमं प्रकरणं सम्पूर्णम् । शुभमस्तु । श्री सदाचारग्रन्थः सम्पूर्णः । संवत वर सर निधि अगनि चैत सुकल आदीत । सदाचारसंग्रह लिष्यौ तिथि दशमी करि प्रीति ।। लिखितमथेन भीषचन्द वास रूपनगर मेडतामधे । पोथी सर्व वइस्नव शिरोमणि माहाराजि श्रीवृन्दावनदासजी तासु शिष्य श्रीव्रजानन्दजी तासु शिष श्रीदेवादासजी की है, बांचे ताकौं जै श्रीकृष्ण तथा जथा जोग है ॥

## निम्बार्कदर्शनदुर्लभग्रन्थपरिचयः

प्रतेः ५×११ इञ्चाकृतीति, सन्ति च इन्दुरामधरामितानि ( १३१ ) पत्राणि। उभयतः प्रतिपृष्ठं १०-१०पङ्क्तयस्तासु च प्रतिपङ्क्ति त्रिचत्वारिंशत्तः पञ्चाशत्पर्यन्तमक्षराणि सन्ति। तथा च त्रिसहस्रश्लोकात्मकोऽयं ग्रन्थो नवसु प्रकरणेषु पूर्णतां गतः।

अस्यारम्भे—"श्रीनिम्बार्काय नमः" इति नमस्कारात्मकमङ्गलाचरणपूर्वकं दशावतार-वन्दनात्मकं पद्यमिदमस्ति—

श्रीमत्स्य-कच्छप-वराह नृसिंह-कुब्ज-रामाभिराम-हलधृक्बुधकल्किरूपान् ।
एको हिताय जगतः स्थितिभङ्गसर्वान् धत्ते स मामवतु वाचमलङ्करोतु ॥

अन्ते च—

नवधा भगवद्भक्तिर्नवभिर्लक्षणैर्युता ।
नवप्रकरणैर्ज्ञात्वा कर्तव्या मोक्षकाङ्क्षिभिः ॥ ८५ ॥
एतत्सर्वपुराणशास्त्रमखिलं [गी] चे [ते]तिहासागमान्
दुग्ध्वा पर्णपुटेन सञ्चितमिदं भूयो मथित्वोद्धृतम् ।
तद्ग्रन्थे हविसारसंग्रहसदाचारप्रशस्तं नृणां
दत्तां भक्तिरसप्रदो हि भजतां कृष्णो जगन्मोहनः ॥ ८६ ॥

कैश्चिद्विद्वद्भिरेतदपि सम्भावितं यच्छ्रीनिम्बार्ककृतसदाचारप्रकाशोऽयमेव, परञ्च सा भ्रान्तिरेवेति मदीयनिश्चयः, मन्त्रमुक्तावलीप्रपञ्चसारादिग्रन्थानां समुद्धरणोपलब्धेः, प्रकरणान्तिम-पुष्पिकासु सदाचारसारसंग्रहेति स्पष्टनामनिर्देशाच्च । अतः श्रीनिम्बार्ककृतसदाचारप्रकाशतो भिन्नोऽयं ग्रन्थः। तत्सूक्ष्मसारत्वन्तु भवितुमर्हत्यस्य, केनचिद् परवर्त्याचार्येण विदुषा वा संग्रहीतोऽयमिति निश्चीयते।

दीक्षाविधान-पूजाविधान-भागवतधर्ममहिमा-मानसपूजा-एकादश्याद्युपवास - वार्षिकमहोत्सव-पर्वसु क्रियाविधानादिनवसु प्रकरणेषु भागवत-मन्त्रमुक्तावली-श्रुति-आगम-रुद्रयामल-पद्मपुराण-विष्णुपुराण-तापिनीश्रुति-हरिवंश-विष्णुरहस्य-स्कान्द-स्मृति-पञ्चरात्र-नृसिंहपुराण - मत्स्य - भविष्य-ब्रह्माण्ड-नारदीय-शिव महाभारत-अग्निपुराण-वाराहपुराण कूर्म-गरुड-वायु आदिपुराण - प्रपञ्चसार-आपस्तम्ब-विष्णुयामल-तत्त्वसार-विष्णुधर्म हारीतस्मृति गर्भोपनिषद्-ब्रह्मवैवर्त - हरिवासरप्रदीपादि-ग्रन्थेभ्यो वचनानि समुद्धृतानि। तैश्च स्वाभिमतं सिद्धान्तितम्।

यद्यप्येतस्य पञ्चमपृष्ठे "केचित्तु साम्प्रदायिकाः" इत्यादितत्तमुद्राधारणविमर्शसरणिं सप्तमपृष्ठे च नृहरिध्यानविधिं पञ्चदशोत्तरशतपृष्ठीय-"श्रीलक्ष्मीनारायणं जलमध्ये" इति सन्दर्भं च विलोक्य सामान्यसमीक्षकमनसि शङ्का समुत्पद्येत, तथापि चतुर्विंशति-पञ्चविंशतिपृष्ठीय-गोपीचन्दनमहत्त्वेन, नासिकामूलत ऊर्द्ध्वपुण्ड्रविधानेन, एकोनत्रिंशत्पृष्ठे ब्राह्मणादित्रैवर्णिकस्यैव

तप्तमुद्राधारणाधिकारं समर्थ्य स्त्रीशूद्राणां शीतलचन्दनमुद्राधारणविधानेन, अथ चाष्टत्रिंशत्पृष्ठीय-सागरोद्भूतशङ्खतः पूजाविधानेन, शतपृष्ठीयैकादश्याद्युपवासेषु कपालवेधानुधावनेन पञ्चदशोत्तर-शतपृष्ठीयशयन्यां बोधिन्यां चैव तप्तमुद्राधारणविधानेन च ग्रन्थकारस्य श्रीनिम्बार्कसम्प्रदायानु-वर्तित्वं सुनिश्चीयते ।

वार्षिकमहोत्सवप्रकरणे आषाढमासानन्तरमेव श्रावणे जन्माष्टमीव्रतविधानादनुमीयते ग्रन्थ-कृतो दाक्षिणात्यदेशीयत्वम् । सम्प्रदायस्यैकत्वेऽपि देशाचारप्रभेदतोऽवान्तरप्रभेदा भवितुमर्हन्ति, यथा दाक्षिणात्य-मैथिल-वङ्गीयोत्कलस्मृतिषु धर्मशास्त्रीयपद्धतिविशेषा उपलभ्यन्ते ।

अत्रैतदवधेयं विद्वज्जनैः—आद्याः श्रीनिम्बार्काचार्यपादाः स्वजनितो दक्षिणदेशमलङ्कृत्य बाल्य एवोत्तरप्रदेशीयव्रजतीर्थं समागताः । नियतनिवासैरपि तैर्जगद्गुरुपदासीनत्वाद् भारतभ्रमण-मपि कृतम्, सर्वत्र च भगवदुपासना प्रस्तारिता । सा च दाक्षिणात्यैस्तद्देशाचारपूर्विकाङ्गीकृता, उत्तरदेशीयैश्चैतद्देशाचारपूर्विका । अत एव संस्कृतभाषायां निबद्धेषु प्राचीनतमेषु ग्रन्थेषु श्रीराधा-कृष्णयुगलस्यानन्योपासनाविधानन्तु प्रसिद्धतरमेव । श्रीरामनृसिंहद्वारिकाधीशरूपेणाऽपि श्रीकृष्णो-पासनाविधानमुपलभ्यते । एवमेव चान्द्रसौरमासानुसारेण महोत्सवादिवर्णनमपि सङ्गच्छते, दैशिक-पद्धतिप्रसङ्गानुसरणात् ।

एतत्प्रभेदतात्पर्यानवगाहिनः केचिदाधुनिकाः प्रजल्पन्ति यन्निम्बार्कसम्प्रदाये तु वैदिकी तान्त्रिकी च वैधी भक्तिरेवाङ्गीकृता । अनुरागात्मिका मधुररसोपासना हि श्रीश्रीभट्टदेव-श्रीहरिव्या-सदेवप्रभृतिभिरेव प्रवर्तिता । तत्र श्रीस्वामि हरिदासमहानुभाव-श्रीहितहरिवंश श्रीहरिरामव्यासादीनां पद्धतिप्रभावो लक्ष्यत इति । तत्सर्वमनर्गलमेव, प्रमाणशून्यप्रलापत्वात् । अनादिवैदिकेऽस्मिन् सम्प्रदाये आरम्भत एव श्रुतिस्मृतिसदाचारमूला प्रवृत्तिः । श्रुतीनाञ्च समबलत्वसमर्थनेन भेदाभेदसिद्धान्तवद् भगवत उपासनाऽपि साङ्गोपाङ्गत्वेनैव स्वीकृता । "विरञ्चि-रुद्रेन्द्र-रवीन्द्र-गगन-पवन-तेजोऽम्भ-धरादिचराचरभूतं सर्वमेव भगवतोऽङ्गम्" इत्यवधार्य सर्वत्र श्रद्धा सद्भावना च प्रदर्शिता । अनयैव दिशाऽस्मिन् प्रस्तुतेऽपि ग्रन्थे सूक्ष्मत्वेन सर्वं निचितम् । तस्माद्दुर्लभतमेषु ग्रन्थरत्नेषु प्राचीनतमं प्रकाशनार्हं महत्त्वपूर्णमेतद्ग्रन्थरत्नं सर्वोपकारकं चेति मन्ये, प्रार्थ्यांश्च शोधपरायणा विद्वद्वर्या यद्ग्रन्थरत्नस्याऽस्य काश्चिदन्या अपि प्रतयो दृष्टिपथमुपेयुस्तर्हि श्रीमद्भिः कृपालु-विद्वद्भिः सूचनीयोऽयं विद्वत्कृपाभाजनजन इति ॥

*****

# वैष्णवागमानामुद्भवोः विकासश्च

श्रीनलिनीकान्तत्रिपाठी, वा० सं० वि० वि० वाराणसी।

सर्वप्रथमं निबन्धस्यास्य प्रतिपाद्यतत्त्वानि निर्देष्टुमहं कामये। विषयव्यापकतादृष्ट्या आवश्यकमपीदं प्रतिभाति।

अत्र वैष्णवागमानामुद्भवविकासयोः प्राच्यपाश्चात्यमतानि समन्वयपूर्वकं पर्यालोच्य संक्षेपतः भागवतसात्वतपाञ्चरात्रसम्प्रदायानामैतिहासिकदृष्ट्या विमर्शो विधीयते। विष्णोर्विविधरूपगुणसंज्ञादीन् विवेच्यविषयीकुर्वन् वैष्णवदर्शनं लब्धवृत्त्यस्ति। अतः कालक्रमेण विष्णोरुपासनाया विकासेन सह वैष्णवानां साहित्यमपि विपुलतामलभत।

विवेच्यतत्त्वानि धीविषयीविधाय तानि सारवन्ति सम्पादयितुमावश्यकं प्रतिभाति यद् विष्णुसम्बन्धिनीनां संहितानामुपासनासाहित्ये प्रागवस्थायां किं स्वरूपमासीत्? या विष्णुसम्बन्धिन्य इमाः संहिता वर्तन्ते तासां विष्णोरुपासनासाहित्ये प्राक् स्वरूपं कीदृशमासीत्? तत्र कस्मिन् काले केन प्रकारेण परिवर्तनमभूत्? विकसितव्यापकप्रमाणप्रतिपन्नव्यापकविष्णूपासनपरम्परायाः कीदृशमैतिहासिकतारतम्यं परिलक्ष्यते? इत्यत्र विचारः क्रियेतेति।

विष्णूपासका एव सात्त्वतपाञ्चरात्रभागवतेत्यादिसंज्ञाभिः समलङ्कृताः। सुदीर्घकालादेव विष्णूपासनपरम्परा भारतीये वाङ्मये दरीदृश्यते। कालक्रमेण विष्णुभक्तौ विविधानि परिवर्तनानि समजायन्त। आदिग्रन्थ ऋग्वेदे विष्णुसम्बद्धा बहवो मन्त्रा उपलभ्यन्ते—

(क) इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। १-२२-१७

(ख) द्वे इदस्य क्रमणे स्वर्दृशोऽभिख्याय मर्त्यो भुरण्यति।

तृतीयमस्य नकिरा दधर्षति वयश्चन पतयन्तः पतत्रिणः॥ १-१५५-५

(ग) तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्॥ १-२२-२०

ब्राह्मणग्रन्थेषु विष्णोः पर्याप्तं वर्णनं लभ्यते। वेदवर्णितविष्णुशक्तेरुत्तरोत्तरं विकासोऽपि ब्राह्मणग्रन्थेषु वर्णितः। शतपथब्राह्मणे यज्ञनिष्ठादृष्ट्या विष्णुरग्रणीः प्रमाणितः, तथा विष्णोरलौकिकीनां चमत्कारपूर्णानां कथानामपि बहुशश्चर्चाः कृताः।

वैदिककाले यथा यथा बुद्धिवादिज्ञानप्रधानोपासनापद्धतिराहित्यमभवत्तथा तथा हृदय-पक्षस्य बाहुल्यं जातम्। तथैव क्रमशो विष्णोरर्चनापूजादयोऽपि प्रचुरतामभजन्, तथा स (विष्णुः) प्रमुखदेवत्वरूपे प्रतिष्ठापितः।

उपनिषत्साहित्ये विष्णोः परं धामैव सर्वोत्तमं स्थानं प्रमाणप्रतिपन्नमिति स्वीकृत्य जगतः पालकरूपे स कल्पितः। यथा —

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्॥

(कठोपनिषत्, ३-९)

विष्णुर्यस्मिन् रूपे संहितासु वर्णितस्तदेव रूपमधिकं व्यापकं तथा भास्वरं विरचय्य वर्णयितुमारब्धम्। यानि विशेषणानि पूर्वमिन्द्राय प्रयुज्यन्ते स्म, तान्यधुना विष्णुप्रशंसायां प्रयुक्तान्यभूवन्। यथा—हरिः, केशवः, वासुदेवः, वृष्णीपतिः, वृष्णः, ऋषभ इत्यादयः शब्दाः पूर्वमिन्द्राय प्रयुक्ता भवन्ति स्म, आहोस्वित् तत्सम्बद्धपदार्थप्रतीतिप्रतिपादका आसन्; त एव कालक्रमेण विष्णोर्विविधोपाधीनां तथा नाम्नामाधारा अजायन्त[1]। विष्णुमाहात्म्याभिव्यञ्जका व्युत्पत्तिलभ्यार्था अपि प्रसङ्गतोऽपेक्षिताः। यथा—यास्काचार्यविरचितनिरुक्त एवं प्रतिपादितम्—"अथ यद् विषितो भवति, तद् विष्णुर्भवति। विष्णुर्विशतेर्वा व्यश्नोतेर्वा"[2] इति। भगवता दुर्गाचार्येण—"यदा रश्मिभिरतिशयेनायं व्याप्तो व्याप्नोति वा रश्मिरयं सर्वम्। तद्विष्णुरादित्यो भवति" इत्येवं विष्णुशब्दस्य निर्वचनमकारि[3]। वेवेष्टि व्याप्नोति चराचरं जगत् स विष्णुरित्यनया व्युत्पत्त्याऽपि विष्णोर्विशिष्टं माहात्म्यमभिव्यज्यते।

विष्णोरुपर्युक्तं स्वरूपं तथा व्यक्तित्वं मनोहार्यनुरञ्जकं तथा व्यापकं विधाय ग्राह्यं कर्तुं स नराकाराकारितरूपे विमर्शितः (दृष्टः)। एवं विष्णुरेव नारायणशब्देनाभिहितः। नारायणशब्दोऽपि वैष्णवे धर्मे उपास्यरूपेण स्वीकृतः। मनुस्मृतौ—

आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः॥

1. द्रष्टव्यम्—वी० के० गोस्वामिकृते 'भक्ति कल्ट इन ऐन्सियण्ट इण्डिया' नाम्नि ग्रन्थे।
2. द्रष्टव्यम्—यास्काचार्यकृतनिरुक्ते १२।१८
3. दुर्गाचार्यकृतनिरुक्तभाष्ये २।३।३

इति कथनेन क्षीरशायिविष्णुना नारायणशब्दसाम्यं प्रदर्शितम् । महाभारतेऽपि विष्णुर्नारायणरूपेण वर्णितः । अनेन प्रकारेण विष्णुभक्तेः प्राचीनता, विष्णुशब्दस्य नारायणशब्दसमानार्थता च द्योत्यते ।

## भागवत( सात्त्वत )सम्प्रदायः

वैष्णवधर्मस्य सर्वप्राचीनं नाम भागवतधर्म आसीत् । भागवतशब्दः पाञ्चरात्रस्य नामान्तरम् । कियान् प्राचीनो भागवतसम्प्रदाय इति विषयस्यावश्यकसामग्र्यभावाद् निश्चितरूपेण विवेचनं दुस्तरं वर्तते, तथापि यथोपलब्धसामग्रीमेवोररीकृत्य किञ्चित् प्रकाश्यते । सर्वप्रथममस्य विवेचनं महाभारतस्य नारायणीयोपाख्याने लभ्यते । पाणिनीयाष्टाध्यायीभाष्यप्रणेत्रा भगवता पतञ्जलिनाऽपि कृष्णरूपावतीर्णस्य विष्णोः कंसवध-बलिबन्धननामकयोर्नाटकयोरुल्लेखः कृतः, येन दैत्यराजबलेः पातालप्रेषणस्य कंसवधस्यापि च पुष्टिर्जायते । यथा—"अयःशूलदण्डाजिनाभ्यां ठक्ठञौ" ( ५।२।७६ ) इति सूत्रे भाष्ये शैवभागवतसम्प्रदाययोश्चर्चा अकारि, यथा—"किञ्च, योऽग्रे शूलेनान्विच्छति स आयःशूलिकः । किञ्चातः शिवभागवतेऽपि प्राप्नोति, एवं तर्ह्युत्तरपदलोपोऽत्र द्रष्टव्यः" इति ।

विदुषां मतानुसारेण पतञ्जलेराविर्भावकालः विक्रमसंवत्सरपूर्वतृतीयशतकमस्ति । एतेनेदमपि सिद्ध्यति यत् तृतीये शतके भागवतसम्प्रदायाभ्युदयः संजातः ।

महाभारतस्य शान्तिपर्वानुसारमिदं सिद्ध्यति यदयं सात्वतोऽथवा भागवतो धर्मो वासुदेवेन कृष्णेनार्जुनं प्रत्युपदिष्टः । अतो भागवतधर्मस्याद्योपदेशके कृष्णे भगवति वासुदेव ऐतिहासिकदृष्ट्या विचारणमस्योद्भवविकासादिज्ञानप्रकाशनाय संगतं प्रतीयते ।

वैदिकसाहित्ये संहितासु, ब्राह्मणग्रन्थेषु, उपनिषत्सु वा वासुदेवस्योल्लेखो नोपलभ्यते । किन्तु तैत्तिरीयारण्यकदशमप्रपाठकेऽयं विष्णुवदेव व्यवहृतोऽस्ति । डा॰राजेन्द्रलालमित्रमतेऽस्य रचना पश्चादभूत्, अतो वासुदेवोल्लेखसम्बन्धिवर्णनमिदं परिशिष्टमेवास्ति । वासुदेववर्णनञ्च तत्रैवं प्रकारेणास्ति, यथा—"नारायणाय विद्महे, वासुदेवाय धीमहि, तन्नो विष्णुः प्रचोदयात्" इति ।

भारतीयदार्शनिकसम्प्रदायानां लब्धप्रतिष्ठान्वेषका डा॰ कीथमहोदया आरण्यकरचनासमयः ई॰पूर्वं तृतीयं शतकमिति स्वीकुर्वते । अतस्तृतीयशतकावधि विष्णुवासुदेवयोरैक्यं प्रतीयते । महाभारतस्य विविधस्थलेषु प्रयुक्तोऽयं वासुदेवशब्दो विष्णुशब्देनाधिकं साम्यं भजति ।

तत्रैकस्थले उट्टङ्कितमस्ति यद् मया लोकोत्तरज्योतिषा तथा सर्वं कर्तुं पटीयस्या मम मायाख्यया शक्त्या चराचरं सञ्छादितमस्ति। यथा—

वसनात् सर्वभूतानां वसुत्वादेव योनितः।
वासुदेवस्ततो.... ................... ॥

इत्यादौ महाभारतस्य तस्मिन्नेव प्रसङ्गे इदमपि वर्णितं यदहं रविरश्मिरूपे निखिलं जगत् संछादयामि, तथाऽहमेव सर्वप्राणिनामधिवासत्वाद् वासुदेवोऽस्मि। पतञ्जलेस्तथा वैष्णवमतीयपाञ्चरात्रस्यानुसारमेवंविधस्य वासुदेवद्वयस्य चर्चा अस्ति, ययोरेको वृष्णिकुलोद्भवस्तथाऽपरः क्षत्रिय आसीत्।[1]

वासुदेवस्य वृष्णिकुलोद्भवप्रसङ्गो महाभारतस्य विशिष्टांशभूतया श्रीमद्भगवद्गीतयाऽपि सिद्ध्यति। यत्र "वृष्णीनां वासुदेवोऽस्मि" इति वाक्येन प्रदिपादितमस्ति। कौटिल्यार्थशास्त्रे वृष्णिकुलचर्यया सह वृष्णीनां कस्यापि संघस्य वर्णनमप्युपलभ्यते, तथा द्वैपायनविरुद्धाचरणेन नाशस्याप्युल्लेखोऽस्ति।

बौद्धानां घटजातके वासुदेवो मथुराप्रान्तस्योत्तरीयभागे शासनं कुर्वतां राज्ञां राजवंशस्य सन्ततिरूपेण स्वीकृतः। तत्रेदमपि प्रतिपादितं यदुक्तराजवंशः कान्हद्वीपायनावज्ञया अनशत्।

महाभारतीयभीष्मपर्वणः पञ्चषष्टितमेऽध्याये ब्रह्मदेवेन पुरुषपरमेश्वरस्य स्तुतिरकारि। तथोक्तं च यद् भवान् यादववंशेऽवतरतु। पुरुषपरमेश्वरस्तत्र 'वासुदेवः' इति सम्बोधनपदेनाभिहितः। उक्तं च यद् भवानेव संकर्षणरूपेणावतीर्य स्वकीयं प्रद्युम्नाख्यं तनयमप्रकटयत्, तथा प्रद्युम्नाद् विष्णुस्वरूपादनिरुद्धं जनयामास। येनायमुत्पादितः। अतस्तदेव रूपं स्वीकृत्य पुनः कृपया मनुष्ययोनावायातु। शान्तिपर्वणः पञ्चषष्टितमाध्यायस्य प्रारम्भ एवोल्लिखितं यत् प्रजापतिना परमेश्वरो मानवयोनौ वासुदेवरूपेणागमनाय प्रार्थितः। पुनस्तस्मिन्नध्याये आद्यन्तावधि परमेश्वरस्थाने वासुदेवशब्द एव व्यवहृतः।

अस्मिन् विषये वैष्णवदर्शनस्य प्रामाणिका अन्वेषका डा०भण्डारकरमहोदया एवं विचारयन्ति यद् वासुदेवेन भक्तिसम्प्रदायस्याधिष्ठात्रा भाव्यम्। प्रथमे युगेऽपि स सङ्कर्षणानुरुद्धप्रद्युम्नैः सह आसीदित्यस्याप्याभासो महाभारतीयोल्लेखेन प्राप्यते[2]। वासुदेवस्य धर्मप्रवर्तकत्वं

---

१. द्रष्टव्यम्—दि एज आफ इम्पेरियल युनिटी।

२. वैष्णविज्म शैविज्म एण्ड.........पृ० १३-१४

पाणिनेरेकेन सूत्रेणापि ज्ञायते, यत्रास्य सम्प्रदायानुयायिनो वासुदेवकपदेनाभिहिताः। यथा—"वासुदेवार्जुनाभ्यां वुन्" (४।३।९८) इति।

सूत्रस्यास्योपरि भाष्यं विरचय्य भगवता पतञ्जलिनाऽपीदं दृढीकृतम्। एवमन्यस्मिन् "ऋष्यन्धकवृष्णिकुरुभ्यश्च" इति सूत्रव्याख्यानेऽपि कथितमस्ति यद् वासुदेवस्तथा बलदेव इत्युभे नामनी वृष्णिनामनी स्तः, तथा क्रमशो वसुदेवबलदेवशब्दाभ्यां निष्पन्ने स्तः। शतपथब्राह्मणेऽप्येकत्र स्थाने वार्ष्णेयशब्दप्रयोगोऽस्ति, येन वृष्णिवंशप्राचीनत्वं ज्ञातुं शक्यते।

महाभारतस्यादिपर्वणि एकत्रायातमस्ति यत् पार्थोऽथवा अर्जुनः सात्त्वतान् लोभिनो नावगच्छति, तथा तस्मिन्नेव पर्वण्यन्यत्र वासुदेव एव सात्त्वतसंज्ञयाऽभिहितः। एवं च वासुदेवसात्त्वतशब्दयोः साम्यं प्रकटितं भवति। विष्णुपुराणे—वृषस्य पुत्रो मधुरोऽभवत्, तस्यापि वृष्णिप्रमुखं पुत्रशतमासीत्, यतो वृष्णिसंज्ञामेतद् गोत्रमवाप। यादवश्च यदुनामप्रत्यक्षणादिति[1] (?)। पुनर्विष्णुपुराणेऽस्यैवान्यतमे प्रसङ्गे यदुकुलस्य मर्यादा लौकिकैश्वर्यवर्णनप्रसङ्गे कथिताऽस्ति यद् यदुकुले अंशनाम्नी एका व्यक्तिरभूद् यस्याः सुतः सात्त्वतसंज्ञया प्रख्यातः, तथा तेनैव कारणेन सात्त्वते तद्वंशीयाः सात्त्वतपदवाच्या अभूवन्।

भागवतमहापुराणेनाऽपि सात्त्वतैर्वासुदेवस्य परमेश्वररूपेण पूजनं सिद्ध्यति। भागवते वासुदेवः सत्त्वतर्षभाख्ययाऽपि ख्यातः। सात्त्वतशब्दप्रयोग ऐतरेयब्राह्मणेऽप्युपलभ्यते, यथा—"एतस्यां दक्षिणस्यां दिशि ये के च सात्त्वता राजानो भोग्यायैव तेऽभिषिच्यन्ते भोगेत्येनानभिषिक्तान् आचक्षते" इति।

डा० भण्डारकरमहोदयाः सात्त्वतशब्दं वृष्णिवंशपर्यायस्वरूपमेव स्वीकुर्वन्ति। तेषामिदं मतमस्ति यत् सात्त्वतानां वृष्णिवंशसम्बद्ध एकोऽन्य एव संप्रदाय आसीद् यस्मिन् वासुदेवप्रद्युम्नसंकर्षणानुरुद्धाः प्रादुरभवन्। तेषु वासुदेवं जनाः परमात्मबुद्ध्या पूजयन्ति स्म[2]।

सात्त्वतधर्मः सूर्यद्वारा प्रवर्तित इति महाभारते प्रतिपादितमस्ति। शतपथब्राह्मणे (१३।५।४।२१) सात्त्वतशब्दोऽपि वार्ष्णेयशब्द इव प्रयुक्तः। पाराशरभट्टेन सात्त्वतशब्दो भागवतस्य पर्यायरूपेण स्वीकृतः। यथा—सातयति सुखयति आश्रितानिति सातः परमात्मा, स एषामस्तीति

१. द्रष्टव्यम्—विष्णुपुराणस्य चतुर्थांशस्यैकादशोऽध्यायः।

२. द्रष्टव्यम्—डा० भण्डारकरकृते 'वैष्णविज्म शैविज्म एण्ड···' नाम्नि ग्रन्थे।

वा सात्वताः सात्त्वन्तो वा महाभागवताः"[1] इति। एवं सात्त्वतवार्ष्णेययोरुभयोः शब्दयोः प्राचीनत्वं तथा समर्थताऽपि प्रमाणीभवतः। महाभारतस्य नारायणीयाख्याने यत्र वासुदेवधर्मो व्याख्यातस्तत्र कथितं यत् सङ्कर्षणो वासुदेवस्यापरं रूपं तथा सर्वजनप्रतिनिधित्वञ्च प्रतिपादयति। संकर्षणाद् अर्थाद् मनसः प्रद्युम्नस्योत्पत्तिर्जायते, प्रद्युम्नादनिरुद्धोऽहङ्कारस्वरूपः प्रादुर्भवति। इमे चत्वारो वासुदेवप्रतिमाभूताः सन्ति। देवादिकं निखिलं जगद् नारायणादुत्पन्नं भूत्वा पुनर्नारायण एव लीयते। प्रकारेणानेन वासुदेवनारायणशब्दयोर्बहुविधं साम्यं सिद्ध्यति। कतिपयैरुल्लेखैः प्रमाणीभवति यत् खिष्टाब्दात् पूर्वं द्वितीये शतके वासुदेवातिरिक्तं सङ्कर्षणबलदेवावप्युपास्यभूतावास्ताम्। इदं दृढीकर्तुं २।२।३४ पाणिनीयसूत्रे भाष्यं द्रष्टव्यमस्ति। किन्तु महाभारतस्य नारायणीयाख्यानके वासुदेवः परमात्मरूपे सङ्कर्षणो जीवरूपे वर्णितः। तत्त्वतो विचारे कृते इदं स्पष्टं प्रतीयते यद् वासुदेवसङ्कर्षणयोः पूज्यत्व एवास्माभिः सर्वप्रथमं पाञ्चरात्राणां व्यूहवादस्य बीजभूतं तत्त्वं समवलोक्यते।

भागवतधर्मस्य सात्त्वतधर्मस्य पाञ्चरात्रधर्मस्य वा आदिनाम वासुदेवधर्मोऽथवा वासुदेवोपासना आसीत्। तृतीये शतके भागवतसंज्ञा तु प्रसिद्धप्राया एवासीत्। खिष्टाब्दस्य पूर्वाभ्यां तृतीयचतुर्थशतकाभ्यां प्रथमशतकावधि वासुदेवोपासनाया विविधानि प्रमाणानि पुरातत्वप्राचीनसाहित्यादिषूपलभ्यन्ते।

अर्हतां सलाकापुरुषेषु वासुदेवबलदेवावपि स्तः, तथा अरिष्टनेमिवासुदेवसम्बन्धिन्यश्चर्चाः प्राचीनजैनसाहित्ये भृशमुपलभ्यन्ते। बौद्धजातके (घटमहामग्गादौ) वासुदेवकथा वर्णिता।

बौद्धसाहित्यस्य चुल्लनिद्देशग्रन्थे आजीवकनिगण्ठजटिलवासुदेवादिभिः श्रावकैः सह वसुदेवपूजकानां वासुदेवानामप्युल्लेखो लभ्यते। यस्याधारेणास्य सम्प्रदायस्य स्थितिः खिष्टाब्दात् पूर्वं तृतीये चतुर्थे वा शतके आसीदिति निश्चीयते। खिष्टाब्दात् शतद्वयवर्षपूर्वं वेसनगरे (भिलसा) स्थितस्यैकस्य शिलालेखस्यानुसारं विक्टेरियाया राजदूतेन हेलियोडोरसेन देवाधिदेववासुदेवप्रतिष्ठायामेकं गरुडस्तम्भं निरमायि। स आत्मानं भागवतसंज्ञया समलङ्करोति स्म।

खिष्टाब्दात् पूर्वं प्रथमे शतके नानाघाटीयगुहाभिलेखेऽन्यदेवैः सह सङ्कर्षणवासुदेवयोरप्युल्लेखो लभ्यते। अस्यैव शतकस्यैकः शिलालेखो घोसुण्डी(चित्तौड़)नामके स्थाने प्राप्यते,

---

१. पाराशरभट्टकृतविष्णुसहस्रनामभाष्ये।

२. द्रष्टव्यम्—वैष्णविज्म शैविज्म एण्ड...।

## वैष्णवागमानामुद्भवो विकासश्च

यस्मिन्नश्वमेधवेलायामितिहासप्रसिद्धकण्ववंशीयनृपतिना वासुदेवसङ्कर्षणयोर्देवायतननिर्माणाय पूजाशिलाप्राकाररचनाया अप्युल्लेखोऽस्ति। एवं ज्ञायते यदयं सम्प्रदायोऽतीव प्राचीनः, तथा स एव कालक्रमेणानेकदृष्टिभिरवलोकितः।

उपर्युक्तलेखेनेदमप्यायातं यद् वैष्णवसम्प्रदायानामुद्भवविकासयोरेव वैष्णवागमानामुद्भवविकासावपि सन्निहितौ स्तः।

## पाञ्चरात्रो धर्मः

साम्प्रतं पाञ्चरात्रधर्मपाञ्चरात्रसंहितादीनां विचारः क्रियते। भागवतस्याथवा सात्त्वतधर्मस्यातिविकसितं रूपं पाञ्चरात्रधर्म एवोपलभ्यते, यः खिष्टाब्दात् पूर्वं तृतीयशतकात् प्रचलित आसीत्। तस्मिन् विविधानां भ्रान्तीनां निराकरणं नानातन्त्रसंहितादीनामाधारेण कृतमासीत्।

महाभारतस्य नारायणीयोपाख्याने (शान्तिपर्वणि) सर्वप्रथममस्य सिद्धान्तानां वर्णनं लभ्यते। महर्षिनारदो यदा पाञ्चरात्रतत्त्वजिज्ञासुरभवत् तदा श्वेतद्वीपं गत्वा नारायणर्षेरस्य ज्ञानमवाप, तथा स एवास्य प्रचारमकरोत्। एवमस्यादिप्रवर्तको नारायणर्षिरेव प्रतीयते। पाञ्चरात्रीयग्रन्थेष्विमं वेदसम्मतं साधयितुं विविधास्तर्काः स्थापिताः। सम्बन्धमप्यस्य वेदस्यैकया शाखयाऽस्ति। "एष ऐकायनो वेदः प्रख्यातः सर्वतो भुवि" (१।४३) इत्यनेन ईश्वरसंहिताया वचनेनाप्यस्य पुष्टिः कृता।

दशमशतकोत्पन्नेनोत्पलाचार्येणाऽपि स्पन्दप्रदीपिकायां पाञ्चरात्रसंहितानां तथा पाञ्चरात्रोपनिषदां विविधान्युदाहरणान्युपनिबद्धानि। पाञ्चरात्रश्रुतिः, पाञ्चरात्रसंहिता तथा पाञ्चरात्रोपनिषद् इत्येवं त्रयो विभागा दशमशतकावधि सञ्जाता आसन्। श्रुतिष्वपि पाञ्चरात्रमुख्यसिद्धान्ताः प्रतिपादिताः प्रतीयन्ते।

शतपथब्राह्मणे १३।६।१ पाञ्चरात्रसत्रस्योल्लेखः प्राप्यते, यस्याऽनुसारं समस्तप्राणिष्वाधिपत्यस्थापनाय नारायणेन पञ्चदिनाभ्यन्तरे इदं सम्पादितम्। वेदान्तदेशिकप्रणीतपाञ्चरात्ररक्षायाम्, एवं भट्टारकवेदोत्तमविरचिततन्त्रशुद्धाख्ये ग्रन्थरत्ने पाञ्चरात्रधर्मस्य तलस्पर्शिनी मीमांसा समुपलभ्यते। पञ्चरात्राणां विषये तेषां प्रामाणिकता तत्रभवता रामानुजाचार्येण वेदवदेव स्वीकृता। यथा—

सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।
आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः॥

पाञ्चरात्रशब्दस्य व्याख्याप्रसङ्गे नानामतानि संलक्ष्यन्ते । महाभारतस्य शान्तिपर्वणि तस्य 'महोपनिषत्' इति संज्ञा दृश्यते । तदनुसारेण तस्य गायनं नारायणेनैव स्वमुखारविन्दनिःसृतशब्दैः कृतम् । तत्र चतुर्वेदसांख्यशास्त्रसमावेशाय च स पाञ्चरात्र इति संज्ञया अभिहितः । नारदपाञ्चरात्रमतेन परमतत्त्व-युक्ति-भुक्ति योग-विषयाख्यपञ्चशब्दार्थनिरूपणप्रसङ्गात् पाञ्चरात्रसंज्ञा प्राप्ता । रात्रशब्दस्तु ज्ञानस्यैव संज्ञान्तरम् । तदुक्तं नारदपाञ्चरात्रे--"रात्रं च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम्" ( १।४४ ) इति ।

पाञ्चरात्रीयवाङ्मयं तु अतीव विपुलतरम्, परन्तु साम्प्रतमप्रकाशितरूपेणैव तिष्ठति । कालप्रभावेणास्य बहवोंऽशा विलुप्ताः । अस्य प्राचीनसंहितासु प्राक्स्थितानां संहितानामुल्लेखेनास्य विपुलता विलुप्तता च ज्ञायते । तमवलम्ब्य "इन्ट्रोडक्शन टू दी पाञ्चरात्र" इति नाम्ना ख्याते आङ्गलभाषोपनिबद्धग्रन्थे पाञ्चरात्रसंहितानां संख्या पञ्चविंशत्यधिकशतत्रयमिता ( २२५ ) निर्दिष्टा । तासु संहितासु—अगस्त्यसंहिता, महासनत्कुमारसंहिता, वासुदेवसंहिता, नारदीयसंहिता विष्णुरहस्यसंहिता—इत्यादिसंहितानां चर्चा कृता । प्रकाशितरूपेण साम्प्रतं निम्ननिर्दिष्टाः संहिता एव दृश्यन्ते—

### प्रकाशिताः संहिताः

१. ईश्वरसंहिता, ∠ सुदर्शन प्रेस काञ्ची ।
२. कपिञ्जलसंहिता
३. जयाख्यसंहिता, ∠ गायकवाड ओरियण्टल सीरीज ।
४. पाराशरसंहिता
५. पाद्मतन्त्रम्
६. लक्ष्मीतन्त्रम्
७. बृहद्ब्रह्मसंहिता ∠ आनन्दाश्रम पूना ।
८. सात्त्वतसंहिता ∠ काञ्ची
९. भारद्वाजसंहिता
१०. श्रीप्रश्नसंहिता
११. विष्णुसंहिता
१२. विष्णुतिलकम्
१३. अहिर्बुध्न्यसंहिता

निर्दिष्टासु संहितासु जयाख्यसंहितायाः ऐतिहासिकमहत्त्वं प्रामाणिकरूपेणावगन्तव्यम्। इयं संहिताऽतिविस्तृतत्रयस्त्रिंशत्पटलेषु समाप्ता।

पाञ्चरात्रसंहितासु ज्ञान-योग क्रिया-चर्याख्यानां चतुर्णां विषयाणां विस्तृतं तात्त्विकं च वर्णनं विद्यते। पाञ्चरात्रीयसंहितासु दार्शनिकतत्त्वानि सूक्ष्ममीमांसया सम्यक्प्रकारेण प्रमाण-प्रतिपन्नरीत्या प्रकटीकृतानि। तासु जीवब्रह्मरहस्योद्घाटनम्, एवमखण्डब्रह्माण्डोत्पत्तिविमर्शो ज्ञानपदेनोदीरितेे।[1] योगस्तु व्यावहारिकसैद्धान्तिकधरातले मुक्तिसाधकानां कर्मणां विवेचनमेव-मनुगमनमेव। देवालयनिर्माणमचेतनमूर्तिप्राणप्रतिष्ठाविधानमेवं मूर्तिसम्बन्धिन्य उक्तयः संहितासु क्रियाविवेचनरूपे उट्टङ्कितानि। चर्याविवेचनप्रसङ्गे वैष्णवागमेष्वधिकतरा दत्तचित्तता दृश्यते। तत्रेश्वरस्य षड्गुणानां चर्चा वर्तते। ज्ञान-शक्ति-ऐश्वर्य-बल वीर्य-तेजसां तस्य निर्गुणस्यापीश्वरस्य षड्गुणानां तत्र विवेचनं कृतम्, यैर्गुणैस्तस्मिन् सगुणता समागच्छति। एषां गुणानां स्थाने स्थाने सर्वत्रैव व्याख्या अतितार्किकरीत्या कृता आचार्यैः। अतस्तेषां चर्चा विस्तरभयादत्र न कृता।

## व्यूहवादः

पाञ्चरात्रस्य प्रधानतया दार्शनिकस्वरूपनिर्देशकस्य व्यूहवादस्यापि विवेचनं प्रसङ्गतः समीचीनं प्रतिभाति। गीतायां वासुदेवस्य अष्टधा प्रकृतिपर्यालोचनप्रसङ्गे पञ्चतत्त्वविवेचनकाले मनोबुद्धिजीवाहङ्काराणां चर्चा विद्यते। "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च" इत्यादि। कालक्रमेण जीवमनोऽहङ्काराणां सङ्कर्षणप्रद्युम्नानिरुद्धा इति नामान्तराण्यभवन्। व्यूहवादस्य "जनार्दनस्त्वात्मचतुर्थ एव" इति कथयित्वा पतञ्जलिनापि सम्भवतोऽस्य चर्चा विहितेत्यनुमीयते। किन्तु विषयेऽस्मिन् महान् विवादः।

संक्षेपतो व्यूहवादस्यैतत् स्वरूपम्—सृष्टिकाले वासुदेवोऽव्यक्तां प्रकृतिमेव न सृजति, किन्तु प्रकृत्या सार्धं सङ्कर्षणाख्यस्य विशिष्टजीवस्यापि रचनां करोति। तस्य सङ्कर्षणस्य प्रकृत्या संयोगे सति मनस उत्पत्तिर्जायते, यत् सांख्यस्य बुद्धिस्थानापन्नत्वेन ज्ञातुं शक्यते। एवं तस्मिन्नेव काले तस्य प्रतिरूपभूतस्य प्रद्युम्नस्योत्पत्तिर्भवति। प्रद्युम्नत एव मनःसंयोगे सति सांख्याभिमतस्याहङ्कारस्योत्पत्तिर्जायते। एवं तस्मिन् क्षण एव तस्य तृतीयप्रतिरूपभूतस्यानिरुद्धस्य प्रादुर्भावो भवति। अनिरुद्धत एव सांख्यसम्मतस्याहङ्कारस्य संयोगे सति महाभूतानामेवं तेषां गुणानामा-

---

१. अहिर्बुध्न्यसंहितामते जडत्वविहीनं स्वप्रकाशस्वरूपं नित्यं गुणमेव ज्ञानपदव्यपदेश्यम्। द्रष्टव्या—ईश्वरसंहिता २।५६

र्विर्भावो भवति। तस्मिन्नेव क्षणे विविधानि तत्त्वान्यादाय पृथिव्यादिनिर्माणक्षमस्य ब्रह्मणः प्रादुर्भावो भवति। ईश्वरस्य षड्गुणाः पूर्वमेव वर्णिताः। तेषु गुणेषु गुणद्वयस्य प्राधान्ये सति त्रित्वसंख्याविशिष्टस्य व्यूहस्य रचना भवति। उदाहरणं यथा—संकर्षणे ज्ञानस्य बलस्य चाधिक्यं भवति, प्रद्युम्ने ऐश्वर्यस्य वीर्यस्य चाधिक्यमस्ति, अनिरुद्धे शक्तितेजसोराधिक्यं भवति। एवं क्रमशो यथापूर्वं वर्णनानुसारं व्यूहरचना सम्पादिता भवति।

अयमेव चतुर्व्यूहवादः। शङ्कराचार्येण शारीरकभाष्ये ( २।२।४२-४५ ) अस्य खण्डनं कृतम्। किन्तु रामानुजाचार्यस्य एतद्विषयकं मण्डनमपि मननीयम्।

एवं वैष्णवागमानामुद्भवविकासविवेचनप्रसङ्गो मया भागवत-सात्त्वत-पाञ्चरात्र-सम्प्रदायानां यथाशक्ति विवेचनं विधाय साम्प्रतं समाप्यते॥

**:०:**

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१७ वर्षः } फाल्गुनपूर्णिमा, संवत् २०१६ { ३-४ अङ्कौ


## मीमांसापरिषदध्यक्षभाषणम्


श्रीरामचन्द्रशास्त्री, का० हि० वि० वि० संस्कृतमहाविद्यालयाध्यक्षः।


अस्तु नमो जैमिनये मुनये शबराय तस्य भावविदे।
वार्त्तिककृते कुमारिलपादायास्मद्गुरुभ्यश्च ॥

ॐ नमः सदसे। नमः सदसस्पतये। नमः सखीनां पुरोगाणां चक्षुषे। नमो दिवे। नमः पृथिव्यै।

अयि भोः! षड्दर्शनीसागरपारदृश्वानः सन्ततशास्त्राध्ययनाध्यापनसफलीकृतजनुषो विदितवेदितव्याः शमप्रधाना ज्ञाननिधयो विद्वत्पुण्डरीकाः! तत्रभवतां समक्षं करयोरजस्रं सायन्तनाम्भोरुहसामरस्यं संपाद्य सप्रश्रयमिदं विनिवेदयामि।

दर्शनपरिषद्यस्यां मीमांसाशास्त्रपरिषदोऽस्या आध्यक्ष्यं वोढव्यमिति प्रपूर्वैर्गुरेवाहं न्यवेदिषि। असमर्थमन्योऽपि भरमिमं वोढुं भवतां सौमनस्येन सौहार्देन गुणगृह्यालुतया चात्तधैर्योऽभ्युपागममिदमाध्यक्ष्यम्। अनेन नितरां गौरवितमात्मानमाकलये। निवेदये च भूयस्तरां कार्तज्ञ्यं दर्शनपरिषन्नियामकसमित्यध्यक्षमहोदयेभ्यः पारिषदेभ्यश्च।

मीमांसाशब्दोऽयं पूजितविचारवचनः समधिगम्यते। प्रेयःश्रेयसोर्धर्मब्रह्मणोर्विचारस्य तादृक्तया तत्र मीमांसाव्यपदेशः। श्रौतोऽयं व्यपदेशो यतः "सैषा मीमांसाग्निहोत्र एव संपन्ना",

"उत्सृज्यान्नोत्सृज्यामिति मीमांसन्ते ब्रह्मवादिनः", "एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः", "सैषानन्दस्य मीमांसा भवति" इत्यादिनिर्देशस्तत्र तत्र श्रुतिषु बहुलमुपलभ्यते। प्रसिद्धा लोके विचारेण सन्देहनिवृत्तिः। श्रुतावपि "उपस्थेयोग्नीर्नोपस्थेया इत्याहुर्मनुष्या येन्वै योऽहरहराहृत्याथैनं याचति स इन्वैतमुपार्च्छत्यथ को देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेयोऽथो खल्वाहुराशिषे वै कं यजमानो यजत इत्येषा खलु वा आहिताग्नेराशीर्यदग्निमुपतिष्ठते तस्मादुपस्थेयः" इति विषयविशयपूर्वपक्षसिद्धान्तप्रयोजनसमुदायात्मकाधिकरणरचनेन विचारपूर्वकं न्यवारि सन्देहः। एवं "ब्रह्मवादिनो वदन्त्यथ किं देवत्या वसोर्धारा" इत्यादिविचारस्तत्र तत्र श्रुतिषु दरीदृश्यते। एतेन विचारपूर्वके तत्त्वनिर्णये वेदविदां तात्पर्यविशेषमवगच्छामः। प्राञ्चो महर्षयः श्रुतिप्रदर्शितं पन्थानमनुसरन्तो वेदार्थविनिर्णयाय मीमांसादर्शनं प्रवर्तयाञ्चक्रिरे। स्मरति भगवान् मनुः—"आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥" इति। आर्षमिति ब्रह्मज्ञानमभिप्रेयाय। आह स्म वार्त्तिककृद्भट्टपादः "धर्मे प्रमीयमाणे तु वेदेन करणात्मना। इतिकर्तव्यताभागं मीमांसा पूरयिष्यति॥" इति। न्यायव्यपदेशोऽपि मीमांसायामस्ति। स्मरति भगवानापस्तम्बः—"अत एव नित्यानुवादमविधिमाहुर्न्यायविदः" इति। न्यायसुधा, न्यायरत्नाकर इत्यादिग्रन्थव्यपदेशोऽपीदमुपोद्बलयति।

भगवान् जैमिनिराचार्यः पूर्वां मीमांसामसूसूत्रत्, बादरायण उत्तराम्। पूर्वस्यामुपनिषद्व्यतिरिक्तवेदशाखाभागसंदेहपदानां निर्णायका न्यायाः प्रादर्शिषत। उत्तरस्यामुपनिषत्सु विचिकित्सापदानां निर्णयोपयोगिनो न्याया न्यरूप्यन्त। मीमांसयोरेतयोः पृथक्शास्त्रतां बहव आचार्याः प्राहुः। केचनैकशास्त्रतामनयोर्मन्यन्ते। मीमांसात्वे साधारणेऽपि रूढ्यैव जैमिनीये मीमांसाव्यवहारः। काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नीति काञ्चन मीमांसां भगवान् पतञ्जलिर्निर्दिशति। तस्या इदानीं नाम्नापि विरलः प्रचारः।

आचार्यजैमिन्युपज्ञान्येव सूत्राणि साम्प्रतं मीमांसादर्शनस्य मूलम्। जैमिनेः प्रागप्यात्रेयैतिशायनकामुकायनकार्ष्णाजिनिप्रभृतयो मीमांसका आसन्निति विज्ञायते "फलमात्रेयो निर्देशात्" इत्यादितो जैमिनिसूत्रनिर्देशात्। तेषां ग्रन्थाः सहस्राधिकवत्सरेभ्यः प्रागेवोत्सन्ना इत्यभ्यूह्यते। जैमिनिना "अथातो धर्मजिज्ञासा" इत्यारभ्य "विद्यते वान्यकालत्वाद्यथा याज्यासम्प्रैषो यथा याज्यासम्प्रैषः" इत्येवमन्तैः सार्धद्विसहस्रीतोऽधिकैः सूत्रैः षोडशलक्षणीशास्त्रं प्राणायि। तत्र द्वादशलक्षण्यामसंकरेणाध्यायार्थानां प्रमाणप्रभृतिप्रसङ्गान्तानां निरूपणं व्यधायि। शिष्टेषु चतुर्ष्वध्यायेषु संकीर्णतया कर्मसंबन्धिनामेव विषयाणां निर्णयो न्यायतः समापेदे। तस्य संकर्ष इत्यस्ति प्रामा-

णिकानां व्यवहारः । आचार्यशङ्करभगवत्पादाः "प्रदानवदेव तदुक्तम्" इति सूत्रभाष्ये तदुक्तं संकर्षे "नाना वा देवता पृथग्ज्ञानात्" इति संकर्षतः सूत्रमुदाजह्रुः । द्वादशलक्षण्यविचारितनानाविषयन्यायविचारात्मकस्तत्परिशिष्टस्तन्त्रप्रसङ्गबदुपदेशातिदेशसाधारण्येन प्रकीर्णकः प्रवर्तितः संकर्षो नाम काण्डः । देवताविचारभूयस्त्वात् संकर्षकाण्डस्यैव भूम्ना देवताकाण्ड इत्यपि व्यवहारः । शास्त्रतात्पर्यविदामग्रणीराचार्यः शबरो द्वादशाध्यायीमाद्यामबीभषत् । शिष्टां चतुरध्यायीं देवस्वामिप्रभृतयो व्याचक्रिरे । प्रागपि शाबराद्भाष्यादासन् बहवो वृत्तयो जैमिनीयानां सूत्राणां भर्तृमित्रभवदासहर्युपवर्षादिप्रणीता यासां नामापीदानीं श्रोत्रपथं नावतरति । बोधायनः काञ्चिद्वृत्तिमररचदिति विज्ञायते । बोधायन एवोपवर्षसंज्ञित इत्यपि केचिदभिप्रयन्ति । शाबरभाष्यतः प्राचीना कापि सूत्रवृत्तिर्नाधुनोपलभ्यते ।

शाबरं भाष्यं बहवो व्याख्यन् । "लोक इत्यादि भाष्यस्य षडर्थान् संप्रचक्षते" इति वार्त्तिककारः कुमारिलपादः वृत्त्यन्तराणि सूचयति । साम्प्रतं कुमारिलपादैः प्रभाकरमिश्रैश्च रचिता व्याख्या उपलभ्यन्ते । कौमारिलं वार्त्तिकं द्वादशाध्याय्या अप्युपलभ्यते । प्राभाकरं तु कासाञ्चिदेवोपलभ्यते । मुरारिमिश्रनामानं तार्तीयीकं मीमांसकं निर्दिशन्ति केचन । तस्य तदनुयायिनां वा ग्रन्थः कोऽपीदानीं न दृष्टिगोचरः । कुमारिलशिष्यः प्रभाकर इति, ततः प्राचीन इति वास्ति मतभेदः । प्रभाकरं गुरुरिति च व्यपदिशन्ति । प्रतिभाप्रकर्षनिबन्धनां गुरुरिति व्याहृतिं देशिकस्य तत्र कारणमाहुः । गुरुव्यपदेश एव प्रभाकरव्यपदेशापेक्षया भूयान् ग्रन्थेषूपलभ्यते । गुरुकुमारिलयोर्वैमत्यं प्रस्फुटम् । अत एव मीमांसायां मतद्वयी प्रववृते । कौमारिलं मतमेव शङ्करभगवत्पादप्रभृतिभिराचार्यैः समाद्रियत । अध्ययनाध्यापनसंप्रदायश्च कुमारिलतदनुयायिप्रणीतग्रन्थानां प्रचुरतरः । परश्शताः कौमारिलमतावलम्बनेन प्रवृत्ता ग्रन्था उपलभ्यन्ते । प्राभाकरं मतमवलम्ब्य प्रवृत्तास्त्वङ्गुलिमेया एव । न च तेषामध्ययनाध्यापनसंप्रदायोऽपि बहुलः । कौमारिलस्य युक्तिगाढतैव शङ्कराचार्यादिबहुप्राचीनाचार्यादरणे हेतुरिति मन्ये ।

गुरुकौमारिलयोर्मतभेद ईषदिव प्रदर्श्यते । प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यभावरूपाणि षट् प्रमाणानीति भाट्टाः । अभावस्याधिकरणात्मकतया प्रमेयाभावेनाभावव्यतिरिक्तानि पञ्चैव प्रमाणानीति गुरवः । अधिकरणातिरेकिणमभावं व्यवस्थापयन् कुमारिलोऽभावस्य मानान्तरतां प्रत्यतिष्ठिपत् । अभिहितान्वयवादिनो भाट्टा अन्विताभिधानवादिनो गुरवः । "सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्" इति तत्सतोर्व्यत्ययेन व्याचक्षाणः कुमारिलः प्रत्यक्षस्येन्द्रियार्थसन्निकर्षजन्यतामभ्युपगच्छन्नपि समवायस्येन्द्रियसन्निकर्षतां नाभ्युपैति ।

गुरवस्त्वभ्युगच्छन्ति। निरस्तसमस्तपुंदूषणतया वेदस्यापौरुषेयस्य निराबाधं प्रामाण्यमुभयोः सम्मतम्। "स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम्" इति श्लोकवार्त्तिके भट्टोक्तिः। ज्ञानसामग्रीमात्रजन्यत्वमुत्पत्तौ प्रामाण्यस्य स्वतस्त्वम्। ज्ञानग्राहकसामग्रीमात्रजन्यग्रहविषयत्वं ज्ञप्तौ तस्य स्वतस्त्वं भाट्टप्राभाकरयोरविप्रतिपन्नम्। परन्तु सर्वेषां ज्ञानानां याथार्थ्यमाचक्षाणाः शुक्तिकादिष्विदं रजतमिति विशिष्टव्यवहारमात्रम्, नास्ति भ्रमो नाम कश्चित्, विभिन्नज्ञानीय-विषयतयोरप्यस्ति निरूप्यनिरूपकभाव इति गुरव आशेरते। "तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता। अर्थान्यथात्वहेतुत्थदोषज्ञानादपोद्यते॥ अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वा-ज्ञानसंशयैः।" इति वदन् भट्टपादोऽन्यथाख्यातिं नैयायिकवदङ्गीकरोति। अज्ञानमत्र ज्ञानाभाव एव, न भावात्मकमौपनिषदानामिव तमोऽभिप्रेतम्। "वस्तुत्वाद्द्विविधस्यात्र संभवो दुष्टकारणात्। अविज्ञाने तु दोषाणां व्यापारो नैव युज्यते॥ कारणाभावतस्त्वेव सिद्धः" इति भट्टपाद एवाज्ञन-शब्दार्थं विवव्रार। अप्रामाण्यस्योत्पत्तिज्ञप्त्योः परतस्त्वमेव भाट्टसम्मतम्। ज्ञानानि मितिमातृमेय-रूपत्रिपुटीविषयाणीति गुरवः। ज्ञाततया ज्ञानजन्यया प्रत्यक्षया कल्प्यं ज्ञानमिति भाट्टाः। दिङ्मात्रं भट्टगुरुमतयोर्वैषम्ये प्रदर्शितम्। द्वादशाध्याय्यामधिकरणरचनासु महद्वैमत्यमनयोर्दरीदृश्यते। व्यवहारे भट्टनयः शङ्करभगवत्पादैस्तदनुयायिभिश्च स्वीचक्रे।

औत्पत्तिकसूत्रभाष्ये स्थूलशरीरप्राणमनइन्द्रियेभ्यो व्यतिरिक्तः कर्तृत्वभोक्तृत्वादिमान् प्रतिशरीरं भिन्नो विभुर्नित्यो जीवः स्वकृतधर्माधर्मफलभाजनं युक्त्या शबरस्वामिना प्रासाध्यत। युक्तयश्च प्रायो वैशेषिकादिभिरुपन्यस्ता एवोदाजह्रिरे। ईदृगात्मसिद्धवत्कारेण न जीवः प्रत्यपादि सूत्रकृता। भाष्यकारस्तु शरीरातिरिक्तं नित्यमात्मानमन्तरा शरीरान्तरभोग्यफलेषु कर्मसु प्रवृत्ति-दौर्घस्थ्येन "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादीन्यप्रमाणान्यननुष्ठातृकाणि मा भूवन्निति निरा-करिष्णुश्च नास्तिक्यं जीवं शरीरातिरिक्तं समार्थयत्। यदाह वार्त्तिककारः—"इत्याह नास्तिक्य-निराकरिष्णुरात्मास्ति तां भाष्यकृदत्र युक्त्या। दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्त-निषेवणेन॥" इति।

जीवातिरिक्तमात्मानमीश्वरं नाभ्युपगच्छन्तीति निरीश्वरवादिनो मीमांसका इति प्रवादः श्रूयते। महता परिकरबन्धेन सर्वज्ञमीश्वरं निराचक्रे कुमारिलः श्लोकवार्त्तिके—"न कदाचिदनीदृशं जगत्", "इदानीमिव दृष्टान्नाधिकमिष्यते" इति वादिनां सर्गप्रलययोरभावेन तत्कर्तृतयापि नेश्वरा-पेक्षा। वस्तुतस्तु सर्वज्ञनिराकृतिरीश्वरनिराकृतिश्च बौद्धानुद्दिश्य जल्पकथामाश्रित्येति ज्ञायते। श्लोकवार्त्तिकारम्भे—"विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे। श्रेयःप्राप्तिनिमित्ताय नमः सोमार्ध-

धारिणे ॥" इति मङ्गलमुपनिबध्नन् परममाहेश्वरतामात्मनो ज्ञापयति वार्त्तिककारः। इमं श्लोकमवतारयन् पार्थसारथिमिश्रो न्यायरत्नाकरे—"श्लोकवार्त्तिकमारिप्सुस्तस्याविघ्नसमाप्तये। विश्वेश्वरं महादेवं स्तुतिपूर्वं नमस्यति ॥" इत्याह। कुमारिलपादैस्तन्त्रवार्त्तिके—"शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते। तदप्यधिष्ठितं सर्वमेकेन परमात्मना ॥" इति प्रदर्शितम्। "न कथञ्चिदौपनिषदं पुरुषं मनुते बृहन्तमिति वेदवचः। कथयत्यवेदविदगोचरतां गमयेत् कथं तमनुमानमिदम् ॥ इति भावमात्मनि निधाय मुनिः स निराकरोन्निशितयुक्तिशतैः। अनुमानमीश्वरपरं जगतः प्रभवं लयं फलमपीश्वरतः ॥" इति शङ्करदिग्विजये माधवाचार्या मीमांसकानामीश्वरनिराकरणमानुमानिकेश्वरनिराकरणपरं न त्वौपनिषदेश्वरनिराकरणपरमिति प्रत्यपादयन्। नैयायिका हीश्वरेऽनुमानं प्रमाणयन्तः श्रुतेरनुवादतामभिप्रयन्ति। अत ईश्वराङ्गीकर्तृतया न मीमांसका निरीश्वरवादिनः।

इन्द्रादीनां देवतानां विग्रहादिपञ्चकमपि मीमांसका निराकुर्वन्ति। "विग्रहो हविषां भोग ऐश्वर्यञ्च प्रसन्नता। फलदातृत्वमित्येतत्पञ्चकं विग्रहादिकम् ॥" चतुर्थ्यन्तो देवतावाचकशब्द एव देवता। अग्न्यादिपदानां प्रातिपदिकत्वमाहार्यमर्थमादाय विकल्पविषयमादाय शशविषाणादिशब्दानामिव। अतोऽग्नये पवमानायाग्नये पावकायाग्नये शुचये इत्यत्र देवता भिद्यन्ते। विभिन्ना ह्यानुपूर्वी शब्दानाम्। चतुर्थ्यन्तदेवतावाचकशब्दोच्चारणपूर्वकं द्रव्यत्यागो यागोऽपूर्वद्वारा फलप्रदो नेश्वरः फलदायको यथौपनिषदानाम्। न वा प्रसन्नाया देवतायाः फलप्रदता राज्ञामिव प्रसन्नानामिति मीमांसकमतं मीमांसकमूर्धन्येन खण्डदेवेन भाट्टदीपिकायां नवमेऽध्याये निरूपितम्। तत्स्वहृदयसाक्षिकं नेति तेनैव ममाप्येवं वदतोऽपि वाणी दुष्यतीति हरिस्मरणमेव शरणमिति तत्रैवाधिकरणान्ते समुदटङ्कि।

प्रपञ्चस्य पारमार्थिकत्वमात्मन इव मीमांसका आशेरते। प्रवाहनित्यत्वं प्रपञ्चस्याचक्षते। यदाह निरालम्बनवादे भट्टपादः—"सत्यत्वं न च सामान्यं मृषार्थपरमार्थयोः। विरोधान्नहि सिंहत्वं सामान्यं वृषसिंहयोः ॥ तुल्यार्थत्वेऽपि तेनैषां मिथ्यासंवृतिशब्दयोः। वञ्चनार्थ उपन्यासो लालावक्त्रासवादिवत् ॥" इति। बौद्धनिराकृतये प्रयुक्ता युक्तय औपनिषदनिरासेऽप्यतिदिश्यन्ते।

मोक्षं परमं पुमर्थमातिष्ठन्ते। न भावात्मको मोक्ष एतन्मते। आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न तु चोदितम्। कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते। "विज्ञाते चास्य पारार्थ्ये या च नामफलश्रुतिः। सार्थवादो भवेदेव न स्वर्गादेः फलान्तरम् ॥ सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते। स्वर्ग एव भवेदेष पर्यायेण क्षयी च सः ॥ नहि कारणवत्किञ्चिदक्षयित्वेन कल्प्यते। तस्मात्कर्मक्षयादेव हेत्वभावेन मुच्यते ॥ नह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम्। न च क्रियायाः

कस्याश्चिदभावः फलमिष्यते ॥ तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये। उत्तरप्रचयासत्त्वाद् देहो नोत्पद्यते पुनः ॥ कर्मजन्योपभोगार्थं शरीरं न प्रवर्तते। तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते ॥ मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः। नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ॥ प्रार्थ्यमानं फलं ज्ञातं न चानिच्छोर्भविष्यति। आत्मज्ञे चैतदस्तीति तज्ज्ञानमुपयुज्यते ॥" इति ससाधनं मोक्षस्वरूपं संबन्धाक्षेपपरिहारप्रकरणे वार्त्तिककृदुपपादयामास। शरीरसंबन्धो बन्धः। तदभावो मोक्षः। कर्मनिमित्तो बन्धः कर्मक्षयादेव विनंक्ष्यति। आत्मज्ञानं कर्मसु प्रवर्तयति। नित्यनैमित्तिकैः कर्मभिः पूर्वकृतानि दुरितानि क्षीयन्ते। न भवन्त्यनागतान्यननुष्ठानात्। भोगेन प्रारब्धं विलीयते। भाविशरीरहेत्वभावेन मुच्यते। उपासनानां रात्रिसत्रनयेनार्थवादिकफलास्तितायामपि फलमनभिसन्धायानुष्ठितमात्मोपासनं दुरितं क्षपयद् मोक्षाय कल्पते। "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा" इति भगवद्वासुदेववचने ज्ञानमात्मोपासनमेव।

प्रदर्शितं मतं कर्मयोग्यानविरक्तान् प्रति प्रत्यपादि, न तु भट्टपादानां तात्पर्यं तत्रेति प्रकरणान्तरे भट्टोक्तितः प्रतीमः। तैरेवात्मवादान्ते—"दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन" इत्युक्तम्। प्रभाकरेण च बृहत्यां ब्रह्मविवर्ततां प्रपञ्चस्याशङ्क्य ओन्नमः पण्डितेभ्य इति तामङ्गीकृत्य आत्मा निष्प्रपञ्चं ब्रह्मैव, कर्मसङ्गिनः प्रति न तथोपदेशो युज्यते, "न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्" इति भगवदुक्तेरित्याविष्कृतम्। एतेन मीमांसकानां वेदान्तदर्शने विद्वेषाभावः स्फुटीभवति।

श्रुतेरेव परमं प्रामाण्यमतीन्द्रिये धर्मे। चोदना लक्षणोऽर्थो धर्मः। चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुं नान्यत्किञ्चनेन्द्रियम्। वेदमूलकतयैव स्मृतीनामाचाराणाञ्च प्रामाण्यम्। श्रुतिविरुद्धाः स्मृतय आचाराश्च, स्मृतिविरुद्धा आचाराश्च न प्रमाणानि। श्रुतिस्मृत्याचारैरविरुद्धा आत्मतुष्टिरपि प्रमाणम्, यथा भोजनव्यतिरेकेण जलमहं न पास्य इति संकल्पः। स्मृत्याचारप्रमितान्यपि मूलश्रुतिविहितत्वबुद्ध्याऽनुष्ठीयमानानि श्रेयसे कल्पन्ते। इतरैरुपदिष्टा अप्यहिंसादयो वेदप्रमिततयैव श्रेयो विदधति।

आचार्यजैमिनिना द्वादशस्वध्यायेषु यथाक्रमं प्रमाणभेदशेषत्वप्रयुक्तिक्रमाधिकारसामान्यातिदेशविशेषातिदेशोहबाधतन्त्रप्रसङ्गा न्यरूपिषत। वाक्यार्थनिर्णायकानां न्यायानां प्रदर्शनाय मीमांसा प्रवृत्ते। वेदभाष्यवच्छ्रुत्यर्थं न विवृणोति। कल्पसूत्रादिवन्न कर्मणां प्रयोगं दर्शयति। कल्पेषु कर्मणां क्लृप्तरूपप्रयोगप्रदर्शकेषु सूत्रेषु च लक्षणार्थेषु हेतूपन्यासमन्तरेण प्रदर्शितोऽर्थो मीमांसान्यायविरुद्धश्चेत् परिदृश्येत तत्र मीमांसान्यायस्यैव दुर्बलता। यदि हेतूपन्यासपुरस्सरमर्थः

प्रदर्शितो हेतूपन्यासश्च मीमांसानयविरोधी, तत्र मीमांसान्याय एव प्रबलः। व्यक्तमिदं कल्पसूत्राधिकरणे।

वेदार्थनिर्णयोपयोगिनो न्यायाः कतिचन कात्यायनापस्तम्बप्रभृतिभिः स्वीयश्रौतसूत्रेषु ज्ञापिताः, विवृताश्च तत्तद्व्याख्यातृभिः। जैमिनिना परं सामस्त्येन नया न्यरूप्यन्तेति ततो विशेषः। श्रौतसूत्रकारादतो निर्णयः क्वचिज्जैमिनीयविरुद्धोऽपि दृश्यते, यथा भगवानापस्तम्बः "वर्षासु रथकारः" इत्यत्र रथकारशब्दो रथकरणं निमित्तीकृत्य त्रैवर्णिकपर इत्यभिप्रैति। जैमिनिस्तु "माहिष्येण करण्यान्तु रथकारः प्रजायते" इति स्मृत्यनुसारेण रथकारशब्दं संकरजातिविशेषे रूढमभिप्रैति। एवं "सूक्तवाकेन प्रस्तरं प्रहरति" इत्यत्र प्रहरतिर्यागपर इति जैमिनिः। प्रहरणं प्रस्तरस्य प्रतिपत्तिमात्रं न यागपरमित्यापस्तम्बः। एवमन्यत्रापि। याज्ञिकास्तु मीमांसान्यायनिर्णीतमप्यर्थं स्वपरम्पराप्राप्तसूत्रविरोधे नानुतिष्ठन्ति। यथा प्रयाजेषु समिद्ध्य इत्यादिर्देवतोद्देशो जैमिनीयानाम्, याज्ञिकानान्तु "वसन्तमृतूनां प्रीणामि" इत्याद्यनुमन्त्रणानुसारेण वसन्तायेत्यादिर्देवतोद्देशः। कुहचिद्विवादेऽपि प्रायिकमैकमत्यं जैमिनेः श्रौतसूत्रकृताञ्च।

मीमांसान्यायानामुपयोग उपनिषदर्थनिर्णये बहुधा प्रादर्शि बादरायणेन। "प्रदानवदेव तदुक्तम्, लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि" इत्यादि तस्य निदर्शनम्। प्रायः सर्वेऽपि तान्त्रिकाः, किं बहुना, साहितीविदोऽपि मीमांसान्यायानाश्रयन्ते। "वषट्कर्तुः प्रथमभक्षः" इत्यत्र भक्षोद्देशेन प्राथम्यविधाने भज्येतैकप्रसारता। अतोऽत्र प्राथम्यविशिष्टभक्षान्तरमेव विधीयत इति जैमिनीयाः। न्यायमिममनुसृत्य द्वितीयमौर्वीमिव कार्मुकस्येत्यत्र मौर्वी द्वितीयामिव कार्मुकस्येति विपरिवृत्तिमिच्छन्त्यालङ्कारिका अविमृष्टविधेयांशदोषभिया। न केवलं श्रुतीनाम्, स्मृतीनाम्, गृह्यसूत्राणाम्, धर्मसूत्राणाम्, श्रौतसूत्राणाम्, किं बहुना, सर्वेषामपि ग्रन्थानां तात्पर्यनिर्णये मीमांसान्याया एव धुर्याः। व्यक्तमिदं मिताक्षरापराशरमाधवीयादिषु।

न्यायाश्चेमे न भारतीयैरेव, किन्तु सर्वदेशीयैरप्युपयुज्यन्ते। माक्सवेल् ( Maxwell ) प्रभृतयो निबन्धारः शासनविधीनां तात्पर्यनिर्णये ईदृशानेव न्यायान् सञ्चारयामासुः। शासनस्थानां केषाञ्चित्पदानामर्थसंदेहे निर्णीतार्थाद्वाक्यशेषादेव निर्णय इति तेषां न्यायो यववराहाधिकरणन्यायतो नातिरिच्यते। क्वचिच्छासन इदमायोजितं यदत्रैकवचनानि बह्वर्थानि भवन्तीति। तद्ग्रहैकत्वाधिकरणन्यायमनुवर्तते।

दत्तकदायभागादिविवादनिर्णये प्राचां निबन्धॄणामुक्तयः प्रमाणीक्रियन्ते स्म। तासामर्थापनाय स्मृतिकुशलाः पण्डिता न्यायाधिकरणेषु नियुज्यन्ते स्म। वैदेशिकभाषया स्मृतीनामनुवादेन नेदानीं

स्मृतिषु कुशला न्यायाधिकरणेषु नियुज्यन्ते। भाषान्तरानुवादाः किं मूलग्रन्थाऽन्यूनानतिरिक्तार्थमवगमयन्तीति विमर्शमर्हन्ति।

मीमांसाशास्त्रस्य साम्प्रतं व्यवहारे क उपयोग इति प्रश्नो बहुभिः समुपस्थाप्यते। न वयं तत्र प्रतिबन्द्योत्तरयामः। शासननामाधुनिकानामपि तात्पर्यनिर्णये मीमांसान्यायाः शरणीकरणीयाः। शासननिर्मातारः, तत्प्रयोक्तारो विवादनिर्णेतारः प्राड्विवाका वादिप्रतिवादिनोः कक्षामाश्रित्य विवदितारश्च यदि मीमांसान्यायानवगत्य सम्यक् सञ्चारयितुं प्रभवेयुस्तर्हि न्यायनिर्णयस्थानेषु बहूनि विवादपदानि न्यूनीभवेयुः। कति शासनानि राष्ट्रियप्रधानन्यायाधिकरणे (Supreme Court) न निराकृतानि न्यायाननुरोधीनीति।

पूर्वं राजभिर्महाराजैरन्यैश्च धनिकैस्तदा तदा विद्वत्परिषदः सममेल्यन्त। पण्डिता निश्चिन्ता जीवने स्वस्वशास्त्रनिशितबुद्धयः परां काष्ठां पाण्डित्यस्य प्राप्नुवन्। सरस्वत्युपासनयैवात्मनः कृतकृत्यान् मेनिरे। जग्रन्थुर्बहून् ग्रन्थान्। एकस्मिन् पण्डिते बहवश्छात्राः शास्त्राणि समभ्यास्यन्। शास्त्राण्येवं प्रचयमगमन्। साम्प्रतमन्यैव कथा, या सर्वत्र दरीदृश्यते। ईदृश्यामपि दुरवस्थायां संस्कृतविश्वविद्यालयोऽयं संस्कृतस्य संस्कृतेर्दर्शनानाञ्च रक्षणाय महान्तं यत्नमावहतीति पण्डितवर्गस्य नूनं पुण्यपुञ्जपरिपाकः। एतादृशदर्शनपरिषत्प्रवर्तयितॄणां पण्डितकुलं नितरामधमर्णम्।

अस्यां मीमांसापरिषदि सुतरां गौरवितोऽहमाध्यक्ष्यार्पणेन। ससन्तोषं कार्तज्ञ्यं परिषन्निर्वाहकमहोदयेभ्य आवेदयामि। अल्पेऽवकाशे मयाध्यक्ष्यपदमङ्गीकृत्य लिखितोऽयं लेख इति पूर्वमेव न्यवेदयम्।

तद्विद्वांसोऽनुगृह्णन्तु चित्तश्रोत्रैः प्रसादिभिः।
सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः॥

॥ इति शम् ॥

—:*:—

# आत्मनो विषयविषयिभावौ

प्रो० डाक्टरशान्तिभिक्षुशास्त्री, सिंहलेषु विद्यालङ्कारविश्वविद्यालये संस्कृतविभागस्याध्यक्षः ।

य एष आत्मा विषयः समक्षो
यश्चैष आत्मा विषयी परोक्षः ।
विवेचनीयः स इह प्रबन्धे
शृण्वन्तु सन्तस्तमिमं दयार्द्राः ॥

आत्मा हि दार्शनिकपदार्थविशेषः । तस्योपरिष्टाद् विषयविषयिभ्यां विचयमुपनीतस्य विचारः कृतः । तस्यायं मातृकासमुद्देशः—१. आत्मनो दार्शनिकविकासः, २. बहुषु तत्त्वेषु विभक्तस्यात्मनो दुर्दशा, ३. आत्मनो विषयभावो विषयिभावश्च, ४. विषयिभूतस्यात्मनः सत्यत्वम्, ५. दार्शनिकप्रक्रियायामनुपयोगिन आत्मानः, ६. विषयिभूतस्यात्मनो रहस्यमयता चेति । अथैतासां मातृकाणां यथाक्रमं निर्देशं विधास्यामः ।

## १. आत्मनो दार्शनिकविकासः

आत्मा हि भारतीयानां दार्शनिकानां कश्चित् पदार्थविशेषः । तत्र "आत्मैवेदं सर्वम्" ( छान्दोग्योपनिषद् ७।२५।२ ) इति ज्ञानमार्गपरायणा ब्राह्मणाः, सर्वमिदमनात्मकमिति शाक्यमुनेरनुयायिनः श्रमणाः ( "सब्बे धम्मा अनत्ता" धम्मपद २७९ ) । एवं सत्यां विप्रतिपत्तौ मध्यस्थस्य संदेहो जायते किन्वत्र सत्यम् । अजिज्ञासोस्तु परस्परविरोधाद् भवति मतिर्न किमपि हि सत्यमिति । एवं सत्यपि तत्त्वचिन्तको नोदास्ते । स दर्शनचर्चायामनुरागवान् भवति । दर्शनचर्चानुरागवशादेवात्मवादप्रसङ्गोऽत्रावतार्यते ।

तत्र यस्य सर्वस्यात्मत्वं प्रतिज्ञायते तस्य विचयः कर्तव्यः । शरीरमिन्द्रियाणि मनो जीवितं विषयश्चेति पञ्चधा विभागः सर्वं क्रोडीकर्तुं शक्नोति । एषु पञ्चसु पदार्थेषु शरीरेन्द्रियमनांसि सर्वदर्शनेषु संप्रतिपन्नानि । जीवितं बौद्धशास्त्रेषु प्रसिद्धं जीवितेन्द्रियनाम्नाप्यभिधीयते । यस्याभावान्मानवादिशरीरं विजहाति स्वकीयमौष्ण्यं मृतं चाभिधीयते तद्धि नाम जीवितेन्द्रियम् । विषयः पृथिव्या आरभ्य यावद् द्यौः सर्वो विविधः पिण्डः पिण्डस्थश्चार्थः । सोऽयं विषयो न केवलं दृष्टार्थं

देशकालप्रतिबद्धं सर्वविधं संगृह्णाति, प्रत्युत तादृशमदृष्टार्थमपि संग्रहीतुं प्रभवति। तत्र शरीरेन्द्रिय-मनोजीवितान्यपि सूक्ष्मदृष्ट्या विचार्यमाणानि पृथिव्यादिविषयान्तर्गतान्येव। नहि कश्चन पार्थिवादिपिण्डः पृथिव्यादिभ्यो व्यतिरिक्तं भवतीति वक्तुं शक्यते। मनइन्द्रियाणि मनुष्यशरीरेषु विकसितानि दृष्टानि। जीवितं व्यापकं तत्त्वं पारदादिषु धातुष्वपि स्वीक्रियते। तत् पारदादीनां मारणं चिकित्साशास्त्रेषु प्रसिद्धम्। वस्तुतो जीवितं नाम तत् तत्त्वं यद् विना कोऽपि पिण्डः स्वरूपाच्च्युतो भवति, विशीर्णो भवति, न स्वरूपे स्थातुं प्रभवति। एवं प्रविभक्तमिदं ज्ञानिनां वैदिकब्राह्मणानां नयेन 'आत्मैव', बौद्धानां नयेन तु नास्त्येव क्वचिदप्यात्मा।

एकस्य मते यदात्मवत् तदन्यस्य मते भवत्यात्महीनमिति जिज्ञासोः कृते विचित्रमेव। परमेतेनैतत्तु स्पष्टमेव भवति यत्सर्वात्मवादी यं दार्शनिकं पदार्थमात्मेति वदति, तमेवानात्मवादी न केवलं निराकरोतीत्येव न, प्रत्युत दार्शनिकपदार्थरूपेणापि न स्वीकरोति। तस्मादात्मपदेन सर्व-मात्मेति वादिनां कोऽभिप्राय इति विचार्यते। सर्वस्यास्य विश्वस्य किमप्येकमेव तत्त्वं मूलम्। तत्तत्त्वमात्मा। तथा चोक्तम्—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" (छान्दोग्योपनिषद् ६।२।१) इति। इदं हि मूलतत्त्वं यदा परिणतं भवति, तदा विविधे नामरूपे बिभर्ति। तदेतेषां बहूनां नामरूपाणां त्रिधा विभागः संक्षिप्य कर्तुं शक्यते। तथा हि—विश्वात्मा, पुरुषविधो महेश्वरः, शरीरात्मा च।

तत्र विश्वात्मा भवति सर्वधर्मकः सर्वशक्तिसम्पन्नश्च। तथा च श्रुतयः—"सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः" (छान्दोग्योपनिषद् ३।१४।२) इति, "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग् विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा॥" (मुण्डकोपनिषद् २।१।४) इति, "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽ-यमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति॥" (कठोपनिषद् ५।१५, श्वेताश्वतरोपनिषद् ६।१४, मुण्डकोपनिषद् २।२।१०) इति, "य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय" (छान्दोग्योपनिषद् ८।४।१) इति, "एतस्यैव वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्ति" (बृहदारण्यकोपनिषद् ३।८।९) इति च।

पुरुषविधो महेश्वरः कारकः (प्रेरकः) कर्मफलदाता च। अयमेवात्मा य उपास्यते जनैः। अस्यैवोच्चावचलोकवशाद् भवन्ति बहूनि नामधेयानि। अयमेव देवः सामान्येनाभिधीयते

चेत्, अयमेव भवति महादेवो विशेषेणाभिहितः। तथा च स्तुवन्त्येनं श्रुतयः—"ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद् धनम्॥" (ईशोपनिषद् १) इति, "स वा एष...आत्मा...सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः। स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्। एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः॥" (बृहदारण्यकोपनिषद् ४।४।२२) इति, "एष ह्येवैनं साधु कर्म कारयति तं यम् एभ्यो लोकेभ्य उन्निनीषते। एष उ एवैनमसाधु कर्म कारयति तं यम् अधो निनीषते। एष लोकपाल एष लोकाधिपतिरेष सर्वेशः॥" (कौषीतक्युपनिषद् ३।८) इति, "तमीश्वराणां परमं महेश्वरं तं देवतानां परमं हि दैवतम्। पतिं पतीनां परमं परस्ताद् विदाम देवं भुवनेशमीड्यम्॥" (श्वेताश्वतरोपनिषद् ६।७) इति च।

शरीरात्मा हि विविधेषु मनुष्यादियोनिषु दृष्टः कर्ता फलभोक्ता च। "एष आत्मान्तर्हृदयेऽणीयान्" (छान्दोग्योपनिषद् ३।१४।३) इति श्रुत्या क्षुद्रपरिमाणः कथ्यते। अस्यैव नामान्तरं जीव इति। तथा च श्रुतिः—"वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते॥" (श्वेताश्वतरोपनिषद् ५।८) इति।

एवं चतुर्धात्मविभागः—(१) मूलतत्त्वमात्मा एकः, अप्रकटितसर्वधर्मवान्। अयमात्मा नामापरिणामावस्था मूलतत्त्वस्य। (२) विश्वात्मा एकः, प्रकटितसर्वधर्मवान्। (३) ईश्वरः कारकः फलदायकः। (४) जीवः कर्ता फलभोक्ता च।

एतेषु चतुर्धा विभक्तेष्वात्मतत्त्वेषु सौगततत्त्ववादे धर्मास्तु सर्वे स्वीकृताः, परं सर्वधर्मक आत्मा प्रत्याख्यातः। कर्माणि तु स्वीकृतानि, कारकः कर्ता च न स्वीकृतौ। कर्मणां फलानि त्वङ्गीकृतानि, फलानां दाता भोक्ता चेति द्वावपि प्रत्याख्यातौ। संक्षेपेण प्रोच्यते चेत् सर्वधर्मयुक्तस्य कस्यचिदेकस्यात्मनः स्थाने बहवो धर्माः सौगतदर्शनस्य प्रधानभूताः पदार्थाः। एतेषां बहूनां धर्माणां वर्गीकरणं पञ्चसु राशिषु कुर्वन्ति सौगताः। ते हि नाम पञ्च स्कन्धाः। तथा चोपनिषत्प्रवर्तकानां ब्राह्मणानां यद् दर्शनमेकं सर्वधर्मकमात्मानमाश्रित्य प्रवर्तते स्म, तदेव दर्शनमात्मवादात् पृथग् विधाय बहुधर्मावलम्बनेन सौगतैरङ्गीकृतः। तथा चायं विकासक्रमः—(१)आत्मा एकः सर्वधर्मक इति प्रथमा कोटिः। (२) सर्वे धर्मा अनात्मान इत्यपोद्धारविधया प्रवृत्ता द्वितीया कोटिः। अत्रेदं नैव विस्मर्तव्यं यत् सर्वधर्मक आत्मा यथा श्रुतिषु प्रतिपादितस्तथा "नेति नेति" (बृहदारण्यकोपनिषद् २।३।६) इत्येवमादिवचनैर्निर्धर्मकोऽपि प्रतिपादितः। अत्रापि निर्धर्मता निर्वाणरूपेण सौगतैर्गृहीता, परम् आत्मा नैवोरीकृतः।

अत्र हि प्रथमो वाद एकात्मवादोऽद्वैतवादो वा वक्तव्यो भवति, यतः स बहुविधेषु भिन्नेषु शरीरेन्द्रियमनोजीवितविषयादिषु पदार्थेष्वेकमेव अद्वितीयमेव तत्त्वं पश्यति, अर्थाद् विविधेषु पदार्थेषु सर्वैर्लोकैरनुभूयमानां भेदबुद्धिं मिथ्यां मनुते। लोको हि कुम्भं शरावकपालाभ्यां भिन्नम्, शरावं कुम्भकपालाभ्यां भिन्नम्, कपालं कुम्भशरावाभ्यां भिन्नं स्वीकृत्य व्यवहरति। तत्त्वतो व्यवहारकाले भेदबुद्धिं समाश्रित्य कार्यं कुर्वाणोऽपि जानाति यदेतेषु बहुविधशब्दैरभिधातव्येषु पदार्थेषु सत्यं तत्त्वं मृत्तिकैव। यथा मृन्मयपदार्थेषु मृत्तिकैव सत्यं तत्त्वम् तथैव बहुधा विभिन्नेषु जगतः पदार्थेषु सत्यं तत्त्वमेकमेव। तच्च तत्त्वमात्मा (द्रष्टव्याऽत्र छान्दोग्योपनिषद् ६।१ २)।

द्वितीयो वादो बहुधर्मवाद इति नाम्ना वक्तव्योऽस्ति। यत एकत्वेन प्रतीयमानं कमपि पदार्थमयं वादो नैकत्वेन स्वीकरोति। विचयं (= विश्लेषणं) कर्तुमारभते। विचयेन लभ्यन्ते धर्माः पञ्चस्कन्धाभिधानाः। आत्मा त्वहंममादिव्यवहाराश्रयोऽपि जगतो मूलतत्त्वरूपेण न क्वापि दृश्यते। तेन बहवो धर्मा एव मूलभूतास्तत्त्वग्रामाः। तैरेव दर्शनमारब्धव्यम्, न तु कमपि शशविषाणायमानमात्मानं सर्वधर्मकं मत्वा दर्शनं प्रवर्तयितव्यम्।

## २. बहुषु धर्मेषु विभक्तस्यात्मनो दुर्दशा

अस्य सर्वस्य मूलहेतुरात्मा सच्चिदानन्दलक्षणः समर्थ्यते संप्रदायविद्भिः। तत्र सत्ता चिदभिन्ना, चित् सत्ताभिन्ना। सच्चिदोरन्यत्वं वा द्वैतं वा भेदो वा नास्ति। आत्मनः स्वरूपभूतो य आनन्दः स शान्तिरेव। अपरिणामावस्थायां भेदस्याभावाद् दुःखादिक्षोभो नैव संभवति। सौगतास्त्वभिन्नमेकं वस्तु यतो नैव स्वीकुर्वन्ति, ततस्तेषां संस्कृतदशायां सर्वधर्मा दुःखा एव। एष (= चिदभिन्नसत्तावादः) संप्रदायविदां दुराग्रह एव, आत्मानं ये चिद्घनमेव मन्यन्ते, तस्य जडत्वं नांशतोऽपि स्वीकुर्वन्ति। वस्तुतः सर्वधर्मक आत्मा सर्वं जडतत्त्वं चेतनतत्त्वं च स्वात्मनि क्रोडीकरोति। यथा बीजेऽङ्कुरपत्रपुष्पफलादीनां शक्तिरूपेणावस्थानं भवति, तथैवात्मनि सर्वेषां जड-चेतनतत्त्वानां शक्तिरूपेणावस्थानं भवति। वस्तुतोऽयमात्मा शक्तिघन एव। शक्तेरेवायं प्रपञ्चः सत्ता, चैतन्यम्, आनन्दादिरूपेण परिणतिः। अत एवात्मन अपोद्धारप्रसङ्गे सौगतैः सर्वे धर्मा न केवलमनात्मान एव, प्रत्युत संस्कृतदशायां तेऽनित्या अपि कथिताः। धर्माणामनित्यत्वं शक्ति-घनत्वादेव भवति। शक्तिर्गतेर्नामान्तरमेव। नहि निरन्तरं गतिशीलं वस्तु तदवस्थमविकृतं भवति। सौगतैर्यदपोद्धृत्य प्रोक्तं तदनपोद्धृतरूपेण श्रूयते। तथा हि शक्तियोगस्य तत्र श्रवणम् (द्रष्टव्याऽत्र श्वेताश्वतरोपनिषद् १।३,४।१,६।८) इति। शक्तिघनोऽयमात्मा परि-

णतः सन् जडचेतनमयः सर्वैः साक्षात्कर्तुं शक्यते। शक्तिमन्ति पृथिव्यादीनि यान्यपुरुषविधानि तानि जडानि। पुरुषविधानि तु चैतन्यतारतम्येन स्थितानि। परिणतावस्थायां दृश्यमानौ जडचेतनधर्मौ शक्तिरूपेण मूलेऽपि तत्त्वे भवितव्यौ। अन्यथैकस्मिन्नेवात्मतत्त्वे विद्यां चाविद्यां च, संभूतिमसंभूतिं च प्रतिपादयन्त्यः श्रुतयः (ईशोपनिषद् ९-१४) अपार्थाः स्युः। स्मृतिरप्यसंगता भवेद् यात्मतत्त्वं "प्रभवः प्रलयः स्थानं ··अमृतं मृत्युः सद् असत्" चेति प्राह (द्रष्टव्या गीता ९।१८,१९)। एवं श्रुतिस्मृतिपर्यालोचनेन सर्वधर्मक आत्मा जडचेतनमयः। तत्र जडतत्त्वमात्मनः पृथक्कृत्य रूपस्कन्धरूपेण सौगतैः स्थापितम्। चेतनतत्त्वं तु संज्ञासंस्कारवेदनास्कन्धसहिते विज्ञानस्कन्धे संगृहीतम्। जडचेतनतत्त्वानां शक्तिमत्त्वं निरन्तरपरिणामित्वं प्रतीत्यसमुत्पादनयेनोपबृंहितम्।

एवं सर्वधर्मक आत्मा य उपनिषत्स्वेकपदार्थरूपेण स्थित आसीत् स सौगतैः स्वकीये दर्शने चूर्णीकृतः। हन्त सौन्दर्यशालिनी प्रतिमा धर्मविचयमुद्गरेण पांसुराशितां नीता। परमुपनिषत्सु निर्धर्मकोऽपि (= निर्गुणोऽपि आत्मा यः परिणामेन मनागपि न स्पृष्टः, शान्तिस्वरूपेणानन्देन लक्षितोऽभवत्, सोऽपि सौगतदर्शने सर्वथैवालक्षितो बभूव। अत्रापि तेषां धर्मविचयसिंहस्तथोत्पपात यथा वराकः शान्त आत्मा स्वकीयां शान्तिं सौगतेभ्यः समर्प्य स्वयं पलायितः। पलायिते चात्मतत्त्वे या शान्तिरवशिष्टा सा तैः परमयानुकम्पया गृहीता, पोषिता, असंस्कृतशब्देन पूजिता, शून्यता-तथता-भूतकोटिरित्येवादिपदैर्वाग्व्यवहारतां नीता, निर्वृतिनिर्वाणादिशब्दैः सविशेषं भाविता।

तथा च पूर्वं यश्चतुर्धा विभक्त आत्मा स निर्धर्मकसर्वधर्मकोपाधिभ्यां द्विधैव विभक्तो भवितव्यः। निर्धर्मको नाम निर्गुणः, अर्थात् शान्त आत्मा। एतमेव संप्रदायविदः परमार्थमात्मानं मन्यन्ते। तथा चाख्यानम्—एकदा बाध्वं नाम ब्रह्मविदमुपसंक्रम्य बाष्कलिर्नाम ब्रह्मविद्याजिज्ञासुर्ब्रह्मविषयां परिपृच्छां चकार। बाध्वस्तु प्रतिवचनमदत्त्वैव तूष्णीं स्थितः। पुनरपि बाष्कलिरनुयुङ्क्ते स्म। बाध्वः पुनरपि तूष्णीं तस्थौ। तृतीयमनुयुक्तस्तु बाध्वः प्रत्युवाच—"ब्रूमः खलु त्वं तु न विजानासि, उपशान्तोऽयमात्मा" (ब्रह्मसूत्रशाङ्करभाष्ये ३।२।१७ इत्यत्रोद्धृता श्रुतिः) इति। शान्तोऽयमात्मा न वचनप्रकाश्यो भवतीति बाध्वो मौनेनैवात्मानं प्रोवाच। एवं शान्तमात्मानं सर्वथा शान्तेः पृथक्कृत्य दूरमपसारयन्ति सौगताः, शान्तिं तु निर्वृतिपदेनाभिधेयां साक्षात्कर्तुं यतन्ते। वाचाऽप्रकाश्यमानत्वात् तेऽपि तां प्रति मौनमेवाश्रयन्ति। तथा चाहुः–"परमार्थो ह्यार्याणां तूष्णींभावः" (मध्यमकवृत्तिः, पृ० ५६) इति, "न मौनैस्तथागतैर्भाषितम्। मौना हि

भगवन्तस्तथागताः" ( लङ्कावतारसूत्रम् ) इति, "यस्यां रात्र्यां च धिगमो यस्यां च परिनिर्वृतिः। एतस्मिन्नन्तरे नास्ति मया किञ्चित्प्रकाशितम् ॥" (लङ्कावतारसूत्रम्, जापानसंस्करणम्, पृ० १४४) इति च। यश्चात्मा सर्वधर्मकः, स एव जगतो मूलम्। एतस्मादात्मनो धर्मांशं गृहीत्वा सौगताः धर्म्यंशं परित्यजन्ति। त एत एव धर्मास्तैः पञ्चसु स्कन्धेषु विभक्ताः।

### ३. आत्मनो विषयभावो विषयिभावश्च

आत्मा विषयो नास्ति यथास्माकं प्रत्यक्षो भवेत्। विषयोऽत्र दार्शनिकपरिभाषायां बहिर्धा स्थितः पदार्थो यस्य मनुष्योऽनुभवं कर्तुं शक्नोति। अनुभवद्वारा च यस्य प्रतिबिम्बितं मनसि भवति। आत्मपरिणामभूतं जगद् वयं पश्यामो विविधपृथिव्यादिवृक्षवनस्पत्यादिमनुष्यपशुपक्ष्यादि-पिण्डमयम्। विषयभूत आत्मा स्वीक्रियेत चेद् मात्रातः (= मैटर् इत्याख्याद् दार्शनिकपदार्थात् ) अभिन्न एव भवेदात्मा। मात्रा तु यथानुभूयते तथात्मास्माभिरनुभूयते। तस्मादात्मा विषयो नास्त्येव। आत्मा विषयी भवति। विषयी हि नाम स दार्शनिकपदार्थो यस्याध्यात्मं स्थितिर्भवति, न बहिर्धा। परमध्यात्मं स्थितो यो विषयी सर्वमिदं जानाति शृणोति पश्यति जिघ्रति स्पृशति तस्यैव सर्वमिदं ज्ञेयं श्रोतव्यं द्रष्टव्यं घ्रातव्यं स्प्रष्टव्यं वार्थजातं न परिणामः। नहि वयं विषयिणो जनाः साम्प्रतं स्वकीयेन मनसा विज्ञानेन वा किमपि वस्तु द्रव्यभूतं निर्मातुं शक्नुमः। तस्मादस्म-दादिभ्य इतरः कश्चनान्यो विषयी भवितव्यो यस्य परिणामभावेन सर्वमिदं वयं पश्यामः। तस्यायं विज्ञानांशोऽस्मासु विद्यते, येन वयं विज्ञातारः। वस्तुतो मूलतत्त्वं यथा विषयभावातीतं तथा विषयि-भावातीतमपि। एवं सत्यपि तदेकमेव तत्त्वं क्वचिद् विषयः क्वचिद् विषयीभवति वाग्विषयः। अत एव श्रुतिः—"आत्मन्येवात्मना पश्यति" ( बृहदारण्यकोपनिषद् ४।४।२३ ) इति वदन्ती यथात्मनो विषयिभावं ख्यापयति, तथैव "त्रयं वा इदं नाम रूपं कर्म·····आत्मो एकः सन्नेत-त्त्रयम्" (बृहदारण्यकोपनिषद् १।६।१-३ ) इत्येवं वदन्ती विषयभावं चाप्यात्मनः प्रोवाच।

### ४. विषयिभूतस्यात्मनः सत्यत्वम्

विषयिभूत एवात्मा यो ज्ञानमयः स एव सत्यः। तदन्यत्सर्वमिदं जगद् यदुपनिषदां नयेन विषयभूतमात्मैव तन्मिथ्येति, नवीनानां वेदान्तिनामाग्रहः। अयमेवाग्रहो विज्ञानवादिनां बौद्धानामपि ये पुरातनानां पञ्चस्कन्धवादं तात्त्विकं नोरीकुर्वन्ति, प्रत्युतैकेनैव विज्ञानस्कन्धेन सर्वां दार्शनिकप्रक्रियां प्रपञ्चयन्ति। तथा च स्थिरमतिस्त्रिंशिकायां विज्ञप्तिमात्रतायाम्—"आत्मधर्मोपचारो हि विविधो यः प्रवर्तते। विज्ञानपरिणामेऽसौ" इति प्रथमकारिकापादत्रयं विवृण्वन्नाह—"आत्मा

जीवो जन्तुर्मनुजो माणव इत्येवमादिक आत्मोपचारः। स्कन्धा धातव आयतनानि रूपं वेदना संज्ञा संस्कारा विज्ञानमित्येवमादिको धर्मोपचारः। अयं द्विप्रकारोऽप्युपचारो विज्ञानपरिणाम एव न मुख्ये आत्मनि धर्मेषु चेति। कुत एतत्? धर्माणाम् आत्मनश्च विज्ञानपरिणामाद् बहिरभावाद् इति।

विषयभूतस्यात्मनोऽर्थात् सर्वस्येन्द्रियग्राह्यस्य दृश्यमानस्य चित्रफलकादिषु विलेख्यार्हस्य यन्त्रद्वारा छायाचित्रतां प्रापणार्हस्य जगतो रूपं विज्ञानातिरिक्तं नास्तीति वदतां दार्शनिकानां नयेन क्षुद्रा विषयिणो मनुष्या वस्तुतो न स्वस्थमनुष्या ये बहिःस्थितं जगद् विज्ञानातिरिक्तमपि पश्यन्ति। अस्माद्दृशोऽस्वस्थेषु सन्ति केचन स्वस्था ये केवलं विज्ञानमेव पश्यन्ति। भेदस्त्वयमेव यद् बहिर्भूतस्य जगतो द्रष्टारः सामान्यजना वस्तुत उत्स्वप्नायमानाः। अपरे ये बहिर्भूतं जगद् न पश्यन्ति ते सुप्ताः। अहं तु जगद्रूपेण दृश्यमानं स्वप्नमेव वरं मन्ये, न तु सर्वं विषयभूतं तत्त्वं विलोप्य स्थितं केवलं विज्ञानम्। परं दार्शनिकस्त्वन्यथैवाह—"विज्ञप्तिमात्रमेवेदम्, असदर्थावभासनात्। यथा तैमिरिकस्यासत् केशोण्डुकादि ( = केशजालादि ) दर्शनम्॥" ( विंशिका विज्ञप्तिमात्रता ) इति।

विषयिभूतस्य सर्वस्यास्य मूलभूततत्त्वस्य विज्ञानस्य यो मनुष्यादिजीवेषु सद्भावः, सर्वमूलभूतस्यात्मनो यो मनुष्यादिजीवेषु जीवात्मरूपेण पृथग्भावः, स न सत्यः। एकं हि विज्ञानं यदात्मा। यददो बृहद् विज्ञानं यस्य परिणामेन सर्वमिदं जातम्, यच्चेदं क्षुद्रं विज्ञानं मनुष्येषु वर्तते तदेकमेव। नहि घटस्था मृत्तिका पृथिवीमृत्तिकातो भिद्यते। तथा च श्रुतिर्द्वयोरेव विज्ञानयोर्द्वयोरेवात्मनोरभेदमाह—"तत् त्वम् असि" ( छान्दोग्योपनिषद् ६।८।७ ) इति। अत्रेदं न विस्मर्तव्यं यद् विज्ञानवादिनां बौद्धानां तथा वेदान्तिनां ब्राह्मणानां विज्ञानमेकमेव नास्ति। विज्ञानवादिनां विज्ञानं स्कन्धरूपतां न जहाति। वेदान्तिनां तु तदेकमेव तत्त्वम्।

## ५. दार्शनिकप्रक्रियायामनुपयोगिन आत्मानः

विश्वस्य यो मूलकारणमात्मा, तमेव गवेषयन्तो वयमात्महीनान् सौगतसम्मतान् पञ्चसु स्कन्धेषु प्रविभक्तान् धर्मान्, आत्महीनमेव विज्ञानस्कन्धं च विमृशन्तो विषयिरूपस्य ब्राह्मणानां संमतस्यात्मनो बौद्धानां संमतस्य च विज्ञानस्य परमार्थतां निर्धारितवन्तः। साम्प्रतं प्रकरणपूर्त्यर्थम्, सन्ति केचनात्मानो दार्शनिकैरभ्युपगता ये सर्वस्यास्य प्रपञ्चस्य मूलकारणरूपा नैव भवन्ति, तेषां दार्शनिकप्रक्रियायां सर्वथा निरर्थकानामात्मनां निराकरणमपेक्ष्यते। तेषु निराकरणीयेष्वात्मसु

सांख्यानां पुरुषः पूर्वं प्रत्याख्यातव्यः। यतोऽयं परमोऽलसो न किमपि करोति। जगदादिकार्यं यत् प्रकृतिः करोति तद् सर्वमहं करोमीति भावयन् पश्यति। अस्य परमालसस्य द्रष्टुः पुरुषस्य स्वीकारेण न किमपि दार्शनिकानां प्रयोजनम्। केवलमस्य या विषयिता तां प्रकृतौ समारोप्य दार्शनिकैः सोऽयं प्रत्याख्यातव्यः। एवं विषयरूपा प्रकृतिर्यदा विषयिरूपिणी भवति तदा सात्मनो विज्ञानस्य च नामान्तरं भवति, न त्वन्यत् किञ्चित्। नैयायिकवैशेषिकाणां प्रक्रियायां य आत्मा स्वीकृतः, सोऽपि सर्वस्यास्य जगतो न मूलम्, तेन दर्शनाद् बहिष्करणीय एव। नह्येतादृशेन विकलाङ्गेनात्मना परमात्मना वास्माकं किमपि दर्शनकृत्यं भवितुं शक्नोति, यो जगदादिकार्यं कर्तुं परमाणुपुञ्जं शरणं गच्छति। नैयायिकवैशेषिकाणां कृते सोऽयं कुलालो योऽन्यतो मृत्परमाणून् भिक्षित्वा घटशरावादीन् निर्माति। अस्यात्मनो चेतनार्थं कुम्भकारादिगृहेऽवस्थानं वरम्, न तु दार्शनिकचर्चाप्रसङ्गे पण्डितानां गोष्ठ्यां स्थातुम्। मीमांसकानां जैनानां च बहुपदार्थवादिनामात्मा नैयायिकवैशेषिकाणामात्मेव विकलः कश्चिद् दार्शनिकः पदार्थः सर्वधर्मयुक्तः सर्वस्य मूलभूतो यो भवति दार्शनिकः पदार्थः, स एवाद्वयवादिनां श्रमणब्राह्मणानां प्रियो भवितुं शक्नोति। निराकरणीयत्वेनात्र निर्दिष्टा आत्मवादा द्वैतधियैव समादरणीयाः। अद्वैततत्त्वमेव परमार्थः, स एव दार्शनिकैः स्वीकरणीयः। तथा च श्रुतिः—"मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥" (बृहदारण्यकोपनिषद् ४।४।१९) इति, "यदेवेह तदमुत्र यदमुत्र तदन्विह। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥" (कठोपनिषद् ४।१०) इति च।

## ६ विषयिभूतस्यात्मनो रहस्यमयता

आत्मवादिनां नयेन आत्मनः परिणामेन सर्वमिदं बभूव तथैव विज्ञानवादिनां नयेन विज्ञानस्य परिणामेन सर्वमेतज्जातम्। आत्मा तु "विज्ञानमानन्दं ब्रह्म" (बृहदारण्यकोपनिषद् ३।९।२८), "सत्यं ज्ञानमनन्तं ब्रह्म" (तैत्तिरीयोपनिषद् २।१) इति श्रुत्युक्तदिशा न विज्ञानाद् व्यतिरिच्यते। परिणतं हि विज्ञानं विकारग्रामास्पृष्टं नैव भवितुं शक्नोति। एवं विकुर्वाणमिदमात्माख्यं मूलतत्त्वं विज्ञानं किं सर्वं विकृतं भवति, अथवा केनाप्यंशेन विकृतं भवतीति प्रश्नः पूर्वेषां दार्शनिकानां संमुख आसीत्। तत्र केचन स्वल्पांशेन विकृतं भवतीति मन्वते (द्रष्टव्यमत्र, ऋग्वेदे १०।९०।५)। अपरे तु परिणामं प्रति स्वीयामनास्थां घोषयन्ति (द्रष्टव्याऽत्र श्वेताश्वतरोपनिषद् ६।८)। एतस्य विवादस्य किं समाधानम्? का संगतिः? किं परिणामवादः केवलं शब्दोपचारः? एतस्य दुरूहस्य प्रश्नजातस्य समाधानं नव्यैर्वेदान्तिभिः कृतम्। तेषां नयेन

## आत्मनो विषयविषयिभावौ

सर्वमिदमात्मविवर्त एव । विवर्तो नाम प्रतिभासमानस्य परिणामस्य मिथ्यात्वम् । यथा रज्जै रजतबुद्धिः । रज्जौ वा सर्पबुद्धिः । एवं सति दृश्यमानं सर्वमिदं यल्लक्षणं वर्तते, तल्लक्षणो नास्त्यात्मा इति स्वीकर्तव्यमेव भवति । दार्शनिकपरिभाषया प्रोच्यते चेत् सर्वमिदं विषयलक्षणं मिथ्या । ततो विलक्षणं यत्किमपि विषयिलक्षणं तत्त्वं वर्तते तदेव सत्यम् । एषा भारतीयानां श्रमणब्राह्मणाना-मद्वैतवादिनां दर्शनस्य पराकाष्ठा । आधुनिका मात्रावादिनस्तु विषयलक्षणमेवैकं तत्त्वं ( 'मैटर्' इति नाम्ना ) मूलं मत्वा विषयिलक्षणं तत्त्वं ( आत्मादि ) विषयलक्षणस्य तत्त्वस्य विकास इति चिन्तयन्ति । इयमन्या काष्ठा यत्र विषयिभूतं ( आत्मादि ) सर्वं शिरोऽवयवभूतस्य मस्तिष्कस्य कल्पनामात्रमभ्युपगम्यते । द्वयोरप्यनयोर्दर्शनकोट्योरेषा भवति नास्तिक्यप्रवणा । आस्तिकास्तु स्वकीयं दर्शनस्य मूलं तत्त्वं रहस्यं मत्वोपतिष्ठन्ते । तथा च श्रुतिः--"नायमात्मा प्रवचनेन लभ्यो न मेधया बहुना वा श्रुतेन" ( कठोपनिषद् २।२३ ) इति । स्मृतिश्चापि परमाश्चर्यमयमेनमाह ( द्रष्टव्याऽत्र गीता २।२९ ) । सौगताश्चापि—"स एवानास्रवो धातुरचिन्त्यः" ( त्रिंशिका ) इति वदन्तस्तमिमं रहस्यमुपासते ॥



# मीमांसकतार्किकाभिमतोपमास्वरूपविचारः

श्रीश्यामसुन्दरशर्मा, वाराणसीस्थब्रह्मर्षिबलदेवसंस्कृतविद्यालयप्रधानाध्यापकः ।

### प्रमाणस्वरूपविचारः

"मानाधीना मेयसिद्धिर्मानसिद्धिस्तु लक्षणात्" इति रीत्या कस्यचिदपि वस्तुनः सिद्धौ लक्षणप्रमाणाभ्यां भाव्यम् । तत्र किं तावत् प्रमाणलक्षणमित्यभिकाङ्क्षायां 'प्रमाकरणत्वम्' प्रमाणसामान्यलक्षणमित्यत्र नास्ति कस्यचिद् विवादः । परं किं तावत् प्रमात्वमित्यत्र वर्तते दार्शनिकानां मतभेदः ।

तथा हि—तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वे सत्यनुभवत्वमेव प्रमात्वमिति नैयायिकाः । एतेषां मतेऽनुभूतेरेव प्रमात्वं न तु स्मृतेरिति बोध्यम् । अनुभूतिः प्रमेति प्राभाकर-मीमांसकाः । भाट्टास्तु—अनधिगताबाधितविषयकत्वे सति ज्ञानत्वमेव प्रमासामान्यलक्षणम् । अद्वैतवेदान्तिनस्तु—स्मृतिव्यावृत्तम् "अनधिगताबाधितविषयज्ञानत्वम्", स्मृतिसाधारणं तु "अबाधितविषयज्ञानत्वम्" इति । विशिष्टाद्वैतवादिनस्तु "यथावस्थितव्यवहारानुगुणज्ञानं प्रमा" इति । सांख्यास्तु—असन्दिग्धाविपरीतानधिगतविषयचित्तवृत्तिः प्रमेत्याहुः ।

एवंप्रकारेण सर्वेऽपि दार्शनिकाः स्वस्वदर्शनरीत्या प्रमात्वं परिष्कुर्वन्ति ।

**प्रासङ्गिकं मतभेदेन प्रमाणभेदनिरूपणम् ।** भवति हि सामान्यधर्मज्ञानाद् विशेष-जिज्ञासेति सामान्यनियमः, तदनुसारेण कानि प्रमाणानीत्यभिकाङ्क्षायाम्—"प्रत्यक्षानुमानो-पमानशब्दाः प्रमाणानि" इति गौतमसूत्रानुसारेण चत्वारि प्रमाणानीति नैयायिकानां मतम् ।

शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते ।
अनुमानगतार्थत्वादिति वैशेषिकं मतम् ॥

इत्यादिरीत्या प्रत्यक्षानुमाने द्वे प्रमाणे इति वैशेषिकाः । प्रत्यक्षानुमानोपमानागमार्था-पत्त्यनुपलब्धय इति षट् प्रमाणवादिनो भाट्टा अद्वैतवेदान्तिनश्च । प्रत्यक्षानुमानशब्दा-स्त्रीण्येवेति विशिष्टाद्वैतवादिनः सांख्याश्च । प्रत्यक्षानुमानोपमानागमार्थापत्तय इति पञ्चप्रमाण-वादिनः प्राभाकराः । प्रत्यक्षमेवेति चार्वाकाः । चेष्टाऽपि प्रमाणमिति तान्त्रिकाः । सम्भवैतिह्ये अपीति पौराणिकाः । इति प्रासङ्गिकं प्रमाणभेदनिरूपणम् ।

## तार्किकमतेनोपमानस्वरूपविचारः

तार्किकास्तावत्—"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥" इत्याद्युक्त्या उपमानं शक्तिग्राहकप्रमाणेष्व-न्तर्भावयन्ति। तथा च गौतमसूत्रम्—"प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्" इति।

अथ तद्भाष्यम्—प्रज्ञातेन सामान्यतः प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति। यथा गौरेवं गवय इति। किं पुनरत्रोपमानेन क्रियते (इत्याकाङ्क्षायाम्) यदा खल्वयं गवा समानधर्मं प्रतिपद्यते, तदा प्रत्यक्षतस्तमर्थं प्रतिपद्यत इति। समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थं इत्याह—यथा गौरेवं गवय इत्युपमाने प्रयुक्ते गवा समानधर्ममर्थमिन्द्रियसन्निकर्षादुपलभमानोऽस्य गवयशब्दः (संज्ञि) संज्ञेति संज्ञासंज्ञिसम्बन्धं प्रतिपद्यत इति। यथा मुद्गस्तथा मुद्गपर्णी, यथा माषस्तथा माषपर्णीत्युपमाने प्रयुक्ते उपमानात् संज्ञासंज्ञिसम्बन्धं प्रतिपद्यमानस्तामोषधीं भैषज्यायाहरति। एवमन्योऽप्युपमानस्य लोके विषयो बुभुत्सितव्य इति वात्स्यायनं भाष्यम्।

अथ सूत्रभाष्ययोर्व्याख्यानम्। तदनुसारेण गोसदृशो गवय इति सादृश्यज्ञानमुपमानम्। गवयो गवयपदवाच्य इति संज्ञासंज्ञिज्ञानमुपमितिः। एतादृशं सादृश्यज्ञानं चातिदेशवाक्या-धीनम्। तथा हि—केनचिदारण्यकेन ग्रामीणायोक्तम्—गोसदृशो गवय इति। पश्चाच्च ग्रामीणेन क्वचिदरण्यादौ गवयो दृष्टः। तदा तद्गवयदर्शनेन गोसादृश्यज्ञानं जायते, तदेवोपमानमिति। तदेवोपमितेः करणम्। अतिदेशवाक्यार्थस्मरणन्तु व्यापार इति, करणत्वस्य व्यापारनियतत्वात्। तथा चोक्तम्—व्यापारवदसाधारणं कारणं करणमिति। व्यापारत्वञ्च—तज्जन्यत्वे सति तज्जन्य-जनकत्वम्।

तथा च गोसदृशो गवय इति सादृश्यज्ञानमुपमानम्, एतदेवोपमितिं प्रति करणम्। अतिदेशवाक्यार्थस्मरणं व्यापारः। गवयो गवयपदवाच्य इति संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिरिति। न त्वयं गवयपदवाच्य इति, गवयान्तरे शक्तिग्रहाभावप्रसङ्गात्।

एतावता प्रबन्धेनायमर्थः परिनिष्पन्नो भवति यद् उपमाननामकं प्रमाणं गवयो गवयपद-वाच्य इत्यादिरूपेण शक्तिग्राहकमिति। न चैतादृशस्योपमानस्य प्रमाणान्तरत्वे मानाभावः। न च प्रत्यक्षादिप्रमितिविजातीयप्रमितिकरणत्वात् तस्य प्रमाणान्तरत्वम्, उपमितेः प्रत्यक्षादिप्रमितितो विजातीयत्वाभावादिति वाच्यम्; चक्षुरादिव्यापाराभावेऽप्युपमितेरुत्पादसत्त्वेन चाक्षुषादि-

प्रत्यक्षत्वासंभवात्। नापि मानसबोधात्मिका उपमितिः, मानसोत्तरमनुत्पद्यमानत्वेऽप्युपमिनोमीति प्रतीतिविषयत्वात्, उपमित्यनन्तरं साक्षात्करोमीति प्रतीतेरनुदयेन तत्र प्रत्यक्षसत्त्वे मानाभावाच्च। अन्यथाऽनुमितेरपि मानसत्वापत्तिः स्यात्। नाप्यनुमितिः, व्याप्त्यादिज्ञानं विनाप्युदयात्। नापि शब्दे तस्यान्तर्भावः, पदज्ञानाजन्यत्वात्। नापि स्मृतौ तस्यान्तर्भावः, अननुभूतार्थस्य उपमितिविषयत्वेन स्मरणस्यानुभूतविषयत्वेन वैजात्यात्। अत उपमितेर्नान्यासु प्रमास्वन्तर्भावः। ततश्चोपमानस्य नान्येषु प्रमाणेष्वन्तर्भाव इति। तथा चोपमानं प्रमाणान्तरम्। तच्च शक्तिग्राहकमिति नैयायिकप्रामाणिकाः।

## अथ मीमांसकमतम्

मीमांसकास्तु नैतादृशमुपमानं स्वीकर्तुं क्षमाः, तस्य शब्देऽन्तर्भावसत्त्वात्। तत्र आप्तोपदेशरूपशब्देनैव गवयरूपार्थप्रतीतेः। अतिदेशवाक्यार्थस्मरणसहकृतेन्द्रियसन्निकर्षजन्यत्वाच्च सविकल्पकप्रत्यक्षमेव स्यात्।

यत्तु "प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्" इति, तत्र पृच्छामः—किं गवयस्वरूपालम्बनमेतज्ज्ञानमभ्युपगम्यते तद्गतगोसादृश्यालम्बनं वा। नाद्यः, इन्द्रियसन्निकर्षोत्पन्नत्वेन तस्य प्रत्यक्षत्वात्। न द्वितीयः, अतिदेशवाक्यादेव गवयगतत्वेन गोसादृश्यस्यावगतत्वेन तज्ज्ञानस्य स्मृतित्वात्। ननु सादृश्यविशिष्टगवयग्राहकत्वेन स्मृतिप्रत्यक्षाभ्यामतिरेक इति चेत्? न, उक्तदोषानतिवृत्तेः। यद्यतिदेशवाक्यार्थविज्ञानादधिकार्थानवगमस्तर्हि गवये स्मृतिरूपमेवैतज्ज्ञानं स्यात्, अधिकार्थविभासे त्विन्द्रियजन्यत्वात् प्रत्यक्षत्वमिति। ननु स्मरणान्तरितेन्द्रियव्यापारं कथं प्रत्यक्षमिति चेत्? न, इन्द्रियसम्बद्धभावस्यैव प्रत्यक्षत्वात्। किञ्च, श्रुतातिदेशवाक्यानामित्यपि न वाच्यम्, अश्रुतातिदेशवाक्यानामपि वने गवयदर्शनोत्तरकालं गोसदृशोऽयमिति ज्ञानोत्पत्तिदर्शनात्।

अथाश्रुतातिदेशवाक्यानामयं स गवय इति संज्ञानुसन्धानेन ज्ञानं नोत्पद्यते। मा नाम गवयसंज्ञावेदिष्ट, उपमानप्रमेयं तु गोसादृश्यविशिष्टं गवयं विदन्त्येव। न च संज्ञासंज्ञिसम्बन्धपरिच्छेद एवोपमानफलम्। न चाश्रुतातिदेशवाक्यार्थस्य तथा प्रतिपत्तिरस्तीति वाच्यम्, अतिदेशवाक्यादेव सम्बन्धावगतिसम्भवेनास्योपमानफलत्वासम्भवात्।

अत उपमानस्य स्वरूपं फलं चान्यदेव वाच्यमिति कृत्वा आह भगवान् शबरस्वामी—उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति, यथा गवयदर्शनं गोस्मरणस्येति।

अथ तद्व्याख्यानम्—पूर्वदृष्टे स्मर्यमाणेऽर्थे दृश्यमानार्थसादृश्यज्ञानमुपमानम्। याऽसावस्माभिर्नगरे दृष्टा गौः साऽनेन गवयेन सदृशीति। प्रत्यक्षेण पूर्वदृष्टायां गवि स्मर्यमाणायाञ्च वने गवयदर्शनादेतत्सदृशी गौरिति यद्विज्ञानं तदेवोपमानमिति गोलार्थः। ननु सादृश्यं नाम न किञ्चिद् वस्तु धर्मिणां भिन्नमभिन्नं वा सम्भवति, आद्ये पृथगुपलब्धिप्रसङ्गात्, अभेदे तन्मात्रतापातात्। पुरःस्थितवस्तुगतं च सादृश्यमगृहीतप्रतियोग्यपि जातिवद् गृह्येत। ननु प्रतियोग्यपेक्षमेव सादृश्यं सदेति चेत्? न, उत्पत्तौ ज्ञप्तौ च तदपेक्षाभावात्। मृतेऽपि देवदत्ते तत्सादृश्यं यज्ञदत्तस्य निष्पद्यतेऽवगम्यते च, अतः कल्पितमेव तद्वस्तुरूपं सादृश्यं स्यादित्याशङ्कावानाह—किं पुनः सादृश्यमिति। तत्रोत्तरम्—अर्थान्तरयोगिभिः सम्बन्धिसामान्यैरर्थान्तरस्य योगः सादृश्यम्। यथा गोजातियोगिभिः कर्णाद्यवयवसामान्यैर्गवयजातेर्योगो गवयस्य गोसादृश्यम्, गवयसंयोगिभिश्च गोर्योगस्तत्सादृश्यम्। अत एव च सामान्यभूयस्त्वाल्पत्ववशेन प्रकर्षाप्रकर्षौ सुसदृशमीषत्सदृशमिति।

जात्यन्तरयोगिभिरवयवसामान्यैर्यो जात्यन्तरस्य योगस्तत् सादृश्यं न धर्मिस्वरूपमात्रम्। न चागृहीते गवि तत्सम्बन्धिनां सामान्यानां ग्रहणं सम्भवति, अतोऽवश्यं प्रतियोग्यपेक्षेति गोलार्थः। यदुक्तमुत्पत्तौ ज्ञप्तौ वा प्रतियोग्यपेक्षा न सम्भवति। स्मृतेऽपि तन्निष्पत्तेरिति। तत्रोच्यते—नोभयत्रापि प्रतियोगि स्वसत्तामात्रेणोपकरोति, किन्तु स्वसम्बन्धिसामान्ययोगितया स्मर्यमाणसादृश्यावगतावुपयुज्यत इति। यदपि सादृश्यं भिन्नमभिन्नं वेति विकल्पितम्, तदपि नास्माकं प्रतिकूलम्, भेदाभेदवादाङ्गीकारात्।

एतच्च सादृश्यं सदृशप्रत्ययोत्पादकत्वेन गवयसदृशेन यजेतेत्येवमादिचोदनार्थनिष्पादकत्वेन चार्थक्रियाकारित्वाद् वस्त्वेवेति भावः। अवयवग्रहणं च धर्ममात्रोपलक्षणार्थम्, जातिग्रहणं चोपलक्षणान्तरप्रदर्शनार्थमतोऽग्निरिव माणवको यज्ञदत्तसदृशश्च देवदत्त इत्यपि सिद्ध्यति। यत्र पुनरवयवयोः सादृश्यं यथा पद्मदलाक्षीत्यत्र पद्मस्याक्ष्णोश्च तत्रापि तयोः स्वावयवसामान्ययोग एव सादृश्यम्। यदपि गुणयोः सादृश्यं यथा केतकीगन्धसदृशः सर्पगन्ध इति, तत्राप्यवयविगुणानामवयवगुणसामान्ययोगः सादृश्यम्, कर्मणामपि स्वसम्बन्धिद्रव्यदेवतासामान्ययोग इति। एवं जात्यादिसामान्यैरपि व्यस्तैः समस्तैर्वा विचित्रसादृश्यमूहनीयम्। यथाहुः वार्त्तिककाराः—

एवं जातिगुणद्रव्यक्रियाशक्तिस्वधर्मता।
एकैकद्वित्रिसामस्त्यभेदादेतस्य चित्रता॥

## मीमांसकतार्किकाभिमतोपमानस्वरूपविचारः

ननु सामान्यभूयस्त्वमेव सादृश्यमस्तु, किं योगग्रहणेनेति चेन्न, योगं विना तदप्रतीतेः। गोजातीयावयवसामान्ययुक्ता तु गवयजातिः सादृश्ययुक्ता गृह्यत इति योग एव सादृश्यावगमात्। यद्यपि यमलयोः सादृश्यं नास्ति, तथापि जात्यन्तरग्रहणस्योपलक्षणार्थत्वात् सादृश्यं सम्भवति। न चैकरूपं सामान्यम्, क्वचिद् भूयसां क्वचिदल्पीयसां च दर्शनात्। अनित्यं ह्येतद् गोत्वादिसामान्यस्यैवानेकाश्रयत्वेन नित्यत्वोपपत्तेः। अथवा सर्वमेव सामान्यं नित्यम्, देशान्तरादिषु क्वचिदाश्रयस्य सम्भवात्। ननु व्यासज्य वर्तमानस्य कथमेकत्र ग्रहणम्? मैवम्, जातिवदेकैकत्र सादृश्यस्य परिसमाप्तत्वेन द्वयोर्व्यासज्यवृत्त्यभावात्। ये तु तार्किकास्तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमेव सादृश्यमाहुस्तन्न समीचीनम्, तेषां मते प्रकर्षापकर्षभेदस्य प्रतियोग्यपेक्षायाश्चानिष्पत्तेः।

ननु गवयदर्शनं गोस्मरणस्येत्यादिना सादृश्यविशिष्टगवयदर्शनं गवि स्मरणमुत्पादयद् उपमानम्, तदुत्पादितं वा स्मरणमुपमानमित्युक्तम्। एतच्च ध्यानादिजन्यस्मृतिवद् अनुभूते गवि सदृशदर्शनादभिव्यक्तसंस्कारजन्यत्वेन स्मृतित्वादप्रमाणम्। न च संस्कारजन्यत्वेऽपि प्रत्यभिज्ञावद् देशकालाधिक्येन प्रमाणं भविष्यतीति वाच्यम्, तदाधिक्याभावात्। प्रत्यभिज्ञानं हि पूर्वानुभवातिरेकेणैतत्कालिकीं सत्तां ग्राहयति। उक्तं च वार्त्तिके—"इदानीन्तनमस्तित्वं नहि पूर्वधिया गतम्" इति। उपमानं तु नगरस्थपूर्वानुभवानुसारेणोत्पद्यमानं नाधिकं गृह्णाति। अत उपमानं न प्रमाणम्। तस्याधिगतविषयत्वेन अनधिगताबाधितविषयज्ञानरूपप्रमाजनकत्वाभावेन प्रमाणलक्षणानाक्रान्तत्वादिति चेत्? न, गवयदर्शनादेतत्सदृशो नगरस्थो गौरिति यद्विज्ञानं तदेवोपमानम्, तस्य स्मर्यमाणैव गौर्गवयसादृश्यविशिष्टा प्रमेयं स्मर्यमाणगोगतं वा गवयसादृश्यं प्रमेयम्। यद्यपि गवये सादृश्यं प्रत्यक्षेणावगतं गौश्च स्मर्यते, तथापि विशिष्टस्याऽन्यतोऽसिद्धेरुपमानप्रमाणता। यथा हि प्रत्यक्षदृष्टेऽपि पर्वतादौ स्मर्यमाणे च वह्नौ विशिष्टविषयत्वेनाऽनुमानस्य प्रमाणत्वमेवमुपमानस्यापि। यथा च तत्राग्निसामान्यमेवानुमीयते न विशेषस्तथाऽत्र सादृश्यमात्रविशिष्टस्यैवोपमेयत्वमिति। तस्मादेवं लक्षणकत्वादुपमानमपि न व्यभिचरति। यत्र तु व्यभिचारस्तदुपमानमेव न भवति, बाधकज्ञानेनाभासत्वात्। यथा पलालकूटस्य गजादिसादृश्यम्, समीपस्थस्य तत्र बाधदर्शनात्।

ननु सादृश्यविशिष्टपिण्डज्ञानस्येन्द्रियजन्यत्वात् प्रत्यक्षत्वमेवेति चेन्न, नगरस्थस्य गोरिन्द्रियसन्निकृष्टत्वाभावात्। ये तु प्रमाणद्वयवादिनो वैशेषिकाः प्रमाणत्रयवादिनः सांख्याश्चानुमानेऽन्तर्भावयन्त्युपमानं तदपि न, अगृहीतसम्बन्धस्याप्युपजायमानत्वात्।

एवं किलानुमीयेत—गौर्गवयसदृशः, गवयसादृश्यप्रतियोगित्वात्, यद् यत् सादृश्यप्रतियोगि तत् तत् सदृशं दृष्टं यथा यमलयोरन्यतरेणान्यतरस्य। न चेदं युक्तम्, यौ हि द्वावर्थौ मिथःसदृशौ युगपन्न दृष्टवानेकमेव तु गामुपलभ्य नगरे वने गवयं पश्यति, सोऽपि गां गवयसादृश्यविशिष्टामुपमिनोत्येव। तस्मान्नानुमानम्। शाब्दत्वं न शङ्क्यमेव। अतः प्रमाणान्तरम्। अतो गवयसदृशो गौरिति विज्ञानं नानुमानम्, अगृहीतसम्बन्धस्याऽप्युपजायमानत्वात्, प्रत्यक्षवदिति प्रयोगो ज्ञेयः। तस्मादुपमानं प्रमाणान्तरमेवेति बोध्यम्। भेदप्रतिपादनप्रयोजनं च वार्त्तिककारेण वार्त्तिके उक्तम्। तथा हि—

भिन्नानुमानादुपमेयमुक्त्वा सौर्यादिवाक्यैः सदृशी हि दृष्टा।
सादृश्यतोऽग्न्यादियुतं कथं तु प्रत्यायेदित्युपयुज्यते नः॥

प्रतिनिधिरपि चैवं व्रीहिसादृश्ययोगाद् भवति तदपचारे यत्र नीवारजातौ।
तदपि फलमभीष्टं लक्षणस्योपभाष्य प्रतिकृतिरपि गौणैर्बाध्यते यत्र चान्यैः॥
यदि सुसदृशमन्यल्लभ्यते तत्र मिथ्या भवति विसदृशत्वान्मन्दसादृश्यमुक्तम्।
मतिरपि हि तत्रैव द्रागिवोत्पद्यतेऽस्मिन्नितरविषयबोधे सत्यपीत्थं च बाधा॥ इति।

## तार्किकमीमांसकसम्मतयोरुपमानस्वरूपयोर्युक्ततरत्वविचारः

एतावता प्रबन्धेनाऽयमर्थः परिनितिष्ठति यत् तार्किकास्तावत्—"प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्" इति गौतमसूत्रानुसारेण, एवम्—"प्रज्ञातसामान्यात् प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति। यथा मुद्गस्तथा मुद्गपर्णी, यथा गौरेवं गवयः, एवं यथा माषस्तथा माषपर्णीत्युपमाने प्रयुक्ते उपमानात् संज्ञासंज्ञिसम्बन्धं प्रतिपद्यमानस्तामोषधीं भैषज्यायाहरति" इति सूत्रभाष्यानुसारेण च गोसदृशो गवय इति सादृश्यज्ञानमुपमानमिति, गवयो गवयपदवाच्य इति संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिरित्याहुः।

एतादृशं सादृश्यज्ञानञ्च अतिदेशवाक्यार्थस्मरणद्वारा भवति। तथा हि केनचिदारण्यकेन ग्रामीणायोक्तं गोसदृशो गवय इति। तेन च क्वचिदरण्यादौ गवयो दृष्टः, तदा गोसदृश्यावयवदर्शनेन तिदेशवाक्यार्थस्मरणद्वारा जायते ज्ञानं गोसदृशो गवय इति। तदेवोपमानम्। तदेव च उपमितिं प्रति करणम्। अतिदेशवाक्यार्थज्ञानं व्यापारः, गवयो गवयपदवाच्य इति संज्ञासंज्ञिसम्बन्धज्ञानं फलमिति मन्यन्ते तार्किकाः।

## मीमांसकतार्किकाभिमतोपमानस्वरूपविचारः

मीमांसकास्तु—उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति। गवयदर्शनं गोस्मरणस्येति भाष्यानुसारेण पूर्वदृष्टे स्मर्यमाणेऽर्थे दृश्यमानार्थसादृश्यज्ञानमुपमानमिति। याऽसावस्माभिर्नगरे दृष्टा गौः साऽनेन गवयेन सदृशीत्येतादृशमुपमानस्य स्वरूपं मन्यन्ते।

तत्र मीमांसकमतमेव हृद्यमिति युक्त्या विचारणायां परिनिष्पद्यते, तार्किकसम्मतस्योपमानस्य प्रमाणान्तरेष्वन्तर्भावसत्त्वात्। तथा हि—यदुक्तं प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानमिति, तद्यदि गवयस्वरूपालम्बनं तर्हि तस्येन्द्रियसन्निकर्षोत्पन्नत्वेन प्रत्यक्षान्तर्गतत्वात्।

यदि च गवयगतगोसादृश्यालम्बनम्, तदा तस्यातिदेशवाक्यादेव गवयगतत्वेन गोसादृश्यस्यावगतत्वेन तज्ज्ञानस्य स्मृतित्वेन प्रमाणत्वमेव न स्यात्। अतस्तार्किकसम्मतमुपमानस्वरूपं न समीचीनमिति मन्यामहे।

मीमांसकसम्मतं तु प्रमाणान्तरेष्वगतार्थत्वाद् युक्तमिति। तथा हि—नात्र प्रत्यक्षप्रसरः, इन्द्रियासन्निकृष्टत्वान्नगरस्थस्य गोः। नाप्यनुमानं प्रसरति, व्याप्तिग्रहासत्त्वेऽपि जायमानत्वात्। शब्दविषये तु शङ्कालेशोऽपि नास्ति।

अत एतादृशस्य मीमांसकसम्मतस्योपमानस्य प्रमाणान्तरत्वसम्भवाद् युक्तत्वमिति युक्तमुत्पश्याम इति विभावयन्तु सुधियः। इति शम्॥



# शिवाद्वैतप्रतिबोधः

श्री एम्० जि० नंजुण्डाराध्यः, मैसूरस्थश्रीमन्महाराजसंस्कृतमहाविद्यालये
शक्तिविशिष्टाद्वैतवेदान्तप्राध्यापकः ।

त्रैलोक्यसंपदालेख्यसमुल्लेखनभित्तये ।
सच्चिदानन्दरूपाय शिवाय ब्रह्मणे नमः ॥
यामाहुः सर्वलोकानां प्रकृतिं शास्त्रपारगाः ।
तां धर्मचारिणीं शम्भोः प्रणमामि परां शिवाम् ॥

जगत्यस्मिन् सर्वेषामपि जनानामात्यन्तिकं ध्येयं दुःखनिवृत्तिपूर्वकसुखसम्पादनमेवेति विदितचरम् । तत्र आत्यन्तिकं सुखं परब्रह्मैवेति निश्चप्रचम् । निर्दिष्टं च भगवत्या श्रुत्यापि—

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति । भूमैव सुखम् ।
भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास ॥ इति ।

( छान्दोग्योपनिषत् , ७-२३ )

यच्चात्यन्तं विपुलमनन्तं च स भूमा । भूमैव सुखम् । तादृशस्य 'भूम्नः' 'अल्पत्वस्य' च स्वरूपं तत्रैव विशदीक्रियते—

"यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । यत्रान्यत्पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पम् । यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम् । स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नीति यदि वा न महिम्नीति" ( छा-७-७४-१ ) इति ।

एतेन स्वेतरं यत्रन्न पश्यति शृणोति विजानाति वा स भूमा । तदेवामृतं दुःखलेशेनापि दूरं सुखमिति निर्णीतम् । तद्भिन्नमल्पं मर्त्यमर्थाद् दुःखसंभिन्नं च । तच्च भूमाभिधेयं सुखं "स्वे महिम्नि प्रतिष्ठितम्" इति च निर्दिष्टं श्रुत्या ।

तादृशस्य अमर्त्यस्य आनन्दात्मकस्य सुखस्य साक्षात्कारायैव सर्वाणि दर्शनानि प्रवृत्तानि । अत्र स्वात्मप्रत्यक्षमेव दर्शनशब्देनाभिधीयते । 'दृशिर् प्रेक्षणे' इति धातोः ल्युटि अनादेशे दर्शनशब्दो निष्पद्यते । अतीन्द्रियस्यात्मसाक्षात्कारस्य शास्त्ररूपदर्शनं विना असिद्धेः शास्त्रं दर्शन-

त्वेन निर्दिष्टं भवति। तदेव औपनिषदं दर्शनम् 'अपरोक्षानुभूतिः' 'प्रतिबोधा'दिपदैर्विलसति शास्त्रेषु।

यद्यपि स्वे महिम्नि प्रतिष्ठितं वस्त्वेकमेव, तथापि तत्साक्षात्कारमार्गाः साधकानामनुभवानुरोधेन भिद्यन्ते। उपनिषद्वाणी तावदियं दिव्यध्वनिरिव तत्तत्संस्कृतिमतामधिकारिणां विभिन्नरूपेणानुभूयते। कश्चन विज्ञानी एकैकं पत्रशकलं ( Piece of paper ) एकैकस्य दत्वा आस्वादयितुमाशास्ते। तदेकस्मै मधुरम्, अन्यस्मै तिक्तम्, अपरस्मै लवणमित्यादिरूपेणानुभवास्पदं परिणमते।

तद्रुचिवैविध्यं न पत्रशकलनिष्ठम्, किन्तु व्यक्त्याश्रितमिति सर्वानुभूतमेव। यथा च एक एव शिवगङ्गाद्रिः ( Sivaganga in Bangalore District ) पूर्वादिक्रमेण वृषभः, गणपतिः, नागेन्द्रः, शिवलिङ्गमित्याद्याकारेण प्रतिदिशि विभिन्नेनैव रूपेण प्रतिभाति, एवं तत्त्वान्वेषकाणां सर्वेषां लक्ष्यमेकमेव। उक्तं च महाकविना कालिदासेनापि—"भिन्नरुचिर्हि लोकः" इति। समर्थितं च महात्मना पुष्पदन्तेनापि स्वकीये शिवमहिम्नस्तवे—

"रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव" इति।

"मृग्याभेदेऽपि मार्गभेदस्य संभवः" इत्युक्तत्वाच्च।

दिव्यध्वनिरूपिण्या भगवद्वाण्या विभिन्नभाषात्मकत्वमित्थं प्रतिपादितं पण्डितप्रकाण्डेन भट्टाकलङ्केन स्वकीये शब्दानुशासनाभिधेये कर्णाटकभाषाव्याकरणशास्त्रे—

"नन्वेकस्या एव भगवद्वाण्या नानाभाषात्मकत्वं कथमुपपद्यत इति चेत्? दिव्यध्वनेरयमचिन्त्यमहिमा प्रभावः। यथा प्रावृट्काले नभस्थलात् पतितमान्तरिक्षं जलमेकमव्यक्तरसमपि लवणकृष्णोषरादिक्षेत्रगतं सत् तदेव लवण-मधुर-कषायरसभेदभिन्नं नानात्मकमनुभूयते; यथा च शरत्काले स्वातीस्थे दिवाकरे शुभ्रान्मेघात् प्रभ्रष्टमाभ्रं जलमेकमेव ताम्रपर्णी-शुक्ति-सतच्छदाद्यधिकरणगतं सद् मौक्तिककर्पूराद्यनेकाकारपरिणतमखिलधरणीप्रसिद्धमनुभूयते; यथा वा वृक्षवाटिकायां कुल्याजलमेकरसमेकमेव नानातरुवीरुद्गुल्मादिमूलदेशकृतालवालं प्राप्य तत्तदङ्घ्रिपीतं सत् तत्तत्फलमासाद्य मधुराम्लकटुकादिनानारसात्मना परिणतं सद् अनेकविधमखिलजनानुभवसाक्षिकमनुभूयते; तथा भगवद्वाण्यपि स्वोत्पत्तिसमये समुद्रघोषवद् अव्यक्तैकभाषारूपापि तत्तच्छ्रोत्र-

देशं प्राप्ता सती तत्तद्भाषात्मना परिणमते विचित्रशक्तित्वात्" ( भट्टाकलङ्ककृतकर्णाटकशब्दानुशासनम् , पृ० ९-१० )

अत्र दिव्यध्वन्यात्मकः शब्दो यथा नानाभाषात्मना परिणमते, तथा तादृशशब्देऽविनाभावसमनियतबोध्यबोधकभावसंबन्धेन विद्यमानार्थोऽप्यधिकारिभेदेन नानातत्त्वात्मकतया प्रतिभातीत्यत्र न कापि विप्रतिपत्तिः प्रतिभाति। उद्रिक्तसत्त्वावस्थायां योगस्थानां मुनिपुङ्गवानां परविद्यात्मिकोपनिषद्विद्यापि तदनुष्ठानवतां शङ्कराचार्यादीनामेकमेव सत्यं द्वैताद्वैतविशिष्टाद्वैतशक्तिविशिष्टाद्वैताद्यात्मना भाने किमप्याश्चर्यमसंगतं वा न संदृश्यते।

अस्मिन् विषयेऽप्याधुनिकतत्त्वशास्त्रवेत्ता आर्० डि० रानडे ( R. D. Ranade ) महोदयस्याशयोऽयम्—

"प्रतिदिशं प्रवहन्तीनां नदीनां पर्वत इव उपनिषद एव तत्त्वशास्त्राणां मूलम्। ताभ्यो नानाविधा आलोचनात्मिका उपनद्य उद्भूय जीवसागरं प्रति प्रवहन्ति। स्वस्वबुद्धिवैचित्र्यात् सञ्जातानां शाखास्वरूपाणामुपनदीनां संगमेन परिपुष्टाभिस्ताभिर्जीवसागरसंगमक्षेत्रे तत्त्वशास्त्रस्य सुविशालं जलपात्रं विनिर्मितम्। एवं जैन-बौद्ध-सांख्य-योग- शैव-मीमांसादीनां द्वैताद्वैतादिपथानां च मूलान्युपनिषत्सु सन्दृश्यन्ते"[1] इति।

---

1. "Just like a mountain which from various sides gives birth to rivers which run in different directions, similarly the Upani·hads constitute that lofty eminerce of Philosophy, which from its various sides gives birth to rivulets of thought, which as they progress onwards towards the sea of life, gathers trength by the inflow ot innumerable tributaries of specu'ation which intermittently join these rivulets, so as to make a huge expanse of waters at the p'ace where they meet the ocean of life. It is thus that we see in the Upanishads the roots of Buddhistic as well as Jaina Philosophy, of Sankhya as well as Yoga, of Mima-

उक्तं च सूतसंहितायाम्—"भेदाभेदस्तथाभेदो भेद एते मतास्त्रयः" इति । महिम्नस्तवेऽपि—"ध्रुवं कश्चित् ब्रूते सकलमपरस्त्वध्रुवमिदं परो ध्रौव्याध्रौव्ये" इति समर्थित एवायमर्थः ।

उपनिषत्सु तत्र तत्र सन्दृश्यन्ते खलु—"सर्वं खल्विदं ब्रह्म" ( छां० ३-१४-१ ), "अहं ब्रह्मास्मि" ( छां० ६-८-७ ) इत्यादीनि जीवब्रह्मणोरभेदबोधकानि वाक्यानि । एवमन्यत्र—"ज्ञाज्ञौ द्वावजावीशानीशौ" ( श्वे० १-९- ), "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥" ( मु० ३-१-१ ), "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति " ( कठ १-३-१० ), "भोक्ता भोग्यं प्रेरितारं च मत्वा" इति जीवात्मपरमात्मनोर्भेदबोधकानि च वाक्यानि ।

अत्रैव दार्शनिकेषु मतभेदाः संजाताः । अत्राद्वैतिनो भेदपराणां श्रुतीनां पूर्वपक्षत्वं संपाद्य जीवब्रह्मणोः परमार्थतोऽभेदमेव साधयन्ति । एवं द्वैतिनोऽपि भेदस्य सर्वानुभवसिद्धत्वेन अद्वैतबोधिकाः श्रुतीः कुत्रचिद् भेदपरतया व्याख्याय तत्र तत्र तासां पूर्वपक्षत्वं चापाद्य सर्वथा द्वैतमेव तयोः साधयन्ति ।

एवं च विवादे संप्राप्ते सर्वासामपि श्रुतीनां प्रामाण्यसंपादनाय भेदाभेदवादिनः संप्रवृत्ताः । भेदाभेदयोः परस्परविरुद्धत्वेन परस्परविरुद्धमर्थं श्रुतिर्वा कथं बोधयितुमीष्ट इत्याशङ्कायां भेदाभेदयोरविरोधोपपादनाय प्रवृत्तोऽयं शिवाद्वैतप्रतिबोधः ।

## शक्तिविशिष्टाद्वैतम्

उक्तं च भगवता नीलकण्ठशिवाचार्येण ( 1400 A.D. ) ब्रह्मसूत्रकारिकात्मके क्रियासारे—

---

msa as well as Saivism, of the Theistic-Mystic Philosophy of the Bhagavadgita, of the Dvaita, Visistadvaita as well as the Advaita systems. Let no man stand up and say that the Upanishads advocate only one single doctrine. ( E. H. I. P., Vol. 2 A Constructive Survey of Upanisadic Philosophy, P. 179, 1926. )

न जीवब्रह्मणोरैक्यं सूत्रस्य स्वरसतः स्फुरेत् ।
इति व्याचक्षते शक्तिविशिष्टं विषयस्त्विति ॥
यथा घट इति ज्ञाने घटत्वं स्याद्विशेषणम् ।
तथा ब्रह्मणि वैशिष्ट्यं शक्तिरित्यवधार्यताम् ॥
अग्निस्फुलिङ्गयोर्नास्ति यथा भेदः स्वरूपतः ।
अग्नित्वेन कणत्वेन भेदोऽपि स्फुरति क्वचित् ॥
यथाहिकुण्डलमिति भेदाभेदौ तथात्र च ।
तस्माच्छक्तिविशिष्टस्य जिज्ञासा ब्रह्मणः स्फुटम् ॥

(उपदेशः, १-९२-९५)

अयमेव सिद्धान्तः शक्तिविशिष्टाद्वैतमिति विश्रुतः । समर्थितं चेदं दर्शनं विशेषाद्वैतमिति श्रीपतिपण्डितभगवत्पादाचार्यैः ( १०६० A. D. ) स्वकीये श्रीकरभाष्यारम्भे—

श्रुत्यैकदेशप्रामाण्यं द्वैताद्वैतमतादिषु ।
द्वैताद्वैतमते शुद्धे विशेषाद्वैतसंज्ञके ।
वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः ॥ इति ।

निर्णीतं च तैरेव विशेषाद्वैतशब्दनिर्वचनमपि—

विशब्देनोच्यते शम्भुर्हंसहंसेति मन्त्रतः ।
शेषशब्देन शारीरो यथाग्नेरिति मन्त्रतः ॥
अद्वैतेन भवेद्योगो यथा नद्य इति श्रुतेः ।

अत्र विशेषाद्वैतपदव्युत्पत्तिरित्थं प्रतिपाद्यते—विश्च शेषश्च विशेषौ, विशेषयोरद्वैतं विशेषाद्वैतमिति । अत्राद्वैतपदेन भ्रमरकीटवज्जीवस्य स्वाभाविकभेदनिवृत्तिरुच्यते । "विः पक्षिचक्षुषि व्योम्नि वाते च परमात्मनि" इत्याकरे विशब्दस्य परमात्मवाचकत्वेन, शेषशब्दस्य जीवात्मवाचकत्वं प्रतिपादितं श्रुतिसूत्रादिषु—

यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः ।
तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति ॥ ( मुण्डके २-१. १. )

निर्दिष्टं च सूत्रकारैरपि—"अंशो नानाव्यपदेशात्" ( ब्र० सू० २-३-४० ) इत्यत्र। समर्थितं च भगवत्पादैर्जगद्गुरुरेणुकाचार्यैः सिद्धान्तशिखामणौ—

"अनाद्यविद्यासंबन्धात्तदंशो जीवनामकः" ( सि० शि० परि० ५ ) इति।

एवं च विशब्दप्रतिपादितस्य शिवस्य, शेषशब्दप्रतिपादितस्य जीवस्य च "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय" ( मुण्ड० ३-२-७ ) इत्यादिश्रुतिसिद्धं सामरस्यापरपर्यायमद्वैतं जीवब्रह्मणोरुपदिष्टम्।

शक्तिविशिष्टाद्वैतपदव्युत्पत्तिरप्येवं निगद्यते—शक्तिश्च शक्तिश्च शक्ती, ताभ्यां विशिष्टौ शक्तिविशिष्टौ जीवात्मपरमात्मानौ। तयोरद्वैतं शक्तिविशिष्टाद्वैतम्। इयं च शक्तिः स्थूल-चिदचिदात्मकशक्तिः, सूक्ष्मचिदचिदात्मकशक्तिरिति द्विविधा। तत्र जीवः स्थूलचिदचिदात्मक-शक्तिविशिष्टः। शिवश्च सूक्ष्मचिदचिदात्मकशक्तिविशिष्टः। अत्र जीवात्मगता स्थूलचिच्छक्तिः किञ्चिज्ज्ञत्वरूपा, स्थूला चिच्छक्तिः किञ्चित्कर्तृत्वरूपा। एवं परमात्मगता सूक्ष्मचिच्छक्तिः सर्वज्ञत्वरूपा, सूक्ष्मा चिच्छक्तिः सर्वकर्तृत्वरूपा। एवं चोभयविधशक्तिविशिष्टयोर्जीवशिवयो-रद्वैतं ( सामरस्यं ) शक्तिविशिष्टाद्वैतम्।

एवं शिवाद्वैतमित्यत्रापि—शिवा च शिवश्च शिवौ, तयोरद्वैतं शिवाद्वैतमिति सिध्यति। इयं च शिवा शक्त्यपरपर्याया। सा च शक्तिः शिवे तदंशभूतजीवे च सूक्ष्मचिदचिद्रूपेण, स्थूलचिदचिद्रूपेण विशिष्टेति पूर्वमेव प्रतिपादितम्।

एवमुभयविधशक्त्योराश्रयभूता इच्छाशक्तिर्विमर्शापरपर्याया। सा च ब्रह्मण्यविना-भावसंबन्धेन विद्यमाना वर्णिता श्रुतिषु—"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबल-क्रिया च" (श्वे० ६-७) इति। अत्र 'स्वाभाविकी' इत्यादिना तस्याः शक्तेर्ब्रह्मणि स्वभावसिद्धत्वं ज्ञानक्रियाद्यनेकरूपत्वं च सिद्धम्।

"ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" ( श्वे० १-३ )

यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासञ्छिव एव केवलः।
तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी॥

अत्र पुराणी अनादिसंसिद्धा, प्रज्ञा चिच्छक्तिः, परशिवब्रह्मसकाशात् प्रसृता क्रिया-शक्त्याद्यनन्तरूपेण प्रसृतेति बोध्यते।

"मायां तु प्रकृतिं विद्याद् मायिनं तु महेश्वरम्" (श्वे० ४-१० )

अत्र मायाशब्दस्य "मं शिवम् अयति स्वभावतः प्राप्नोतीति माया" इति व्युत्पत्तिः। इयं च माया अद्वैताभिमता मूलाविद्यारूपा न भवति, किन्तु विमर्शशक्त्यात्मिका मायेत्यवधेयम्। अत एव सिद्धान्तागमे—

मं शिवं परमं ब्रह्म प्राप्नोतीति स्वभावतः।
मायेति प्रोच्यते लोके ब्रह्मनिष्ठा सनातनी॥

इति निर्दिष्टम्।

"आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्रभागं सह स्वस्राम्बिकया तं जुषस्व" (तै० सं० २-८-६) अत्रस्थैः "स्वस्रा अम्बिकया" इत्यादिपदैः शक्तिरभिधीयते। "नमः सोमाय च रुद्राय च" (तै० सं० ४-५-८), "उमासहायं परमेश्वरं प्रभुम्" (कै० १-७), "तस्मिन्नेवाकाशे स्त्रियमाजगाम। बहु शोभमानामुमां हैमवतीम्" (केन० ३ १२) इत्यादिषु 'सोमाय उमया सहितः सोमः, तस्मै सोमाय' इति व्युत्पत्त्या उमासहायकत्वेन च परशिवस्य ब्रह्मणो हैमवत्यात्मक-उमारूपशक्तिविशिष्टत्वं सर्वश्रुतिसंप्रतिपन्नमवगम्यते। अयमेवार्थो रेणुकभगवत्पादाचार्यैरपि सिद्धान्तितः—

तदीया परमा-शक्तिः सच्चिदानन्दलक्षणा।
समस्तलोकनिर्माणसमवायस्वरूपिणी॥
तदिच्छयाऽभवत्साक्षात्तत्स्वरूपानुकारिणी॥
(सि० शि० परि० १२)

सा च शक्तिर्ब्रह्मणि समवायेन विद्यमाना सती तदिच्छया विश्वोत्पादनकारणं भवति। शिवशक्त्योरविनाभावसंबन्धस्तु सर्वश्रुत एव। उक्तं च महाकविना कालिदासेनापि—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥ (रघुवंशे १-१) इति।

सच्चिदानन्दात्मकं ब्रह्म 'अस्मि-प्रकाशे-नन्दामि' इत्यनुभवविशिष्टम्। तादृशानुभव एव विमर्शशक्तिः। अन्यथा ब्रह्मणोऽस्तित्वादिकं सुप्रकाशस्फटिकशिलादिवजडं भवेत्। सुन्दरस्याप्यन्धस्य स्वसौन्दर्यपरिज्ञानाभावे तत्सौन्दर्यं यथा व्यर्थं भवेत्, तथैव ब्रह्मणः स्वकीयसच्चिदानन्द-

स्वरूपज्ञानाभावे तस्य सच्चिदानन्दा व्यर्था भवेयुः। अतो ब्रह्मणि सच्चिदानन्दरूपानुभवशक्तिरवश्य-मभ्युपेया भवेत्। अत एव ब्रह्म शक्तिविशिष्टमिति सिद्धम्।

एतादृशं शक्तिविशिष्टं ब्रह्म "अथातो ब्रह्म जिज्ञासा", "चैतन्यमात्मा" इत्यादि ब्रह्मसूत्र-शिवसूत्रात्मकवेदान्तसिद्धान्तप्रतिपादितम्।

## जगत्सृष्टिः

"गुणत्रयात्मिका शक्तिर्ब्रह्मनिष्ठा सनातनी" इति रेणुकभगवत्पादाचार्योक्तरीत्या सा विमर्शशक्तिर्ब्रह्मनिष्ठा सनातनी च। तस्यां च शक्तौ "मयूराण्डरसन्यायेन" अर्थाद् मयूराण्डरसे यथा भाव्युत्पत्स्यमानमयूरपादपक्षादिरूपनानावयवतत्तद्वर्णविशेषाः समाविष्टाः, तथैव सकलं चराचरात्मकं जगत् सूक्ष्मरूपेण समाविष्टम्। एवं चराचरविश्वात्मिका सा विमर्शशक्तिः स्वविभाग-परामर्शावस्थायां सत्त्वरजस्तमोगुणात्मिका भवति। सैव परमात्मप्रेरिता भूत्वा शिवादिभूम्यन्त-षट्त्रिंशत्तत्त्वरूपतया परिणमते। अयमेव सृष्टिप्रकारः श्रुतौ वर्णितः—

"सदेव सौम्येदमग्र आसीत्। एकमेवाद्वितीयं ब्रह्म"।

(छां० ६-२-१)

"यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासत् शिव एव केवलः"

(श्वे० ४-१८)

इत्यादिषु प्रलये शिवस्य केवलावस्था श्रूयते। एतादृशस्य शिवस्य ब्रह्मणः कदाचिदे-काकितया अवस्थानाद् अरतिर्जायते। सर्वैश्वर्यसंपन्नस्य सार्वभौमस्येव अवाप्तसमस्तकामस्यापि परमशिवस्य कदाचित् स्वस्वातन्त्र्येण लीलया प्रवृत्तिरुन्मिषति—"तदैक्षत बहु स्यां प्रजायेय" (छान्दो० ६-२-३), "स एकाकी न रमते। स द्वितीयमैच्छत्। स ईक्षाञ्चक्रे इदं सृजेयम्" (महोपनिषत्) इत्यादिषु। समर्थितश्चायमेवार्थः—"लोकवत्तु लीलाकैवल्यम्" (ब्र० सू० २-१-९-३३) इति सूत्रभाष्ये श्रीपतिपण्डिताराध्यचरणैः।

## षट्त्रिंशत्तत्त्वानि

शिव-शक्ति-सदाशिव-ईश्वर-शुद्धविद्या-माया-कला-विद्या-राग-काल-नियति-पुरुष-प्रकृति-महद्-अहङ्कार-मनांसि, मात्रापञ्चकम्, ज्ञानेन्द्रिय-कर्मेन्द्रिय-दशकम्, भूतपञ्चकं च।

इमानि च तत्त्वानि बृद्धजाबालोपनिषदि––"पुनस्तं होवाच, कानि षट्त्रिंशत्तत्त्वानीति। स तस्मा आह शिव-शक्ति····" इत्यादिना निर्दिष्टानि। शैवागमेष्वप्ययमेव सृष्टिप्रकारोऽङ्गीकृतः—

अनादिनिधनाच्छान्ताच्छिवात् परमकारणात् ॥
इच्छाशक्तिर्विनिष्क्रान्ता ततो ज्ञानं ततः क्रिया।
तत्रोत्पन्नानि भूतानि भुवनानि चतुर्दश ॥

अचिन्त्यशक्तिविलासस्य जगत्स्रष्टुः परमात्मनः कुलालत्वसाम्यं सम्यगन्वेति––

शक्त्यण्डमृत्पिण्डमुपाददानो
मायाण्डचक्रभ्रमणक्रमेण।
मूलाण्डदण्डेन मुहुर्विधत्ते
ब्रह्माण्डभाण्डं भगवान् कुलालः ॥

उक्तं च रेणुकभगवत्पादगुरुभिरपि––

आत्मशक्तिविकासेन शिवो विश्वात्मना स्थितः।
कुटीभावाद्यथा भाति पटः स्वस्य प्रसारणात् ॥
पत्रशाखादिरूपेण यथा तिष्ठति पादपः।
तथा भूम्यादिरूपेण शिव एको विराजते ॥ इति।

(सि० शि० परि० १०)

समर्थितं च शङ्करभगवत्पादैरपि परमशिवस्य शक्तिविशिष्टत्वं सौन्दर्यलहर्याम्––"शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्" इत्यादिना।

## परिणामवादः

सिद्धान्तेऽस्मिन् अविनाभूतशक्तिविशिष्टस्य परब्रह्मणोऽभिन्ननिमित्तोपादानकारणत्वमङ्गीक्रियते। तच्च परिणामवादाङ्गीकारेणैव सिद्ध्यति। परिणामस्तु द्विविधः—तत्राद्यः पूर्वावस्थापरित्यागेन अवस्थान्तरप्राप्तिः। यथा पयसः पयस्त्वावस्थापरित्यागेन दध्यादिरूपप्राप्तिः। द्वितीयस्तु स्थिते एवोपादाने तद्भिन्नव्यवहारयोग्यकार्योत्पत्तिः, यथा घटस्य मृद्रूपोपादाने सत्यपि तद्भिन्नघटशरावादिव्यवहारयोग्यकार्योत्पत्तिः। यथा वा आभरणेषु सुवर्णरूपोपादाने सत्यपि तद्भिन्नकटककुण्डलहारादिव्यवहारयोग्यकार्योत्पत्तिः। अयं च परिणामो वृत्तिरित्यपि व्यवह्रियते

( शैवपरिभाषा, परि० ३ )। तस्माद्यथा पटस्य कुड्यवस्था, अहेश्च कुण्डलावस्था, अप्रच्युतपूर्वरूपस्यैवावस्थान्तरप्राप्तिरूपत्वाद् वृत्तिस्तथा जगदपि शिवाधिष्ठितशुद्धाशुद्धमाययोर्वृत्तिः" इति।

प्रकृते तु सत्यज्ञानानन्दस्वरूपस्य शिवस्य ब्रह्मणो जगत्कारणत्वे मृदादिवद्विकारित्वं स्यादिति चेत्, "मायां तु प्रकृतिं विद्यात्" ( श्वे० ४·१० ) इत्यादिश्रुतिषु मायाया जगदुपादानत्वं परमेश्वरस्य निमित्तत्वं चोपदिश्यत इति न विरोधः। "यथोर्णनाभिः सृजते गृह्णते च" (मुण्ड०१-१-७) इत्यादिश्रुतिषु चेतनोर्णनाभेरचेतनतन्तूत्पत्तिदर्शनात् शक्तिविशिष्टस्य परब्रह्मणोऽभिन्ननिमित्तोपादानत्वं सिद्धम्।

## जगत्सत्यत्वविचारः

अत्र शक्तिविशिष्टस्य परब्रह्मणः परिणामभूतस्यास्य जगतो नित्यत्वमपि सिद्धमेव। "सोऽकामयत बहु स्यां प्रजायेयेति''''यदिदं किञ्च। तत्सत्यमित्याचक्षते" ( तै० आ० ६ ) इति श्रुत्यनुसारं सच्चिदानन्दात्मकं परशिवब्रह्म चराचरात्मकं जगद् निर्माय "तत्सृष्ट्वा तदेवानुप्राविशत्"। अनेन च शक्तिविशिष्टस्य परब्रह्मणः परिणामभूतमिदं जगत् सत्यमिति स्पष्टमेव। उक्तं च आचार्यपादैः—

यस्मादेतत् समुत्पन्नं महादेवाच्चराचरम्।
तस्मादेतन्न भिद्येत यथा कुम्भादिकं मृदः॥
शिवतत्त्वात् समुत्पन्नं जगदस्मान्न भिद्यते।
फेनोर्मिबुद्बुदाकारो यथा सिन्धोर्न भिद्यते॥
यथा पुष्पपलाशादि वृक्षरूपान्न भिद्यते।
तथा शिवात्पराकाशाज्जगतो नास्ति भिन्नता॥ इति।

(सि० शि० परि० १०)

## परब्रह्मस्वरूपम्

सिद्धान्तेऽस्मिन् परं ब्रह्म स्थलत्वेन लिङ्गत्वेन चाभिधीयते। उक्तं च वीरमाहेश्वराचार्येण मायिदेवप्रभुणा—

एकमेव परं ब्रह्म सच्चिदानन्दलक्षणम्।
शिवतत्त्वं शिवाचार्याः स्थलमित्याहुरादरात्॥

## शिवाद्वैतप्रतिबोधः

यत्रादौ स्थीयते विश्वं प्रकृतं पौरुषं यतः ।
लीयते पुनरन्ते च स्थलं तत्प्रोच्यते ततः ॥
अधिष्ठानं समस्तस्य स्थावरस्य चरस्य च ।
जगतो यद् भवेत्तत्त्वं तद्धि वै स्थलमुच्यते ॥

(अनुभवसूत्रम्, २-२-६)

एवं लिङ्गपदनिर्वचनमपि—

लीयते गम्यते यत्र येन सर्वं चराचरम् ।
तदेतल्लिङ्गमित्युक्तं लिङ्गतत्त्वपरायणैः ॥

(अनु० सू० ३-३)

## जीवात्मस्वरूपम्

अनाद्यन्तमजं लिङ्गं तत्परं परमं प्रति ।
यद्गच्छति महाभक्त्या तदङ्गमिति निश्चितम् ॥
अं भवेत् परमं ब्रह्म तद्गतं तत्परायणम् ।
अङ्गस्थ*मिति प्राहुरङ्गतत्त्वविशारदाः ॥
अमिति ब्रह्म सन्मात्रं गच्छतीति गमुच्यते ।
रूप्यतेऽङ्गमिति प्राज्ञैरङ्गतत्त्वविचिन्तकैः ॥

इत्यादिना शिवांशीभूतस्य अनाद्यविद्यासंबन्धाद् आणवादिमलविशिष्टस्य जीवस्य शक्त्याविष्करणेन शिवानुग्रहरूपः शक्तिपातः समुदेति । तन्महिम्ना स्थलतत्त्व( ब्रह्म )गता शक्तिः—

सा शक्तिः द्विविधा भूता स्वस्वातन्त्र्यबलेन तु ।
समानधर्मिणीत्वेन विभक्ता भक्तवत्सला ॥२१॥
लिङ्गस्थलाश्रया काचित् काचिदङ्गस्थलाश्रया ।
लिङ्गस्थलाश्रया शक्तिः कलारूपा प्रकीर्तिता ॥२२॥
अङ्गस्थलाश्रया शक्तिर्भक्तिरूपा भवापहा ।
यथा महानलज्वाला विभक्ता दीपिकाकृतिः ॥२३॥
तथा माहेश्वरी शक्तिर्विभक्ता भक्तिरूपिणी ।

## शक्तिभक्त्योर्वैशिष्ट्यम्

ज्वाला तमस्विनी यस्माद्दीपिका सुप्रकाशिनी ॥२४॥
तस्यात्मवासना शक्तिर्भक्तिर्निर्वासना मता ।
भक्तिर्महत्तरा शुद्धा सुसूक्ष्मा शोभना परा ॥२५॥
सच्चिदानन्दरूपा स्याद् भुक्तिमुक्तिफलप्रदा ।
शक्तिरेव स्मृता भक्तिर्भक्तिरेव हि सा सदा ॥ २६ ॥
शक्तिभक्त्योर्न भेदोऽस्ति परमार्थनिरूपणे ।
शक्तिः प्रवृत्तिराख्याता निवृत्तिर्भक्तिरीरिता ॥ २७ ॥
शक्त्या प्रपञ्चसृष्टिः स्याद्भक्त्या तद्विलयो मतः ।
शक्तिवैचित्र्यतो रूपं नीरूपमपि याति हि ॥ २८ ॥
भक्तिवैचित्र्यतो रूपमपि नीरूपतामियात् ।
प्रपञ्चवृद्ध्यपेक्षा हि शक्तेः स्वाभाविको गुणः ॥ २९ ॥
प्रपञ्चसंशयापेक्षा भक्तेः स्वाभाविको गुणः ।
अधोमुखी भवेच्छक्तिर्भक्तिरूर्ध्वमुखी भवेत् ॥ ३० ॥
समाया शक्तिराख्याता निर्माया भक्तिरीरिता ।
अपि तर्कप्रमाणाभ्यां शक्तेर्भक्तिर्गुणाधिका ॥ ३१ ॥

(अनु०सू०अधि० २)

एवंभूता जगतो मातृस्वरूपिणी तदुपादानभूता शक्तिरेव भक्तोद्धारबद्धादरा शिवांशीभूताङ्गस्थलेऽर्थाजीवे तदुद्धारायैव भक्तिरूपेण परिणमते । तादृशभक्तिमहिम्नैव अनाद्यविद्यामलसंबद्धोऽपि जीवः पिण्डत्वेनाभिधीयते । उक्तञ्च रेणुकगुरुभिः––

बहुजन्मकृतैः पुण्यैः प्रक्षीणे पापपञ्जरे ।
शुद्धान्तःकरणो देही पिण्डशब्देन गीयते ॥
शिवशक्तिसमुत्पन्ने प्रपञ्चेऽस्मिन् विशिष्यते ।
पुण्याधिकः क्षीणपापः शुद्धात्मा पिण्डनामकः ॥

(सि० शि० परि० ५-३१-३२)

## शिवाद्वैतप्रतिबोधः

आणवादिमलपाशसंबद्धत्वाज्जीवस्यास्य संसारित्वेन पशुत्वेन च व्यवहारः, "मलावृतः संसारी" इति व्यपदेशात्। तत्पाशविमोचनायैव अस्मिन् सिद्धान्ते शिवदीक्षा निर्दिष्टा।

दीयते च शिवज्ञानं क्षीयते पाशसञ्चयः।
यस्मादतः समाख्याता दीक्षेतीयं विचक्षणैः॥
(सि० शि० परि० ५)

मलस्वरूपमित्थं प्रतिपाद्यते—मलस्तु त्रिविधः, आणव-मायीय-कार्मभेदात्। तत्र अपूर्णं मन्यतारूपमाणवमलम् परिपूर्णमप्यात्मानमपरिपूर्णत्वेन मन्यतारूपम्। इच्छाशक्तिसंकोच सञ्जनितेन आणवेन सर्वव्यापी शिवो विभुत्वादंशो भूत्वा जीवावस्थामभजत्। तदा अनात्मन्यात्माभिमानमुत्पद्यते। ज्ञानशक्तिसंकोचो मायामलः। तेन सर्वज्ञोऽप्यात्मा किञ्चिज्ज्ञो भवति, "भिन्नवेद्यप्रथा" च सम्पद्यते। तदा जीवः पञ्चकञ्चुकविशिष्टस्य शरीरस्येन्द्रियादीनां च पराधीनो भवति। कार्मस्तु मलः क्रियाशक्तिसंकोचेनोदेति। अयं च मलो ज्ञानकर्मेन्द्रियाणां मनसश्च कर्मकारणत्वेन शुभाशुभानुष्ठानं प्रवर्तयति।

इदं च मलत्रयं तुष-कम्बुक-किंशारुकरूपेण स्थूल-सूक्ष्मातिसूक्ष्ममलावृतं तण्डुलमवघातादिना विमुक्तं सद् यथोपभोगयोग्यं भवति, तथैव लिङ्गधारणात्मकशिवदीक्षया मलत्रयविमुक्तो भवति। उक्तं च—

दीक्षया मुच्यते देही त्रिविधाद्भवबन्धनात्।
शिवत्वं याति सततं न पुनः पशुतां व्रजेत्॥
(वीरशैवाचारकौस्तुभे)

इयं च दीक्षा वेधा-मान्त्री-क्रियारूपेण त्रिविधा। तत्र सद्गुरोः कृपादृष्टिपूर्वकेऽधिकारिणि क्रियमाणा हस्तमस्तकसंयोगात्मिका। तेन रसवेधाद्यथा ताम्रं स्वाभाविकं कल्मषनिर्मुक्तं सुवर्णत्वं प्राप्नोति, तथा जीवोऽपूर्णमन्यतारूपाणवमलविमुक्तो भवति। मन्त्रोपदेशात्मकमान्त्रदीक्षया च किञ्चिज्ज्ञत्वरूपमायामलनिर्मुक्तो भवति। षडध्वशुद्धिसंस्काराङ्गकुण्डमण्डलिकारूपक्रियादीक्षया च परित्यक्तकाममलः साधकः स्वस्वरूपं भजते। अयमेव प्रतिबोधशब्देनाभिधीयते।

### प्रतिबोधः

प्रतिबोधशब्दार्थस्तु सम्यक् प्रतिपादितः केनोपनिषद्भाष्ये "प्रतिबोधविदितं मतम्" इत्यत्र—

गुरुकृतलिङ्गधारणा अभ्यासवशेन जलपतिततैलवत् प्रकर्षमादधाना सती दर्शनरूपा भवति। तेन साक्षात्कारात्मकेन प्रतिबोधेन विदितमेव ब्रह्म सम्यग् ज्ञातम्। नान्यथेत्याह—प्रतिबोधविदितमिति। प्रतिबोधो नाम लिङ्गाङ्गसामरस्यरूपशिवाद्वैतज्ञानम्, तस्य द्वैतज्ञानात्मकसुख दुःखमोहसंकल्पविकल्पाध्यवसायादिरूपबन्धनिवर्तकत्वात्। तेन पराहन्तामयापरोक्षविमर्शापरपर्याय-भाण्डस्थानीयचिच्छक्तिरूपेण विदितं विषयीकृतं यत्, तन्मतं सम्यग् दृष्टं ब्रह्म येन स प्रतिबोधवान् अमृतत्वं मरणाद्यभावं मुक्तिं विन्दते प्राप्नोति। तदुक्तं शिवसूत्रे—

"विद्याऽविनाशे जन्मविनाशः" इति।

उक्तं च श्रीमद्रेणुकभगवत्पादाचार्यैः—

शिव एव जगत्सर्वं शिव एवाहमित्यपि।
भावयन् परमो योगी भवदोषैर्न लिप्यते॥

उक्तं च श्रीकण्ठ्याम्—

सप्रपञ्चं परित्यज्य हेयोपादेयलक्षणम्।
तृणादिकं तथा पर्णं पाषाणं सचराचरम्॥
शिवाद्यवनिपर्यन्तं भावाभावोपबृंहितम्।
सर्वं शिवमयं ध्यात्वा भूयो जन्म न चाप्नुयात्॥ इति।

अत्र शिवसूत्रादिप्रोक्ताया भावनारूपविद्याया अविनाशे सततोन्मग्नत्वे तस्याः साक्षात्कार-रूपप्रतिबोधरूपत्वात्। उक्तं हि विश्वसंहितायाम्—

ध्येये चित्तं यदा लीनं तदा ध्यानमुदाहृतम्।
ध्येयः प्रत्यक्षतां याति ध्याता तन्मयतां व्रजेत्॥

उक्तं च षाड्गुण्यविवेके—

एवं तन्मय एवाहमिति भावनया यदि।
प्रलीनाहंकृतिग्रन्थिः पश्यत्येव त्वदात्मताम्॥ इति।

उक्तं च मालिनीविजये—

## शिवाद्वैतप्रतिबोधः

अकिञ्चिच्चिन्तकस्यैव गुरुणा प्रतिबोधतः ।

जायते यः समावेशः शांभवोऽसावुदीरितः ॥ इति ।

अत्र समावेशः संयोगः सामरस्यम् । नद्यो यथा अब्धौ तादात्म्यमिव गच्छन्ति परपदं तादृशशांभवविद्यारसिकाः । करकस्य मन्दं मन्दं जलरूपं गतस्य समुद्रपतितस्य, ताम्रस्य सुवर्णभावमापन्नस्य, नवनीतस्य घृतभावं गतस्य, जलस्य मौक्तिकत्वं गतस्य, न यथा पूर्वरूपता, तथा अग्निसंयुक्तसलिलशैत्यस्य शनैश्शनैर्विनाशवत् समनान्तपाशजालस्य विनाशे प्रतिबोधतः शिवभावमापन्नस्य न पुनः पशुत्वम् ।

तत्त्वत्रयविनिर्मुक्तः शाश्वतं त्वचलं ध्रुवम् ।

दिव्येन योगमार्गेण दृष्ट्वा भूयो न जायते ॥

पाशयुक्तो भवेज्जीवः पाशमुक्तो भवेच्छिवः ।

समनान्तं पाशजालमुन्मन्यन्ते परः शिवः ॥

इत्युक्तत्वाच्च । उन्मनी शिवव्याप्तिरूपा शिवाद्वैतविद्या द्वादशान्तापरपर्याया । स्वस्वरूपप्रकाशरूपात्मशक्तिप्रतिरोधकबाह्यविषयाकारद्वैतवृत्तिप्रातिकूल्यप्रयुक्तान्तर्येयाभिमुखाद्वैतावच्छिन्नचित्तवृत्तिरूपध्याननिर्मथनाभ्यासप्राप्तबोध एव प्रतिबोधः पाशविच्छेदनसमर्थः, "ध्याननिर्मथनाभ्यासात् पाशं दहति पण्डितः" इति श्रुतेः, "तस्याभिध्यानाद् योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः" इति श्रुतेश्च ।

उक्तं च रेणुकभगवत्पादाचार्यैः—

आत्मारणिसमुत्थेन प्रमोदमथनात् सुधीः ।

ज्ञानाग्निना दहेत् सर्वं पाशजालं जगन्मयम् ॥

संसारविषवृक्षस्य पञ्चक्लेशपलाशिनः ।

छेदने कर्ममूलस्य परशुः शिवभावना ॥

अज्ञानराक्षसोन्मेषकारणं संवृतात्मनः ।

शिवध्यानं तु संसारतमसश्चण्डभास्करः ॥ इति ।

## मुक्त्युपायः

एवं रूपप्रतिबोधः साधकस्य षट्स्थलमार्गानुसरणं निर्दिशति । अत्र पूर्वोक्ता भक्तोद्धारबद्धादरा मातृस्वरूपिणी भक्तिस्वरूपेण परिणता शक्तिः साधकमुद्धर्तुं षोढा विभज्यते । श्रद्धा-

निष्ठा-अवधान-अनुभव-आनन्द-समरसभक्तिरूपेण भक्तमुपगतेयं सङ्कुचितज्ञानक्रियाशक्तिकं जीवात्मानं क्रमेण भक्त-माहेश प्रसादी-प्राणलिङ्गी- शरण-ऐक्यस्थानं प्रापय्य शिवसामरस्यं शिवत्वाभिव्यक्तिं वा संपादयतीति दर्शनस्यास्य हृदयम् ।

## षट्स्थलसोपानक्रमः

भक्तस्थलम्—इदं बीजवृक्षन्यायस्थलम् । परशिवशक्तिपातेन शिवदीक्षिते जीवात्मनि बीजरूपेण समाविष्टश्रद्धाभक्तिस्तस्य देहाद्यभिमतं निरस्य गुरु-लिङ्ग-जङ्गम-भस्म-रुद्राक्ष-मन्त्र-तीर्थ-प्रसादात्मकेष्वष्टावरणेषु, लिङ्गाचार-सदाचार-शिवाचार-गणाचार-भृत्याचाररूपेषु च पञ्चाचारेषु प्रथमतः श्रद्धां तदनुष्ठानप्रवृत्तिं च संपादयति । तेन जीवः क्षीरे नवनीतलाभाय यथा मन्थनं क्रियते, तथा स्वात्मनि शिवत्वाभिव्यञ्जनाय प्रेममन्थनोद्युक्तो भवति । अत एवेदं स्थलं बीजवृक्ष-न्यायस्थलमित्युच्यते ।

सदाचारः शिवे भक्तिर्लिङ्गे जङ्गम एकधीः ।
लाञ्छने शरणे भक्तिर्भक्तस्थलमनुत्तमम् ॥

माहेश्वरस्थलम्—सलिलमुक्तान्यायस्थलमिदम् । सागरस्थे मौक्तिकसंपुटे पतितः स्वाती-वर्षजलबिन्दुस्तदन्तरे घनीभूय नियतकाले यथा मौक्तिकं भवति, तथा ईश्वराभिमुखी श्रद्धाभक्तिश्चित्तस्थैर्यरूपेण घनीभूय निष्ठात्मना परिणता दृढीभवति । अतस्तत्र विद्यमाना भक्तिर्निष्ठेत्युच्यते । तेन साधकः सर्वत्राचारविचारानुष्ठानादिषु दृढव्रतो भवति । तदैवायं शिवव्रतीत्युच्यते ।

केवले सहजे दाने निष्णातः शिवतत्परः ।
ब्रह्मादिस्थानविमुखो भक्तो माहेश्वरः स्मृतः ॥

प्रसादिस्थलम्—इदं च अनलकाष्ठन्यायस्थलम् । अत्रत्या भक्तिश्चित्तशुद्ध्या अवधान-भक्तिरिति व्यपदिश्यते । काष्ठं प्रविष्टोऽग्निः सर्वाकारेण काष्ठमभिव्याप्य यथा निर्दहति काष्ठम्, तथैव ऐश्वरं प्रेम अवधानात्मना एकीभूय साधकमभिव्याप्य तत्रस्थान् शब्दस्पर्शादिविषयान् स्रक्चन्दनरूपादीन् निर्दग्ध्वा तान् प्रसादरूपानापादयति । तदा साधके चित्तप्रसन्नतारूपः प्रसादः सञ्जायते । उक्तं च भगवतापि—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ इति ।

( भ० गी० १-२-७ )

अनया दिशा शिवदीक्षाप्रकरणोक्तघ्राणादिज्ञानकर्मेन्द्रियनिष्ठेष्वाचारादिलिङ्गेषु¹ तत्तद्विषयान् समर्प्य प्रसादतां भजते । तादृशप्रसादोपभोगेनायं प्रसादीति व्यपदिश्यते ।

मनः प्रसादसिध्यर्थं निर्मलज्ञानकारणम् ।
शिवप्रसादं स्वीकुर्वन् प्रसादीत्येष कथ्यते ॥

प्राणलिङ्गिस्थलम्—भ्रमरकीटन्यायस्थलमिदम् ।

कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम् ।
शिवभक्तः शिवयोगेन शिवो भवति निश्चयम् ॥

इत्युक्तदिशाऽत्र त्यक्तजीवभ्रमः साधकः शिवानुभवी भवति, अत्रस्थाया भक्तेरनुभवात्मकत्वात् । यथा भ्रमद्भ्रमरचिन्तायां कीटोऽपि भ्रमरायते, तथैव जीवः शिवचिन्तया शिवध्यानपूजाजपादिषु तदनुभवमनुभूय शिवानुभवी भवति, तदात्मनः शिवभावोदेति ।

लिङ्गं चिदात्मकं ब्रह्म तच्छक्तिः प्राणरूपिणी ।
तद्रूपलिङ्गविज्ञानी प्राणलिङ्गीति कथ्यते ॥

---

१. आचारलिङ्गं घ्राणाख्यं भक्तस्थलसमाश्रयम् ।
निवृत्तिकलयोपेतं गन्धग्रहणसाधनम् ॥ १ ॥
गुरुलिङ्गं तु जिह्वाख्यं महेशस्थलसंश्रयम् ।
प्रतिष्ठाकलयोपेतं रसग्रहणसाधनम् ॥ २ ॥
शिवलिङ्गं तु नेत्राख्यं प्रसादिस्थलसंश्रयम् ।
विद्याकलासमायुक्तं रूपग्रहणसाधनम् ॥ ३ ॥
त्वगाख्यं जङ्गमं लिङ्गं प्राणलिङ्गिस्थलाश्रयम् ।
शान्त्याख्यकलयोपेतं स्पर्शग्रहणसाधनम् ॥ ४ ॥
प्रसादलिङ्गं श्रोत्राख्यं शरणस्थलसंश्रयम् ।
शान्त्यतीतकलोपेतं शब्दग्रहणसाधनम् ॥ ५ ॥
मानसं तु महालिङ्गमैक्यस्थलसमाश्रयम् ।
शान्त्यतीतोत्तरोपेतं सर्वग्रहणसाधनम् ॥ ६ ॥

शरणस्थलम्—सतीपतिन्यायस्थलमिदम्। अत्र विद्यमाना भक्तिरानन्दभक्तिः। शिवनित्यत्वनिश्चिन्तत्वादेवास्य आनन्दः समुदेति। अतोऽत्र जीवः शिवानन्दी भवति "यथा प्रियया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इत्युक्तप्रकारेण।

सती चाहं पतिर्लिङ्गं हृदि युक्तः स्वयं प्रभुः।
प्रापञ्चिकसुखं नास्ति शरणस्थलमुत्तमम्॥

लोकविषयविमुखोऽनासक्तयोगेन शिवानन्दतुन्दिलो भूत्वा जीवन्मुक्तावस्थामनुभवति।

ऐक्यस्थलम्—शिखिकर्पूरन्यायस्थलमिदम्। यथा भूतात्मकौ शिखिकर्पूरौ केवलं संयोगमात्रेण परस्परमेकीभूय विलीनौ भवेताम्, तथैव शरणाभिधानो जीवः समरसभक्त्या विमुक्तकिञ्चिज्ज्ञत्वकिञ्चित्कर्तृत्वाभिव्यक्तसर्वज्ञत्वसर्वकर्तृत्वको नदीसमुद्रन्यायेन परशिवसमरसो भवति।

प्राणलिङ्गादियोगेन सुखातिशयमेयिवान्।
शरणाख्यः शिवेनैक्यभावनादैक्यवान् भवेत्॥

उक्तं च भगवता रेणुकगुरुणा—

जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितः।
परे ब्रह्मणि लीनात्मा विभागेन न दृश्यते॥
(सि०शि०परि० २०)

एवमैश्वरं प्रेम (भक्तिः) अद्वैतरूपेण परिणतं सच्चिच्छिवजीवैक्ये पर्यवस्यतीत्ययमेव शिवाद्वैतप्रतिबोधः॥

***

# ब्रह्माद्वयवादशिवाद्वयवादौ

श्रीरघुनाथपाण्डेयः, आगमाध्यापकः, वा० सं० वि० वि० वाराणसी ।

ब्रह्मेति यद् वेदविदो वदन्ति शिवं यदेवागममाश्रयन्तः ।
वाचं परां शब्दविधानदक्षास्तदद्वयं तत्त्वमहं प्रपद्ये ॥

सन्ति दर्शनेषु बहवोऽद्वैतवादाः । तद्यथा–ब्रह्माद्वैतवादः श्रीगौडपादपादाननुश्रितानामौपनिषदानाम्, शिवाद्वयवादो वसुगुप्तसोमानन्दोत्पलाभिनवगुप्तपादक्षेमराजप्रभृतीनामागमिकानाम्, शुद्धाद्वैतवादः श्रीवल्लभाचार्यानुगामिनाम्, विज्ञानाद्वैतवादो योगाचाराणाम्, शून्यमप्येकं तत्त्वमभ्युपगच्छतां शून्याद्वयवादो माध्यमिकानाम्, शब्दविवर्तं शब्दपरिणामं वाऽद्वैतमभ्युपगच्छतां शब्दाद्वयवादो वैयाकरणानां भर्तृहरिप्रभृतीनाम् । एतेषु बहुष्वद्वैतवादेषु सत्स्वपि ब्रह्माद्वयशिवाद्वयवादावेव साम्यवैषम्याभ्यां साम्प्रतं समीक्षितुमुपक्रममाणस्तत्समीक्षोपपादकत्वात् पूर्वं द्वैतप्रपञ्चस्वरूपमेव प्रागुक्तदर्शनभेदानाश्रित्य समीक्षे ।

तत्र वैयाकरणमते शब्दस्य विवर्तः परिणामो वाऽद्वैतम् । तत्राद्यम्—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥

इति वाक्यपदीये ब्रह्मकाण्डे प्रथमपद्ये ।

द्वितीयं तु "शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः" इति वाक्यपदीयपद्ये ब्रह्मकाण्डगते । अस्मिन् मतद्वयेऽपि शब्दस्यार्थोपादानत्वेनोपादानोपादेययोश्चाभेदस्यानुभवसिद्धत्वेन शब्दाऽद्वैतवादः पर्यवस्यति । "अनादिनिधनं ब्रह्म" इति पद्यस्य हरेः स्वोपज्ञटीकायां श्रुतिरुदाहृता—

सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमभिष्यन्दमानाम् ।
उतान्ये विदुरन्यामिव च एनां नानारूपामात्मनि सन्निविष्टाम् ॥

व्याख्याता चेयं गुरुभिरम्बाकर्त्र्याम्—"सूक्ष्मां स्वकारणीभूतप्रत्यक्चैतन्यरूपब्रह्मात्मना सूक्ष्माम् । अर्थेनाप्रविभक्ततत्त्वां तेनैव रूपेण पदवाक्यवर्णभेदशून्याम् । उत अपि । अभिष्यन्दमानां

वक्तुरिच्छानुवर्तिना प्रयत्नेनाभिव्यज्यमानाम्, आत्मनि ज्ञानस्वरूपे पदवाक्यवर्णस्वरूपेण संनिविष्टां संनिवेशेन आनुपूर्व्या प्रतीताम्। अन्ये ब्रह्मणोऽर्थतश्चानन्यामपि अन्यामिव, एकामपि नानारूपामिव एनां वाचं विदुः" इति। एतेन शब्दाद्वयवादो ब्रह्माद्वयवादश्चैक एवेति प्रतीयते। किञ्चानया श्रुत्या ब्रह्मरूपस्य पराख्यशब्दस्य विवर्त एवार्थप्रपञ्च इत्यायाति। स्फोटस्य त्वर्थवाचकस्य परिणाम इति। अत एव शब्दार्थयोस्तादात्म्यं वैयाकरणैरभ्युपेयते। अत एव च शब्दार्थप्रत्ययानां तादात्म्यव्यपदेशो लोकसिद्धः—गौरितिशब्दः, गौरित्यर्थः, गौरिति ज्ञानमिति। उपादानोपादेययोरेव हि तादात्म्यव्यपदेशो लोके दृष्टः, मृद्घटो नीलो घट इत्यादौ। यद्यपि धर्मधर्मिणोरपि तादात्म्यव्यपदेशो दृश्यते सन् घटः, द्रव्यं घट इति सत्ताद्रव्यत्वयोर्घटे तादात्म्यम्, तथापि न शब्दार्थयोर्धर्मधर्मिभावसंभव इति। योगशास्त्रे तु शब्दार्थप्रत्ययानां तादात्म्याध्यास इत्युक्तम्। तदेवं विश्वस्य शब्दार्थत्वेन शब्दार्थयोश्च तादात्म्येन शब्दाऽद्वयवादो वैयाकरणमते प्रसिध्यति।

शून्यवादिनस्तु शून्यमेवैकं परमार्थतत्त्वं मन्यन्ते। विश्वं तु संवृतिसत्यमिति। तदुक्तं मध्यमकवृत्तौ चतुर्विंशतितमे प्रकरणे—"अथ का पुनः शून्यता ? सापि तत्रैवोक्ता—

अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम्।
निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम्॥" इति।

उक्तं चैतत्कारिकाव्याख्यानावसरे तत्रैव—"समन्ताद्वरणं संवृतिः। अज्ञानं हि समन्तात् सर्वपदार्थतत्त्वावच्छादनात् संवृतिरित्युच्यते" इति। एवं च शून्यतायाः परमार्थसत्यत्वं विश्वस्य च संवृतिसत्यत्व( अज्ञानकल्पितत्वम् )मिति स्थितम्। तथा च शून्यताद्वयवाद एव मध्यमकानां नये स्थितः। किञ्च, पूर्वोक्तरीत्या शून्यताद्वयवादो ब्रह्माद्वयवादाच्छब्दमात्रादेव भिद्यते, न त्वर्थतः। तथा हि—शून्यताया यल्लक्षणं प्रागुक्तं तद् ब्रह्मणि ब्रह्मवादिनामपि सम्मतम्। विश्वस्याज्ञानकल्पितत्वरूपं संवृतिसत्यत्वमपि तथेति। विज्ञानवादिनस्तु विज्ञानमेवात्मा, तच्च क्षणिकम्। अर्थास्तु सर्वेऽपि तस्यैव परिणामविशेषा आकारविशेषाश्चान्तरा एव, न तु तद्व्यतिरेकेण सद्रूपाः। तदुक्तं विज्ञप्तिमात्रतासिद्धौ—

विज्ञप्तिमात्रमेवैतदसदर्थावभासनात्।
यद्वत् तैमिरिकस्यासत्केशचन्द्रादिदर्शनम्॥

त्रिंशिकायां च—

विज्ञानपरिणामोऽयं विकल्पो यद् विकल्प्यते ।
तेन तन्नास्ति तेनेदं सर्वं विज्ञप्तिमात्रकम् ॥ १७ ॥
सर्वबीजं हि विज्ञानं परिणामस्तथा तथा ।
यात्यन्योन्यवशाद् येन विकल्पः स स जायते ॥ १८ ॥ इति ।

एवं च प्रपञ्चस्य विज्ञानाकारत्वेन विज्ञानमात्रत्वे व्यवस्थिते विज्ञानाद्वयवादो विज्ञानवादिनां व्यवतिष्ठते । सोऽयं विज्ञानाद्वयवादो नित्यविज्ञानरूपब्रह्माद्वयवादसदृक्षः सत्स्वपि केषुचिद् वैजात्येष्विति ।

शुद्धाद्वैतं तु प्रमेयरत्नार्णवे सर्वात्मभावनिरूपणप्रकरणे समुपपादितम्—"अत आत्मनो भावो भगवद्विषयोऽत्यादरेण सम्पादनीयः । तस्य सिद्धौ तिरोधाननाशे सर्वत्र पदार्थमात्रे वस्तुतोऽपि भगवद्रूपे परमानन्दरूपस्य पुरुषोत्तमस्य स्फूर्तौ सर्वत्रात्मभावो भवति । तथा च सर्वस्मिन्नात्मभावः सर्वात्मभाव इति फलितम्" इति । अग्रे च तत्रैव—

"मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति भेददर्शने एव मृत्युपराक्रमश्रवणात्" इत्युक्तम् । अत्र च पदार्थमात्रस्य वस्तुतो भगवद्रूपत्वोक्त्या भेदप्रतिभासो भ्रान्तिरेवेति शुद्धाद्वैतोपपत्तिः ।

ब्रह्माद्वैतवादे तु ब्रह्मैवैकं परमार्थतत्त्वं दृग्रूपम्, तद्दृश्यं तु सर्वं तद्विकारजातमाविद्यकं तत्रैव तादात्म्येनाध्यस्तमविद्यायाः परिणामः, ब्रह्मणस्तु विवर्तः । तात्त्विकोऽन्यथाभावः परिणामः, अतात्त्विकस्तु विवर्त इति विवर्तपरिणामयोर्भेदः । तत्र प्रपञ्चस्य मायायाः परिणामत्वे ब्रह्मणः सन्निधानमात्रेण अयस्कान्तवन्निमित्तत्वम्, अन्यथा तु विवर्तोपादानत्वमित्येवं ब्रह्मण्यभिन्ननिमित्तोपादानत्वव्यवहारो वेदान्तेषु । अविद्या तु ब्रह्मणः शक्तिर्मायाप्रकृत्यादिपदव्यपदेश्या भावाभावविलक्षणा तत्त्वातत्त्वाभ्यां ब्रह्मणो भिन्नत्वाभिन्नत्वाभ्यामनिर्वाच्या जगन्मूलभूता त्रिगुणात्मिका । तस्या एव जगज्जनन्या विभूतयः कालिकाद्याः शक्तयश्चिदाभासवत्यश्चिदवच्छिन्नाश्च शाक्तागमेषु सर्वकर्तृत्वेन सर्वनियन्तृत्वेन सर्वसंहर्तृत्वेन सर्वलयाधिष्ठानत्वेन च प्राधान्येन प्रदर्शिताः । सप्तशत्यामपि "देव्या यया ततमिदं जगदात्मशक्त्या" इत्युक्तम् । सा च विशुद्धसत्त्वप्रधाना माया मलिनसत्त्वप्रधानाऽविद्या इति भेदद्वयं समाश्रित्य यथायथं जीवेश्वरयोरुपाधिभावं भजन्ती एकस्यापि चैतन्यस्य जीवेश्वररूपाभ्यां जीवानां परस्परं भेदहेतुः । तदुक्तं पञ्चदश्याम्—

"सत्त्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्येति ते मते" इति ।

एवं प्रपञ्चस्याविद्याकृत्वेऽप्यात्मसाक्षात्कारं यावदबाधितव्यवहारोपपत्तयेऽर्थक्रियाकारित्वोपपत्तये च व्यावहारिकसत्यत्वमद्वैतिभिः स्वीक्रियते ।

सोऽयमद्वैतिनां प्रपञ्चे व्यावहारिकसत्यत्ववादो बौद्धानां सांवृतसत्यत्ववादादविलक्षणः। उपपादितं हि प्राक् शून्याद्वैतविवेचनावसरे संवृतेरविद्यारूपत्वमिति । एवं प्रपञ्चस्याविद्याकृत्वेनासत्यत्वे व्यवस्थिते ब्रह्माद्वयवादो निर्बाधः समायाति । ब्रह्माद्वयवादश्च श्रुतिभिस्त्रिधा दर्शितः । तथा हि—एकमेवाद्वितीयमित्यादिश्रुतिभिरवधारणमुखेन स्वगतसजातीयविजातीयभेदप्रतिषेधैः, "इदं सर्वं यदयमात्मा", "ऐतदात्म्यमिदं सर्वम्", "ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चात्" इत्यादिश्रुतिभिः सार्वात्म्योपवर्णनेन, "नेह नानास्ति किञ्चन" इत्यादिश्रुतिभिर्ब्रह्मणि प्रपञ्चप्रतिषेधेन च ब्रह्माद्वयवाद उपदर्शित इति ।

अस्य च ब्रह्माद्वयवादस्योपबृंहणाय दृष्टिसृष्टिवादः सृष्टिदृष्टिवादश्चेति द्वौ पक्षौ वैमत्येन वेदान्तिभिराश्रितौ । तत्राद्ये प्रपञ्चस्य प्रातिभासिकी सत्ता स्वीकृता, दृष्टिरेव सृष्टिरित्यभ्युपगमात् । द्वितीये तु तस्य व्यावहारिकी सत्ताऽभ्युपगता, सृष्टेर्दृष्टिरिति व्युत्पत्त्यभ्युपगमात् । उभयथाऽपि तु प्रपञ्चस्यापारमार्थिकत्वमेवेति न ब्रह्माद्वयवादस्य काचन क्षतिः । शुक्तिकायां रजतप्रत्यये आपणस्थे च रजते रजतप्रत्यये भ्रमत्वप्रमात्वयोर्निर्वाहस्तु दीर्घादीर्घकालभेदेन बाधाबाधाभ्यामुपपद्यते । सोऽयं दृष्टिसृष्टिवादो विज्ञानवादस्यानुकरोतीति न बाहुल्येनोपदिष्टो वेदान्तेषु विज्ञानवादपक्षपातभिया । दर्शितश्च विज्ञानवादे सुमहान् प्रद्वेषोऽद्वैतिनां पञ्चदश्याम्—

वैयर्थ्यमस्तु वा बाह्यं न वारयितुमीश्महे ।
प्रयोजनमपेक्षन्ते न मानानीति हि स्थितिः ॥ इति ।

दृष्टिसृष्टिवादस्य विज्ञानवादसाम्यं त्वसदर्थावभासमात्रतः, वैषम्यं तु प्रपञ्चस्य विज्ञानपरिणामत्वानभ्युपगमात् ।

सोऽयं ब्रह्माद्वयवादोऽलौकिकत्वेन सकलप्रमाणागोचरतया दुर्बलोऽप्यौपनिषदः श्रुतिभिरनुगृहीतो नानुभवानुगृहीतलौकिकप्रबलप्रमाणजन्यबाधबुद्धिभिः पराजेतुं शक्यते । तदुक्तमभियुक्तैः—

अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः ।
दुर्बलैरपि बाध्यन्ते पुरुषै राजसंश्रितैः ॥
सुदूरधावनश्रान्ता बाधबुद्धिपरम्परा ।
निवृत्ताद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते ॥ इति ।

दर्शितश्च भेदलक्षणप्रमायाः खण्डनया खण्डनखण्डखाद्येऽद्वैतवादव्यवस्थापनपराक्रमः श्रीहर्षमिश्रैः। तदालम्बनेनैव च धिक्कृता द्वैतिनः पञ्चदश्याम्—

निरुक्तावभिमानं ये दधते तार्किकादयः।
हर्षमिश्रादिभिस्ते तु खण्डनादौ सुशिक्षिताः॥ इति।

सोऽयं ब्रह्माद्वैतवादो द्वित्राणामेवानन्तसुकृतसम्भारसम्भृतानामीश्वरानुग्रहादेव जायते। तदुक्तं श्रीहर्षमिश्रैः—

ईश्वरानुग्रहादेषा पुंसामद्वैतभावना।
महाभयकृतत्राणा द्वित्राणां यदि जायते॥ इति।

सोऽयं ब्रह्माद्वैतवादोऽजातवादमाश्रित्यापि श्रुत्या समर्थितः। तथा हि—

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥ इति।

अजातवाद एव परमार्थ इति प्रपञ्चितमद्वैतप्रकरणे गौडपादीयासु माण्डूक्योपनिषत्कारिकासु—

भूततोऽभूततो वापि सृज्यमाने समा श्रुतिः।
निश्चितं युक्तियुक्तं च यत्तद् भवति नेतरत्॥ २३॥
नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि।
अजायमाने बहुधा मायया जायते तु सः॥ २४॥
संभूतेरपवादाच्च संभवः प्रतिषिध्यते।
कोऽन्वेनं जनयेदिति कारणं प्रतिषिध्यते॥ २५॥

ब्रह्माद्वयवादश्च सत्कारणवादमाश्रित्यापि श्रुत्या तदनुगामिभिश्च गौडपादादिभिः समर्थितः। तथा च श्रुतिः "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति। यद्यपि मायारूपात्मशक्तिसिद्धयेऽसत्कार्यवादप्रत्याख्यानपुरःसरं सत्कार्यवादोऽपि स्वीकृतोऽद्वैतिभिः, तथापि सोऽन्ततः सत्कारणवाद एव पर्यवस्यति। कारणात्मनैव कार्याणां तत्त्वाभ्युपगमात् स्वरूपेण तु तेषामसत्त्वमेवेत्यद्वैतिनां डिण्डिमघोष इति।

शिवाद्वैतवादे तु कर्ता ज्ञाता सर्वजन्तूनां स्वात्मभूत आदिसिद्धो विश्वरूपोऽहमिदमित्याकारद्वयामर्शोऽपि वस्तुतोऽखण्डो महेश्वरः प्रकाशात्मा। तस्य चानन्तशक्तेरपि प्रधानीभूतं

शक्तिपञ्चकं विद्यते चिदानन्देच्छाज्ञानक्रियारूपमिति। तत्र चिदानन्दशक्ती तु तस्य स्वरूपभूते एव न किञ्चित् कुर्वाते इति जगत्सर्गस्थितिलयेषु तस्य शक्तित्रयमेवोपयुज्यते। तत्रेच्छाशक्तिः सिसृक्षोर्भगवतो जगत्सर्गोन्मुखी विमर्शशक्तिरेव। तदुक्तं मालिनीविजयवार्त्तिके—

या सा शक्तिर्जगद्धातुः कथिता समवायिनी।
इच्छात्वं तस्य सा देवि सिसृक्षोः प्रतिपद्यते॥ इति।

इच्छात्वं तु भगवतः स्वभावभूतायाः प्रधानीभूतायाश्च विमर्शशक्तेर्विभूतिविशेषरूपमेव। तन्त्रसारे तु—प्रकाशस्वभावस्य शिवस्य स्वातन्त्र्यमानन्दशक्तिः, तच्चमत्कार इच्छाशक्तिः, प्रकाशरूपता चिच्छक्तिः,आमर्शात्मकता ज्ञानशक्तिः, सर्वाकारयोगित्वं क्रियाशक्तिरित्येवं मुख्याभिः शक्तिभिर्युक्तोऽपि वस्तुत इच्छाज्ञानक्रियाशक्तियुक्तोऽनवच्छिन्नः प्रकाशो निजानन्दविश्रान्तः शिवरूपः। स एव स्वातन्त्र्यादात्मानं संकुचितमवभासयन् अणुरित्युच्यते। पुनरपि च स्वात्मानं स्वतन्त्रतया प्रकाशयति येनानवच्छिन्नप्रकाशशिवरूपतयैव प्रकाशते। तथा च संसारदशायां संकुचितस्वात्मावभासनं समाधिदशायां कैवल्ये वाऽनवच्छिन्नस्वस्वरूपप्रकाशनं स्वातन्त्र्यवशादित्यायातम्। एष एवं चार्थोऽभिहितो योगसूत्रकारैः—"तदा द्रष्टुः स्वरूपेऽवस्थानम्" ( १–२ ), "वृत्तिसारूप्यमितरत्र" ( १।२ ) इति।

या तु भगवतः शक्तिरिदं वस्त्वेवमेव नान्यथेति सावधारणं विज्ञापयति सा ज्ञानशक्तिरित्युच्यते। या तु पुनरेवंभूतमिदं वस्तु भवत्वित्याकारिकेच्छा जायते तदैव क्रियाशक्त्या तद् वस्तु करोति सैव क्रियाशक्तिः। तथा चैतादृगिच्छाऽव्यवधानेन कार्यकारित्वमेव क्रियाशक्तिरिति। इदमेव च शक्तित्रितयं पुञ्जीभूय लोलीभूतं त्रिशूलमित्यागमेषु व्यवह्रियते। तदुक्तं तन्त्रालोकटीकायां प्रथमाह्निके जयरथेन—"लोलीभूतमतः शक्तित्रितयं तत्त्रिशूलकम्" इति। अस्यैव च प्रतीकं पुरा त्रिशूलरूपं शिवभक्तैर्धार्यते स्म। शैवशासकैश्च स्वप्रचालितराजकीयमुद्रासु त्रिशूलाङ्कनं कार्यते स्म। अधुनापि च यत्र तत्र क्वाचित्को विरलः प्रचारो दृश्यते।

एतस्य च शिवस्य तिस्रोऽवस्थाः शक्तिभेदेन पर-परापर-अपरभेदभिन्ना आगमग्रन्थेषूपदर्शिता। तत्र परावस्था "चिद्रूपाह्लादपरमो निर्विभागः परस्तदा" इति शिवदृष्टिकारिकया संप्रदर्शिता। भगवत इच्छाशक्तिरूपा तु परापरावस्था। ज्ञानक्रियाशक्तिद्वयरूपा तु अपरावस्थेत्यपि—

स यदास्ते चिदाह्लादमात्रानुभवतल्लयः ।
तदिच्छा तावती तावज्ज्ञानं तावत्क्रिया हि सा ॥

इति कारिकातद्व्याख्यानपर्यालोचनया प्रतीयते । एष च शक्तित्रितययोगो व्यक्तोऽपरावस्थायाम्, व्यक्ताव्यक्तस्तु परापरावस्थायाम्, अव्यक्तस्तु परावस्थायाम्; न तु कदाचिदपि शक्तित्रितयवियोगः शिवस्येत्यवधेयम् । किञ्च, चिदानन्दशक्त्योरपि स्वरूपभूतयोरविभागे (स्वरूपस्थितौ) विभागे (संसारदशायाम्) वा नैव कदापि वियोग इत्यपि बोध्यम् । तदुक्तं शिवदृष्टौ—

एवं न जातुचित्तस्य वियोगस्त्रितयात्मना ।
शक्त्या निर्वृतचित्त्वस्य तदभागविभागयोः ॥ ६ ॥ इति ।

एताश्च तिस्रोऽवस्थाः शक्तिरूपेण तन्त्रसारे भङ्ग्यन्तरेण प्रदर्शिताः—"शक्तयश्चास्यासंख्येयाः । किं बहुना, यद् विश्वं ता अस्य शक्तयः, ताः कथमुपदेष्टुं शक्याः" इति, "तिसृषु तावद् विश्वं समाप्यते । ययेदं शिवादिधरण्यन्तमविकल्प्य संविन्मात्ररूपतया बिभर्ति च पश्यति च भासयति च परमेश्वरः साऽस्य श्रीपराशक्तिः, यया च दर्पणहस्त्यादिवद् भेदाभेदाभ्यां साऽस्य श्रीपरापराशक्तिः, यया परस्परविविक्तात्मना भेदेनैव साऽस्य श्रीमदपराशक्तिः" इति । किञ्च, शिवस्य प्रागुक्तशक्तिपञ्चकवत् स्वरूपभूता अन्या अपि पञ्चशक्तयः सन्ति—सर्वकर्तृत्वं सर्वज्ञत्वं नित्यत्वं पूर्णत्वं व्यापकत्वं चेति । ताश्चासंकुचिताः शिवस्य स्वरूपस्थितौ संकुचिताश्च कला-विद्या-राग-काल-नियतिरूपतया जीवत्वप्रापिका भवन्ति । किञ्चास्य प्रागुक्तशक्तिपञ्चकद्वयवत् कृत्यपञ्चकमपि तत्र तत्रागमग्रन्थेषूपवर्णितम् । तद्यथा प्रत्यभिज्ञाहृदये—

नमः शिवाय सततं पञ्चकृत्यविधायिने ।
चिदानन्दघनस्वात्मपरमार्थावभासिने ॥ इति ।

तानि च पञ्चकृत्यानि सृष्टिस्थितिसंहारनिग्रहानुग्रहरूपाणि । सततमिति विशेषणस्वारस्येन स्वरूपस्थितावपि पञ्चकृत्ययोगोपपत्तिः सुस्पष्टैव । कृत्यानि चैतान्यस्य स्वतन्त्रस्य स्वरूपभूतान्येव, शिवातिरिक्तस्य वस्तुतोऽसत्त्वात् । तदुक्तं बोधपञ्चदशिकायाम्—

एवमस्य स्वतन्त्रस्य निजशक्त्युपभेदिनः ।
स्वात्मगाः सृष्टिसंहाराः स्वरूपत्वेन संस्थिताः ॥ ९ ॥ इति ।

तत्र सृष्टिसंहारौ जगतश्च कर्तुर्महेश्वरादभिन्नत्वं प्रकाशरूपत्वं च—"इह खलु परमेश्वरः प्रकाशात्मा, प्रकाशश्च विमर्शस्वभावः । विमर्शो नाम विश्वाकारेण विश्वप्रकाशेन विश्वसंहरणेन

चाकृत्रिमाहमिति विस्फुरणम्। यदि निर्विमर्शः स्यादनीश्वरो जडश्च प्रसज्येत। एष एव च विमर्शः—चित्, चैतन्यम्, स्वरसोदितापरा वाक्, स्वातन्त्र्यम्, परमात्मनो मुख्यमैश्वर्यम्, कर्तृत्वम्, स्फुरत्ता, सारः, हृदयम्, स्पन्द इत्यादिशब्दैरागमेषूद्घोष्यते। अत एवाकृत्रिमाहमितिसतत्त्वः स्वयंप्रकाशरूपः परमेश्वरः पारमेश्वर्या शक्त्या शिवादिधरण्यन्तजगदात्मना स्फुरति प्रकाशते च। एतदेवास्य जगतः कर्तृत्वमजडत्वं च। जगतः कार्यत्वमप्येतदधीनप्रकाशत्वमेव। एवंभूतं जगत् प्रकाशरूपात् कर्तुर्महेश्वरादभिन्नमेव। भिन्नवेद्यत्वेऽप्रकाशमानत्वेन प्रकाशनायोगान्न किञ्चित् स्यात्। अनेन च जगतोऽस्य भगवतः प्रकाशात्मकं रूपं न कदाचित्तिरोधीयते। एतत्प्रकाशनेन प्रतिष्ठां लब्ध्वा प्रकाशमानमिदं जगदात्मनः प्राणभूतं कथं निरोद्धुं शक्नुयात्, कथं च तन्निरुध्य स्वयमवतिष्ठेत" इति सन्दर्भेण पराप्रावेशिकायां सम्यङ्निरूपितम्।

एतस्मिन्नर्थे चैते श्लोका भवन्ति—

चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद्बहिः।
योगीव निरुपादानमर्थजातं प्रकाशयेत्॥
(ईश्वरप्र० १ अधि० ५-७)

सदा सृष्टिविनोदाय सदा स्थितिसुखासिने।
सदा त्रिभुवनाहारतृप्ताय भवते नमः॥
मुहुर्मुहुरविश्रान्तस्त्रैलोक्यं कल्पनाशतैः।
कल्पयन्नपि कोऽप्येको निर्विशेषो जयत्यजः॥

एवमिदन्ताविमर्शात्मकमपीदं विश्वं शिवस्वभावस्य प्रकाशस्य स्वभावभूतमेव नान्यत्, अन्यथा स्वच्छोऽपि स्फटिकादिवज्जड एव स्यात्, तथा च नावभासेत। तदिदमुक्तम्—

स्वभावमवभासस्य विमर्शं विदुरन्यथा।
प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः॥
(ई० प्र० १ अधि० ५-११)

स्थितिस्तु पालनावभासरूपा, इदन्तापरामर्शरूपस्य भगवच्छक्तिरूपस्य जगतः शक्तितादात्म्यापन्ने भगवति भैरवे यत् स्वातन्त्र्यशक्त्या प्रतिबिम्बनं तदेव। तदुक्तं बोधपञ्चदशिकायाम्—

स एव सर्वभूतानां स्वभावः परमेश्वरः।
भावजातं हि तस्यैव शक्तिरीश्वरतामयी॥ २॥

शक्तिश्च शक्तिमद्रूपाद् व्यतिरेकं न वाञ्छति।
तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव ॥ ३ ॥
स एव भैरवो देवो जगद्भरणलक्षणः।
स्वात्मादर्शे समग्रं हि यच्छक्त्या प्रतिबिम्बितम् ॥ ४ ॥ इति।

तदेवं सततं यथायथं व्यक्ताव्यक्ताहन्तेदन्ताद्वयस्वभावेऽप्यखण्डे क्रमेण स्वातन्त्र्यलक्षणया स्वरूपभूतया स्वशक्त्या सातत्येन विश्वोन्मीलननिमीलनक्रीडापरेऽपौरुषेयैश्चागमैरवधारिते सति विश्वस्य शिवाद्वैतवादः समर्थितो भवति। तथा हि—दृष्टं हि स्वप्नभ्रान्तिमनोराज्येषु विनाप्यर्थ-मर्थावभासनम्। तच्च यद्यपि क्षणिकमिति नास्ति तत्र मनस आश्वासः पदार्थानां सत्यत्वे, तथापि योगिनामिच्छावशाद् दृष्टं शरीरव्यूहकल्पनमित्यस्ति योगिनिर्मितपदार्थानां सत्यत्वे मनसो दृढः प्रत्ययः। स च योगिसर्गो निरुपादानक एव, तद्वद् भगवतः शिवस्यापि निरुपादानक एव जगत्सर्ग-स्तत्तदवभासरूपः शिवस्वरूपादनतिरिक्तः। तदुक्तम्—

निरुपादानसम्भारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥ इति।

एतेषां मते संविदद्वैतात्मनः पूर्णस्य रूपस्याप्रथनाद् (अख्यानात्) द्वैतप्रथैवाज्ञानमपूर्णं ज्ञानमपूर्णत्वाच्च तदेवापूर्णमन्यता-शुभाशुभवासना-शरीरभुवनाकारस्वभावविविधसंकुचितज्ञान-रूपतया मलत्रयात्मा बन्ध इत्युच्यते, बन्धरूपत्वादेव च तदज्ञानं समुच्छेद्यम्। यदुक्तम्—

मलं कर्म च मायीयमाणवमखिलं च यत्।
सर्वं हेयमिति प्रोक्तम्.............. ॥ इति।

मोक्षस्वरूपं तु श्रीतन्त्रालोके प्रथमाह्निके २१श्लोकव्याख्यावसरे—"इह तावदात्मज्ञानं मोक्ष इत्यविवादम्, अतो यदेवात्मनो लक्षणं तदेव मोक्षस्येति तन्नान्तरीयकत्वादेवास्य लक्षणसिद्धेः पृथग् लक्षणं न कृतम्, लक्षणादेः पुनः का वार्ता" इत्युक्तम्।

ज्ञानमेव विमोक्षाय युक्तं चैतदुदाहृतम्।
(तन्त्रा० १ आ० १५५)

मोक्षो हि नाम नैवान्यः स्वरूपप्रथनं हि सः।
स्वरूपं चात्मनः संवित्.............. ॥ इति च।
(तन्त्रा० १ आ० १५६)

प्रत्यभिज्ञाहृदये तु—"तेन शब्दार्थचिन्तासु न सावस्था न यः शिवः" इत्यादिना शिवजीवयोरभेदमुपक्रम्य एतत्तत्त्वपरिज्ञानमेव मुक्तिः, एतत्तत्त्वापरिज्ञानमेव च बन्ध इत्युक्तम्। (प्रत्यभिज्ञाहृ० ४)

तदेवमिदन्तापरामर्शरूपस्य विश्वस्य शिवशक्तितादात्म्यापन्नस्यावभासात्मकशिवस्वरूपादनतिरिक्तत्वेनाजडत्वाभ्युपपत्त्या शिवाद्वयवादः संसिद्धः। सोऽयं शिवाद्वयवादः क्षणिकविज्ञानवादादनतिरिक्त इति संभाव्यते बहूनां मतिरतिदुरवगाहत्वेनेति विज्ञानाद्वयवादशिवाद्वयवादयोः संभवन् भेदविस्तरः साम्प्रतं यथामति प्रदर्श्यते—

१. विज्ञानवादी विज्ञानस्य क्षणिकत्वं संमनुते, यत्सत्तत्क्षणिकमिति व्याप्तेः। शिवाद्वयवादी तु विश्वस्य तद्विज्ञानस्य चावभासात्मकशिवानतिरेकेण सदातनत्वम्। चिद्रूपस्य शिवस्य स्वातन्त्र्यशक्तिमहिम्नोन्मीलननिमीलने एव हि विमर्शात्मकस्य विश्वस्य भवतः, न तूत्पत्तिविनाशाविति न क्षणिकत्वं विश्वविज्ञानस्येति मन्यते।

२. प्रथमो विज्ञानस्यानेकत्वं क्षणिकत्वेन, अद्वयत्वं तु समानकालिकसजातीयानेकमूलविज्ञानसत्त्वाभिप्रायेण। आलयविज्ञानानि प्रवृत्तिविज्ञानानि च भिद्यन्ते, तेषामुपादानभूतं मूलविज्ञानं त्वेकमेवेति सिद्धान्तात्। समाधिदशायां मोक्षदशायां च ग्राह्यग्राहकाकारद्वयशून्यत्वेन च। तदुक्तम्—

द्वयग्राहविसंयुक्तं लोकोत्तरमनुत्तमम्।
निर्विकल्पं मलापेतं ज्ञानं स लभते पुनः॥ इति।

(महायानसूत्रालङ्कारे २८)

शिवाद्वयवादी तु शिवात्मकस्य विज्ञानस्य नित्यत्वेनैकत्वम्। अत्र प्रमाणानि प्रागुपदर्शितानीति नेह प्रतन्यन्ते।

३. प्रथमो विज्ञानस्य परिणामम्। स च परिणामो न सांख्यानामिव सान्वयः; किन्तु निरन्वयः। अत्र प्रमाणानि तु प्रागुपपादितानि। द्वितीयस्तु विज्ञानात्मकस्य शिवस्य न विश्वाकारेण परिणामः, सदा विश्वरूपत्वात्तस्य। विश्वावभासस्य कादाचित्कत्वं तून्मीलनस्य कादाचित्कत्वात्। वस्तुतस्तु उन्मीलनस्यापि न कादाचित्कत्वं शिवस्वभावानतिरेकात्। कादाचित्कत्वप्रतीतिस्तु विभ्रम एव।

४. प्रथमो विज्ञानस्यार्थाकारः परिणाम इति ब्रूते। द्वितीयस्तु अवभासात्मकस्यार्थस्य चिद्रूपशिवाकारतां सदातनीमिति।

५. प्रथमो विज्ञानपरिणामस्य ग्राह्यार्थस्य मायोपमत्वम्। तदुक्तं महायानसूत्रालङ्कारे—"मायोपमान् पश्यति लोकधातून्", "मायोपमान् वीक्ष्य स सर्वधर्मान्" इति। द्वितीयस्तु चिद्रूपशिवात्मकत्वेन सत्यत्वम्।

६. प्रथम एकस्मिन् ग्राह्यग्राहकभावाभ्युपगमेन स्वप्रकाशत्वम्। द्वितीयस्तु ग्राह्यग्राहकयोरुभयोरपि प्रकाशरूपत्वेनैव स्वप्रकाशत्वम्।

७. विज्ञानवादे विज्ञानस्य ग्राह्यग्राहकाकारपरिणामनिवृत्तिर्मोक्षः, शिवाद्वयवादे त्वहन्तेदन्ताविमर्शद्वयात्मकस्य शिवस्याहन्तामात्रस्वरूपपरामर्श एव स इति। किञ्च, शिवजीवयोरभेदप्रथनमेव मोक्ष इत्युक्तं प्राक्।

८. आद्यो बाह्यार्थस्य सांवृतं सत्त्वं मन्यते। संवृतिश्च भ्रान्तिधीरेवानिर्वाच्या। तदुक्तं लङ्कावतारे द्वितीयपरिवर्ते—"नित्यशब्दः पुनर्भगवन् क्व अभिहितः। भगवानाह—भ्रान्तौ महामते। कथं पुनर्महामते भावाभावविवर्जिता भ्रान्तिः........एतस्मात् कारणात् शाश्वता भ्रान्तिरिति। द्वितीयस्तु मायाख्यं तत्त्वं स्वीकरोति। मायालक्षणं तु "भिन्नवेद्यप्रथा माया" इति। मायाया अपि शिवस्वरूपानतिरेकेण नानिर्वाच्यत्वमिति।

९. आद्यमते विज्ञानस्य वासनासहकारेण स्वाकारजगत्स्रष्टृत्वम्। द्वितीयमते तु स्वातन्त्र्यशक्त्या विश्वोन्मीलनम्।

१०. आद्यमते सर्वं विज्ञानं स्वलक्षणमात्रविषयकं निर्विकल्पकं प्रमात्मकम्, अपोहादिविषयकं सविकल्पकं तु भ्रान्तम्, असदर्थावभासनात्। द्वितीयमते त्वहन्तेदन्तारूपविमर्शद्वयात्मकः शिवः, तस्याहन्ताविमर्शोऽप्यशुद्धो विकल्प एव। शुद्धस्तु निर्विकल्पकः। इदन्ताविमर्शोऽपि द्विविधः, शुद्धाशुद्धभेदात्। स च सर्वोऽपि विकल्पः संसार एव यद्यपि, तथापि नैयायिकानामिव तस्य प्रमात्वमेव, नाप्रमात्वम्। विकल्पः संसारोऽविकल्पस्तु मोक्ष इत्येवं भेदो युज्यत इत्येतस्यार्थजातस्य श्रीतन्त्रालोके प्रथमाह्निके चतुर्विंशश्लोकव्याख्यावसरे, ईश्वरप्रत्यभिज्ञायां ज्ञानाधिकारे षष्ठाह्निके षष्ठ्यां कारिकायां व्यवस्थापितत्वात्।

११. प्रथमो भ्रान्तिमेवाविद्यां भावत्वेनाभावत्वेन चानिर्वाच्यामनादिपरम्परासिद्धत्वेन

नित्यां च मन्यते । द्वितीयस्तु अविद्याऽशुद्धविद्यैव, विद्या च शुद्धाशुद्धभेदेन द्विविधाऽपि तत्त्वमेव, न त्वनिर्वाच्या ।

अतः परं ब्रह्माद्वयवादशिवाद्वयवादयोरपि सुदुर्दर्शभेद उपन्यस्यते—

१. ब्रह्माद्वयवादे परमार्थतत्त्वं सच्चिदानन्दरूपं ब्रह्माऽपरमार्थस्य विश्वस्य कल्पनाया अधिष्ठानम्, शिवाद्वयवादे तु शक्तिपञ्चकतादात्म्यापन्नः शिवः स्वात्मभूतावभासात्मकविश्वस्वभाव इति विशेषः ।

२. अद्वैतवादे ग्राहकस्य पारमार्थिकं सत्त्वं ग्राह्यस्य तु व्यावहारिकं प्रातिभासिकं च । शिवाद्वयवादे त्वहन्तेदन्तारूपविमर्शद्वयात्मकः शिवो ग्राह्यग्राहकोभयस्वभावः, ग्राह्यस्याप्यवभासस्वरूपानतिरेकात् ।

३. अद्वैतिमते सत्त्वेन निर्वाच्यस्य विज्ञानस्य कल्पनाधिष्ठानत्वम्, कल्पनायाः सदधिष्ठानिकाया एव दृष्टत्वात् । शिवाद्वयवादे तु विश्वस्य सत्यत्वेन शिवस्वरूपत्वेन च न तत्कल्पनाधिष्ठानत्वं शिवस्येति ।

४. अद्वैतवादे ब्रह्मणि न कर्तृत्वप्रमातृत्वे, सर्वधर्मरहितत्वात् । शिवाद्वयवादे तु शिवस्य कर्तृत्वप्रमातृत्वे इष्येते एव ।

५. अद्वैतिमते मायोपहितस्येश्वरस्य सृष्टिस्थितिसंहारकर्तृत्वम्, शिवाद्वयवादे तु सततं सृष्टिस्थितिसंहारनिग्रहानुग्रहरूपपञ्चकृत्यकारित्वं शिवस्य स्वभाव एवेति ।

६. अद्वैतवादिमत ऐकात्म्यभावना मोक्षोपायः । शिवाद्वयवादे तु दृढशक्तिपातेऽल्पोपायार्थकोऽनुपायः मोक्षः, अन्यदा तु तस्योपायत्रयम्—शाम्भवोपाय इच्छाशक्तिरूपः, शाक्तोपायो ज्ञानशक्तिरूपः, आणवोपायः क्रियाशक्तिरूप इति ।

७. अद्वैतवादे व्यावहारिकमीश्वरसत्त्वम्, शिवाद्वयवादे तु पारमार्थिकं तदिति ।

८. अद्वैतवादे कार्यस्य कारणात्मना सत्त्वम्, स्वरूपेण त्वसत्त्वम् । शिवाद्वयवादे तु कार्यस्य स्वरूपेणापि सत्त्वमिति ।

तदेवं शिवाद्वयवादः श्रुतिबहिर्भूतविज्ञानाद्वयवादादत्यन्तं विप्रकृष्ट इति, ब्रह्माद्वयवादात्तु कतिपयैरेवांशैर्विप्रकृष्टोऽपि "शिवमद्वैतं तुरीयं मन्यन्ते" इति श्रुत्यनुगृहीत इति चाबाह्य इति वेदपथानुगैरपि वसुगुप्तसोमानन्दोत्पलाभिनवगुप्तादिभिरादृत इति शिवम् ॥

***

# शिवाद्वयशासने शाक्ताद्वैतनये च वर्णमीमांसा

डॉ० शिवशङ्कर-अवस्थी, गोरखपुरविश्वविद्यालये संस्कृताध्यापकः ।

द्वन्द्वानां पङ्कमाविध्य विकसच्चित्तोत्पले श्रितम् ।
इन्द्रगोपवपुर्दिव्यं भावये प्रातिभं महः ॥

१—वर्णशब्दो ध्वन्यात्मको लिप्यात्मकश्च तन्त्रेष्वसकृन्निरूपितः । श्रीमान् *पुण्यानन्दाचार्यः कामकलाविलासे—"एको[1] वर्णो बहुधा शक्तियोगाद्वर्णाननेकान् निहितार्थो दधाति" इति श्वेताश्वतरश्रुतिमुद्धरन् प्रणव एव एको वर्ण इति सूत्रयाम्बभूव । अयमेव च परतमो वर्णः, एकाक्षरा देवी, आहतेतरच्छब्द इति विविधैरभिधेयैरागमेषु परिचीयते । यथाहुः श्रीमदभिनवगुप्तपादाचार्यास्तन्त्रालोके षष्ठाह्निके—

एको नादात्मको वर्णः सर्ववर्णाविभागवान् ।
सोऽनस्तमितरूपत्वादनाहत इहोदितः ॥ २१७ ॥
स तु भैरवसद्भावो मातृसद्भाव एष सः ।
परा सैकाक्षरा देवी यत्र लीनं चराचरम् ॥ २१८ ॥

तथा च विज्ञानभैरवविवृतौ शिवोपाध्यायः—

ओमिति स्फुरदुरस्यनाहतं गर्भगुम्फितसमस्तवाङ्मयम् ।
दन्ध्वनीति हृदि यत्परं पदं तत्सदक्षरमुपास्महे महः ॥

एतेनैव परतमवर्णेन स्वात्मनि निहितवसुधादिशिवावसानात्मकवाच्यार्थाः परतर-सूक्ष्मसूक्ष्म-सूक्ष्मस्थूल-सूक्ष्म-स्थूलवर्णाः समुद्यन्ति । अयमेव कुण्डलिनी कामकलेति च परशक्तिपातसमनुगृहीतस्वान्तास्तत्त्वविदः समभ्युपजग्मुः । कामकलाक्षरस्य त्रिन्दुत्रयात्मकत्वेन, त्रिन्दुत्रयस्य सूर्यसोमाग्नित्वेन,

---

१. एकोऽवर्ण इति तु श्वेताश्वतरे पाठः ।

* काश्मीरग्रन्थमालायां प्रकाशितायां कामकलाविलासव्याख्यायां ८ पृष्ठे दृश्यतेऽयं मन्त्रः । एषा च व्याख्या नटनानन्दकृतचिद्वल्लीव्याख्यायाः संक्षेपः, न तु पुण्यानन्दरचितेति, व्याख्याद्वयदर्शनेन स्फुटं परिज्ञायते—सम्पादकः ।

सोमसूर्याग्नीनामकारोकारमकारात्मता सर्वत्रागमेषु दृष्टेत्येतत्सर्वं त्रिकात्मकं कामकलाक्षरे विश्रान्तमिति प्रणवेनापि कामकलाक्षरमेव गीयत इति त्रिपुरामहिमस्तोत्रटीकायां नित्यानन्दाः समर्थयाञ्चक्रिरे। देशिकेन्द्रो दुर्वासा अपि शक्तिस्तोत्रे—"प्रणवता ते गीयते चागमैः" इत्येवमेव व्याजहार। कुण्डलिन्याः प्रणवस्य च सार्द्धत्रिवलयाकारतापि "अध्युष्टवलयाकारा प्रणवत्वमुपागता" इति तट्टीकायां प्रतिपत्तिं नीता। "प्रकृतिः निश्चला परावाग्रूपिणी परप्रणवात्मिका कुण्डलिनी शक्तिः" इति प्रपञ्चसारतन्त्रविवरणे पद्मपादाचार्याः प्रतिपेदिरे।

किञ्च—"अर्द्धमात्राक्षरा नित्या याऽनुच्चार्या विशेषतः", "अर्द्धमात्राक्षरो नादः श्रूयते लिङ्गमूर्द्धनि" इति सप्तशत्या वायवीयसंहितायाश्चोक्तौ सार्द्धत्रिमात्रात्मकं प्रणवाक्षरं तत्र तत्रोपदिष्टं विचार्य मा भून्मनसि मनागपि मनस्विनां शङ्काङ्कः। "तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः" इति पुष्पदन्तोक्त्या अर्द्धमात्रायामप्युत्तरोत्तराणुध्वनीनां सत्तायाः स्वीकारात्। ध्वनीनामणुत्वाणुतरत्वाणुतमत्वादिकं गुरूपदेशादधिगन्तव्यमित्यभिदधानेन मधुसूदनसरस्वतीस्वामिना तत्रैव—"तीर्णविकृति सर्वविकारातीतं तुरीयमवस्थात्रयाभिमानि विलक्षणं तव धाम स्वरूपमखण्डचैतन्यात्मकम्। तवेति राहोः शिर इतिवदुपचारेण षष्ठी। अणुभिर्ध्वनिभिरवरुन्धानं स्वत उच्चारयितुमशक्यैरर्द्धमात्राया प्लुतोच्चारणवशेन निष्पाद्यमानैः सूक्ष्मशब्दैरवबोधं कुर्वत् प्रापयत् समुदायशक्त्या बोधयदिति यावत्। अर्द्धमात्राया एकत्वेऽपि ध्वनिभिरिति बहुवचने प्लुतोच्चारणे चिरकालमनुवृत्तायास्तस्या अनेकध्वनिरूपत्वान्न विरुद्धम्" इति वितत्य व्याख्यानात्। अत एव च—"प्रणवोद्ध्वार्द्धमात्रातोऽप्यणवे महते नमः" इति भट्टनारायणोक्तिः परात्रिंशिकाविवरणे धृता सङ्गच्छते। ध्वनयश्चैते वस्तुतो बिन्द्वर्द्धचन्द्ररोधिनीनादनादान्तशक्तिव्यापिनीसमनोन्मनाख्याः कलाः। अत्रापि चाणुध्वनिष्वेकैकस्य बिन्द्वादिकस्य परिवारभूताः कलाः सन्तीति स्वच्छन्दतन्त्रे नेत्रतन्त्रे च व्यावर्णिताः। यद्यपि बिन्द्वादीनां नवानामपि सूक्ष्मसूक्ष्मतरसूक्ष्मतमकालैरुच्चार्यध्वनिविशेषाणां वर्णरूपता वरिवस्यारहस्यप्रकाशे महायोगिना भासुरानन्दनाथापरनामधेयेन भास्कररायेण समुररीकृता, तथाप्यकाराद्युन्मन्यन्ताः प्रणवस्यैकाक्षरस्य मात्रा एवेति प्रत्येतव्यम्। अस्मिन्नेवैकवर्णे सर्वमपि चराचरं वाच्यवाचकात्मकं जगन्निलीनम्, तत एव सर्गकाले विकासमायातीति निर्बाधमुद्घोषयितुं पार्यते।

२—अस्मादेव वर्णादादौ सोमसूर्यकलाजालग्रसनवमनचतुरा अकारमारभ्य मध्ये च कादियोनिजातमवसाने च बिन्दुं ददती 'अहम्' इत्याकारिका भगवती 'अहन्ता' समुदेति। यां हि

अभिरामाम् 'आहो पुरुषिकाम्' आहुः श्रीमच्छङ्कराचार्याः सौन्दर्यलहर्याम्—कणत्काञ्चीदामेत्यादिना। या च—

अहमित्येकमद्वैतं यत्प्रकाशात्मविभ्रमः।
अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः॥
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः।
अनयोः सामरस्यं यत्परस्मिन्नहमि स्फुटम्॥

इत्यादिभिश्च वरिवस्यारहस्यप्रकाशे संकेतपद्धतिनीत्या विवृतिमापादिता। किञ्च, एतयैवाहन्तया प्रकाशानन्दमूर्तिचक्रव्याप्तिश्च महार्थमञ्जर्यां सङ्केतिता द्वादश-षोडश-सप्तदशवर्णात्मिका अकारात्प्रभृतिविसर्गविश्लेषपर्यन्ता परात्रिंशिकाविवरणे प्रपञ्चिता संगृह्यते। एतामेवाहन्तामभिनवगुप्ताचार्य एवं प्रास्तौत्—

विश्वत्र भावपटले परिजृम्भमाणविच्छेदशून्यपरमार्थचमत्कृतिर्या।
तां पूर्णवृत्त्यहमिति प्रथनस्वभावां स्वात्मस्थितिं स्वरसतः प्रणमामि देवीम्॥

क्रमस्तुतिपञ्जिकारूपायां कालिदासकृतायां चिद्गगनचन्द्रिकायामेष एवार्थ इत्थं समुपक्रान्तः—

याहमित्युदितवाक् परा च सा यः प्रकाशकलितात्मविग्रहः।
यौ मिथः समुदिताविहोन्मुखौ तौ षडध्वपितरौ श्रये शिवौ॥ ६॥

किञ्च,
मङ्गले त्वमसि वाक्चतुष्टये या परा स्फुरति मूर्तिमण्डले॥
सा प्रकाशसुखवृन्दचक्रगा नादबिन्दुलिपिमूर्तिरिज्यसे॥ ७४॥

३—अस्मादेव च वर्णानां त्रिकम्, (अ, इ, उ—इति) ततः षट्कम् (अ, आ, इ, ई, उ, ऊ), ततः षण्ढवर्जं द्वादश स्वराः कालिका वा, षोडश च कलास्तिथयो वा बीजरूपाः प्राणापानवाहे सूर्यसोममार्गे शरीरान्तर्गते प्रयत्नमन्तरैव प्रादुर्भवन्ति। एतेषामाध्यानतयैव कवर्गादीनां कूटाक्षरपर्यन्तानां योनीनामुद्भवः। अनन्तरं च समस्तो मातृकायाः पूर्वमालिन्याः सिद्धाया वा वर्णानां स्थूलानामुत्तरमालिन्याश्च भिन्नयोन्याः 'ना'दि'फा'न्तान्ताया मालिनीविजयोत्तरतन्त्रे विवृतायाः क्रमः प्रथामेति। एतदुद्दिश्य रुद्रयामलांशरूपायां परात्रिंशिकायामुक्तम्—

अथाद्यास्तिथयः सर्वे स्वरा बिन्द्ववसानगाः।
तदन्तः कालयोगेन सोमसूर्यौ प्रकीर्तितौ॥५॥

पृथिव्यादीनि तत्त्वानि पुरुषान्तानि पञ्चसु ।

क्रमात् कादिषु वर्गेषु मकारान्तेषु सुव्रते ॥ ६ ॥

वाय्वग्निसलिलेन्द्राणां धारणानां चतुष्टयम् ।

तदूर्ध्वं शादिविख्यातं पुरस्ताद्ब्रह्मपञ्चकम् ॥ ७ ॥

अमूला तत्क्रमाज्ज्ञेया क्षान्ता सृष्टिरुदाहृता ।

सर्वेषामेव मन्त्राणां विद्यानां च यशस्विनि ॥ ८ ॥

इयं योनिः समाख्याता सर्वतन्त्रेण सर्वदा ।

राजानकक्षेमराजाचार्यः "मातृकाचक्रसम्बोधः" (१।७) इति शिवसूत्रस्य विमर्शिन्यामेनमेवार्थं स्फुटं निर्णिनाय । यथा—श्रीपरात्रिंशिकादिनिर्दिष्टनीत्या अहं विमर्शप्रथमकला अनुत्तराकुलस्वरूपा प्रसरन्ती आनन्देच्छेशनोन्मेषोनतां (आ, इ, ई, उ, ऊ, इतिरूपां) प्रदर्श्य द्विरूपां चेच्छां विद्युत्कल्पेन तद्विद्योतनकल्पेन च तेजोमात्ररूपेणैषणीयेन रञ्जितत्वाद् रश्रुत्या अरूषितेन ऋॠरूपेण, तथैव स्थैर्यात्मना लश्रुत्याऽरूपितेन ऌॡरूपेणामृतात्मकं बीजान्तरप्रसवासमर्थतया षण्ढाख्यं वर्णचतुष्टयं प्रपञ्चयति । पूर्वोक्तानुत्तरानन्देच्छासङ्घट्टेन त्रिकोणबीजमेकारम्, अनुत्तरानन्दोन्मेषयोजनया च क्रियाशक्त्युपगमरूपमोकारं प्रोक्तबीजद्वयसङ्घट्टेन षट्कोणमैकारं शूलबीजमौकारं च प्रदर्श्य इयत्पर्यन्तं विश्वैकवेदनरूपं बिन्दुमङ्कारमुन्मील्य युगपदन्तर्बहिर्विसर्जनमयबिन्दुद्वयात्मिकां विसर्गभूमिमुपदर्शितवती । अत एव अन्तर्विमर्शनेनानुत्तरे एवैतद्विश्वं विश्रान्तम् । बहिर्विमर्शेन तु कादिमान्तं पञ्चकपञ्चकम् अ-इ-उ ऋ-ऌशक्तिभ्यो धरातो पुरुषान्तं समस्तं प्रपञ्चयति । एकैकस्याश्च शक्तेश्चिदानन्देच्छाज्ञानक्रियेति पञ्चशक्तित्वमस्तीत्येकैकतः पञ्चकोदयः । आभ्य एव शक्तिभ्यो व्याकरणादिशिक्षोक्तक्रमेण, अन्तःपुम्भूमौ नियतिरागकलाविद्याकञ्चुकरूपेणावस्थानाद् अन्तःस्थाख्यान् प्रमातृभूमिधारणेन धारणाशब्देनाम्नायेषूक्तान् तदुपरि भेदविगलनेनाभेदापत्त्योन्मिषितत्वादूष्माभिधानान् चतुरो वर्णानाभाषितवती । शषसहेष्वन्ते सर्वसृष्टिपर्यन्तवर्ति परिपूर्णममृतवर्णं सकारं प्रदर्श्य तदन्ते हकारस्य प्राणबीजस्य प्रदर्शनं कृतम् । तदनुत्तरशक्त्याप्यायितानाहतमयमियद्वाच्यवाचकरूपं षडध्वस्फारमयं विश्वम् । अत एव प्रत्याहारयुक्त्याऽनुत्तरानाहताभ्यामेव शिवशक्तिभ्यां गर्भीकृतमेतदात्मकमेव विश्वमिति महामन्त्रवीर्यात्मनोऽहंविमर्शस्य तत्त्वम् ।

४—वर्णेषु वर्गाणां नवकमष्टकं सप्तकं वा तन्त्रेषु प्रथितम् । तत्र अकारककारादिवर्गाणामष्टकं सप्तकं वाऽद्यायाष्टमातृकाः सप्तमातृका वा सुप्रसिद्धाः । न केवलं तन्त्रेषु, किन्तु सामाजिक-

जीवनेऽप्यद्यावधि विवाहे यज्ञोपवीते च संस्कारे मातृकार्चनाऽनिवार्या। प्रागेतासां पाषाणप्रतिमा अपि निर्मीयन्ते स्मेत्यत्र एलोरा-वेल्लूर-कुम्भकोणमित्याख्यप्रदेशस्थाः सप्तमातृकामूर्तयः प्रमाणम्। पुरीक्षेत्रस्य मार्कण्डेयसरोवरतटेऽपि सप्तमातृकामूर्तयो दृश्यन्ते। कुमारगुप्तस्य (ई०४१३-४५५) समकालिके एकस्मिन् शिलालेखे सप्तमातॄणां चर्चाऽस्ति। चालुक्यवंशीयाभिलेखेष्वपि (ई० ५४०-७५३) एतासामुल्लेखः सुवचः। एवं च वर्णभट्टारकाणां वर्गाधिष्ठातॄणां च ब्राह्म्यादीनां च मातॄणा-माकृतिमत्ता लोके प्रसिद्धासीदिति प्रतीयते। स्वच्छन्दतन्त्रे मातॄणामभिरूपस्य करचरणादिमतो विशेषतो वर्णनमुपलभ्यते। योगिनीहृदयस्य मन्त्रसङ्केताख्ये द्वितीयपटलेऽपि मातॄणामाकृतिविवे-चनाऽनुसन्धातव्या। तत्र मातृका योगिनीशब्देनोपदिष्टाः। वर्णानां युवतिरूपाणामभिरूपवाह-नादिकं वर्णोद्धारतन्त्रे, नामानि सामर्थ्यं च कामधेनुतन्त्रे द्रष्टव्यम्। देवता ऋषयश्छन्दांस्यपि एतेषां तत्तदागमेषूहितानि।

५—वर्णानां सङ्ख्यापि विषयानुरोधेन विविधा। नववर्गात्मकपाञ्चभौतिकसमुच्चयानुसरणेन भूतलिप्यां द्विचत्वारिंशत्—"एषा भूतलिपिः प्रोक्ता द्विचत्वारिंशदक्षरैः" इति देशिकेन्द्रो लक्ष्मणा-चार्यः कान्यकुब्जनिवासी। "पञ्चाशद्वर्णमुण्डालीगलद्रुधिरचर्चिताम्" इति निरुत्तरतन्त्रे, "मम कण्ठे स्थितं बीजं पञ्चाशद्वर्णमद्भुतम्" इति कामधेनुतन्त्रे, "प्रतिवर्णविभेदेन शतार्द्धकिरणोज्ज्वला" इति मालिनीविजये वर्णानां पञ्चशती। पञ्चाशच्छब्दो लक्षणयैकपञ्चाशत्पर इति भास्करराय: सौभाग्यभास्करे न्यासानुरोधेनैकपञ्चाशद्वर्णान्निरदिशत्। "आदिहान्तनिजदेहनिर्गताः षष्टिरत्र चतुरुत्तरा रुचः" इति चिद्गगनचन्द्रिकोक्तदिशा वर्णानां चतुःषष्टिरपि शम्भुमते उक्ता। पूर्वमाभ्यन्तरप्राणवाहे सूक्ष्मस्थूलवर्णोदयश्चर्चितः। तत्र ककाराद्धकारपर्यन्तं त्रयस्त्रिंशद्व्यञ्जनव-र्णानां त्रयस्त्रिंशदर्द्धमात्राः, ह्रस्वस्वराणां दश, दीर्घाणामष्टानां द्वात्रिंशत्, प्लुतस्य 'ॡ३' इत्यस्य षडिति सङ्कलनयैकाशीतिमात्राः। एतद्वर्णैः समाहृता "एकाशीतिपदा देवी" मतङ्गतन्त्रे उपदिष्टा, आचार्यवर्येणाभिनवगुप्तेन तन्त्रालोके षष्ठे आह्निकेऽनूदिता—

एकाशीतिपदा देवी शक्तिः प्रोक्ता शिवात्मिका।
एकाशीतिमिमामर्द्धमात्राणामाह नो गुरुः।

इत्यादिना। वर्णानां देवतात्मकता न केवलमागमेषु सूचिता, नैगमसाहित्येऽपि तेषां तथाविध उपदेशः सुलभः। यथोक्तं शुक्लयजुःप्रातिशाख्ये—

वर्णदेवताः॥ २१॥
आग्नेयाः कण्ठ्याः॥ २२॥

नैर्ऋत्या जिह्वामूलीयाः ॥ ३३ ॥

सौम्यास्तालव्याः ॥ ३४ ॥

रौद्रा दन्त्याः ॥ ३५ ॥

ओष्ठ्या आश्विनाः ॥ ३६ ॥

वायव्या मूर्द्धन्याः ॥ ३७ ॥

शेषा वैश्वदेव्याः ॥ ३८ ॥

वस्तुतः "न विद्या मातृकापरा" इति स्वच्छन्दतन्त्रोक्तदिशा सर्वे वर्णा विविधविद्यादेवतारूपा एवेत्येतद्दर्शनविदां समयः । इयदवधि ध्वन्यात्मकानां वर्णानां संक्षिप्य वर्णना विहिता ।

६–अथ लिप्यात्मकानाम् । यथैकवर्णेन प्रणवेन सर्वोऽपि ध्वन्यात्मको वर्णसमूहः समुद्भूतस्तथैव प्रणवाकृत्या वर्णलिपिरपि व्यक्तिमायातेति प्रतीयते । न केवलमयमक्षराणां योनिः, अपि तु निखिलभूतजातानामाकारस्य मूलप्रकृतिः । प्रणवस्याकृतिविशेषे तु नास्ति प्रमाणाभावः, वाशिष्ठे महारामायणे ओङ्काराक्षरस्योत्तरार्द्धसमानाकारायाः शरीरे कुण्डलाकारनाड्या वर्णनात् । ॐ इत्यक्षरस्य लेखनप्रकारे वैविध्यं दृश्यते । ईस्वीयषष्ठशतके जापानदेशस्थ 'होर्युजी' इत्याख्ये मठे प्राप्तस्य ताडपत्रेऽङ्कितस्य 'उष्णीशविजयधारिणी' इत्याख्यपुस्तकस्यान्ते लिखितायां वर्णमालायामोङ्कारस्य चिह्नं नागर्याः सप्ताङ्कवदस्ति । प्राचीनजैनबौद्धब्राह्मणानां हस्तलिखितपुस्तकानां प्रारम्भे ओङ्कारस्यानेकविधो लेखः प्राप्यते । ईसवीयसप्तशतकादारभ्य द्वादशशतकपर्यन्तेषु—

१. मेवाडस्थगुलिवंशीयनृपापराजितस्य समसामयिककुण्डेश्वरस्य ( ई० ६६१ )

२. चम्बास्थस्य मेरुवर्मणः ( ई० ८ शती ),

३. प्रतिहारवंशीयनृपस्य नागभटस्य जोधपुरस्थस्य, विजयपालस्य च अलवरस्थस्य, ( ई० ६५९ )

४. छिन्दवंशीयलल्लस्य, ( ई० ९९२ )

५. धाराया भोजराजस्य, ( उत्कीर्णं कूर्मशतककाव्यम्, ई० ११ शती )

६. कामरूपनृपस्य वैद्यदेवस्य, ( ई० १२ शती )

७. आसामस्थवल्लभेन्द्रस्य ( ई० १२ शती )

शिलालेखेषु दानपत्रेषु च कुत्रचित् प्रश्नचिह्नवत्, कचिन्नवाङ्कसमः, कुत्रापि विपर्यस्तप्रश्नचिह्नसदृशः, क्वापि समुत्सारितफणः फणीवोङ्काराक्षरः प्रतिभाति । प्रतीयते यत्तत्र तत्रोट्टङ्कित-

स्वरूपा एतदक्षरस्य अंशांशरूपा एवेति[1]। शास्त्रेषु चास्य कुण्डलिनीसमासार्द्धत्रिवलयाकारतोपदिष्टेत्यूह्यम्। यथा चाहुः—"शक्तिं शक्तिनिरासमीशनिलयं'......चोङ्कारमाद्यं भजे॥" इति ओङ्कारमात्रामालिकास्तवस्य भाष्यकृतः—"अत्रापि परारूपस्य नादात्मकस्य शब्दब्रह्मणः कारणीभूतां कुण्डलिनीरूपां शक्तिं सार्द्धत्रिमात्राधिष्ठानसार्द्धत्रिवलयाकारचिद्रूपमाद्यमोङ्कारं भजे इति सम्बन्धः" इति।

७—एतदाकारवतः प्रणवाक्षरादेव मातृकालिपिप्रादुर्भाव इति सम्भाव्यते। ध्वन्यात्मकवर्णवल्लिप्यात्मकवर्णानामपि किमपि वैज्ञानिकं स्वरूपमासीन्न वेति विचारणायां 'ब्राह्मी' इति 'कुटिला' इति, 'देवनागरी' इति लिप्यभिधेयेषु चेतः सचिन्तं भवति। 'इण्डियन ऐण्टिक्वेरी' इत्याख्यशोधपत्रिकायाः पञ्चत्रिंशद्भागे डा०आर०शामशास्त्रिणा 'देवनागरीलिप्युत्पत्तिविषयकसिद्धान्तः' इति निबन्धे तान्त्रिकयन्त्ररचनातो देवनागराक्षराण्याविरासुरिति सप्रमाणं प्रतिपादितम्। प्राचीनान्यलिप्यनुपलम्भे डा०गौरीशङ्करहीराचन्द-ओझामहोदयो ब्राह्मीलिपिमेव तन्मूलभूतां मन्यमानः स्वकीयायां भारतीयप्राचीनलिपिमालायामुपर्युक्तस्थापनां प्रशंसन्नपि तत्रोद्धृततत्तत्तान्त्रिकग्रन्थानामशोककालादूर्ध्वभूतत्वे मानाकाङ्क्षेति स्वारुचिं प्राचीकशत्।

कुटिलेति महाशक्तेः कुलकुण्डलिन्या अपरं नामधेयम्। 'दाक्षायणीति कुटिलेति गुहारणीति" इति पञ्चस्तव्याम् "कुटिलारूपके तस्याः प्रतिरूपे वियत्कले।" इति योगिनीहृदये च दर्शनात्। ईशवीयतृतीयशतकान्नवमशतकपर्यन्तं ब्राह्मीलिपितो विकासमायाता कुटिललिपिरिति तद्विदः। देवनगरसम्बन्धिनी देवनागरीति स्वीकारे वर्णोद्धारतन्त्रोक्ताः—

दक्षतः कुण्डलीभूत्वा कुञ्चिता वामतो गता।
तथोर्ध्वसङ्गता रेखा दक्षोर्ध्वा तासु शङ्करः॥
विधिर्नारायणश्चैव सन्तिष्ठेत् क्रमतः सदा।

इत्यादयोऽकारादिवर्णानां लेखनप्रकाराः सङ्गच्छन्ते। किन्तु श्रीराधाकान्तदेवः शब्दकल्पद्रुमे वर्णोद्धारतन्त्रोक्तो लेखनविधिर्बङ्गाक्षरमात्रपर इति निर्दिदेश। श्रीरामतोषभट्टाचार्येण तु स्वकीये प्राणतोषिणीसंग्रहे—

---

१. किञ्च, स्कान्दे प्रणवकल्पे—"करौ पातु कराकृतिः" इति कवचश्लोकं व्याकुर्वता श्रीमद्गङ्गाधरेन्द्रसरस्वत्याख्यभिक्षुणा प्रसारिताङ्गुलिकवितस्त्याकारकरस्याकृतिरिव आकृतिर्यस्य, नागराक्षरे तथा कैश्चिदोङ्कारलेखनात् सर्वशिल्परचनाहेतुत्वाद्वा कराकृतिरित्युक्तम्।

षाण्मासिकेऽपि समये भ्रान्तिः सञ्जायते यतः ।
धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा ॥

इति ज्योतिस्तत्त्वान्तर्गतं बृहस्पतिवचनमुल्लिखन् सामान्येनैव तत्तन्त्रोक्तरीत्या वर्णानुद्दधार । एवमयं विचिकित्सां नीतो विषयो विशेषतोऽनुसन्धातव्यः । श्रीशङ्करानन्दस्वामिना स्वकीये 'दि ऋग्वेदिक कल्चर आफ दि प्रि-हिस्टारिक इण्डस्' इत्याख्ये ग्रन्थे पूर्वाविष्कृत-'ईजिप्शियनादिसु चतुर्षु चित्रलिपिषु पञ्चमी जयपुरीयाप्यनुसन्धाय योजिता । तन्महानुभावस्यैतत्कथनमस्ति यज्जयपुरीयचित्रलिपिकुञ्चिका तन्त्रेषु निगूढा । उभयत्र च सङ्केतसाम्यं दृश्यते । किञ्च,

(१) ईजिप्शियन । (२) क्यूनिफार्म (प्राकृतन पर्शियन, मीग्यिन, असीरियन)
(३) इण्डस । (४) चाइनीज़ ।

प्रौढ्या सोऽवदद्यत्तन्त्राण्येव प्राकृतनगूढलिप्यभिज्ञानसाधनानि, विश्वलिपिमातृभूतत्वादिति ।[1]

एवं वर्णानामाकारचिन्तनावसरे चित्रलिपिविषयोऽपीह दिङ्मात्रं दर्शितः । वस्तुतस्तु योगस्वाध्यायावेव वर्णसामर्थ्योद्घाटनपटीयांसाविति सुधीभिर्विभावनीयम् । नहि तावत्—"दशमस्त्वमसि" इति वाक्यज्ञानमात्रेण किमपि सेत्स्यति । एतदभिप्रेत्यैव शारदातिलकतन्त्रे उक्तम्—

ध्यायेल्लिपितरोर्मूले देवीं तन्मयपङ्कजे ।
वदन्ति सुधियो वृक्षं नित्यं वर्णमयं शुभम् ॥
परसंविन्महाबीजं बिन्दुनादमहाशिवम् ।
पृथिव्यक्षरशाखाभिः सर्वाशासु विजृम्भितम् ॥
सलिलाक्षपत्रैः स्वैः सञ्छादितजगत्त्रयम् ।
वह्निवर्णाङ्कुरैर्दीप्तं रत्नैरिव सुरद्रुमम् ।
मरुद्वर्णलसत्पुष्पैर्द्योतयन्तं वपुःश्रियम् ।
आकाशार्णफलैर्नम्रं सर्वभूताश्रयं परम् ।
परामृताख्यमधुभिः सिञ्चन्तीं परमेश्वरीम् ॥
वेदागमादिभिः क्लृप्तसमुन्नतिमनोहरम् ।
शिवशक्तिमयं साक्षाच्छायाश्रितजगत्त्रयम् ।
एनमाश्रित्य मुनयः सर्वान् कामानवाप्नुयुः ॥

—:※:—

१. दि तन्त्राज़, आर दि ग्रेटेस्ट फैक्टर इन दि डिसाइफरमेण्ट आफ दि स्क्रिप्ट, बीइङ्ग दि मदर आफ आल दि स्क्रिप्ट्स प्रेजेण्ट आन दि ग्लोब । (पृ० १०४ पुस्तक २)

# शैवागमदर्शनेषु परतत्त्वविमर्शः

डॉ० रामचन्द्रद्विवेदी, दिल्लीविश्वविद्यालये सहायकप्राध्यापकः ।

कालमुख-कापालिक-कारुणिकप्रभृतीनि बहूनि शैवदर्शनानि यत्र तत्र नामतः स्मर्यन्ते । नहि तेषां साहित्यं साम्प्रतं प्राप्यते, येन सप्रमाणं साङ्गोपाङ्गं च पूर्वोक्तदर्शनविमर्शः क्षोदक्षमता-मवगाहेत । अथ दश शैवदर्शनान्यैतिह्यप्रमाणं तत्साहित्यं चोपजीव्य शैवागमपारङ्गतैः सावष्टम्भ-मनुसन्धीयन्ते । एतानि तानि १—द्वैतपाशुपतदर्शनम् , २—द्वैतशैवसिद्धान्तदर्शनम् , ३—द्वैताद्वैत-लकुलीशपाशुपतदर्शनम् , ४—विशिष्टाद्वैतशैवदर्शनम् , ५—वीरशैवमतं शैवविशेषाद्वयदर्शनं वा, ६—नन्दिकेश्वरीयं शिवाद्वैतदर्शनम् , ७—रसेश्वरदर्शनम् , ८—क्रमदर्शनम् , ९—कुलदर्शनम्, १०—प्रत्यभिज्ञादर्शनं च । पर्यन्तसंख्यातानि क्रमकुलप्रत्यभिज्ञादर्शनान्येकान्तेन काश्मीरदेशो-द्भवत्वात् काश्मीरिकैश्चाचार्यैस्तादितरविस्तारकेन प्राधान्येन परिपोषितत्वादिदानीन्तनैस्तत्त्वज्ञैः काश्मीरशैवदर्शनानीत्यभिधीयन्ते । शैवागमान् परमं प्रमाणीकृत्य प्रवृत्तेष्वेषु दर्शनेष्वनेकभूमिकं वैचित्र्यं प्रेक्षावतामापाततः प्रेङ्खत्प्रेक्षामारोहतितमाम् । वेदान्तवाक्यकुसुमग्रथनार्थानि बादरायण-सूत्राणि प्रमाणकोटिमाटीकयद्भिरसंख्यातैरिवाचार्यैर्यावन्तो यादृशाश्च पक्षाः प्रतिष्ठापिताः, सिद्धान्ताः समाम्नाताः, दृष्टयश्च समुन्मेषिताः, प्रायस्तावन्तस्तादृशाश्चात्रापि दिग्भेदेन पन्थानः प्रवर्तिताः प्रसृताः परिमार्गिताश्च परिलक्ष्यन्ते । पुनश्च दृष्टीनामानन्त्यात् 'रुचीनां वैचित्र्यादृजुकुटिल-नानापथजुषां' नृणां सकलप्रयोजनमौलिभूतं परमपुरुषार्थं प्रतिपादयितुं निगूढरमणीया नव्याश्चार्था आलोकनीयतामानीताः । श्रुतिस्मृतिमूलेष्वाचारेषु तद्बाह्यानामनधिकारात्तन्मूलेषु दर्शनेष्वपि सावर्णिका एव सहजालापं विस्रम्भं च भेजिरे । आगमाश्रितेष्वाचारेषु सर्वेषामधिकारादाचार-विचारचर्चादीनां देशकालादिषु शतशो भिद्यमानत्वाद् भिन्नरुचेर्लोकस्य प्रस्थानभेदप्रवर्तकत्वाद् आगममूलानां दर्शनानां सहजं वैलक्षण्यं सर्वावदातं विभाति । तत एव मन्ये कुलदर्शनचर्यायां शाक्त-सम्प्रदाय इव मद्यमांसमैथुनरूपमकारत्रयस्योपयोगः स्वीकृतः, भोगमोक्षयोश्च परस्पराविरोधेन समन्वयः समाम्नातः । यथा हि जगत्प्रकृतिरतीतकल्पपरम्पराविर्भूतविचित्रवस्तुप्रपञ्चा सती पुनरिदानीं परिक्षीणा परपदार्थनिर्माणशक्तिरिति न शक्यतेऽभिधातुम् , तद्वदेव जगत्प्रकृतिं सूक्ष्मे-

क्षिकया परामृशद्दर्शनमपि नवनवाभिर्दृष्टिभिरभिवर्धतेतमाम् । किं वा बहुविस्तरेण, प्रकृतमेव पर्यायेण परामृशामः ।

## १—द्वैतपाशुपतमते परतत्त्वस्वरूपम्

श्रीबादरायणेन "पत्युरसामञ्जस्यात्" इति सूत्रेण संदृब्धं श्रीशङ्कराचार्येण तद्भाष्ये 'माहेश्वरास्तु' इति' नाम्नाऽनूद्य विप्रतिपाद्यमानं पाशुपतमतं प्रधानपतिरूपयोः कारणयोः परत्वप्रतिपादनाद् द्वैतदर्शनमवसीयते । तदिदं कारणकार्ययोगविधिदुःखान्तानि पञ्च तत्त्वानि तनोति । एते पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षणायोपदिष्टाः । कारणं पतिरिति कार्यं पशुरिति । पतिस्तत्र सांख्ययोगवैशेषिकादीनां मतेनेवात्रापि निमित्तकारणं स्वीकृतः । प्रकृतिरुपादानकारणम् । तदेवं कारणं द्विविधम्—उपादानं निमित्तं च । पशुस्तावद् देहेन्द्रियादिव्यतिरिक्तो नित्यश्चिदात्मकोऽनेको विभुरनादिमलावृतोऽस्वतन्त्रः कर्ता च । पशुपाशविमोक्ष एव दुःखान्तः । स एव चात्र मोक्षः । अतः पशूनां कर्मानुसारेण प्रकृत्युपादानतया जगदुत्पत्तिस्थितिलयहेतुः पतिरिति पाशुपतमतेन पतिस्वरूपम् । नास्य हीनमध्यमोत्तमविभागेन प्राणिनां सृष्टे रागद्वेषादिप्रसक्तिराशङ्कनीया, प्राणिकर्मणामेव तद्विभागोपपादकत्वात् । न च कर्मेश्वरयोः प्रवर्त्यप्रवर्तयित्वे इतरेतराश्रयप्रसङ्गः स्यात्, कर्मणामचेतनत्वात् कदा कथं कीदृशी च प्रवृत्तिरिति चेतनधर्मानवगाहित्वात् कर्मानुसारं प्रकृत्युपादानकं चेच्छाज्ञानादीनां पर्यन्ते पत्युरधीनत्वेनैवोपपत्तेश्च । पशुपाशविमोक्षणार्थं प्रवृत्तेश्च लौकिकस्वार्थपरार्थप्रवृत्तिदोषगुणानाविलत्वादनीश्वरत्वप्रसङ्गोऽपि दूरे आस्तामिति ।

## २—द्वैतशैवसिद्धान्तदर्शनम्

सर्वदर्शनसंग्रहे शैवदर्शननाम्ना संगृहीतं दशशिवागमानामष्टादशरुद्रागमानां च प्रामाण्यं सिद्धान्तयत् सद्योज्योतिषा प्रवर्तितं सिद्धान्तशैवदर्शनं पतिपशुपाशरूपं पदार्थत्रयं विवृणोति । तत्र पतिस्वरूपनिरूपणमेवात्र प्राथम्येन प्रासङ्गिकम् । ऐंस्लम (Anselm)-एक्वीनस(Acquinas)-देकार्त( Descartes )-लैबनीत्स( Leibnitz )-उल्फ( Wolff )-प्रभृतिभिर्दार्शनिकैर्यथाविधमीश्वरस्य कर्तृत्वं निमित्तकारणत्वं वा प्रतिपाद्यते, अरस्तूमहोदयेन च स मुख्यः प्रवर्तयिता ( Prime mover ) इति मन्यते, तथैवात्रापि पतिः स्वीक्रियते । एको विभुर्नित्योऽनादिरनन्तश्चिद्घनो नित्यमुक्तो रागद्वेषादिमलैरनाविद्धः स्वतन्त्रो निरतिशयकरुणः शुद्धः कर्ता पतिरित्युच्यते । स हि स्वशक्त्याऽनन्यभूतयो रविरिव कमलानि प्रधानोपादा-

नेन जगन्ति विकचीकुरुते। इच्छाज्ञानक्रियारूपास्तस्य तिस्रः शक्तयः। तद्व्यापारभेदेन च सृष्टिस्थितिसंहारनिरोधानुग्रहा अप्यस्यैव शक्तय इत्युच्यन्ते। अत एवास्य पञ्चवक्त्रत्वम् ईशानतत्पुरुषसद्योजातवामदेवाघोररूपं तैत्तिरीयारण्यके श्रूयते। अत्र पतिपशुपाशरूपं पदार्थत्रयं शिवपुरुषमहामायानामभिरपि निर्दिश्यते। अस्मिन्नेव पदार्थत्रये प्रत्यभिज्ञा-दर्शनादिषु निरूपितानि षट्त्रिंशत्तत्त्वान्यन्तर्भवन्ति। काश्मीरप्रत्यभिज्ञादर्शने शुद्धाशुद्धाख्यो द्विविधस्तावदध्वा। तत्र शिवशक्तिसदाशिवेश्वरसद्विद्याख्यं तत्त्वपञ्चकं शुद्धम्। एतच्च पत्यावन्तर्भाव्यते सिद्धान्तशैवैः। अशुद्धाध्वनि परिगृहीतानां माया-शक्तिपञ्चक( कला-विद्याकालरागनियतिरूपम् )-प्रकृति-तदप्रकृतिविकृतिभूतचतुर्विंशतितत्त्वानां पुरुषवर्जितानां पशा-वन्तर्भावः, पुरुषस्य च पत्यौ स्वीकृतः। एवमियमन्तर्भावकथा प्रचलति सिद्धान्तशैवदर्शने। शैवागमदर्शनपारङ्गतैरस्माकं गुरुवर्यैः डा० कान्तिचन्द्रपाण्डेयमहोदयैराधुनिकविद्वत्समाजे जाग्रतीं भ्रान्तिं निराकुर्वद्भिरिदं निर्णीयते यत्—"नास्य तामिलशैवसिद्धान्तात् कश्चन भेदः। तामिलशैव-सिद्धान्तेऽपि पशुपतिपाशाख्यानि त्रीणि प्रधानतत्त्वानि, षट्त्रिंशदवान्तरतत्त्वानि, मलमायाकर्मा-ख्यास्त्रयो मलाः, शुद्धाशुद्धरूपा द्विविधा सृष्टिः, परापश्यन्तीमध्यमावैखरीरूपा चतुर्विधा वाक्, अष्टाविंशत्यागमानाञ्च प्रामाण्यमूरीक्रियत इति भाषाभावकृतो भेदः। तथ्यं त्विदं यद् मेखण्डदेवो यस्तामिलशैवसिद्धान्तप्रमाणग्रन्थं शिवज्ञानबोधाख्यं व्यलिखत् स त्रयोदशशताब्द्यामभवत्, यतः पूर्वं सद्योज्योतिदेवबलभोजाघोरशिवादिभिर्बहवो द्वैतशैवसिद्धान्तप्रतिपादनपरा ग्रन्था लिखिताः" इति[3]। तदनेनैतिह्यानुरोधेनेदं निश्चप्रचं चकास्ते यद्दक्षिणेषु ब्रन्धप्रसराणां शैवसिद्धान्तानां मूलं शैवागमा एव, न पुनस्तामिलादिभाषोपनिबद्धाः केचन प्राचीनग्रन्थाः।

अचेतनानां नित्यत्वमसम्भवीति परमाणूनां नित्यत्वानभ्युपगमात्, जीवस्य ज्ञानरूपत्वं न पुनः ज्ञानाश्रयत्वम्, सृष्टौ च सत्कार्यवादस्वीकारात् वैशेषिकेभ्यः, पुरुषस्य ( पशोः ) अनादि-मलावृतत्वेन पुष्करपलाशवन्निर्लेपत्वानङ्गीकारात् सांख्यसिद्धान्तेभ्यः, पशूनां न पतिरूपत्वं किन्तु तदाश्रितत्वमुपादाननिमित्तकारणयोर्भिन्नत्वं न पुनरेकत्वमिति व्यवस्थाया वेदान्तेभ्यः, सिद्धान्तशैवदर्शनस्य जगत्स्वरूपनिरूपणे परतत्त्वविमर्शे चास्ते सर्वावदातं वैलक्षण्यम्।

---

१. रत्नत्रये, पृ० ४२

२. तत्रैव, पृ० १०४

३. आगमदर्शनपरिषदि प्रदत्तमध्यक्षीयं भाषणम्, मार्च १९६१

## ३—द्वैताद्वैतलकुलीशपाशुपतदर्शनम्

खिस्तीयद्वितीयशतके श्रीमता लकुलीशेन प्रवर्तितं तन्नाम्नैव प्राप्तोपाख्यं द्वैताद्वैतलकुलीशपाशुपतदर्शनं कारणकार्ययोगविधिदुःखान्तान्तं पाशुपतदर्शनपरिगृहीतं तत्त्वपञ्चकं स्वीकुर्वद् कारणं पतिरिति, कार्यं विद्याकलापशुरूपं त्रिविधमिति, योगः शिवसायुज्यमिति, सर्वदुःखोपशमरूपोऽनात्मकः, शिवसायुज्यरूपः सात्मकश्चेति द्विविधो दुःखान्त इति स्वदृशा तत्त्वग्राममापादयति। कार्यत्वेऽपि नित्यस्य पशोः पञ्चमल[1]परिहाणानन्तरं शिवसायुज्येन (न पुनर्वेदान्तनय इव जीवस्य ब्रह्मत्वेन) मुक्तौ सत्त्वाद् द्वैताद्वैतत्वम्। पुनश्च कारणमेकः पतिः, तस्मादेव त्रिविधं विद्याकलापशुरूपं कार्यत्रयमुद्भवति। तच्च पुनः शक्ताववतिष्ठते। शक्तिश्च शिवादभिन्ना। अतः स्वाभिन्नशक्तौ सर्वाभ्यन्तरं कारिणः शिवस्यावयविन इवैकत्वाङ्गीकारात् तद्बाह्यस्य स्वतन्त्रस्य कस्यचिदपि तत्त्वस्यास्वीकाराद् द्वैताद्वैतत्वं विशदं भवति। पाशुपतसूत्रेषु पतिः कारणं ब्रह्म वेति शब्दान्तरं न त्वर्थान्तरम्। तच्च सद् असद्भिन्नत्वात्। आद्यमाद्यन्ताभावात्। सांख्ययोगाभिमतस्य पुरुषस्येव च नास्ति तस्य जन्मजराप्रणाशापत्तिः। तत एव पतिं सद्योजातमाहुरिति कौण्डिन्यः। स एव प्रधानं निमित्तं च कारणं। तस्मादेव कार्यत्रयस्य भवस्य चोद्भवः[2]। सृष्टिस्थितिसंहारान् दृक्क्रियाशक्तिमान् स एव चिक्रीडिषया कुरुते। ज्ञानं क्रिया च वह्नेर्दाहकत्वमिव तस्य शक्ती। परतत्त्वस्वरूपविमर्शे पाशुपतसूत्रकारो लकुलीशस्तैत्तिरीयारण्यकमन्त्राननुससारेति न विचिकित्स्यमेतद्भवद्भिर्वक्ष्यमाणान् मन्त्रान् सूत्राणि चानुध्यायद्भिः—"भवोद्भवाय नमः। वामदेवाय नमो ज्येष्ठाय नमः। श्रेष्ठाय नमो रुद्राय नमः॥" (तैत्तिरीयारण्यके)। तथा—"भवोद्भवः······ रुद्रस्य" (पाशुपतसूत्राणि ५५-५७)। ज्ञानशक्तिसामर्थ्येन सः पशून् व्याप्य स्थितः। पशोः पशुत्वापादकं च तस्यैव सामर्थ्यं शक्तिर्वा। वस्तुतस्तैत्तिरीयारण्यके चत्वारिंशदनुवाकादारभ्य सप्तचत्वारिंशानुवाकपर्यन्तं यत् परशिवस्वरूपमाम्नायते तदेव मूलमस्य दर्शनस्य। तत्र पञ्चमन्त्राः—सद्योजातं प्रपद्यामि, वामदेवाय नमः, अघोरेभ्योऽथ घोरेभ्यः, तत्पुरुषाय विद्महे, ईशानः सर्वविद्यानाम्। एत एव मन्त्रा लकुलीशेन मनाक् परिवर्तनेन सूत्रिताः[3] दर्शनदृष्ट्या च स्फारिताः।

---

१. मिथ्याज्ञानाधर्मासक्तिहेतुच्युतरूपाणि पञ्च।

२. पाशुपतसूत्रम्, ४४-४५

३. द्रष्टव्यानि पाशुपतसूत्राणि—७२-७६, ८१-९१, १०७-१०८, १४४-१४६

## कारणकार्यसम्बन्धः

कारणं पतिः कार्यं च विद्याकलापशुत्रयमिति प्रागवोचाम। तत्र नैयायिका वैशेषिकाश्चेश्वरस्य कारणत्वं स्वीकुर्वाणा अपि परमाण्वाद्युपादानादिसहकारिकारणपरतन्त्रतयाऽस्य निमित्तकारणत्वमेवाभ्युपगच्छन्ति। वेदान्तिनां नये ब्रह्म उपादानं निमित्तञ्च। अत्र लकुलीशपाशुपतदर्शने पतिरेवोद्भावयति कार्यत्रयम्। अत एव स भवोद्भव इति श्रूयते। कार्यत्रयस्य च नित्यत्वेन तस्मिन् स्थितिः। सृष्टिश्च वृत्तिलाभः[1]। स एवासनमाश्रयो वा त्रिविधस्य कार्यस्य। कार्यत्रयं शक्तिस्थम्। शक्तिश्च सामर्थ्यमैश्वर्यम्, स्वगुणसद्भावः "सतत्त्वं सत्त्वधर्मः" (पाशुपतसूत्रम्—५८) इत्येवं शक्तिः शिवादभिन्नैव। यथा तारकशतखचितं व्योम आकाशतत्त्वे विश्रान्तम्, तथैव चित्रविचित्रपरम्पराविर्भूतं जगदिदं कारणे शिवे। नीरक्षीरयोरिव नास्ति कारणकार्ययोः वृत्तिसङ्करः[2]। अनयोस्तु पुनरादित्यदीपप्रभयोरिव भेदस्तद्वदेव च सापेक्षे व्यापकत्वाव्यापकत्वे। कारणं पतिर्विभुर्व्यापकः सर्वानेवार्थान् व्याप्नोति। पशुत्वेन स्वीकृतः सांख्याभिमतः पुरुषश्चतुर्विंशतितत्त्वानि प्रधानस्थानीया च कला स्वकार्यवर्गं व्याप्नुतः। व्याप्यं व्यापकञ्चैकत्र स्थितेऽपि हरिद्रारञ्जितजलमिवान्योन्यभेदं न परित्यजतः। तदेवमुभयोरेकत्र स्थितिर्न च वृत्तिसङ्करः। कारणस्य च पत्युर्निरतिशयव्यापकत्वम्। स्वतन्त्रश्च सः। कार्यं निजानर्थान् व्याप्य स्थितं परतन्त्रं च। उभयोर्नित्यत्वं तु प्रागेव प्रतिपादितमिति दिक्।

## ४—विशिष्टाद्वैतशैवदर्शनम्

खिस्तीयनवमशताब्द्यां भास्करो भेदाभेदवादमभ्युपजगाम, रामानुजगुरुर्यादवप्रकाशश्च वैष्णवविशिष्टाद्वैतं प्रकाशयामास। उभावप्याचार्यावुपजीव्य निगमागमयोरविरोधित्वं शिवागमत्वं च मन्वानः श्रीमान् श्रीकण्ठः स्वीये ब्रह्ममीमांसाभाष्ये शैवविशिष्टाद्वैतमेकादशशतके प्रतिष्ठापयामास। अस्यैव निगमागमाविरोधस्थापकानि बहूनि प्रमाणानि स्वीकुर्वन् श्रीमान् रामानुजाचार्यः समकालं तदनु च वैष्णवविशिष्टाद्वैतं प्रसारयामासेति विदितमस्तु प्रेक्षावताम्। अथ प्रकृतं विशिष्य ब्रूमः। ब्रह्मादिनानानामभेदैराम्नातः शिव एव परः। शक्तिस्तस्य विशेषणम्। नहि तां विना कोऽपि शिवं प्रतीयात्। औष्ण्यप्रकाशादिकमजानानो वह्निं न प्रत्येति। अथ कीदृशोऽयं

---

१. अत्रैव, ६०

२. अत्रैव, ५६

विशेषणविशेष्यभावसम्बन्ध इति चेत्, ययोर्द्वयोर्मध्ये एकस्य ज्ञानमपरस्य ज्ञानमन्तरा न प्रभवति, ययोश्चैकमपरस्वातन्त्र्येण न भवति, तयोर्हि विशेषणविशेष्यभाव इति प्रतिजानीमः। शिवेन सहाविनाभाविनी शक्तिरेव जगदुद्भावयति, तत्रैव च जगद् बीजात्मना संहृतं भवतीति जगदुत्पत्तिस्थितिसंहारकारिणी शक्तिरेव, परं तस्याः शिवाविनाभावित्वाद् जगतस्तद्भेदेऽप्यभेदोऽवसीयत इति शैवानां विशिष्टाद्वैतम्।

## ५—शैवविशेषाद्वयवादो वीरशैवमतं वा

दक्षिणेषु लब्धप्रसरं वसवनाम्ना आचार्येण खिस्तीयदशमशतके वीरतापूर्वकं शिवलिङ्गादिधारणरक्षणादिना लोके वीरशैवमिति प्रख्यातमेतन्मतं दर्शनदृष्ट्या विशेषाद्वैतशुद्धद्वैताद्वैत-सेश्वराद्वैत-शिवाद्वैतप्रभृतिभिर्भिन्नाभिरभिख्याभिः परिचीयते। अस्मिन् दर्शने स्वान्तःकृतानन्तविश्वरूपः शिव एव परं तत्त्वम्। स एव स्वातन्त्र्येण विश्वमुद्भावयति, उद्भूतं चैतत्तस्मिन्नेवान्तरवतिष्ठते, अयमेवास्य शिवाद्वैतवादः। तथा चोक्तं सिद्धान्तशिखामणौ—[1]

विशब्देनोच्यते शक्तिः शिवजीवैक्यबोधिका।
तस्यां रमन्ते ये शैवा वीरशैवास्तु ते मताः॥

क्रियासारे च[2]—

विशब्दो वा विकल्पार्थो रशब्दो रहितार्थकः।
विकल्परहितं शैवं वीरशैवं प्रचक्षते॥

परश्च शिवः सर्वशक्तिमान्। शक्तिश्च वह्नेर्दाहकत्वमिव तदभिन्ना। तदभिन्नायामेव च शक्तौ विषयविषयिविभागेन विभक्तं सर्वं जगदिदमवस्थितं यत एव चोद्भवति। अतो नायं शिवः बौद्धानामिव शून्यमनिर्वचनीयं वेति सेश्वराद्वैतवादः। न वायं शाङ्करवेदान्ताभिमतं निर्गुणं निरस्तसमस्तकल्याणगुणगणाद्यतिशयं जडाविशिष्टं ब्रह्म, अस्य सगुणत्वात्। अयमेव वीरशैवमतस्य शाङ्करनिर्विशेषाद्वैतप्रतियोगी विशेषाद्वैतवादः। तथा हि श्रीपतिपण्डितः श्रीकरभाष्ये—"विश्च शेषश्च विशेषौ, तयोरद्वैतं विशेषाद्वैतम्.....अद्वैतपदेन भ्रमरकीटवज्जीवस्य स्वाभाविकभेदनिवृत्तिरुपपाद्यते" इति।

---

१. सि० शि० ३०

२. क्रियासारः, ३

## ६—नन्दिकेश्वरीयस्य शिवाद्वैतदर्शनस्याभिमतं परतत्त्वम्

पाणिनिसमकालिकः श्रीमान् नन्दिकेश्वरः शिवशक्तीश्वरत्रिकम्, सांख्याभिमतानि पञ्चविंशतितत्त्वानि, प्राणदिपञ्चकम्, सत्त्वादिगुणत्रयमित्येवं षट्त्रिंशत्तत्त्वानि तनुते। तत्त्वोत्तीर्णः परः शिवो न खलु कदापि कथमपि वाच्यतासहः, "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"। विश्वोत्तीर्णः[1] विश्वमयत्वेन शिवः सन् "स्वेच्छया स्वस्य चिच्छक्तौ विश्वमुन्मीलयत्यसौ[2]"। प्रकाशवपुषोऽस्येयं विमर्शरूपा चिच्छक्तिश्चित्कला वा "अइउण्" इति सूत्रेऽकारः शिवः। इकारश्च शक्तिः। इकाररहितश्च शिवः शव एव। अनयोश्च तादात्म्यं नन्दिकेश्वरेण सर्वप्रथममित्थं व्याहृतम्—

"चन्द्रचन्द्रिकयोर्यद्वद् यथा वागर्थयोरिव" इति।

अमुमेवार्थं शैवकविः कालिदासः स्वरघुवंशे मङ्गलमाचरन्नुपश्लोकयामास—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥ इति।

शिवः स्वस्वातन्त्र्येण जगदिदमुन्मेषनिमेषाभ्यां व्यक्ताव्यक्तं कुरुते—

यस्योन्मेषनिमेषाभ्यां जगतः प्रलयोदयौ
(नन्दिकेश्वरकाशिकायाम्, १)

स्वशक्त्या जगदुन्मेषयंश्च शिव ईश्वर उकारो वोच्यते। जगदुन्मेषे च शिवशक्तिद्वयस्वीकारेऽपि तयोर्मनस्तद्वृत्तिवदैकात्म्यान्नाद्वैतहानिः।

## ७—रसेश्वरदर्शने परतत्त्वम्

रसेश्वरदर्शने मोक्षोपायविचारस्य वैज्ञानिकानामेव चांशानां तदितरशैवदर्शनेभ्यो वैलक्षण्यम्। शक्तिपातपाशेशसदाशिवादिनिरूपणे न किमपि वैलक्षण्यम्। ज्ञानक्रियाशक्तिमान् महेश्वरः सूक्ष्मरूपो निरञ्जनश्च, सद्योजातवामदेवाघोरेशानतत्पुरुषरूपश्च[3] शिवः। शिवतादात्म्य-

---

१. पृ० १३६, भा० २

२. नन्दिकेश्वरकाशिकायाम्, अमुमेवार्थं प्रायस्तैरेव शब्दैरनूदितवान् क्षेमराजो प्रत्यभिज्ञाहृदये।

३. रसार्णवे, १६-१७

वेदनं च मुक्तिः ।[1] महेश्वरश्च स्वस्वातन्त्र्येण[2] जगदुत्पत्तिस्थितिसंहारहेतुः । तत एवाविर्भवज्जगद्वस्तुतस्तद्रूपमेवेति[3] परतत्त्वस्वरूपविमर्शो रसेश्वरदर्शनं शैवद्वैतवादं स्वातन्त्र्यवादं च न परिजिहीते ।

## ८—क्रमदर्शने परतत्त्वम्

काश्मीरशैवदर्शननिष्णातैरस्मद्गुरुवर्यैः डा० कान्तिचन्द्रपाण्डेयमहोदयैः काश्मीरशैवदर्शनानि त्रीणि सन्तीत्येतद्दर्शनपरिषद्द्विशिष्टाधिवेशनेऽध्यक्षीयभाषणे सम्यग् साधितमिति विदितमेव तत्रभवताम् । तत्र क्रमदर्शने काली एव परं तत्त्वम्, तस्मादेवैतद्दर्शनं कालीनय इति नाम्ना प्रसिद्धिमाजगाम । काल्याश्च देवीरूपत्वाद्देवीनय इत्यस्याभिधानान्तरम् । तन्त्रालोकविमर्शटीकायां श्रीमता जयरथेन प्राचीनाचार्याणां श्लोकानुद्धरताऽयं कालीनयदेवीनयक्रमदर्शनाद्यभिधो महानयोऽतिनयश्चाप्युच्यते स्मेति सूच्यते ।[4] केषुचिदागमेषु शिवो वक्ताऽन्येषु च पार्वती भैरवी देवी वेत्यनुसन्धायागमदर्शनिकेषु परम्पराद्वयं प्रचचार । एकत्र शिवः, अपरत्र भैरवी देवी काली वा परं तत्त्वम् । नामभेदेऽपि परतत्त्वस्वरूपनिरूपणे न कश्चिदपि तात्त्विको भेदोऽवसेयः । यद्यपि सोमानन्दः काल्याः स्त्रीलिङ्गत्वेन "स्त्रीलिङ्गस्य पुल्लिङ्गविशेषरूपत्वम्" इति व्याकरणदर्शनमनुसरन् शिव एव परं तत्त्वं शक्तिश्च तदाश्रितेति प्रतिपादयामास, परं महाशैवा अभिनवगुप्तपादा इमां युक्तिं न समर्थयन्ते । तैश्च तन्त्रालोके कालसङ्कर्षिणी-भैरवी-कालीप्रभृतिभिर्नामभिः परा संविदेव भगवती परं तत्त्वमिति प्रत्यपादि । प्रकाशविमर्शस्वरूपेयं परा संविद् अन्तर्बाह्योभयात्मना स्वातन्त्र्येण परिस्फुरति । विभिन्नस्यापि भावौघस्य चिदात्मनैकीकारः[5] । सा पारमार्थिकी संवित् सृष्टिस्थितिसंहारानाख्यत्वेन चतुर्विधरूपमाश्रित्य प्रमातरि प्रमाणे प्रमेये चाविच्छिन्नत्वेनैकैकत्र चातुरात्म्येन द्वादशधा परिस्फुरति । अत एवास्या द्वादशरूपत्वमाचक्षते । आगमेऽपि—"द्वादशाराविर्योगेन देवीं द्वादशधा यजेत्" इति । अस्याः परत्वं व्याकुर्वाणाः श्रीमदभिनवगुप्तपादाः प्राहुः—

---

१. तत्रैव, १६६

२. तत्रैव, ११७

३. रसार्णवे, १

४. तन्त्रालोकविमर्शे तृतीयभागे, पृ० १६५

५. अत्रैव, पृ० १२४

इमाः प्रागुक्तकलनास्तद्विजृम्भोच्यते यतः । ( तन्त्रालोकतृतीयभागे, पृ० १८८ )
श्रेयो ज्ञानं च संख्यानं गतिर्नाद इति क्रमात् ॥ ( अत्रैव, पृ० २०३ )
इति पञ्चविधामेनां कलनां कुर्वती परा ।
देवी काली तथा कालकर्षिणी चेति कथ्यते ॥ ( अत्रैव, पृ० २०५ )

कालीशब्दः कल क्षेपे, कल गतौ, कल संख्याने, कल शब्दे इति धातुचतुष्टयस्य पञ्चधार्थमनुधावन्निष्पद्यते, यतो गतिर्ज्ञाने प्राप्तौ च वर्तते । एवञ्च कालीकलनं नाम स्वात्मना बहिरुपासनं क्षेपो वा । भेदितस्य च भावजातस्य स्वात्माभेदेन परामर्शो ज्ञानम्, भेदितस्यैव प्रमातृप्रमेयादेरर्थस्य परस्परारोहनाद् इदमिदं नानिदमिति प्रतिनियततयाऽवस्थापनात् संख्यानं विकल्पः, गतिश्चात्र गत्युपसर्जना प्राप्तिः, तेन भेदितोऽर्थः संविल्लक्षणं स्वरूपमारोहति । एष च संवित्स्वरूपारोहः दर्पणप्रतिबिम्बन्यायेनाभ्युपगन्तव्यः । प्रतिबिम्बस्य हि तदव्यतिरिक्तत्वेऽपि तद्व्यतिरिक्ततयैवावभासो भवति । अविकल्पज्ञानादीनामपहस्तनपूर्वकं स्वात्मपरामर्शलक्षणेन स्वरूपेणावस्थानं नादः । इमां पञ्चविधां कलनां कुर्वती कालकर्षिणी काली मातृसद्भावसंज्ञामवाप्नोति । प्रमातॄणां स्वतन्त्रस्वप्रकाशपरसंविदेकरूपतापादनं मातुरेव हि सद्भावः । तदेवं द्वादशधा तिष्ठन्ती परा संविदेव भगवती क्रमनये परं तत्त्वमिति दिक्[1] ।

## ९—कुलदर्शने परतत्त्वम्

शिवशक्त्योरद्वैतं भोगस्य मोक्षोपायत्वञ्च स्वीकुर्वत् कुलदर्शनमनुत्तरं परतत्त्वं प्रतिष्ठापयति ।

यत्रोदितमिदं चित्रं विश्वं यत्रास्तमेति च ।
तत्कुलं विद्धि सर्वज्ञ शिवशक्तिविवर्जितम् ॥

एतदेवानुत्तरं प्रत्यभिज्ञादर्शनेऽपि षट्त्रिंशत्तत्त्वोत्तीर्णत्वेन कैश्चिद्विवेचित इति तत्रैव निरूपयिष्यामः । नियतिरागरहितानि षट्त्रिंशत्तत्त्वान्यत्रापि स्वीक्रियन्ते । देवनागरीलिप्यक्षराणां दार्शनिकतत्त्वस्फारप्रदर्शनमत्र विशिष्टम् । तच्चाकरग्रन्थेभ्योऽनुसन्धेयमिति प्रत्यभिज्ञादर्शनाभिमतं परतत्त्वस्वरूपमभिधास्यामः ।

## १०—प्रत्यभिज्ञादर्शने परतत्त्वम्

त्रिकषडर्धसारस्पन्दप्रत्यभिज्ञाप्रमुखाभिर्भिन्नाभिरभिख्याभिरभिधीयमानं शिवाद्वयप्रतिपादकं माहेश्वरदर्शनं साम्प्रतं काश्मीरशैवदर्शनमिति नाम्ना साधरणैर्जनैः साधारण्येन परिचीयते । शैवदर्शनमिदं विश्वोत्तीर्णस्य विश्ववपुषः परमशिवस्याभासरूपाणि षट्त्रिंशत्तत्त्वानि प्रथयतितमाम् । महाद्वैतवादिनः शैवाः स्वात्मसात्कृताशेषषट्त्रिंशत्तत्त्वकलापस्य परमशिवस्य व्यापकत्वाभिप्रायेण सप्तत्रिंशत्त्वमविकल्पात्मकत्वं च भाव्यं विश्वोत्तरणेत्यविकल्पात्मकस्य मनसो वाचां च पारे वर्तमानस्य विश्वोत्तीर्णस्याष्टात्रिंशत्त्वमभ्युद्घोषयन्ति । एतदेव कुलदर्शनस्यानुत्तरं तत्त्वम् । यदुक्तं श्रीतन्त्रवटधानिकायाम्—

---

१. द्रष्टव्यम्—तन्त्रालोकः, तट्टीका च, २०३-२०६

षट्त्रिंशत्तत्त्वपर्यायस्तदभिन्नः परः शिवः ।
उपदेश्यतया सोऽपि स्यादवच्छेदभागतः ।
अष्टात्रिंशं परं धाम यत्रेदं विश्वकं स्फुरेत् ॥

प्रत्यभिज्ञाप्रक्रियायां तु शिवादिधरणीप्रान्तानां षट्त्रिंशत्तत्त्वानामेव विशिष्य विवेचनम्। शैवशासननये प्रकाशविमर्शात्मनः परमशिवस्य सर्वज्ञत्वं सर्वकर्तृत्वं चाम्नातम्। ज्ञानक्रिययोरभेदाभ्युपगमात् प्रकाशविमर्शयोर्भेदो वस्तुतस्त्वौपचारिक एव। विमर्शो हि चित्, चैतन्यम्, स्वरसोदिता परा वाक्, स्वातन्त्र्यम्, परमात्मनो मुख्यमैश्वर्यम्, कर्तृत्वम्, स्फुरत्ता, सारः, हृदयम्, स्पन्द इत्यादिभिः शब्दैरागमेषूद्घोष्यते।[1] अनवच्छिन्नपरप्रकाशः परमेशः स्वस्वातन्त्र्यवशात् शिवादितत्त्वात्मना प्रविभज्यते, तदात्मना स्फुरति प्रकाशते वा। सृष्टिक्रमावभासे हि क्रमेण चिदानन्देच्छाज्ञानक्रियाशक्तीनां प्राधान्यम्। उपपन्ना ह्येतासां शक्तीनां मनोविज्ञानदिशा क्रमप्रथा। उपनिषदोऽप्यमुमेव क्रममवगमयन्ति। शिवादिसद्विद्यान्ततत्त्वोन्मीलने परमशिवस्यापरिच्छिन्नं शुद्धस्वातन्त्र्यमेव तत्तद्वैचित्र्येण चकास्ति। परमशिवस्य चिच्छक्तिप्राधान्ये विश्वप्रतिष्ठाभूमिर्विश्वैकविग्रहो निखिलविश्वकोडीकारेण द्योतमानः शुद्धाहमादर्शरूपः प्रकाशैकघनः शिवः। शिवतत्त्वमिदं सर्वप्रमातॄणामन्तःस्फुरत्पूर्णाहन्ताचमत्कारमयं परत्वेन विश्वोत्तीर्णमपि विश्वावभासनदशा विश्ववपुरवियुक्तज्ञानक्रियारूपं क्रियाद्वारेण सकलतत्त्वराशिगतसृष्टिस्थितिसंहारशतप्रतिबिम्बसहिष्णु महाप्रकाशवपुरिति वर्ण्यते। यदुक्तं श्रीशिवदृष्टौ—

आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद्वपुः। अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः॥

यथा च श्रीविज्ञानेन्दुकौमुद्याम्—

सर्वव्यापकताभूमिर्ज्ञत्वकर्तृत्वसम्मता। निजाभासचमत्कारमयी शिवदशा स्मृता॥

शिवैकरूपं विश्वं न ततोऽतिरिच्यमानमिति शिवतत्त्वं सर्वतत्त्वानां साम्यावस्था। तथा हि श्रीशिवदृष्टौ—

एवं सर्वपदार्थानां समैव शिवता स्मृता। परापरादिभेदोऽत्र श्रद्धानैरुदाहृतः॥

निर्विशेषाद्वैतवादिनां ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावतया प्रकाशैकघनमपि जडमणिरिव निर्विमर्शमेव। सेश्वरसांख्यानामीश्वरो न केवलं पुष्करपलाशवत् सृष्टेर्निरपेक्षः, अपि त्वेतस्याः प्रकृत्युपादानतया तदकर्तृकत्वं तद्भिन्नत्वं च सुतरामापतति। सहकारिकारणपरतन्त्रस्य न्यायवैशेषिकाभिमतस्येश्वरस्य सर्वज्ञत्वं सर्वकर्तृत्वं च न घटते, अवास्तवं हि तत्। सर्वं क्षणिकमुद्घोषयन्तः सौगताः प्रकाशविमर्शात्मकं परतत्त्वं कथं प्रतिष्ठापयेयुः? कर्ममीमांसकानां जैमिनीयानां निरीश्वरवादित्वं वेदाभ्यासजाड्यजनितं सुप्रथितमेव। स्यात्सरिति सपदि सप्तशो भङ्गीभिर्निमज्जतां स्याद्वादिनां नयेऽपि परतत्त्वं प्रकाशविमर्शात्मकं विश्वोत्तीर्णं विश्ववपुश्च कथं नाम निर्णीतं स्यात्। इत्येवं शिवस्वरूपविमर्शे सर्वशास्त्रविलक्षणा शैवशासनसरणिः॥



---

१. पराप्रावेशिका, पृ० १-२

# गौडपादीयं दर्शनम्

डॉ० रामचन्द्रशर्म्मपाण्डेयः, दिल्लीविश्वविद्यालये बौद्धदर्शनाध्यापकः ।

गौडपादाचार्यः कदा भुवमलञ्चकारेति प्रश्नमितिहासविद्भ्य एवोपायनीकृत्य ख्रिस्तीयषष्ठ्यां शताब्द्यां वर्तमानेन बौद्धाचार्येण माध्यमिकसम्प्रदायसंवर्धकेन भावविवेकेन स्वीयमध्यमकहृदये गौडपादीयकारिकायाः समुद्धरणात्[१] तत्कालपूर्वकत्वमेव गौडपादस्य स्वीकरोमि । तत्कृते आगमशास्त्राभिधे[२] प्रकरणचतुष्टयात्मके ग्रन्थेऽद्वैतदर्शनमेव प्रतिपादितमिति विषये नास्ति काचन विप्रतिपत्तिः । तथापि तत्प्रतिपादिताद्वैतस्वरूपे वर्तत एव मतभेदकोलाहलः । परम्परानुयायिनां शङ्कराचार्यप्रभृतीनां प्रस्थानेऽस्याद्वैतदर्शनस्य वेदान्तप्रतिपादितब्रह्मपरत्वमुररीकृतम् । इदानीन्तनैर्विधुशेखरभट्टाचार्यप्रभृतिभिर्विद्वद्भिस्तु गौडपादानुमताद्वयतत्त्वस्य विज्ञानाद्वैतपरतया व्याख्यानेन तस्य महायानबौद्धमतानुगतता प्रत्यपादि । अस्य विशिष्टाद्वैतपरतयापि व्याख्यानमुपलभ्यते । एवं स्थिते विवादे विद्वद्भिश्चानिर्णीतपूर्वे कुत्र मेऽवसरो निर्णयपक्षप्रसराय ! तथापि महत आचार्यस्य समर्चने ममाप्यधिकार इति न स्यान्मे प्रवृत्तिर्दोषाय ।

गौडपादसमये यावन्त्यद्वैतप्रस्थानानि विद्यमानान्यासन्, तेषां समेषामस्य ग्रन्थे सन्निवेशः कृतः । तथा सन्निवेशं विरचयता चाचार्येण शब्दकोशादिवन्न केवलं मतोपस्थापनं विहितम्, अपि तु मतानां पारस्परिकं भेदं परिहरता[३] तेषु समन्वयोऽप्युद्भावितः । अयमेव मतसमन्वयवाद इममाचार्यमद्वैतमतप्रतिष्ठापकेषु मूर्धन्यतां नयति । किञ्च, अनेनैव समन्वयवादेन हेतुना नायमाचार्य एकान्ततो बौद्धो वेदान्ती वेति वक्तुं युज्यते । बौद्ध-वैदिकादिविशेषणजातं परिहाय अद्वैतीत्ययमेव शब्दः केवलोऽस्य दर्शनवैशिष्ट्यसमुद्घाटनसमर्थो भवेदिति विश्वसिमि ।

---

1. Dr. V.V. Gokhale—The Vedanta Philosophy described by Bhavya in his Madhyamaka-Hridaya—Indo-Iranian Journal, Vol. ii, N.R. 3, 1958, pp. 165–180.

२. विधुशेखरभट्टाचार्येण सम्पादितम् आगमशास्त्रम्, कालिकाता, १६४३

३. तथा चोक्तमागमशास्त्रे—"अविवादं निबोधत" (४.५) इत्यत्र ।

प्रथमप्रकरणे प्रणवस्य ब्रह्मपरतया व्याख्यानेन शब्दाद्वैतवादस्य स्वीकृतिर्ध्वन्यते। तथा चोक्तम्—

प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतम्।
अपूर्वोऽनन्तरोऽबाह्योऽनपरः परमोऽव्ययः ॥
सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ॥[1]

स्थूलप्रविविक्तानन्दरूपाणां विषयाणां[2] विश्वतैजसप्राज्ञरूपाणां च ज्ञातॄणां सतां प्रणव एव प्रभवः[3]। स एव तुर्यो देव इत्युक्तः[4]। "एक एव त्रिधा स्थितः" इत्युक्त्या परमार्थतो विश्वतैजसप्राज्ञानां तुरीयादभिन्नत्वमप्युक्तं भवति।[5] मतमेतद् "अनादिनिधनं ब्रह्म"[6] इत्यादिनोपक्रान्तस्य शब्दाद्वैतप्रतिपादकस्य हर्युपज्ञस्य वाक्यपदीयस्यापीति न तिरोहितं विदुषाम्। इयांस्तु विशेषो गौडपादभर्तृहरिमतयोर्यद् भर्तृहरिः—"अध्याहितकला यस्य कालशक्तिमुपाश्रिताः। जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥"[7] इत्यङ्गीकुर्वन् ब्रह्मणः शक्तिमत्त्वाभ्युपगमेन विवर्तशब्दं प्रयुञ्जानोऽपि विकारवत्त्वं तस्य प्रस्तौति। गौडपादस्तु सृष्टिचिन्तकानां मतान्युद्धृत्यान्ते निगमयति "देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा" इति[8]। सृष्टिरियं द्योतनशीलस्य देवस्य तुर्याख्यस्य स्वभाव एव। आप्तकामस्य ब्रह्मणः स्पृहाभावात् सृष्टौ प्रवृत्तिर्न स्यादिति देवेच्छायाः सृष्टिप्रवर्तकत्वेऽकिञ्चित्करत्वं प्रदर्शितम्। कालशक्त्युपाश्रयेण ब्रह्मणो जन्मादिभावविकाराणां योनित्वं ब्रह्मण इच्छाव्यतिरेकेण भवन्न भवेत्। प्रपञ्चस्य देवस्वभावत्वोक्त्या तस्य देवाव्यतिरेकेणानस्तित्वमिति प्रपञ्चस्य स्वतोऽविद्यमानत्वमायाति। अत एवोक्तम्—"प्रपञ्चो यदि विद्येत निवर्तेत न संशयः"[9]

---

१. आगमशास्त्रे, १. २६-२७

२. आगमशास्त्रे, १. ३

३. तत्रैव, १. ६

४. तत्रैव, १. १०

५. तत्रैव, १. १

६. वाक्यपदीये, १. १. इत्यत्र

७. तत्रैव

८. आगमशास्त्रे, १. ७-९

९. तत्रैव, १. १७

इति। प्रपञ्चस्य च प्रपञ्चत्वेन रूपेण विद्यमानता नास्त्येवेति यदि कश्चित् प्रपञ्चं तत्त्वेनावगाहेत मायाकृतमेव तद् भवेन्न परमार्थः[1]। यच्च मायाकृतं न तत्केनचित् कल्पितम्, कल्प्यस्य स्वभावतोऽभावात्, कल्पकस्य च कल्पने प्रयोजकाभावात्। इत्थं शक्त्यभ्युपगमनिराकरणादद्वयस्यौङ्कारब्रह्मणः प्रतिष्ठा भवति गौडपादीयनिकाये।

द्वयी हि कार्यकारणभावप्रवृत्तिः। यदि सत्कार्यवादसमाश्रयणं तर्हि सत्या अपि प्रकृतेः पुरुषसान्निध्यमिव सांख्यनिकाये किञ्चिन्निमित्तं वक्तव्यम्। असत्कार्यसमाश्रयणे तु चिकीर्षोपादाननिमित्तादीनां कल्पना दुर्वारा भवेत्। गौडपादस्तु सत्कार्यासत्कार्यदृष्टी विहाय मध्यमं पन्थानमातिष्ठत्। अजातिप्रतिपादनं कार्यकारणभावनिषेधपरम्। अत्र गौडपादो माध्यमिकानुमतामाचार्यनागार्जुनप्रवर्तितां तर्कपद्धतिमनुसरन्निव शून्यवादानुमताद्वैतप्रतिष्ठापनापरो लक्ष्यते—"न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा। प्रकृतेरन्यथाभावो न कदाचिद् भविष्यति[2]॥" इति, तथा च "स्वतो वा परतो वापि न किञ्चिद् वस्तु जायते। सद् असद् सदसद् वापि न किञ्चिद् वस्तु जायते[3]॥" इत्यादिवचनपर्यालोचनया गौडपादस्य मतमेतत् प्रतिभाति यदिदं सर्वं न केनचित् कृतम्, कर्तुस्तत्प्रयोजकस्य चाभावात्। प्रपञ्चस्तु चित्तेनापि न कृत इति स्पष्टमुद्घोषितमाचार्येण—"तस्मान्न जायते चित्तं चित्तदृश्यं न जायते। तस्य पश्यन्ति ये जातिं खे वै पश्यन्ति ते पदम्[4]॥" इत्यादिना। सर्वे भावा अजा एवेति स्वीकृते तज्ज्ञानमसम्भवीति माध्यमिकवदेव गौडपादेनाप्युक्तम्—"नाजेषु सर्वधर्मेषु शाश्वताशाश्वताभिधा। यत्र वर्णा न विद्यन्ते विवेकस्तत्र नोच्यते[5]॥" अजत्वात्तत्त्वस्य तत्र वाचामप्यप्रवृत्तिरिति परमार्थेन तत्त्वमजमित्यपि वक्तुं न युज्यते[6]।

---

१. "मायामात्रमिदं द्वैतमद्वैतं परमार्थतः" इति आगमशास्त्रे १. १७.

२. आगमशास्त्रे ३. २१ इत्यत्र, ४. ६-७ इत्यत्र च।

३. तुलनीयम्—न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन॥
इत्यनेन नागार्जुनीयमूलमाध्यमिककारिकास्थेन १.३ पद्येन।

४. आगमशास्त्रे, ४.२८

५. तत्रैव, ४. ६० इत्यत्र

६. तत्रैव, ४. ७४ इत्यत्र

माध्यमिकगौडपादीयमतयोर्भूयसा साम्येन गौडपादो न केवलं बौद्ध इत्युद्घुष्यते, भावविवेकेन स्वीयमध्यमकहृदयव्याख्यायां तर्कज्वालाभिधायां स्वोपज्ञायां[1] स्पष्टमेव गौडपादमतं माध्यमिकमतानुकूलमित्यपि स्वीकृतम्। अपि च, अजस्य ब्रह्मण उपासकाव्यतिरिक्तस्योपासनासम्भवादुपासनाश्रितो धर्मः कृपण इत्यधिक्षिप्तं गौडपादेन[2], भावविवेकेन च तदेव समर्थयता प्रतिपादितम्—"अनुपासनयोगेन मुनयो यदुपासते"[3] इत्यनेन।

एतदपि साम्यं समन्वयात्मकमेव। यतो हि माध्यमिकानां निकाये चतुष्कोटिविनिर्मुक्तस्य तत्त्वस्य शून्याभिख्यस्य स्थितिरङ्गीकृता, गौडपादेन च तदेव तत्त्वं ब्रह्मेत्याख्यायते। ब्रह्म च आत्मैव नान्यत् किञ्चन। परमार्थतोऽद्वैतमेव तत्त्वम्। आत्मैवात्मना कल्पयति, स एव च बुध्यत इति वेदान्तनिश्चयो निश्चितः[4]। आत्मेव जाग्रत्स्वप्नसुषुप्त्याख्यास्ववस्थासु विद्यमानो भावान् कल्पयति, आत्मव्यतिरिक्तस्यान्यस्याभावात् सर्वं कल्पितमेव जगत्। तत्त्वतो नास्ति जाग्रत्स्वप्नानुभवयोर्भेद इति विज्ञानवादिवसुबन्धुमतच्छायामवष्टभ्यैव गौडपाद आह—"वैतथ्यं सर्वभावानां स्वप्न आहुर्मनीषिणः"[5] इत्यादि द्वितीयप्रकरणे। सर्वं चित्तविजृम्भितमिति वदद् विज्ञानवादेन साम्यमावहति मतमेतत्। किन्तु विज्ञानात्मनः क्षणसन्ततित्वानभ्युपगमाद् नित्यत्वैकत्वादिविशेषणविशेषितत्वाच्च अनात्म्यवादिबौद्धानुमततत्त्वाभिन्नत्वं नितरामसङ्गतं नः प्रतिभाति।

तत्त्वप्राप्त्युपायवर्णनमुपस्थापयताप्याचार्येण बौद्धानां योगपद्धतिः परामृष्टा दरीदृश्यते। चित्तं ह्यर्थं न स्पृशति, अर्थस्य चित्तव्यतिरिक्तस्याभावात्। परं यावदज्ञानेन चित्तं तथा स्पर्श-

---

१. ग्रन्थोऽयं शीघ्रं डा० वी० वी० गोखलेमहोदयेन मया च भोटभाषात आङ्गलभाषायामनूद्य प्रकाशयिष्यते। मध्यमकहृदयकारिकास्तु मूलसंस्कृत एव प्राप्ता इति प्रथमसंख्यकपादटिप्पणे निर्दिष्टे पुस्तके द्रष्टव्यम्।

२. आगमशास्त्रे २, १२-१३

३. तत्रैव २. १ इत्यादौ।

४. आगमशास्त्रे ३. १ इत्यत्र।

५. Dr. V. V. Gokhale—Masters of Buddhism adore the Brahman through non-adoration, Indo-Iranian Journal Vol. X, N R. 4, 1962.

मनुभवदिवास्ते तावन्न मोक्षोपलब्धिः । निर्वाणं नाम अस्पर्शयोगलभ्यो[1] भावनाविशेषः । यदा "आत्मैवेदं सर्वम्" इति बोधोदयस्तदा न कश्चित्संकल्प उदेति, संकल्पाभावान्मनोऽमनस्तां याति[2] । मनसो निग्रहायत्तो हि दुःखक्षयापरपर्यायो मोक्षः[3] । एतदेव बौद्धसहजयानप्रतिष्ठापकाचार्येण सरहापराभिख्येन सरोरुहवज्रेणाप्युक्तम्—"जव्वें मन अत्थमणु जाइ, तणु तुट्टइ बन्धण"[4] । सहजयाने बौद्धानां तत्त्वं शून्यमेव, किन्तु तेषां नये शून्यं विज्ञानस्वभावात्मकम् । तत्त्वं न भावरूपं नाप्यभावरूपम्[5] । तच्च निश्चलेन मनसैवावाप्तव्यम् । तथा चोक्तं सरहेण—

बुद्धिविणासइ मण मरइ तुट्टइ जइं अहिमाण[6] ।। इति ।

गौडपादेनापि—"मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते"[7] इति स्वीकृतम् । तत्त्वं च स्वकसंवेदनम्, तच्च न मनोगोचरमिति प्रयत्नेन मनसो निग्रहः तत्प्रचारस्य चोपशमः कार्यः[8] । सरहेण तु स्पष्टं तुरीयावस्था मोक्षावस्थैवेति स्वीकुर्वता आत्मनो गौडपादप्रतिपादितमतानुयायित्वमुद्घोषितम् । तथा चाह सरहः—

णिअसहाव गअणसम अप्पा पर णऊ सोइ ।
सहजाणन्य चउट्ठऊ सोकी बुच्च ण जाइ[9] ।।

तत्त्वे लक्ष्यालक्ष्यविवर्जिते नास्ति भावत्वप्रसक्तिरपि । एवञ्च तत्र जाग्रत्स्वप्नसुषुप्तीनां न प्रसरावसर इति वचनमपि सरोरुहवज्रस्य गौडपादच्छायामेवानुरुणद्धि ।[10] चित्तं च भावाभावनिबन्धनं भावाभावावतिक्रम्य प्रवर्तमाने तत्त्वे न सरति गौडपादीयसहजयानीययोर्मतयोः[11] ।

---

१. तत्रैव ४. २६, ४. २ इत्यादौ ।
२. तत्रैव ३. ३२
३. तत्रैव ३. ४०
४. सरहकृते दोहाकोशे राहुलसांकृत्यायनेन सम्पादिते, पृ० २२
५. तत्रैव, पृ० १६
६. तत्रैव, पृ० १४
७. आगमशास्त्रे, ३. ३१
८. दोहाकोशे, पृ० २६
९. तत्रैव, पृ० २६
१०. तत्रैव, पृ० ३२
११. तत्रैव, पृ० ३२, आगमशास्त्रे ३. ३६

मनसो निग्रहाय मनसः कामभोगान्निवृत्तिः, लीनचित्तस्य सम्बोधनम्, विक्षिप्तचित्तस्य शमनम्, शमे सुखानास्वाद इतीमेऽन्ये चोपाया वर्णिता गौडपादेन । अत एव सर्वे उपायाः सरोरुहवज्रप्रवर्तिते सहजयानेऽपि प्रचलिता दरीदृश्यन्ते । यथा सहजयाने परं पदं महासुखमित्युच्यते, तथैव गौडपादेन मोक्षावस्था वर्णिता—

स्वस्थं शान्तं सुनिर्वाणमकथ्यं सुखमुत्तमम् ।
अजमजेन ज्ञेयेन सर्वज्ञं परिचक्षते ॥ इत्यनेन ।

इदं तु निश्चेतुमशक्यं यद् गौडपादः सहजयानेन परिचित आसीत् । यतो हि तस्य स्थितिकाले सहजयानं महायानगर्भस्थितिमेव भजद् भवेत् । किन्तु कायसाधनं परिहृत्य सहजयानस्य सर्वमन्यद्वैशिष्ट्यं गौडपादीये दर्शने समुल्लसति ।

एवं शब्दाद्वैत-शून्याद्वैत-विज्ञानाद्वैत-सहजाद्वैतवादानां समेषां परिमलोद्गारिप्रसूनानि गृहीत्वा फल्गु चापास्य माण्डूक्योपनिषत्सूत्रानुस्यूता माला याऽकारि गौडपादेन सा सर्वैरेव बौद्धैर्वेदान्तिभिरागमिकैस्तान्त्रिकैश्च सममेव सश्रद्धं शिरसि धीयते । भेदोपहतबुद्धिभिस्तु नेयं ममेति कृत्वा निराकृतायामस्यां निराकर्तॄणां मतिमान्द्यमाविष्करोति ॥

****

# ज्ञानकर्मसमुच्चयवादः

श्रीमुरलीधरपाण्डेयः, वा० सं वि० वि० वाराणसी ।

## सविशेषब्रह्मवादः

ज्ञानकर्मणोः समुच्चयस्य सिद्धान्तः सविशेषब्रह्मवादे सम्भवी । यतो हि सविशेषब्रह्मवादस्य ब्रह्मपरक-विष्णुपरक-शिवपरक-शक्तिपरक-सूर्यपरक-गणपतिपरकरूपा ये विभागाः सन्ति, तेष्वद्वैतमिव द्वैतमपि सत्यमेवास्ति । अद्वैतवस्तुनः कृते यथा ज्ञानस्यापेक्षा, तथैव परमार्थसतो द्वैतस्य कृते कर्मणोऽप्यपेक्षास्ति । अद्वैतं वस्तु द्वैतं वा वस्तु परस्परं सापेक्षमस्ति । अत एकमन्यदन्तरा नैव स्थातुं शक्नोति । अतो द्वैताद्वैतवादे, विशिष्टाद्वैतवादे, शुद्धाद्वैतवादे, द्वैतवादे च ज्ञानकर्मसमुच्चयस्य पक्षो गृहीतो भवति ।

## निर्विशेषब्रह्मवादः

अद्वैतवादे केवलमद्वैततत्त्वमेव पारमार्थिकसत्यत्वेन गृह्यते, द्वैतवस्तु तु व्यावहारिकसत्यत्वेनैव गृह्यते । ते तु "मायामात्रमिदं द्वैतम्"[१] इति सूतसंहितया निर्दिष्टां श्रुतिमाश्रित्य व्यावहारिकं वस्तु मायिकमुद्घोषयन्ति । मायिकं वस्तु मिथ्या भवति । मिथ्यावस्तुनश्च निवृत्तौ कर्मणो नोपयोगः । मोक्षस्तु आत्मनः सर्वदैव आसन्नः, तस्याप्राप्तिस्तु भ्रमरूपा, भ्रमस्य निवृत्तिरेव मोक्षः, भ्रमस्य च निरकरणाय कर्म नापेक्ष्यते । अज्ञाननिवृत्तिस्तु ज्ञानादेव केवलाद् भवितुमर्हति । अतः "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुतिः स्वरसतः संगच्छत इति कथयन्ति । अतो निर्विशेषब्रह्मवादिनो ज्ञानकर्मसमुच्चयस्य केवलस्य वा कर्मणो मोक्षरूपपुरुषार्थायानुपयोगितां श्रावयन्ति । तन्मते केवलं कर्म कर्मसमुच्चितं ज्ञानं वा नानर्थस्य निराकरणे कारणं भवितुमर्हति । अत एव आचार्यशङ्करेण पदे पदे ज्ञानकर्मसमुच्चयपक्षः शतधा खण्डितः ।

## अद्वैतवादे ब्रह्मदत्तमतेन ज्ञानकर्मसमुच्चयपक्षः

अद्वैतवादे एकं ब्रह्मदत्तस्यैतादृशं मतमस्ति यद् ज्ञानकर्मसमुच्चयपक्षमङ्गीकरोति ।

---

१. अतः संसारनाशाय कदाचित् परमा श्रुतिः ।
जगत् सर्वमिदं माया वदति.................. ॥
(सूतिसंहितायज्ञवैभवखण्डेऽध्यायः १२ श्लो० १७)

श्रीशङ्करमते कर्मणा जिज्ञासोत्पद्यते, न तु मोक्षः। सत्त्वशुद्धौ वैराग्ये च जाते श्रीशङ्करमते न कर्मण आवश्यकता। अस्यामवस्थायां कर्मसंन्यासो विधिप्राप्तः। द्वितीयायामवस्थायां साधकेन ज्ञानार्जने एव प्रयत्नशीलेन भवितव्यम्। किन्तु ब्रह्मदत्तदृष्ट्या उपनिषदा प्राप्ते ब्रह्मणः परोक्षज्ञाने, "अहं ब्रह्मास्मि" इति भावनाया अभ्यासः कर्तव्यः। अतो जीवनपर्यन्तं न कर्मणः संन्यासः। अतो ब्रह्मदत्तस्य मतं ज्ञानकर्मसमुच्चयवाद एव। सुरेश्वराचार्येण ब्रह्मदत्तः समुच्चयवादिरूपेणैव स्मृतः। नैष्कर्म्यसिद्धिटीकायां ज्ञानोत्तमेनापि स ज्ञानकर्मसमुच्चयवादितयाऽभिहितः—"वाक्यजन्यज्ञानोत्तरकालिकभावनोत्कर्षाद् भावनाजन्यसाक्षात्काररलक्षणज्ञानान्तरेणैवाज्ञानस्य निवृत्तेर्ज्ञानाभ्यासदशायां ज्ञानस्य कर्मणा समुच्चयोपपत्तिः" इति।

## भेदाभेदवादे ज्ञानकर्मसमुच्चयवादः

**( क ) भर्तृप्रपञ्चस्य मते**

भर्तृप्रपञ्चस्य भेदाभेदवादः शङ्करात् प्रागतीव प्रभावकारितया विख्यात आसीत्। तस्य मते एकत्वं द्वैतं चोभयमपि सत्यम्। वृक्षशाखासमुद्रफेनादिदृष्टान्तमाश्रित्य एकत्वं नानात्वं च तेन साधितम्। आचार्यशङ्करस्य शब्देषु भर्तृप्रपञ्चस्य मतं यथा—

"अत एकत्वं नानात्वं चोभयमपि सत्यमेव। यथा वृक्ष इत्येकत्वं शाखा इति च नानात्वम्। यथा च समुद्रात्मनैकत्वं फेनतरङ्गात्मना नानात्वम्। यथा च मृदात्मनैकत्वं घटशरावाद्यात्मना नानात्वम्। तत्रैकत्वांशेन ज्ञानान्मोक्षव्यवहारः सेत्स्यति। नानात्वांशेन तु कर्मकाण्डाश्रयौ लौकिकवैदिकव्यवहारौ सेत्स्येते इति। एवञ्च मृदादिदृष्टान्ता अनुरूपा भविष्यन्तीति"। ( ब्र० सू० भाष्यम्, अ० २ पा० १ सू० १४ )।

**( ख ) आश्मरथ्यस्य मते**

आश्मरथ्यो भेदाभेदवादस्य प्राचीनतमः समर्थकः। अनन्तरं यादवप्रकाशेनास्यैव भेदाभेदवादः परिपोषित इति श्रुतिप्रकाशिकाकारेण सुदर्शनाचार्येणाभिहितम्। आश्मरथ्यस्य मते विज्ञानात्मनः परमात्मनश्च परस्परं भेदाभेदसम्बन्धोऽस्ति। "आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति" इत्यादिवाक्येषु यैकत्वविज्ञानात् सर्वविज्ञानस्य प्रतिज्ञा कृता, तया भेदाभेदवाद एव सिद्ध्यति। अतः शङ्कराचार्येणापि—"आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादन्यत्वमभिप्रेतम्, तथापि प्रतिज्ञासिद्धेरिति सापेक्षत्वाभिधानात् कार्यकारणभावः कियानभिप्रेत इति गम्यते" ( ब्र० सू० १-४ २२ ) इत्युक्त्वा आश्मरथ्यस्य भेदाभेदवादित्वमाशङ्कितम्।

## ज्ञानकर्मसमुच्चयवादः

### ( ग ) औडुलोमेर्मते

ब्रह्मसूत्रे औडुलोमेर्नाम त्रिषु स्थलेष्वायातम्। अस्य मते भेदाभेदवादाववस्थान्तरदृष्ट्या वर्तेते। आचार्यशङ्करस्तु स्पष्टशब्देष्विदं तथ्यमकथयत्—"औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्येते" ( ब्र० सू० १-४-२२ )।

### ( घ ) विज्ञानभिक्षोर्मते

ब्रह्मसूत्रस्य सांख्यमतानुसारं विज्ञानामृतं नाम भाष्यमस्ति। अस्मिन् कृत्स्नानां शास्त्राणां समुच्चयस्य चेष्टाऽक्रियत। अतो विज्ञानभिक्षोर्मतं समन्वयवादशब्देनाभिधीयते। अस्य मते सूर्यस्य रश्मय इव सर्वे जीवा ब्रह्मणोंऽशाः। विज्ञानभिक्षुरपि ज्ञानस्य कर्मणश्च समुच्चयपक्षमङ्गीकरोति। कर्मयुक्तं ज्ञानमेवास्य मते मोक्षस्य साधनम्। विज्ञानभिक्षुस्तु ज्ञानकर्मसमुच्चयस्यैतादृशीमावश्यकतामन्वभवद् यद् मङ्गलाचरणकाले एव तमुदघोषयत्—

निर्जित्य ज्ञानकर्मभ्यां यान्तु श्रीमद्गुरोः पदम्॥ ५॥

अयं त्वाचार्यः संन्यासिनां सर्वकर्मत्यागस्याशास्त्रार्थत्वं मन्यते। कथयति—"एतेन संन्यासिनां सर्वकर्मत्यागोऽशास्त्रार्थः। तथा च श्रुतिरपि—"अत ऊर्ध्वममन्त्रवदाचरेदिति सन्धिं समाधावात्मन्याचरेदिति चात्मनि स्वशरीरे समाधिमात्रेण देवैः सह सन्धिं सन्ध्याख्यं कर्माचरेदित्यर्थः। तथा च श्रुत्यन्तरं परमात्मात्मनोरेकत्वविज्ञानेन तयोर्भेद एव विभग्नः सान्ध्यं सन्ध्येति। तथा मनौ—"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि। समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति॥" इत्यनेन ज्ञानस्यात्मयागेन सह समुच्चय उक्तः। ( ब्र० सू० अ० १, पा० १, सू० १ )।

विज्ञानभिक्षुस्त्वातुरस्य कृतेऽपि सर्वकर्मसंन्यासस्य विरोधी। तस्य कृतेऽभ्यान्तरकर्मण आवश्यकतां प्रतिपादयति—"आतुरस्य तु बाह्यकर्माशक्तस्यान्तरकर्मानुष्ठानपूर्वकं जाबालोक्तसंन्यासं नैव निराकुर्मः—"अकर्तुमसमर्थश्चेज्जुहोति यजतिर्क्रियाः। अन्धः पङ्गुर्दरिद्रो वा विरक्तः संन्यसेद् द्विजः॥" इति कूर्मवाक्यादिति" ( ब्र० सू० अ० १ पा० १ सू० १ )।

### ( ङ ) श्रीनिम्बार्कस्य मते

गुणस्य गुणिना सह यः स्वगतभेदाभेदसम्बन्धोऽस्ति, स एव सम्बन्ध आचार्यनिम्बार्कस्य मते जीवब्रह्मणोरस्ति। अतोऽस्य मतं भेदाभेदसम्बन्धेन द्वैताद्वैतशब्देन च कथ्यते। इदं मतं स्वाभाविकभिन्नाभिन्नब्रह्मप्रतिपादकमस्ति। आचार्यस्य शब्दा यथा—"सर्वभिन्नाभिन्नो भगवान्

वासुदेवो विश्वात्मैव जिज्ञासाविषयः" इति। श्रीनिम्बार्कस्य द्वौ श्लोकौ देवाचार्येण सुन्दरभट्टेन चोद्धृतौ। तयोरस्याचार्यस्य ब्रह्मणः प्रकृतिपुरुषेश्वररूपाणां त्रयाणां रूपाणां विषये विचाराः समासत आगताः—

ज्ञानस्वरूपञ्च हरेरधीनं शरीरसंयोगवियोगयोग्यम्।
अणुं हि जीवं प्रतिदेहभिन्नं ज्ञातृत्ववन्तं यदनन्तमाहुः॥
सर्वं हि विज्ञानमयो यथार्थकं श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः।
ब्रह्मात्मकत्वादिति वेदविन्मतं त्रिरूपतापि श्रुतिसूत्रसाधिता॥

यस्य मते सगुणभाव एव मुख्यः, यश्च ज्ञानं विना आनन्दस्यास्तित्वमपि न मन्यते; तन्मते ज्ञानकर्मसमुच्चयस्य कियत्यपेक्षेत्यञ्जसा ज्ञातुं शक्यते।

**( च ) श्रीयादवस्य मते**

यादवो भेदाभेदवादी आसीत्। अयं यादवाचार्यः श्रीरामानुजगुरोः काञ्चीनिवासिनः श्रीयादवप्रकाशाद् भिन्नोऽभिन्नो वेति निर्णयः कठिनः। श्रुतिप्रकाशिकाकारस्य सुदर्शनस्य मतमिदं ( ब्रह्मसूत्रे, १-४-२० ) यदाश्मरथ्यस्य मतमुक्तं तदाश्रित्यैव यादवप्रकाशः स्वमतं प्रतिष्ठापितवान्। यादवप्रकाशो ब्रह्मसूत्रस्य गीतायाश्च भेदाभेदपक्षमङ्गीकृत्य भाष्यं कृतवान्। अयं ज्ञानकर्मसमुच्चय-वादी आसीत्। अस्य मते भेदज्ञानात् संसारस्य प्रवृत्तिर्भवति, भेदाभेदज्ञानाच्च संसारनिवृत्ति-मुखेन मुक्तिरवाप्यते। भेदस्तथाऽभेदः समरूपेण सत्यम्। चित्यचिति च न कोऽपि वास्तविको भेदः।

## विशिष्टाद्वैतवादे ज्ञानकर्मसमुच्चयः

**( क ) श्रीश्रीकण्ठस्य मते ( शक्तिविशिष्टाद्वैतवादे )**

आचार्यशङ्करस्य प्रतिपक्षिरूपेण[1] महता समारोहेण श्रीश्रीकण्ठाचार्य उदतिष्ठत्। अयं विशिष्टाद्वैतवादी आसीत्। अस्य विशिष्टाद्वैतवादः श्रीरामानुजस्य प्रचलिताद् विशिष्टाद्वैत-वादाद् भिन्नः। श्रीरामानुजस्य विशिष्टाद्वैतवादो वैष्णवसम्प्रदायमनुरुध्य वर्तते। श्रीश्रीकण्ठा-चार्यस्य विशिष्टाद्वैतवादस्तु शैवसम्प्रदायमनुरुध्यासीत्। यस्य मते कर्ममीमांसा ब्रह्ममीमांसा

१. श्रीश्रीकण्ठेन ब्रह्मसूत्रस्य पूर्वाचार्यैः कलुषितत्वं प्रतिपादितम्—

व्याससूत्रमिदं नेत्रं विदुषां ब्रह्मदर्शने।
पूर्वाचार्यैः कलुषितं श्रीकण्ठेन प्रसाध्यते॥ ५॥

चैकमेव शास्त्रमस्ति। अस्य मतेऽपि द्वैतमप्यद्वैतमिव परमार्थसदेवास्ति। अतो द्वैतप्रतिपादक-श्रुतीनां तथैव पारमार्थिकत्वम्, यथा अद्वैतप्रतिपादकश्रुतीनाम्। अतो ज्ञानकर्मणोः समुच्चयः। तस्य शब्दा यथा—"यदि श्रुत्यादिप्रमाणं न सम्भवति तदा खलु तथा स्यात्। विद्यां चाविद्यां च यस्तद् वेदोभय ँ सह तेनैति ब्रह्मवित् पुण्यकृच्च सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यमित्यादिना ज्ञानकर्मसमुच्चयवादिनी श्रुतिरुपलभ्यते।" ( ब्र० सू० अ० १ पा० १ सू० १ )

टीकाकर्त्राऽप्पयदीक्षितेनात्र सुस्पष्टैः शब्दैरुद्घोषितं यदुपरितनपङ्क्तिभिः ज्ञानकर्म-समुच्चयपक्ष एव श्रुतिभ्यां प्रतिपादितमिति.....ज्ञानकर्मणोः समुच्चये प्रमाणमुपन्यस्यते।.........प्रागपि व्रीहिप्रोक्षणदर्शपूर्णमासन्यायेन तयोः समुच्चयो दर्शितः।..... इह तु ज्ञानानुष्ठानकाले एवा-नुष्ठेयैः कर्मभिस्तस्य समुच्चये श्रुतिरुपन्यस्यते। विद्ये चेति मन्त्रे हि सहश्रुतिः कर्मज्ञानवेदनयो-र्यौगपद्यं प्रतिपादयन्ती ज्ञानानुष्ठानकाले कर्मानुष्ठानं बोधयति।.....समनन्तरोदाहृतमन्त्रयो-रप्युक्तरूप एवं ज्ञानकर्मसमुच्चये तात्पर्यम्।" ( ब्र० सू० अ० १ पा० सू० १ )

**( ख ) श्रीभास्कराचार्यस्य मते**

भास्कराचार्योऽपि विशिष्टाद्वैतवादी आसीत्। श्रीकण्ठस्य विशिष्टाद्वैतसम्प्रदायः शिव-परकः, श्रीरामानुजस्य विशिष्टाद्वैतवादो विष्णुपरकः, किन्त्वस्य विशिष्टाद्वैतवादो ब्रह्मपरकोऽस्ति। ब्रह्मोद्दिश्यानेन ब्रह्मसूत्रस्य भाष्यं निरमायि। अस्य मतेऽप्यद्वैतमिव द्वैतमपि सदस्ति। अतो ज्ञानकर्मसमुच्चयस्यापेक्षाऽस्मिन्नपि मत आपतिता। ब्रह्मसूत्रस्य प्रथम एव सूत्रे भास्कराचार्येण शाङ्करमाक्षिपतोक्तम्—

"अत्र हि ज्ञानकर्मसमुच्चयाद् मोक्षप्राप्तिः सूत्रकारस्याभिप्रेता। तथा च वक्ष्यति—सर्वा-पेक्षा च यज्ञादिश्रुतेरश्ववदिति। कर्मणि चापरिज्ञाते विद्यायाः केन समुच्चयः केन नेति विभागो न शक्यते वदितुम्, हेयोपादेयप्रतिपत्त्यभावात्। पूर्ववृत्ते तु कर्मज्ञाने काम्यं प्रतिषिद्धं च हेयं नित्येन कर्मणा समुच्चय इति प्रतिपादयितुं शक्यते। कर्मसमृद्ध्यर्थानीवोद्गीथाद्युपासनान्यत्र चिन्त्यन्ते, तेषां च कर्माधिकृतपुरुषविषयत्वात्" इति।

ज्ञानकर्मसमुच्चयवादस्य पक्षः श्रीभास्कराचार्येण महता समारम्भेण साधितः। अत एव पर-वर्तिभिरद्वैतनिबन्धृभिः समुच्चयवादस्य खण्डने भास्करस्यैव नाम प्रस्तावितम्, अस्यैव च शब्दस्य खण्डनं कृतम्। विवरणप्रमेयसंग्रहकारेण लिखितम्—"यस्तु भास्करः सन्ध्यावन्दनादिनित्यकर्मणस्त-दङ्गीभूतोपवीतस्य त्यागं नेच्छति सोऽपरिचितशास्त्रवृत्तान्तत्वादुपेक्षणीयः।" ( वि० प्र० स० सू० १ वर्णकम् ३ )

**( ग ) श्रीरामानुजाचार्यस्य मते**

श्रीरामानुजाचार्यस्य विशिष्टाद्वैतवादस्त्विदानीमतीव प्रथितोऽस्ति । देहस्य देहिना सह यः स्वगतभेदाभेदसम्बन्धोऽस्ति स एव सम्बन्धः श्रीरामानुजस्य मते जीवस्य ब्रह्मणा सह वर्तते । अत्र जीवो देहस्थानीयः, ब्रह्म च देहिस्थानीयम् । अस्य स्वगतभेदाभेदसम्बन्धस्यापरं नाम विशिष्टाद्वैतसम्बन्धोऽस्ति । तेनास्य मतस्य नाम विशिष्टाद्वैतवाद इति कथ्यते । श्रीरामानुजाचार्येणापि महता समारोहेण ज्ञानकर्मसमुच्चयपक्षः संस्थापितः ।

समुच्चयपक्षमभिप्रेत्यैवानेन पूर्वमीमांसाशास्त्रस्योत्तरमीमांसाशास्त्रस्य चैकत्वमुद्घोषितम् । अस्य मते कर्मब्रह्मप्रतिपादकपूर्वोत्तरभागाभ्यां वेदस्य द्विधा भेदः । तत्र आराधनकर्मप्रतिपादकं पूर्वकाण्डम्, आराध्यप्रतिपादकमुत्तरकाण्डम् । इत्थं प्रतिपाद्यभेदेन विचारशास्त्रस्य 'पूर्वमीमांसा' 'उत्तरमीमांसा' इति च व्यवहारः । यथा पूर्वमीमांसायाः प्रतिपाद्यभेदेन 'पूर्वखण्डम्' 'उत्तरखण्डम्' इति व्यवहारस्तथैवात्रापि । आचार्यस्य शब्दा यथा—"वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यम्, संहितमेतच्छारीरिकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरिति । अतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवदध्यायभेदवच्च पूर्वोत्तरमीमांसयोर्भेदः । (श्रीभाष्यम् १।१।१ )

"अथातो ब्रह्मजिज्ञासा" इति सूत्रघटकाथशब्दस्य व्याख्यानावसरे स्पष्टशब्देष्वाचार्येण समुच्चयपक्षः समर्थितः—"तदपेक्षितञ्च कर्मविज्ञानमेव । कर्मसमुच्चिताद् ज्ञानादपवर्गश्रुतेः । वक्ष्यति च, सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदिति । अपेक्षिते च कर्मण्यज्ञाते केन समुच्चयः केन नेति विभागो न शक्यते ज्ञातुम् । अतस्तदेव पूर्ववृत्तम् ।" ( श्रीभाष्यम् १।१।१ )

**( घ ) श्रीश्रीकराचार्यस्य मते**

श्रीश्रीकराचार्येण ब्रह्मसूत्रस्य शक्तिविशिष्टाद्वैतप्रतिपादकं भाष्यं रचितम् । तत्र भाष्ये पूर्वतनशक्तिविशिष्टाद्वैतभाष्यकर्तॄणां श्रीरेणुकदारुककोरामगोकर्णादीनां नामान्युपन्यस्तानि । शिवाज्ञया शिवलिङ्गादाविर्भूतेन जगद्गुरुणा रेणुकाचार्येण ब्रह्मसूत्रे प्रणीतं रेणुकभाष्यं तु प्रसिद्धमेव ।

अयं श्रीशङ्कराचार्य इव घटपटयोरिव ईश्वरजीवयोरत्यन्तभेदं नाङ्गीकरोति, रज्जुसर्पयोरिव ईश्वरजीवयोर्मिथ्यात्वमपि नाङ्गीकरोति । तन्मते द्वैतमपि सत्यमद्वैतमपि सत्यम् । अत एव "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्योऽभिचाकसीति ॥" इत्यादीनि द्वैतपरकाणि, "एकमेवाद्वितीयं ब्रह्म" इत्यादीन्यद्वैतपरकाणि च वाक्यानि स्वरसतः सङ्गच्छन्ते ।

## ज्ञानकर्मसमुच्चयवादः

श्रुत्येकदेशप्रामाण्यं द्वैताद्वैतमतादिषु ।
द्वैताद्वैतमते शुद्धे विशेषाद्वैतसंज्ञके ।
वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः ॥

एतदर्थं श्रीश्रीकराचार्यः स्वमतं विशेषाद्वैतसिद्धान्तशब्देन शैवसिद्धान्तशब्देन च व्यपदिशति । विशेषाद्वैतशब्दघटकेन विशब्देन शिवः शेषशब्देन च जीवो गृह्यते—

विशब्देनोच्यते शम्भुर्द्वा सुपर्णेति मन्त्रतः ।
शेषशब्देन शारीरो यथाग्नेरिति मन्त्रतः ॥

अतोऽयमपि ज्ञानकर्मसमुच्चयवादी । श्रीशङ्करस्याद्वैतवादः कर्मसंन्यासं विधाय ज्ञानमार्गं प्रतिष्ठापयति । किन्तु शक्त्यद्वैतवादः कर्मणा सहैव निष्कामकर्ममार्गं प्रतिष्ठापयति । अतोऽयं सम्प्रदायः 'वीरमार्ग' इति पदेनापि व्यपदिश्यते ।

## शुद्धाद्वैतवादे

शुद्धाद्वैतवादस्य प्रतिष्ठापकः श्रीवल्लभाचार्योऽस्ति । अंशस्य अंशिना सह यः स्वगतभेदाभेदोऽस्ति, स एव सम्बन्ध आचार्यवल्लभस्य मते जीवब्रह्मणोरस्ति । जीवोंऽशस्थानीयो ब्रह्म च अंशिस्थानीयमस्ति । जीवात्मा परमात्मा चोभावपि शुद्धौ । पूर्वोक्तस्य सम्बन्धस्य नाम शुद्धाद्वैतसम्बन्धोऽस्ति । अतः श्रीवल्लभस्य मतं शुद्धाद्वैतशब्देनाभिधीयते ।

अस्य मते ज्ञानमार्गोऽकिञ्चित्करः । भक्तिमार्गोऽपि नोत्कृष्टः । प्रीतिमार्ग एव सर्वातिशायी ।

श्रीवल्लभस्य मते औपनिषदज्ञानस्यापि कर्मोपयोगिता । एतन्मते औपनिषदं ज्ञानं विना कर्म कर्मैव न तिष्ठति, अपि तु कर्माभासत्वं तस्य । तद्यथा—

"औपनिषदज्ञानस्यापि कर्मोपयोगित्वं यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्य्यवत्तरं भवतीति । अत एव ब्रह्मविदामेव जनकादीनां कर्मणि सर्वदेवसान्निध्यम्, अन्यथा आभासत्वमेव । न च ब्रह्मरूपात्मविज्ञाने देहाद्यध्यासाभावेन कर्तृत्वाभावात् कर्मानधिकार इति वाच्यम्, निरध्यस्तैरेव देहादिभिः कर्मकरणसम्भवात् । अत एव जीवन्मुक्तानां सर्वे व्यापाराः । तथा च स्मृतिः—

नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥

प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥

अतो ब्रह्मविदामेव कृतं कर्म शुभफलं भवति । अतो धर्मविचारकाणामपि ब्रह्म जिज्ञास्यमेव । ( अणुभाष्यम् १।१।१ )

एवञ्च यस्य मते औपनिषदज्ञानस्यापि कर्मोपयोगिता, तस्य मते ज्ञानकर्मणोः समुच्चयः सुतरां स्पष्टः ।

इत्थमद्वैतवादे यत्र ब्रह्म निर्विशेषं तत्र ज्ञानादतिरिक्तस्य कर्मण उपयोगित्वाभावान्नास्ति ज्ञानकर्मणोः समुच्चयस्यावश्यकता । द्वैतवादे, विशिष्टाद्वैतवादे, शुद्धाद्वैतवादे, द्वैताद्वैतवादे च यत्र ब्रह्म सविशेषम् ,तत्र ज्ञानकर्मणोः परस्परं सापेक्षतया ज्ञानकर्मसमुच्चयस्यावश्यकता भवतीति शम् ॥

**:०:**

# बाह्यसद्वस्तुवादिदर्शनेषु सत्यद्वयविमर्शः

श्रीजगन्नाथ उपाध्यायः, बौद्धदर्शनविभागाध्यक्षः, वा० सं० वि० वाराणसी ।

उपनिषदामाविर्भावकाले भावस्वभावविषये तस्य लक्षणसंख्यादिविषये च महती विप्रतिपत्तिरासीत् । यद्यपि तदानीं सत्यस्य मुखं पिहितमिव दृश्यते, तथापि ईशावास्यकठोपनिषदादीनां "तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये", "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥", "देवैरत्रापि विचिकित्सितं पुरा" इत्यादिवचनैस्तत्त्वबुभुत्साऽपि परां कोटिमाटीकत । तदानीं तत्त्वस्वरूपविषये विशुद्धसत्त्वेषु यतिष्वपि परस्परं विसंवादा आसन् । अत्र श्रुतयो भवन्ति—"अग्निजलान्नानि त्रीणि रूपाण्येव सत्यम्" ( छा० ६।४ ), "सर्वं खल्विदं ब्रह्म" ( छा० ६।८ ), "सन्मूलाः सर्वाः प्रजाः, सदेव सौम्येदमग्र आसीत्, एकमेवाद्वितीयम्" इत्यादिछान्दोग्यवचनानि, "असदेवेदमग्र आसीत्", "आत्मनो दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितं भवति" ( २।३ ), "इमे लोकाः, इमे देवाः, इमानि भूतानि, इदं सर्वं यदयमात्मा" इत्यादीनि बृहदारण्यकवचनानि, "रसो वै सः", "आनन्दो ब्रह्मेति व्यजानात्" ( ६।६ ) इत्यादितैत्तिरीयवचनानीति । एतच्छ्रुत्यनुरोधेन ब्रह्म-सत्-असत्-आत्मा-रस-आनन्दादीनि तत्त्वान्येकत्वेन नानात्वेन वा, परस्परं विरोधेनाविरोधेन वा श्रूयन्ते ।

एवंविधेष्वनेकेष्वपि तत्त्वेषु सर्वस्मिन्ननुस्यूतं सत्यद्वैविध्यं सर्वथा स्पष्टीभवति—एकं सत्यम्, अन्यत् सत्यस्य सत्यमिति । एवमेव मूर्तं च अमूर्तञ्च, मर्त्यञ्च अमृतञ्च, सच्च त्यच्चेति सत्यस्य विभागः क्रियते । अत्रार्थे उपनिषदो भवन्ति—"अथात आदेशो नेति नेति । नह्येतस्मात्दिति नेत्यन्यत् परमस्ति, अथ नामधेयं सत्यस्य सत्यमिति । प्राणा वा सत्यं तेषामेष सत्यम्" ( बृहदा० २।३. ) इति । "द्वे वाव ब्रह्मणो रूपे मूर्तञ्चैवामूर्तञ्च मर्त्यञ्चामृतं च यच्च सच्च त्यच्च" ( बृहदा० २।३।१ ) इति चेत्यादि ।

यद्यपि जगत उपादानत्वेनोपनिषत्सु कदाचिदसत्त्वमपि श्रूयते, तथापि तत्र सत्त्वेनैव प्रायशस्तत्त्वव्याकृतिर्दृश्यते । इममर्थं कठमुण्डकादिश्रुतयः प्रतिपादयन्ति—"अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति" ( क० २।६ ) इति, "अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः" इति च । इत्थं सत्त्वेन जिज्ञास्यमानस्य सत्यद्वैविध्यस्याधिगमोपायोऽपि प्रायशो द्विविध एवाद्रियते "विद्या च

अविद्या च" ( ईश० ११ ), " परा अपरा चेति वा" ( मुण्डक १।१ ) इत्यादिभ्यः । यद्यप्युपनिषदामेवंविधमीमांसया वस्तुनस्तत्त्वं मूर्त्तत्वेनामूर्त्तत्वेन वा; सत्येन सत्यस्य सत्येन वा; स्थूलत्वेन सूक्ष्मत्वेन वा; तद्ग्राहकं च ज्ञानं परत्वेन अपरत्वेन वा; विद्यात्वेन अविद्यात्वेन वा द्विविधं स्थापितं भवति, तथापि तयोरन्यतरस्य मिथ्यात्वमन्यतरस्य च सत्यत्वं न पर्यवस्यति । "नेह नानास्ति किञ्चन" ( कठ० २।१ ), "तमेवैकं जानथ" ( मुण्डक० २।२।५ ) इत्याद्युपनिषदोऽपि नानात्वस्य मिथ्यात्वं न बोधयन्ति । अपि तु–" तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" (मु० २।२), "यस्मिन् द्यौः पृथिवी चान्तरिक्षम् ओतं मनः सह प्राणैश्च सर्वैः" ( मु० २।२।५ ), इत्यादिना यथा प्रकृष्टप्रकाशत्वं सर्वानुगतत्वं परस्य ख्याप्यते, तथैवान्यासूपनिषत्स्वपि ज्येष्ठत्वश्रेष्ठत्वमात्रं च बोध्यते ।

तदयमुपनिषद्भिः संकेतितः सत्यद्वयमार्गो भारतीयदर्शनानां गह्वरकान्तारेऽनुप्रविष्टः क्वचित् संकीर्णः क्वचिद् विस्तीर्णः सन् मध्येमार्गं प्रपञ्चसत्यत्वं समूलमुन्मूल्य मिथ्यात्वनगरात् पारेतटं निर्विशेषं निर्विकल्पं निर्वाणपुरमनुप्राप्तः । तदत्रातिसाहसं बौद्धानां यैः प्रथमत आरभ्य प्रायोऽवसानं सोऽयं सत्यद्वयावतारो मार्गो युक्त्युपपत्तिभ्यां ध्यानभावनाभ्यामाविष्कृतः, परिष्कृतः, संवर्धितश्च । भगवत्पादशङ्कराचार्याणामभिनवगुप्तपादानां चैतत् परमं गौरवं यत्तैः प्रायस्तमेव मार्गमनुसरद्भिर्मायाशक्तिं वितथां सत्यां वाऽङ्गीकृत्योपनिषदनुरोधेन ब्रह्मत्वं परमशिवत्वं वा निर्विशेषं सविशेषनिर्विशेषं वा ख्यापितम् ।

यद्यपि सत्यद्वयवशादुपपन्नजगन्मिथ्यात्वस्याधिगतिः शून्य-विज्ञान-ब्रह्माद्वैतवादेष्वेव विश्राम्यति, आगमदर्शने च समन्वेति, तथापि मिथ्यात्वापहारिणां जगत्सत्यत्ववादिनां प्राचीनबौद्धानां स्थविरवाद-वैभाषिक-सौत्रान्तिकानामस्ति सत्यद्वयोद्गमाय तद्विकासाय च समीचीना पदार्थानां क्षणभङ्गभङ्गाभूमिः । जगत्सत्यत्ववादिष्वबौद्धेष्वपि मिथ्यात्वविरोधिषु स्थिरवस्तुवादिषु क्वचित् स्वल्पेन क्वचिद् वैपुल्येन वा सत्यद्वयावभासः प्रतीयते ।

बौद्धाबौद्धबाह्यसद्वादिभारतीयदार्शनिकैः स्वस्वाभिमतसकलपदार्थानामस्तित्वं साधयद्भिस्तथाविधः सत्तावादः स्वीक्रियते, यथा सर्वेषां भावानां निराबाधं पारमार्थिकत्वं सम्भवेत् । तेषां मते भ्रमविपर्ययादिषु सम्मतेष्वपि बाह्यवस्तूनां सर्वथाऽसद्भावो नैव शङ्क्यते । बाह्यासद्वादिभिः स्वसद्वादस्तथा परीक्ष्यते विभज्यते च, यथा वस्तूनां बाह्यास्तित्वं विपर्यस्यति विलुम्पति च । एवं बाह्यवस्तुसद्वादिनां सम्मतः सत्तास्वभावो बाह्यं सद्भूतं ख्यापयति, तद्विरोधेनासद्वादिनां स्वभाव-

वादोऽभूतत्वमेव तेषां प्रकटयति । अस्ति यद्यपि बाह्यासद्वादिषु सत्तास्वभावविमर्शकेषु परस्परं परमार्थस्वरूपविषये विवादः, तथापि स्वमते तैर्वस्तुसत्तावभासेन वस्तुनोऽसत्तैव बोध्यते । बौद्धेषु शून्यवादिविज्ञानवादिनोः, अबौद्धेषु च शाङ्करवेदान्तिनो मते सत्तया द्वित्वेन त्रित्वेन वा परिग्रहेऽपि परमार्थभूतस्य निर्विकल्पकत्वे न विवादः ।

यथा सत्ताद्वैविध्यस्य सङ्केतभूमिरुपनिषदः प्रतीयन्ते, तथा तद्द्वैविध्यस्य सोपपत्तिकं प्रधानं शास्त्रमाचार्यनागार्जुनस्य तदुपजीवकाष्टसाहस्रिकाप्रज्ञापारमितादिशास्त्रस्यैवेति निश्चीयते । सत्तात्रैविध्यवादः परवर्तिबौद्धानामार्यासङ्गदिङ्नागवसुबन्धूनाम् । अर्वाचीनेषु तु शाङ्करभगवत्पादानां सत्ताद्वैविध्यवादः, अर्वाचीनतमानां च शाङ्कराणां सत्तात्रैविध्यवादः प्रवर्तते ।

पदार्थानां सत्यत्वविषये स्वभावः, तत्त्वम्, परमार्थः, सत्यमित्यादयः प्रयुज्यमानाः शब्दाः प्रायः समानार्था भवन्ति । समानार्थत्वेऽपि स्वस्वाभिमतपदार्थविभागतत्स्वरूपतल्लक्षणादिभेदात् तत्तद्दर्शनेषु ते विभिद्यन्ते । तथा हि—"अर्थक्रियासमर्थं यत् तत्सत्" ( प्र० वा० १-२ ), "अकृत्रिमो भावः स्वभावः" ( माध्यमिक प्र० प० स्व० प० ), "अविपरीतार्थो हि तत्त्वार्थः" ( मध्यान्त० १५२ ), "स्वेन स्वेन लक्षणेन विद्यमानवद्भवति, एकरूपेण ह्यवस्थितोऽर्थः स परमार्थः",) (शाङ्करभाष्ये, ४६३), "प्रकाशमानतैव सत्ता" (भामती १।१।१ ), "अनुवर्तमानः सत्तालक्षण-स्वभावः" "उत्पादव्ययध्रौव्ययुक्तं सत्" ( स० सं० पृ० ५१ ) इत्यादीनि सतो विभिन्नानि लक्षणानि भवन्ति । सतो भावः सत्त्वमिति व्युत्पत्त्या तस्य विद्यमानार्थत्वे न केषाञ्चिद् विवादः ।

स्वभावद्वयवादस्य प्रवर्तका आचार्यनागार्जुनपादाः सन्ति, ते हि तत्त्वमधिगन्तुं सत्यद्वय-ज्ञानमवार्यमामनन्ति । तेषां मते बुद्धानां धर्मदेशना लोकसंवृतिसत्यं परमार्थसत्यं चाश्रित्यैव प्रवर्तते । ये चानयोर्विभागं सम्यग् न जानन्ति, ते गभीरं तत्त्वं न विजानन्ति । उक्तं च तैः—

येऽनयोर्न विजानन्ति विभागं सत्ययोर्द्वयोः ।
ते तत्त्वं न विजानन्ति गम्भीरं बुद्धशासने ॥ (मा० का० वृ० ४९४)

तेषां मते तत्त्वं नाम—अस्तिनास्तिकोट्योर्मध्यं शान्तमरूप्यमनिदर्शनं निर्विकल्पमिति । तद्धि न स्वभावम्, न परभावम्, न भावम्, न चाभावं सहते । उक्तं हि—

स्वभावं परभावं च भावं चाभावमेव च ।
ये पश्यन्ति न पश्यन्ति ते तत्त्वं बुद्धशासने ॥ ( मा० का० २७०

अपि च, तेषां मते तत्त्वं शून्यता निःस्वभावता-निर्विकल्पकतादिशब्दैर्बुद्ध्यते। उक्तं हि तैः—

अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम्।
निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम्॥ (मा० का० ३७२)

एष च तत्त्वावबोधः सर्वदृष्टीनां सर्वग्रहाभिनिवेशानां च विनाशेन, तस्याप्रवृत्त्या च सिध्यति। एषैव शून्यता नाम। शून्यताऽपि न तत्त्वम्। सा हि केवलं व्यवहारसत्ये स्थित्वा प्रज्ञप्त्यर्थमुच्यते। उक्तम्—

शून्यमिति न वक्तव्यमशून्यमिति वा भवेत्।
उभयं नोभयं चेति प्रज्ञप्त्यर्थं तु कथ्यते॥ (मा० का० ४४४)

यतो ह्येतत् तत्त्वं व्यवहारमनाश्रित्याधिगन्तुं न शक्यम्, तस्माल्लोकसंकेतो माध्यमिकै-राश्रीयते। अयं लोकसंकेत एव लोकसंवृतिसत्यमिति गीयते। अस्याः संवृतेरिदम्प्रत्ययतामात्रेण सिद्धिरभ्युपगम्यते। उक्तं च चन्द्रकीर्तिना—"समन्ताद्वरणं संवृतिः, अज्ञानं हि समन्तात् सर्वपदार्थ-तत्त्वावच्छादनात् संवृतिरित्युच्यते, परस्परसंभवनं वा संवृतिरन्योन्यसमाश्रयणेन, अथवा संवृतिः संकेतः, लोकव्यवहार इत्यर्थः, स चाभिधानाभिधेयज्ञानज्ञेयादिलक्षणः" (मा० का० वृ० ४९२) इति।

यद्यपि लोकसंवृतिर्विपर्यासमात्रम्, तथापि मुमुक्षूणां कृते मोक्षावाहकत्वे न हेतुः, मृषा-स्वभावा पदार्था यथा क्लेशस्य तथा मोक्षस्यापि हेतवो भवन्ति। अत एव माध्यमिकैः परमार्थ-देशनायां व्यवहार आश्रीयते। परमार्थोऽपि निर्वाणाधिगमोपायत्वेन स्वीक्रियते। उक्तं च नागा-र्जुनपादैः—

व्यवहारमनाश्रित्य परमार्थो न देश्यते।
परमार्थमनागम्य निर्वाणं नाधिगम्यते॥ (मा० का० ४९४)

परमार्थो नाम न किमपि तथ्यम्, न च स्वभावः, न च परभावः, न भावः, न चाभावः; अपि त्वार्याणां तूष्णींभाव एव। एवं च यावद् भावाभावद्वयदर्शनं तथ्यातथ्यदर्शनं वा तावदेव संसारः। उक्तं च—

सर्वं तथ्यं न वा तथ्यं तथ्यं चातथ्यमेव च।
नैवातथ्यं नैव तथ्यमेतद् बुद्धानुशासनम्॥ (मा० का० ३६९)

## बाह्यसद्वस्तुवादिदर्शनेषु सत्यद्वयविमर्शः

अत एव बुद्धा लोकं परमार्थं न बोधयन्ति, अपि तु लोके या प्रसिद्धोपपत्तिस्तामेव परावबोधार्थं स्वीकृत्य तयैव परमार्थतत्त्वं बोधयन्ति। तदुक्तमार्यदेवपादैश्चतुःशतके—

नान्यया भाषया म्लेच्छः शक्यो ग्राहयितुं यथा।
न लौकिकं ऋते लोकः शक्यो ग्राहयितुं तथा॥ (चतु० का० २।१९)

अन्यदार्शनिकानामिव माध्यमिकानां मतेऽप्यस्ति प्रतीत्यसमुत्पादनाम्ना कार्यकारणव्यवहारः, किन्तु यथान्यैः कार्यकारणभाववशाद् वस्तुनः स्वभावसत्त्वं प्राप्यते, न तथा माध्यमिकैः। एते हि हेतुप्रत्ययान् प्राप्य प्रतीत्यसमुत्पन्नत्वाद् इहलोकं परलोकं सर्वं च स्वभावजातं निःस्वभावं वर्णयन्ति। तदुक्तम्—"यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे" (मा० का० पृ० ५०३) इति।

इदमेव माध्यमिकसिद्धान्तस्य हार्दं यद् यया कार्यकारणदृष्ट्या पृथग्जनैः संसारः सत्त्वेनाधिगम्यते, जातिजरामरणार्थं च आश्रीयते, तयैव आर्यैः संसारस्य निःस्वभावता आविष्क्रियते। अत एवैतेषां मते संसारनिर्वाणयोरपि न कश्चिद् भेदः पर्यवस्यति। एतेन च प्रतीत्यसमुत्पादेन—

अनिरोधमनुत्पादमनुच्छेदमशाश्वतम्।
अनेकार्थमनानार्थमनागममनिर्गमम्॥ (मा० का० १)

इति दिशा परमार्थतत्त्वं निःस्वभावं बोधयन्ति ते।

सत्यद्वयविषये इममेवार्थं बुद्धवचनत्वेन स्वीकृतानि महायानसूत्राण्यपि साक्षात्परम्परया वा समर्थयन्ते। अत्र संभवन्ति महायानसूत्राणि—समाधिराज(३७।३४,३२।९१)-नैरात्म्यपरिपृच्छा(१, ५)-उपालिपरिपृच्छा(मा० का० पृ० ५३, २३५ पृ०)-आर्यसत्यद्वयावतार-(मा० का० पृ० ३७४)-पितृपुत्रसमागमादीनि (शि० स० पृ० १३६)। यद्यप्येतानि सूत्राणि सामान्येन सकलमहायानसिद्धान्तोपन्यासमुखेन प्रवृत्तानि, तथापि विशेषेण शून्यवादमेवानुगच्छन्ति। यथोक्तं पितृपुत्रसमागमे—

"एतावच्चैतज्ज्ञेयम्—संवृतिः, परमार्थश्च। तच्च भगवता शून्यतः सुदृष्टं सुविदितं सुसाक्षात्कृतम्। तेन च सर्वज्ञ उच्यते। तत्र संवृतिर्लोकप्रचारस्तथागतेन दृष्टा। यः पुनः परमार्थः सोऽनभिलाप्यः, अनाज्ञेयोऽविज्ञेयोऽदेशितोऽप्रकाशितो यावदक्रियो यावन्न लाभः, नालाभः, न

सुखं दुःखम्, न यशो नायशः, न रूपं नारूपमित्यादि" इति। तत्सर्वं तत्त्वस्वरूपं युक्त्युपपत्तिभ्यामुपबृंहितं प्रपञ्चितञ्च मध्यमकदर्शने आचार्यनागार्जुनेन।

यद्यपि नागार्जुनस्य मध्यमकदर्शनमीशवीयशताब्दीतः पूर्वतनानां पश्चात्तनानां च सर्वास्तिवादिनाम्, एकाभिप्रायवशात् तदन्तःपतितानामन्येषां सांख्यानां वैशेषिकाणां च प्रतिपक्षभूतम्, तथापि तैरनतिक्रान्तमर्यादैः सत्यद्वयवादोऽङ्गीकृतः।

एतस्य महायानसम्मतसत्यद्वयवादस्य पालिनैकायिकपरवर्तिसिद्धान्तेष्वपि प्रभावो दृश्यते। "अत्थि पुग्गलो अत्तहिताय पटिपन्नोति" (बर्मी० सं० १३८-४०) इति वचनं व्याकुर्वता कथावत्थुग्रन्थस्यार्थकथायां बुद्धघोषाचार्येणोक्तम्—

"बुद्धानं पन द्वे कथा सम्मुतिकथा परमत्थकथा च। तत्थ सतो पुग्गलो देवो ब्रह्मा आदिका सम्मुतिकथा नाम। अनिच्चं दुःखं अनत्ता खन्धा धातुयो आयतनानि सतिपट्ठानासम्मप्पधाना'ति आदिका परमत्थकथा नाम" इति। अन्यत्राप्युक्तं दीर्घनिकायस्यार्थकथायाम्—

दुवे सच्चानि अक्खासि सम्बुद्धो वदतंवरो।
सम्मुति परमत्थं च ततियं नुपलब्भति॥

तत्थ—

संकेतवचनं सच्चं लोकसम्मुतिकारणं।
परमत्थवचनं सच्चं धम्मानं तथलक्खणं॥ इति।

इदमर्थजातं स्थविरवादिनो दीर्घनिकायस्थेन "इमा खो चित्तलोकसमञ्ञा लोकनिरुत्तियो लोकवोहारा लोकपञ्ञत्तियो" इति बुद्धवचनेन संवादयन्ति। एते च माध्यमिकवद् बुद्धस्य देशनां विनेयभेदेन भिन्नां कुर्वन्ति। उक्तं च दीपवंशे—

परियायदेसितं चापि अथो निप्परियायदेसितं।
नीतत्थं चेव नेय्यत्थं अजानित्वान भिक्खवो॥ इति।

एवं सत्यद्वयविषयकं माध्यमिकमतं स्वीकुर्वद्भिः स्थविरवादिभिः स्वाभिमतबाह्यान्तरवस्तुसद्भावस्य हानिर्न कृता, अपि त्वेतेन ते केवलं वस्तुनि वासनया समारोपितं स्वभावं निवर्तयन्ति, अनित्यदुःखानात्मत्वादिकं परमार्थं च प्रकटयन्ति। एवमेव सर्वास्तिवादिनां सत्यद्वयवादो यद्यपि वस्तुसत्त्वं नापलपति, किन्तु वस्तुनः सामान्यतोऽज्ञातमवारितं स्वरूपं व्याकरोति।

सर्वास्तिवादिनां वस्तुसद्भाववाद ईशातः पूर्वं शताब्दीत्रयमारभ्य प्रायः चतुःपञ्चशतवर्षान्तमासीत्। एतस्मिन्नवधौ दार्ष्टान्तिक-वैतुलिक-पौद्गलिकादयोऽन्येऽपि तर्काभिमानिनो

जाताः, येऽभिधर्मदीपानुरोधेन यथाकथञ्चिद् वस्तुमिथ्यात्ववादिन आसन्, अतः सर्वास्तिवादिभिस्ते लोकायतिक-वैनाशिक-नग्नाटपक्षे निक्षेप्तव्यत्वेन अनादृताः ( अभिधर्मदीपे ५३०० )। तदानीन्तनसंप्रदायेषु सर्वास्तिवादिन एव वस्तुसद्वादमनुसरन्तः साधुतां भजन्ते। तत्र चानेकविधेषु सर्वास्तित्ववादिषु भदन्तधर्मत्रातस्य भावान्यथिकवादस्त्रिषु कालेषु प्रवर्तमानस्य पदार्थस्य अनागतादिभावानामेवान्यथात्वमङ्गीकरोति, न त्वनुवर्तमानस्य द्रव्यस्य। अयमपि वादः सांख्यवत् परिणामवादित्वान्नान्यैरादृतः। लक्षणान्यथिकवादी भदन्तघोषकः पदार्थस्य लक्षणपरिणामं स्वीकरोति। एतेषां मतेऽतीतः पदार्थोऽतीतलक्षणेन युक्तः सन्नप्यनागतप्रत्युत्पन्नलक्षणाभ्यामप्यवियुक्तस्तिष्ठति। सर्वस्य सर्वलक्षणयोगसामर्थ्यादस्मिन् मतेऽध्वसाङ्कर्यं दोषः। अवस्थान्यथावादिभदन्तवसुमित्राणां मते धर्मोऽध्वसु प्रवर्तमानोऽन्यामन्यामवस्थां प्राप्य अन्यथाऽन्यथा भवति। एतैरर्थक्रियया अवस्थाभेदः स्वीक्रियते। चतुर्थस्तु अन्यथान्यथिको भदन्तबुद्धदेवः। स च ब्रूते—धर्मः अध्वसु वर्तमानः पूर्वापरमपेक्ष्य अन्यथाऽन्यथोच्यते इति। तेषां मते नैव भावस्य, न च द्रव्यस्य अन्यथात्वम्, अपि त्वपेक्षाबुद्ध्यैव पदार्थोऽन्यथाऽन्यथोच्यते। चतुर्णामेतेषां मध्येऽवस्थान्यथात्ववादिभदन्तवसुमित्राणां मतं वैभाषिकैः सम्यग् आद्रियते। अवस्थान्यथात्ववादे—"क्रियावान् संस्कारः वर्तमान उच्यते, त्यक्तक्रियोऽतीतः, अप्राप्तक्रियोऽनागतः" एवं कालत्रयस्य ऐकाधिकरण्यमेकाधिष्ठानव्यापारपरिच्छेद्यत्वं चोपपन्नं भवति। उक्तमभिधर्मदीपे—

कारित्रेणाध्वनामेष व्यवस्थामभिवाञ्छति।
तत्कुर्वन् वर्तमानोऽध्वा कृतेऽतीतोऽकृते परः॥

वैभाषिकैरतीतादीनां सत्त्वं जातिजरास्थित्यनित्यतादिभिर्धर्मैर्लक्ष्यते, अत एतेषां मते कालत्रयवर्तित्वं वस्तूनां सिद्ध्यति। एतेषां मतेऽभिधर्मकोशानुरोधेन संवृतिपरमार्थाभ्यां सत्यद्वैविध्यम् ( ६।४ ), अभिधर्मदीपानुरोधेन ( ५।३०४ ) च पृथिव्यादीनामुभयथात्वेन सत्यत्वम्, पितृपुत्रादिसम्बन्धानां सत्त्वापेक्षया सत्यत्वमिति, आभ्यामतिरिक्तसत्याभ्यां सत्यस्य चातुर्विध्यमप्यङ्गीक्रियते। संवृतिसत्यत्वे संवृतिर्नाम सम्बन्धः, तद्वशेन सत्यं संवृतिसत्यम्। यथा तन्तूनां परस्परसम्बन्धेन भिन्नभिन्नाकृतिसम्बन्धवशेन च सन्निवेशितास्तन्तवः पट इति व्यवह्रियन्ते, सम्बन्धाग्रहणे तु न पटव्यवहारः। सम्बन्धविनाशश्च बुद्ध्या वा बाह्यकारणेन वा संभवति। अत एव बुद्ध्या विविच्यमानेषु चित्तचैतसिकादिषु वेदनादिबुद्धिरपि विहन्यते। अतोऽन्यथा परमार्थसत्यम्। यतो हि वस्तुन आकारादिविनाशेऽपि यद् वस्तुबुद्धिर्भवति तत् परमार्थसत्। एवं सम्बन्धतो व्यवहारः संवृतिसत्येन, वस्तुतश्च व्यवहारः परमार्थसत्येन क्रियते। सम्बन्धश्च कालिको दैशिको

वा द्रव्यसन्। अत एवातीतानागतोऽपि घटोऽस्तित्वेन प्रतीयते। सम्बन्धश्च हेतुप्रत्ययकृतः। तस्मात् सर्वोऽपि संस्कृतः पदार्थः संवृत्या सत्यम्। अहेतुकं च निर्वाणादिकं परमार्थसत्यम्।

सौत्रान्तिकानां मतं वस्तुनः सत्यत्वमिथ्यात्ववादयोः संकरभूमिः। सौत्रान्तिकानां यद्यपि सर्वकालास्तितोक्तत्वात् सर्वास्तित्वादित्वम्, अथ च तेषां मतेऽपि वैभाषिकवत् संस्कृतपदार्थानां लक्षणम्—"उत्पादोऽपि प्रज्ञायते व्ययोऽपि प्रज्ञायते स्थितस्यान्यथात्वमपि प्रज्ञायते" इति बुद्ध-वचनानुरोधेनोत्पादस्थितिभङ्गान्येव, तथाप्येतेन लक्षणेन प्रवाहस्यैव प्रतीत्यसमुत्पन्नत्वात् संस्कृ-तत्वं द्योत्यते, न क्षणस्य। तेषां मते क्षणस्य दुरवगाहत्वादुत्पादव्ययादिधर्मास्तत्र नैव प्रज्ञातुं शक्याः। अप्रज्ञायमानाश्च धर्मा न कस्यचिल्लक्षणानि संभवन्ति। वस्तुतस्तु सौत्रान्तिकानां मते वस्तुनः स्थितिकालो नास्ति। हेतुप्रत्ययाभ्यामुत्पन्नः पदार्थः स्थितिं विनैवाहेतुको विनश्यति। उक्तं चाभिधर्मकोशस्फुटार्थायाम्—

क्षणिकस्य हि धर्मस्य स्थितिं विना भवेद् व्ययः।
स च व्येति स्वयं तस्माद् वृथा तत्परिकल्पना ॥ (२।४६) इति।

स्थितिक्षणं विनापि पदार्थक्षणस्य वस्तुत्वं हेतुप्रत्ययपूर्वकत्वात् सिध्यति। सत्यामपि स्थितावुत्तरोत्तरक्षणानुबन्धः प्रवाह एव स्थितिरुच्यते सौत्रान्तिकैः। एवं सत्यस्मिन् मते उत्पादनिरोध-लक्षणः पदार्थक्षणः क्षणानां च प्रवाहः सिध्यति। वैभाषिकानां मते जातिजरास्थित्यनित्यताधर्मा यथा द्रव्यसन्तो विभज्यन्ते, तथात्र न संविद्यन्ते; तथापि "प्रवाहस्य आदिरुत्पादः", "प्रवाहस्य निवृत्तिर्व्ययः" "सदृशक्षणैरनुवर्तमानः प्रवाह एव स्थितिः" इति रूपेणाप्युत्पादादयः पर्यवस्य-न्त्येव। एवमेकस्मिन्नेव क्षणे सहभूता उत्पादादयः स्वस्वकार्यं कुर्वन्ति। लक्षणानां च क्रियाकारित्वं वस्तुनः सत्त्वान्न भिद्यते। अतोऽर्थक्रियाकारित्वमेव सत्त्वं पर्यवस्यति। अर्थक्रियैव द्रव्यस्यासाधारणो धर्मः स्वलक्षणम्, साधारणश्च सामान्यलक्षणम्। अत एवैतेषां मतेऽर्थक्रियासमर्थमेव परमार्थ-सत्, अन्यत् संवृतिसत् स्वीक्रियते। उक्तं च प्रमाणवार्त्तिके सौत्रान्तिकसिद्धान्तानुरोधेन—

अर्थक्रियासमर्थं यत् तदत्र परमार्थसत्।
अन्यत् संवृतिसत् प्रोक्तं ते स्वसामान्यलक्षणे ॥ (प्र० वा० ३।२)

एवं सौत्रान्तिकेषु निर्वाणस्य, अन्येषां चासंस्कृतपदार्थानां न पारमार्थिकत्वं सिद्ध्यति, तस्यार्थक्रियाकारित्वाभावात्। अर्थक्रियाकारित्वं च द्रव्यसतां धर्माणामेव, अतो निर्वाणस्य द्रव्य-सत्त्वं न स्वीक्रियते। तस्मादेतेषां मते निर्वाणं संवृतिसदेव। परमार्थसत्यं च शब्दाविषयोऽसदृशं वस्तुनोऽसाधारणो धर्मः स्वलक्षणम्।

इत्थं सौत्रान्तिकेष्वतीतानागतयोर्द्रव्यसत्त्वाभावः, एकस्मिन्नेव वा काले त्रयाणामपि कालानां सत्त्वम्, वस्तुनः क्षणमात्रस्वभावत्वम्, अप्रतीत्यसमुत्पन्नानां निर्वाणादीनां निःस्वभावत्वमित्यादयो वादावैभाषिकादत्यन्तं विरुद्धाः पर्यवस्यन्ति। एवं बौद्धेषु सर्वेषां वस्तूनां सर्वदाऽस्तित्वं स्वीकुर्वन्तः सर्वास्तिवादिनः स्वयमेव स्वसम्मतानां केषाञ्चिद् वस्तूनां दैशिके कालिके वा विस्तारे तथाविधं तनुत्वमापादितवन्तः, येन पश्चाद्वर्तिभिर्विज्ञानवादिभिः स्वतर्ककर्कशया धिया यदाऽर्थ-स्वभावः परीक्षितस्तदाऽर्थाः स्वयं विशीर्णा जाताः। एतत्सर्वमभिप्रेत्योक्तं धर्मकीर्तिना—

"यथा यथाऽर्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा" (२।३९७) इति, अपि च—"यदीदं स्वयमर्थानां रोचते तत्र के वयम्" (२।२१०) इति।

तदेतत्सर्वं वस्तुस्वभावमभिलक्ष्यैव यद्यपि काणादैर्गौतमीयैश्च वस्तुनः स्थिरत्वम्, कालत्रयवर्तित्वादि सूत्र-भाष्य-टीकोपटीकादिभ्यः सम्यग् आरक्षितम्, तथापि तैर्बुद्धि-सुख-दुःखे-च्छाद्वेषप्रयत्नाः शब्दाश्चैते द्वितीयक्षणावस्थायिन इति स्वीक्रियत एव। तथा च नैयायिकसम्मत-पदार्थेषु क्षणिकत्वाक्षणिकत्वाभ्यामर्धजरतीयत्वमप्यापतति। अपि च न्यायमतेऽर्थसद्भावव्यञ्जयस्य वर्तमानकालस्यास्ति प्राधान्यम्। अतीतानागताः सर्वा अपि क्रिया वर्तमानेष्वेवापयान्ति, उपयन्ति च; सर्ववर्तमानव्यापिन्या अस्तिक्रियायाः सर्वदा अतीतानागतयोः सत्त्वात्। अत एव "वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः" (२।१।४२) इति सूत्रं भाष्यं च व्याख्यातवद्भि-रुद्योतकरवाचस्पत्यादिभिरर्थक्रियाव्यञ्जयो वर्तमानक्षण एव सर्वाधारः स्वीकृतः। अत एवातीताना-गतविषयकमपि योगिप्रत्यक्षं नासमञ्जसमित्युपपादयता वाचस्पतिना "न अतीतानागतविषयतया प्रत्यक्षानुपपत्तिं ब्रूमः, अपि त्वतीतानागताधारतया" (न्या० वा० ता० ५२४) इति सिद्धान्ति-तम्। अत एव च सौत्रान्तिकवद् न्यायभाष्यकारेणापि क्रियासन्तानं स्वीकृत्य "चिकीर्षितोऽनागतः कालः", "सन्तानोपरमोऽतीतः कालः", "आरब्धक्रियासन्तानो वर्तमानः कालः" इति यथाकथ-ञ्चिद् वर्तमानार्थत्वेनैव कालो व्यज्यत इत्युपपादितम्।

सांख्ययोगमते भूत्वाभाव एव सत्त्वम्। यद्यपि तैरतीतानागतयोः स्वरूपसत्त्वं स्वीक्रियते, तथापि स्वव्यापारोपारूढस्य वर्तमानस्यैव स्वरूपसत्त्वम्, अतीतानागतौ व्यङ्ग्या एवेति। एतेषां मते कालप्रवाहो बुद्धिसमाहारः, स च वस्तुशून्य एव। समाहारे वर्तमान एक एव क्षणो वस्तुतोऽस्ति, न पूर्वोत्तरक्षणाः। उक्तं च 'क्षणतत्क्रमयोः संयमात् विवेकजं ज्ञानम्' इति पातञ्जलसूत्र-

( ३।५३ )व्यासभाष्ये—"तस्माद् वर्तमान एवैकः क्षणो न पूर्वोत्तरक्षणाः सन्तीति। तस्मान्नास्ति तत्समाहारः। ये तु भूतभाविनः क्षणास्ते परिणामान्विता व्याख्येयाः। तेनैकेन क्षणेन कृत्स्नो लोकः परिणाममनुभवति। तत्क्षणोपारूढा खल्वमी सर्वे धर्माः" इति। अस्मिन् मते कालिको विस्तारो यथा वस्तुसन्न स्वीक्रियते, तथैव तेषां दैशिको विस्तारोऽपि न स्वीकर्तव्यः। अस्ति चास्यापि सङ्केतः षष्टितन्त्रस्य वार्षगण्यानुशासने—

गुणानां परमं रूपं न दृष्टिपथमृच्छति।
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम्॥ ( योगभा० ४।१३ ) इति।

इत्थं सतः परिणामवादिनोरपि सांख्ययोगयोर्वस्तुसत्तावबोधे बौद्धादिवत् सत्यद्वयवादित्वं संभवति।

पदार्थानां वस्तुसत्त्वं स्वीकुर्वन्तो जैना अप्येककालमेव परमार्थतस्त्रितयीमवस्थां बिभ्राणं वस्तुसत् ( पञ्चास्तिकाये, पृ० १९ ) आमनन्ति। उक्तं च पञ्चास्तिकाये—

सत्ता सव्वपयत्था सविस्सरूपा अणंतपज्जाया।
( सत्ता सर्वपदस्था सविश्वरूपा अनन्तपर्याया। )
भंगुप्पादधुवत्था सप्पडिवक्खा हवादि एक्का॥ ८॥ इति।
( भङ्गोत्पादध्रौव्यात्मिका सप्रतिपक्षा भवत्येका॥ )

जैनानां मते सत्यपि परमार्थतो वस्तुसत्त्वे स्पष्टमेव व्यवहारनिश्चयनयाभ्यां सत्यद्वयमङ्गीक्रियते। अपि च, समयसारानुरोधेन व्यवहारनिश्चयनययोः पार्थक्येन ज्ञानमवार्यमिति मत्वा समयसारे एका प्राचीना गाथा उद्ध्रियते—

जइ जिणमयं पजह तो मा ववहार णिच्च मुयह।
एक्केण विणा छिज्जई तित्थं अण्णेण उण तच्चं॥
( आत्म० गा० १४ )

परनिरपेक्षो नयो नाम निश्चयनयः। परापेक्षश्च व्यवहारनयः। व्यवहारनयो यद्यपि वस्तुसन्, तथाप्यभूतार्थः। एवं मिथ्यात्वमस्वीकुर्वद्भिर्जैनैरपि सत्यद्वयं स्वीक्रियते।

## बाह्यसद्वस्तुवादिदर्शनेषु सत्यद्वयविमर्शः

एतावता विमर्शेन तथ्यमिदं फलति यद् आचार्यनागार्जुनेन बाह्यसद्वस्तुवादस्य प्रतिपक्षीभूतो यः सत्यद्वयवाद आविष्कृतः, स नागार्जुनस्य शून्यतागर्भं सर्वनास्तितावादमसहमानैरपि वस्तुवादिदार्शनिकैरिच्छयाऽनिच्छया वा साक्षात् परम्परया वा स्वस्वप्रस्थानानुरोधेन स्वीकृतः ।

वस्तुतस्तु सर्वैरेव बाह्यसद्बाह्यासद्वादिभिर्भारतीयदार्शनिकैर्मोक्षं परमपुरुषार्थमामनद्भिर्मोक्षकाले तथाविधं सत्त्वमसत्त्वं वा तत्त्वं साक्षात्क्रियत एव, यद् बलाद् अविद्या तत्कृतानि चावरणानि हीयन्ते । इदमेवात्र मोक्षस्य परमत्वं यत् तस्योपादेयत्वं नाम । अतस्तस्य परमसत्त्वम्, अविद्यादीनाञ्च हेयत्वेनापरसत्त्वं सुतरां सम्पद्यते । मन्ये, वस्तुवादिदार्शनिकानामियमधिगतिर्मिथ्यात्वपर्यवसायिसत्यद्वयावगाहनकुशलानामद्वैतवादिनां बौद्धानामबौद्धानाञ्च दर्शनमाहात्म्यम् ।

अत एव लेशतोऽपि मिथ्यात्वमसहमानैः सर्वथा सर्वदा च अमितस्वतन्त्रसत्तावादिभिरागमिकैरपि हेयत्वोपादेयत्वाभ्यां सत्यद्वयं समालिङ्गितम् । तेषां मते महासामान्यं परमशिवरूपम्, तद्धि भेदगर्भं भेदानुगतं च तत्त्वम् । अस्मिंश्च दर्शने द्विविधः कार्यकारणभावो दृश्यते । उक्तं चाभिनवगुप्तपादैस्तन्त्रसारे (पृ० ६९-७०)—"स च द्विविधः कार्यकारणभावः पारमार्थिकः सृष्टश्च । पारमार्थिकस्तत्र कर्तृभावस्य स्वतन्त्रस्य भगवत एवंविधेन शिवादिधरान्तेन वपुषा स्वरूपभिन्नेन स्वरूपविश्रान्तेन च प्रथनम् । कल्पितस्तु कार्यकारणभावः परमेशेच्छया नियतिप्राणया निर्मित इति ।

तत्र विष्णुतः प्रभृति शिवान्तं मिथ्यादर्शनेन जीवाः परमशिवतया पश्यन्ति । तन्त्रसारानुरोधेन "तच्च मिथ्यादर्शनमवश्यत्याज्यमनुत्तरयोगिभिरिति" ( पृ० ३१ ) । अस्ति च परमशिवस्य क्रियाशक्तेर्ज्ञातृत्वे मोक्षः, अज्ञातृत्वे च बन्धः । उक्तं च स्पन्दकारिकायाम्—

सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी ।
बन्धयित्री स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ॥ (तत्र १३ का०) इति ।

वैष्णवदर्शनेष्वपि हेयोपादेयत्वाभ्यामेव जीवेन प्राकृतगुणास्त्यज्यन्ते दिव्यगुणाश्चाधीयन्ते ।

एवमस्मिन् उपनिबन्धे सत्यद्वयग्राहित्वेन ते वादाः संक्षिप्य आलोचिताः, ये मिथ्यात्वपरिपन्थिनः सन्ति । एतेषु दर्शनेषु नागार्जुनस्य प्रभावमुपदर्शयितुं माध्यमिकमतमपि स्तोकमुपदर्शितम् । अन्यत्र सत्यद्वयवादस्याद्वैतवादिनी शून्य-ब्रह्म-विज्ञानवर्तिनी लीलभूमिः सविलासं परिष्करिष्यते ॥

**०**

# सत्तास्वरूपविमर्शः

श्रीबदरीनाथशुक्लः, वा० सं० वि० वि० न्यायवैशेषिकविभागाध्यक्षः ।

सत्ता दर्शनशास्त्राणामध्येतव्यविषयेषु मुख्यो विषयः । अत एव निखिलेषु दर्शनेष्वेतद्विषये विपुला विचाराः प्राप्यन्ते । नास्तिकशब्देन व्यपदिश्यमानेष्ववैदिकदर्शनेषु चार्वाक-वैभाषिक-सौत्रान्तिक-योगाचार-माध्यमिकाख्यचतुर्विधबौद्ध-जैनेत्याख्यानि षड् दर्शनानि परिगण्यन्ते । आस्तिकशब्देन व्यवह्रियमाणेषु न्यायवैशेषिकसांख्ययोगमीमांसावेदान्तेत्याख्यानि षड् दर्शनानि मन्यन्ते । एतेषु द्वादशस्वपि दर्शनेषु सत्ता सुचारु पर्यालोचिता विद्यते । तत्र चार्वाकदर्शने प्रत्यक्षमेवैकं प्रमाणं स्वीक्रियते । तेन ग्राह्यं वस्त्वेव सच्छब्देनाभिधीयते । तथा च तन्नये प्रत्यक्षपरिच्छेद्यत्वमेव सत्तास्वरूपं पर्यवस्यति । तदभावादेव स्वर्गनरकपुण्यपापेश्वरादयस्तन्मतेऽसत्कोटौ प्रविष्टाः ।

बौद्धेषु वैभाषिकसौत्रान्तिकौ सर्वास्तित्ववादिनौ । तयोर्मते ग्राह्यग्राहकत्वाभ्यां द्विविधं समग्रं जगत् सत् । अन्तरं केवलमेतावदेव यद् वैभाषिकनये ग्राहकं ज्ञानं ग्राह्यो विषय एतदुभयं प्रत्यक्षम् । सौत्रान्तिकनये च ज्ञानमेव प्रत्यक्षं विषयस्तु ज्ञानानुमेयः । योगाचारा ज्ञानमात्रास्तित्ववादिनः । तन्मते केवलं ज्ञानमेव सत् । तद्भिन्नतयाऽभिमन्यमानः सर्वः पदार्थो ज्ञानव्यतिरेकेणासन् । माध्यमिकाः सर्वशून्यत्ववादिनः । तन्मते किमपि वस्तु न वस्तुसत् । शून्यव्यतिरिक्ततया प्रतीयमानं कृत्स्नमेव काल्पनिकम् । पारमार्थिकं केवलं शून्यमेव । तच्च सत्, असत्, सदसत्, नो सदसदिति चतुष्कोटिविनिर्मुक्तं विलक्षणं तत्त्वम् । तत्रैवान्यदखिलं संवृत्त्याद्यपरपर्याययाऽनादिवासनया समारोपितम् । सर्वं च तदपारमार्थिकं सत् । इत्थं चतुर्विधेऽपि बौद्धसम्प्रदाये यथाकथञ्चित् सत्ताऽभ्युपगम्यते । सा च सर्वैस्तैरर्थक्रियाकारित्वरूपा वर्ण्यते । अर्थो नाम कार्यम्, क्रिया नामोत्पत्तिः, कारित्वं नामोपधायकत्वम् । तथा चार्थक्रियाकारित्वं कार्योत्पादकत्वरूपं प्रतिफलति । तदेवं कार्योत्पादकत्वमेव सत्त्वम् । तच्च स्थिरे न सम्भवत्यतः समग्रं कार्योत्पादकं क्षणिकम् । तत्र सर्वास्तित्ववादिनोर्वैभाषिकसौत्रान्तिकयोर्नयेऽर्थक्रियाकारित्वलक्षणं सत्त्वं पारमार्थिकमेवैकविधम् । विज्ञानमात्रास्तित्ववादिनो योगाचारस्य मते निरुक्तं सत्त्वं द्विविधं सांवृतं काल्पनिकम्, पारमार्थिकं च । आद्यं विषयस्य द्वितीयं विज्ञानस्य । सर्वशून्यतावादिनो माध्यमिकस्य मते कथितलक्षणं सत्त्वं सांवृतमात्रमेकविधमेव शून्यव्यतिरेकेण भासमानेषु सर्वविषयेषु विद्यते । पारमार्थिकं सत्त्वं तन्नये नास्ति, पारमार्थिकत्वेनाभ्युपगतस्य शून्यस्य सदादिचतुष्कोटिराहित्येन स्वीकारात् ।

जैनदर्शने स्वीकृतं सत्त्वं पूर्वोक्ततो विलक्षणम् । तन्नये समानकालिकं समानाधिकरणं चोत्पादव्ययध्रौव्यमेव सत्त्वम् । तदेवं प्रतिक्षणं कथञ्चिदुत्पद्यमानं कथञ्चित्क्षीयमाणं कथञ्चिच्चैकरसमवतिष्ठमानं वस्त्वेव सत् । तन्मते प्रत्येकं पदार्थः द्रव्यपर्यायात्मकः, पदार्थस्य स्थिरोंऽशो द्रव्यमागमापायी चांशः पर्यायः । तत्र द्रव्यांशः सदैवैकरसतया स्थिरः पर्यायांशश्च प्रतिपलं परिवर्तनशीलः । प्रतिपलं पूर्वः पर्यायोऽपैति नूतनश्चोपैति । इत्थं विनश्यदुद्भवद्भिरनन्तैः पर्यायैरुपश्लिष्टं द्रव्यमेव जैनसम्मतः पदार्थः । यथावर्णितं तदीयमुत्पादव्ययध्रौव्यमेव तस्य सत्ता । अनया चालिङ्गितः समग्रः पदार्थसार्थः ।

तदेवं संक्षेपेण परिचितिगोचरत्वं गमितं कृत्स्नं सत्तास्वरूपं पर्यालोच्यते चेन्न किमपि तद् युक्तियुक्तं प्रतिभाति प्रतिभावताम् । तद् यथा चार्वाकप्रतिपादितं प्रत्यक्षैकपरिच्छेद्यत्वमेव सत्त्वं यद्युपगम्येत, तदाऽनुमानाद्यधीनो निखिलो लोकव्यवहारः पर्याकुलो भवेत्, अखिला परलोककथा कदर्थिता स्यात्, सम्पूर्णः पुण्यपापविभागो विलुप्येत, पूर्णः पुनर्जन्मवादो विशीर्येत, परिणामानां प्रागप्रत्यक्षतयाऽसत्त्वं गतत्वेन तदर्थं कोऽपि प्रारम्भो न प्रवर्तेत, प्रत्यक्षस्यातितरां सीमिततया तद्ग्राह्यमात्रं सत्स्वीकुर्वन्मानवः कूपमण्डूकीभूय नाधिकं किमपि कर्तुं प्रभवेदात्मनः परिच्छिन्नं लघीयांसं च परिधिं न कदाप्युल्लङ्घयेत् । फलतया प्रत्यहं प्रवर्धमानो विश्वस्य विकासो न कथमप्युपपद्येत । अतः प्रत्यक्षपरिच्छेद्यत्वमेव सत्तेत्यभ्युपगमः पामराणामेव शोभाधायको न पुनर्विवेकिनां विदुषाम् ।

बौद्धैरुपवर्णितमर्थक्रियाकारित्वलक्षणं सत्तास्वरूपं विमृश्यते चेत्तदपि प्रेक्षावतामन्तःकरणप्रीणनाय न क्षमम् । तथा ह्यर्थक्रियाकारित्वस्य सत्तात्मकत्वे सत्त्वेनाभ्युपजिगमिषितस्य प्रत्येकं पदार्थस्य प्रतिक्षणं किमपि किमप्युत्पाद्यं नूनं स्वीकार्यम् । स्वीकारे च कस्यापि वस्तुनः प्रवाहः कदाप्युपरतो न स्यात्, यतः प्रवाहान्तर्गतस्य चरमस्योत्पाद्यानुपगमे तस्य सत्ता न स्यात् । तत्सत्त्वलोपे च तत्पूर्ववर्तिनोऽर्थक्रियाकारित्वस्योपपादयितुमशक्यतया क्रमेण मूलपर्यन्तमसत्त्वमापद्येतेति सर्वलोपो दुर्निवारो भवेत् । प्रवाहे कस्याप्यन्तिमत्वानभ्युपगमे प्रवाहोऽनन्ततां व्रजन्ननवस्थामापादयेत् । किञ्चेदमप्यत्र विचारणीयं यदर्थक्रियाकारित्वं सत्तानिरपेक्षं सत्तासापेक्षं वा । आद्येऽसतोऽपि तत्सम्भवेनार्थक्रियाकारिणः क्षणिकसत्ताऽपि न सिध्येत् । द्वितीये च तद्व्यतिरेकेण सत्ताया अवश्यवक्तव्यतया तत एव सत्प्रतीतिव्यपदेशयोरुपपत्तावर्थक्रियाकारित्वस्य सत्तात्मकत्वं नोपपद्येत ।

## सत्तास्वरूपविमर्शः

जैनोक्तं सत्तास्वरूपमपि परीक्ष्यमाणं नोपपद्यते। तथा हि—पदार्थस्य द्रव्यपर्यायरूपता यदि सिध्येत्तदैव तस्य तदुक्तमुत्पादव्ययध्रौव्यलक्षणं सत्त्वं सम्भवेत्। सैव च युक्तियुक्ता न भवति, यतो हि पदार्थस्य द्रव्यांशः पर्यायांशश्च परस्परं भिन्नो मन्तव्योऽभिन्नो वा। नाद्यः, द्रव्यांशस्योत्पादव्यययोः पर्यायांशस्य च ध्रौव्यस्यानुपपत्तेः। न द्वितीयः, द्वयोरंशयोरेकतया द्रव्यांशो ध्रुवः पर्यायांशश्चोत्पादव्ययशील इति विवेकानुपपत्तेः। यद्येवमुच्येत यद् द्वितीयपक्षोक्तो दोषो द्वयोरंशयोरत्यन्ताभेद एवापद्यते न पुनः कथञ्चिदभेदे, अभ्युपगम्यते च कथञ्चिदभेद एवेति नायं दोष इति। तदपि न युक्तम्, यतः पदार्थे कथञ्चिद् ध्रुवतायाः कथञ्चिच्चोत्पादव्ययशीलताया उपपत्तये द्रव्यपर्यायात्मकमंशद्वयं स्वीकृतम्, पुनस्तयोरंशयोरपि कथञ्चिद् भेदाभेदयोरुपपादनार्थमंशान्तरस्य स्वीकार्यतयांऽशकल्पनानवस्थापत्तिः। इदमप्यत्रावधेयं यदुत्पद्यमानस्य ध्रुवादभेदो दुर्घटः। यतो ध्रौव्यं नाम सर्वकालसम्बन्धः, उत्पद्यमानता चाद्यक्षणेन संसृज्यमानता। तद्व्यक्तेराद्यक्षणत्वं च तद्व्यक्तिमत्कालध्वंसानधिकरणकालत्वम्। ध्रुवव्यक्तिमत्कालध्वंसानधिकरणकालश्चाप्रसिद्ध उत्तरोत्तरतद्व्यक्तिमत्कालस्य पूर्वपूर्वतद्व्यक्तिमत्कालध्वंसाधिकरणत्वनैयत्यात्। अत उत्पादव्ययध्रौव्यस्य सत्तात्मकत्वं नितरां दुर्वचम्।

अथेदानीं वैदिकदर्शनेषूपवर्णितं सत्तास्वरूपमधिकृत्य पर्यालोचनं प्रस्तूयते। तत्र न्यायवैशेषिकनये सत्ता नाम सर्वजातिव्यापिकैकाऽतिरिक्ता जातिः। सा च समवायेन द्रव्यगुणकर्मसु सामानाधिकरण्येन च सामान्यविशेषसमवायेष्ववतिष्ठते। अत एव द्रव्यादयः षट्पदार्थाः सन्तो भावा उच्यन्ते, अभावस्तु कथितसम्बन्धयोः कतरेणापि सत्ताया अनाधारतयाऽसन्नुच्यते।

सांख्ययोगनयेऽविनाशित्वमेव सत्ता। यन्न नश्यति तत्सत्। प्रकृतिः पुरुषश्चेति तन्मते पदार्थद्वयम्, तत्र पुरुषोऽसङ्गः कूटस्थनित्यश्च सर्वदैवानश्वरतया सन्। प्रकृतिस्तदीया सकला सन्ततिश्च परिणामिनित्यतया न कदापि नश्यति। प्रकृतिः प्राकृतः पदार्थो वा पूर्वावस्थां जहाति नूतनावस्थां च गृह्णाति, पूर्वावस्थात्यागोऽपि न तन्नाशः किन्तु तदव्यक्तीभावः, नूतनावस्थाग्रहणमपि नापूर्वायास्तस्या उदयः, अपि तु प्रथमत एवाव्यक्तभावेनावस्थितायास्तस्या व्यक्तीभावः। अतः प्रकृतिः प्राकृतः पदार्थश्च कश्चित्तन्मते न नश्यति नापि जायते, अविनाशितयैव च पुंस इव तयोरपि सत्त्वम्।

मीमांसानये भट्टगुरुमिश्राणां प्रस्थानत्रय एव विद्यमानता प्रमाणयोग्यतैव वा सत्ता। यद् यदा विद्यते प्रमाणतो ग्रहणार्हं वा तत्तदा सत्, यदा न विद्यते प्रमाणग्रहणानर्हं वा तदाऽसत्। यच्च सर्वदा विद्यते तत् सर्वदा सत्, यत्कदापि न विद्यते तत्सर्वदाऽसत्। इत्थं कालसम्बन्ध-

लक्षणा विद्यमानता स्वरूपसत्तालक्षणा प्रमाणयोग्यतैव वा तदनुमता सत्ता, तयैव जीवजडात्मकं सर्वं जगन्मीमांसकमते सत् ।

वेदान्तस्तु शाङ्कररामानुजमाध्वनिम्बार्कगौडीयवल्लभभेदात् षड्विधः । तत्र शाङ्करातिरिक्तेषु सर्ववेदान्तेषु भगवान् जगच्चोभयमेव सत् । सत्ता च भगवदनुग्रहः, स चास्तित्वगोचरस्तत्संकल्पः । भगवान् जगच्च तादृशसंकल्पादेव सत्तां बिभृतः । अथवा भगवतः सत्ता तत्स्वरूपात्मिका निसर्गसिद्धा, जगतश्च सा तदनुगृहीतत्वरूपा । तदनुगृहीतत्वं च तत्तत्सम्प्रदायानुसारेण विविधं प्रामाणिकत्वाद्यनेकशब्दैस्तत्र तत्रोपवर्णितम् । शाङ्करवेदान्ते सत्ता त्रिविधा—पारमार्थिकी, व्यावहारिकी, प्रातिभासिकी च । आद्या त्रिकालाबाध्यत्वरूपा ब्रह्मलक्षणा यतो ब्रह्म पारमार्थिकम् । द्वितीया व्यवहारकालमात्राबाध्यत्वरूपा व्यावहारिकविश्वनिष्ठा । तृतीया प्रतिभासकालमात्राबाध्यत्वरूपा शुक्तिरूप्यादिगता । सूक्ष्मदृशा विचारे तु ब्रह्मस्वरूपैकैव सत्ता । ब्रह्म हि स्वरूपतः सत्, अन्यत्सर्वं तदधिष्ठानककल्पनाविषयतया समारोपितं सत् । वेदान्तेषु तत्र तत्र प्रतिपादितं सर्वमिदं सत्तास्वरूपं तर्कनिकषे कष्यमाणं निष्कल्मषं न सिध्यति । तथा हि सत्ता यदि भगवद्रूपा, तदनुग्रहरूपा, त्रिकालाबाध्यत्वादिरूपा ब्रह्मरूपा वा स्यात्तदा जगतः पदार्थेषु चर्मचक्षुषा न दृश्येत, सर्वस्योक्तस्य स्वरूपेण प्रत्यक्षानर्हपदार्थघटितत्वेन वा चक्षुषोऽयोग्यत्वात् । दृश्यते च सत्ता जगति सर्वस्मिन् दृश्यजाते पामरान्तैर्जनैश्चर्मचक्षुषेति तस्यास्तथात्वपरिकल्पनमेव न्याय्यं यथात्वे तदीया प्रत्यक्षविषयता निष्प्रत्यूहं सिध्येत् ।

सांख्ययोगाभिमतमविनाशित्वं मीमांसासम्मतं विद्यमानत्वं प्रमाणयोग्यत्वं वापि सत्तापदं नारोढुमर्हति, द्वयोस्तयोर्भेदेऽत्यन्ताभावे च सत्त्वेन तयोरपि सद्रूपतापत्तेः प्रत्यक्षायोग्यकालादिघटितत्वेनोक्तरूपाणां सत्तास्वरूपाणां प्रत्यक्षत्वानुपपत्तेश्च । किञ्चाविनाशित्वं ध्वंसप्रतियोगित्वाभावः, ध्वंसत्वं च जन्याभावत्वम्, अभावत्वं च भावभिन्नत्वम्, भावत्वं च सत्तावत्त्वमिति तद्घटकस्य सत्तान्तरस्य वक्तव्यत्वापत्तिः । एवं जन्यत्वमुत्पाद्यत्वम् । उत्पत्तिश्चाद्यक्षणसम्बन्धः, क्षणश्चातीन्द्रिय इति तद्घटितत्वेनाविनाशित्वलक्षणायाः सत्तायाः प्रत्यक्षानुपपत्तिः । यदि च ध्वंसत्वादीनामखण्डोपाधित्वं स्वीकृत्य दूषणोद्धारश्चिकीर्ष्येत तदाऽखण्डोपाधिरूपायाः सत्तायाः स्वीकृतेरपि निर्बाधतया निरुक्तस्य सत्तात्वोपगतेर्निर्बीजत्वापत्तिः ।

तदित्थमास्तिकदर्शनोक्तसत्तास्वरूपालोचनेन न्यायवैशेषिकस्वीकृतायाः सत्ताया एव युक्तिसंगतत्वं प्रतिभाति । तत्सिद्धिश्च ध्वंसकारणतावच्छेदकतयाऽभ्युपगम्यते । तथा हि ध्वंसो द्रव्यस्य, गुणस्य, कर्मण एव च भवति; न तु सामान्यादेः । अतः प्रतियोगिता-

सम्बन्धेन ध्वंसं प्रति तादात्म्येन द्रव्यगुणकर्मणां केनचिदीदृशेन रूपेण कारणत्वं वाच्यं यद्रूपं सामान्यादिभ्यो व्यावृत्तं द्रव्यगुणकर्मसु चानुगतं भवेत्। ईदृशं यद्रूपं सैव सत्ता, बाधकाभावाच्च तस्या जातित्वम्। न च ध्वंसस्य प्रतियोगितासम्बन्धेन प्रागभावेऽप्युत्पत्त्या तत्कारणतावच्छेदकतया सिध्यतो धर्मस्य प्रागभाववृत्तिताया आवश्यकतया तस्य द्रव्यादित्रिकमात्रवृत्तित्वं जातित्वं चानुपपन्नमिति वाच्यम्, प्रागभावस्य दीधितिकारादिनैयायिकधुरन्धरैर्निराकरणात्। तदभ्युपगमे तु प्रतियोगिताविशिष्टान्यप्रतियोगितायाः कार्यतावच्छेदकसम्बन्धत्वमभ्युपेयम्, वैशिष्ट्यं च स्वतादात्म्यस्वाश्रयप्रतियोगिनिरूपितत्वैतदुभयसम्बन्धेन, घटप्रागभावादिनिष्ठा तद्ध्वंसप्रतियोगिता च स्वात्मकप्रतियोगिताविशिष्टा, स्वतादात्म्यस्य घटप्रागभावादिध्वंसस्य घटादिरूपतया स्वाश्रयप्रागभावप्रतियोगिघटादिनिरूपितत्वस्य च तत्प्रतियोगितायां सत्त्वादिति प्रतियोगिताविशिष्टान्यप्रतियोगितया प्रागभावे ध्वंसस्यानुत्पत्त्या प्रागभावव्यावृत्तधर्मस्य कारणतावच्छेदकत्वे दोषाभावात्। अत एव घटध्वंसस्य घटध्वंसात्यन्ताभावाभावस्वरूपतया तादृशाभावनिरूपितस्वप्रतियोगितया घटध्वंसात्यन्ताभावे सत्त्वेन तत्र च द्रव्यादित्रिकवृत्तिसत्ताजातेरसत्त्वेऽपि न तेन रूपेण ध्वंसकारणत्वे व्यभिचारः, घटध्वंसात्यन्ताभावनिष्ठप्रतियोगितायाः स्वाश्रयप्रतियोगिघटध्वंसनिरूपितत्वेन कथितोभयसम्बन्धेन स्वात्मकप्रतियोगिताविशिष्टतया कार्यतावच्छेदकसम्बन्धत्वाभावात्।

न च तथापि नित्यद्रव्यादिसाधारण्येन सत्तायाः सिद्धिर्न सम्भवति, नित्यद्रव्यादौ प्रतियोगितासम्बन्धेन ध्वंसस्यानुत्पत्त्या तज्जनकतावच्छेदकत्वेन सिध्यतो धर्मस्य तत्साधारण्ये मानाभावात्, तत्साधारणत्वे तत्रापि प्रतियोगितया ध्वंसोत्पत्तेऽपरिहार्यत्वाच्चेति वाच्यम्, निरुक्तयुक्त्या सिध्यन्त्याः सत्ताया नित्यद्रव्यादिव्यावृत्तत्वे द्रव्यत्वादिसांकर्येण जातित्वानुपपत्त्या जातित्वरक्षायै तत्साधारण्यस्यावश्यकत्वात्। ध्वंसस्वरूपयोग्यतायास्तत्र स्वीकारेऽपि ध्वंसस्य प्रतियोगिमात्रानधीनत्वेन प्रतियोगितया ध्वंसोत्पत्तावपेक्षिताया दिक्कृतया कालकृतया वा विशेषणतया ध्वंसोत्पादकसामग्र्या अभावेन तत्र ध्वंसोत्पत्त्यापत्तेरसम्भवात्, उक्तकार्यकारणभावस्य च पटादिसमवेतरूपादिनाशिकायाः पटादिनाशघटितसामग्र्याः सन्निधाने पटादिसमवेतरूपादाविव पटादिसमवेतसामान्यादावपि प्रतियोगितया ध्वंसोत्पत्तेः परिहारार्थमावश्यकत्वात्। अथवा सत्तायाः कालिकसमवायाभ्यां कारणतावच्छेदकत्वं मन्तव्यम्, ताभ्यां च तस्या न नित्यद्रव्यादिनिष्ठत्वं महाकाले मानाभावादिति नोक्तदोषः। तत्सत्त्वे तु कालिकसमवायस्वाश्रयमहाकालान्यत्वसम्बन्धैः सत्तायाः कारणतावच्छेदकत्वस्य स्वीकरणीयतया न कश्चिद्दोषः।

अथ तत्तद्व्यक्तिध्वंसस्य तत्तदन्यव्यक्तिषु प्रतियोगितासम्बन्धेनोत्पत्तिवारणाय तत्तद्व्यक्तिध्वंसे तत्तद्व्यक्तेः कारणत्वमावश्यकम्। सामान्यादौ च न काचित्तादृशी व्यक्तिस्तादात्म्येनेति तत्र प्रतियोगितया ध्वंसोत्पत्त्यापत्तेरयोगेन प्रतियोगितया ध्वंसं प्रति तादात्म्येन सतः कारणत्वस्यानावश्यकतया तदवच्छेदकत्वेन सत्तायाः सिद्धिरसम्भवेति विभाव्यते चेत्तदा द्रव्यकार्यतावच्छेदकतया सत्ता साधनीया। तथा हि समवायेन सतः प्रति तादात्म्यसम्बन्धेन द्रव्यस्य कारणता नूनं कल्पनीया, अन्यथाऽवयविगतनीलादौ सामानाधिकरण्यसम्बन्धेनावयवगतनीलादेः कारणतयाऽवयविगतनीलादेरवयविनीलावयवगतनीलादावप्युत्पत्त्यापत्तिः, कारणीभूतस्यावयवगतनीलादेः सामानाधिकरण्यसम्बन्धेन स्वस्मिन्नपि सत्त्वात्। स्वाश्रयसमवेतद्रव्यत्वसम्बन्धेनावयवगतनीलादेः कारणत्वाभ्युपगमेनोक्तापत्तेः परिहर्तुं शक्यतया द्रव्यस्य तथाविधकारणताया असिद्धत्वेन नोक्तयुक्त्या सत्तायाः सिद्धिः सम्भविनीति तु न शङ्क्यम्, द्रव्यत्वस्वाश्रयसमवेतत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुतरसम्बन्धेनावयवगतनीलादेः कारणताद्वयस्वीकारापेक्षया लाघवेन सत्त्वावच्छिन्नं प्रति तादात्म्येन द्रव्यस्य कारणताया एवोचितत्वात्। सत्तायाश्च कालिकसमवायस्वाश्रयमहाकालान्यत्वसम्बन्धैर्द्रव्यकार्यतावच्छेदकत्वं स्वीकार्यमिति समवायमात्रेण तस्या नित्यद्रव्यादिवृत्तित्वेऽपि न क्षतिः।

नन्ववयविगतनीलादावक्यवगतनीलादेः स्वाश्रयसमवेतत्व-स्वाश्रयवृत्तिद्रव्यत्वैतदुभयसम्बन्धेन कारणतायाः स्वीकारेण कारणीभूतनीलादेः स्वस्मिन्नुत्पत्त्यापत्तेः परिहारसम्भवेन सत्तावच्छिन्नं प्रति तादात्म्येन द्रव्यस्य कारणताया अनावश्यकतया न तत्कार्यतावच्छेदकतया सत्तायाः सिद्धिर्युक्ता। किञ्च, प्रतियोगितया ध्वंसं प्रति तादात्म्येन सत्कारणमिति कार्यकारणभावाश्रयेण ध्वंसकारणतावच्छेदकतयाऽथवा सत्त्वावच्छिन्नं प्रति तादात्म्येन द्रव्यं कारणमिति कार्यकारणभावाश्रयेण द्रव्यकार्यतावच्छेदकतया सिध्यन्त्याः सत्ताया नित्यद्रव्यादिसाधारण्यमप्रामाणिकमेव। नित्यद्रव्यादितो व्यावृत्तत्वे द्रव्यत्वादिसांकर्येण तस्या जातित्वासम्भवेन जातित्वरक्षार्थं तस्या नित्यद्रव्यादिसाधारण्यमावश्यकमिति वचनं तु न सम्यग्, अखण्डोपाधिरूपयापि तया कथितयोः कार्यकारणभावयोरुपपत्त्या तस्या जातित्वरक्षणस्य निष्प्रयोजनत्वात्। एवं च द्रव्यादित्रिकवृत्तेर्जातिरूपायाः सत्ताया अभ्युपगमो निर्युक्तिकत्वान्नितान्तमश्रद्धेय इति चेन्न, द्रव्यं जातिमत्, गुणो जातिमान्, कर्म जातिमदिति प्रतीतीनां प्रकारांशे सर्वानुभवसाक्षिकस्यानुगताकारत्वस्योपपत्त्यर्थं द्रव्यगुणकर्मस्वेकस्या जातेरङ्गीकारस्यावश्यकत्वात्। न चोक्तप्रतीतीनां जातित्वेन क्लृप्तद्रव्यत्वादिजातिप्रकारकत्वेनाप्यनुगताकारत्वसम्भवेन द्रव्यादित्रिक एकस्या जातेरस्तित्वमयौक्तिकमिति वाच्यम्, द्रव्यत्वादिविभिन्नजातिषु जातित्वस्यानुगतस्य सत्त्वे मानाभावात्। नित्यत्वे सत्यनेकसमवेत-

स्वरूपं जातित्वं सर्वजातिष्वनुगतं रूपमिति तु न वाच्यम्, यतस्तद्घटकं नित्यत्वं ध्वंसाप्रतियोगित्व-रूपमेव वक्तव्यम्। ध्वंसत्वं च जन्याभावत्वम्, जन्यत्वं चाद्यक्षणसम्बन्धरूपम्। क्षण आद्यत्वं च स्वाधिकरणकालध्वंसानधिकरणत्वम्। स्वत्वं च तत्तद्व्यक्तिमात्रपर्यवसायी धर्म इत्येतादृशाननु-गतनित्यत्वेनाधेयभेदाद् भिन्नेन समवायसम्बन्धावच्छिन्नाधेयत्वरूपसमवेतत्वेन च घटिततयोक्त-जातित्वस्यानुगतत्वासम्भवात्। न च घटत्वं जातिः पटत्वं जातिरित्यादिप्रतीतीनामनुगताकारत्वा-नुरोधेन जातित्वस्याखण्डोपाधिरूपस्यावश्यं मन्तव्यतया तेन द्रव्यत्वादिजातिप्रकारकतयैवोक्त-प्रतीतीनामुपपत्त्या तदनुरोधेन सत्ताजातिसिद्धिर्दुर्घटेति वाच्यम्, सदाकाराया अनुगतप्रतीतेः सदा-कारस्यानुगतव्यवहारस्य चोपपत्त्यर्थं तस्या आवश्यकत्वात्। तथा हि—

विभिन्नेषु घटेषु घटाकारप्रतीतयो यथा घटत्वैकधर्मप्रकारिका यथा च तेषु घटशब्दो घटत्वैकधर्मप्रवृत्तिनिमित्तकस्तथैव द्रव्यगुणादिषु सदाकारप्रतीतीनामेकधर्मप्रकारकत्वं सच्छब्दस्यैक-धर्मप्रवृत्तिनिमित्तकत्वं चावश्यकम्। यश्च धर्मः सदाकारप्रतीतिषु प्रकारः सच्छब्दस्य च प्रवृत्ति-निमित्तं सैव सत्ता, बाधकाभावाच्च तस्या जातित्वम्। तस्याः सदाकारप्रतीतिव्यवहारयोर्नियामकत्वं च समवायसामानाधिकरण्यान्यतरसम्बन्धेन मन्यत इति द्रव्यादिषट्पदार्थेषु तयोरुपपत्तिर्निर्बाधा, सामानाधिकरण्यं च समवायेनाधिकरणे समवायेन वृत्तित्वमिति नाभावेषु तयोरापत्तिः, समवायस्य च स्वात्मकस्वरूपेण विद्यमानतया न तत्र तयोरनुपपत्तिः। सामान्यादावपि सत्ता समवायेनैव स्वीकार्येति तन्मात्रेणैव तस्या उक्तप्रतीतिव्यवहारनियामकत्वं लाघवात् स्यादिति तु न युक्तम्, सामान्यादौ प्रकारान्तरेणाक्लृप्तस्य समवायानुयोगित्वस्य सत्ताऽनुरोधेन कल्पनापत्तेः। द्रव्यगुणकर्मसु सत्तायाः सत्त्वे सामान्यादिषु तत्सामानाधिकरण्यस्यापरिहार्यतया तेनैव तत्र सत्प्रतीतिव्यवहारयो-रुपपत्तिसम्भवेन साक्षात्सम्बन्धेन तत्र तत्सत्त्वकल्पनाया निष्प्रयोजनत्वात्। द्रव्यगुणकर्मसु सत्प्रतीतिव्यहारौ मुख्यौ सामान्यादिषु च गौणौ, मुख्ययोस्तयोर्नियामिका समवायेन सत्ता गौण-योश्च तयोर्नियामिका सामानाधिकरण्येन सत्तेत्यस्यापि वक्तुं शक्यत्वाच्च।

यत्तु सत्ता नाम न काचिज्जातिरपि तु भावत्वमेव सत्ता। भावत्वं च द्रव्यादिषट्पदार्थेषु स्वरूपसम्बन्धेन विद्यमानोऽखण्डोपाधिविशेषः, सत्प्रतीतिव्यवहारयोर्नियामकोऽयमेव धर्म इति द्रव्यादिषु षट्स्वपि तयोर्मुख्यत्वमेवेति, तन्न सम्यक्, द्रव्यादित्रिषु भावत्वस्य वृत्तित्वे सामान्या-दिषु तत्सामानाधिकरण्यस्यावर्जनीयतया तेनैव तेषु भावव्यवहारस्य सद्व्यवहारस्य चोपपत्ति-सम्भवेन तेषु स्वरूपसम्बन्धेन तदाश्रयत्वस्वीकारस्यार्थहीनत्वात्। भावत्वात्मिका सत्ता द्रव्यादिषु त्रिषु स्वरूपेणैव तिष्ठति, न समवायेनेत्यभ्युपगमेऽपि सामञ्जस्येन तस्या जातित्वासिद्धिरसम्भवेत्यपि

कथनं न युक्तम्, भावत्वस्वरूपस्य सम्बन्धत्वे तत्र नानाद्रव्याद्यनुयोगिकत्वस्य द्रव्यादिस्वरूपाणां तत्सम्बन्धत्वे नानाद्रव्यादिस्वरूपेषु तत्प्रतियोगिकत्वस्य कल्पने गौरवात्। समवायेन तदस्तित्वस्वीकारे तु समवाये द्रव्याद्यनुयोगिकत्वस्य क्लृप्ततया तत्रैकत्र भावत्वप्रतियोगिकत्वमात्रस्य कल्पने लाघवात्।

सत्ता वस्तुतः स्वरूपमेव, न तु ततोऽन्या काचिज्जातिः, कश्चिदखण्डोपाधिर्वेत्यपि न विचारसहम्, यतः स्वरूपशब्देन यदि स्वं रूपं विवक्ष्येत तदा स्वशब्दस्य वस्तुपरतया तत्तद्वस्त्वेव तत्तद्वस्तुनः सत्तेत्यापद्यते, यदि स्वस्य रूपं विवक्ष्येत तदा तत्तद्वस्तुगतं रूपमेव तत्तद्वस्तुनः सत्तेति लभ्यत इत्युभयथैवाभावस्यापि सद्रूपतापत्तेः। अभावो वस्त्वेव न भवतीति तु दुःसाहसमात्रम्, वस्तुत्वाभ्युपगतिबीजस्य प्रमाणसिद्धत्वस्य "सतः प्रकाशकं प्रमाणमसदपि प्रकाशयति" इति न्यायदर्शनप्रथमसूत्रावतरणभाष्ये वात्स्यायनेन स्पष्टमुक्ततयाऽभावेऽप्यनपायात्। निरपेक्षस्वरूपमेव वस्तु, अभावश्च प्रतियोग्यनुयोगिसापेक्षतया न वस्त्वित्यपि दुष्कल्पनम्, तथा सति संयोगसमवायादेरपि सम्बन्धिसापेक्षतयाऽवस्तुत्वप्रसङ्गात्, वस्तुस्वरूपस्य प्रतिवस्तु भिन्नतया ततः सत्प्रतीतिव्यवहारयोरनुगतत्वस्योपपादनासम्भवाच्च।

न चास्तिसत्प्रतीत्योः समानविषयकतया तद्विषयीभूतसत्तायाः समवायेन निरुक्तसामानाधिकरण्येन वाऽभावेऽसत्तया 'इदानीं भूतले घटाभावोऽस्ति' इत्यादिप्रतीतयो न संगच्छेरन्निति वाच्यम्, सत्प्रतीतेरेवोक्तान्यतरसम्बन्धेन सत्ताविषयकत्वात्, अस्तिप्रतीतेस्तु देशकालसम्बन्धलक्षणसत्तागोचरत्वाभ्युपगमात्, एतादृशसत्तायाश्च भावाभावसर्वपदार्थसाधारणत्वात्, सत्प्रतीतेश्चाभावेऽननुभवादिति कृतं विस्तरेण॥

***

# तर्कस्वरूपविमर्शः

श्रीहरिरामशुक्लः, वा० सं० वि० वि० सांख्ययोगविभागाध्यक्षः ।

अद्भुतस्तर्कपाथोधिरगाधस्तस्य वर्धकः ।
अक्षपादोऽतमस्पर्शी निष्कलङ्कः कलाधरः ॥

अक्षपादमहर्षिप्रणीते न्यायापरनामधेयके आन्वीक्षिकीशास्त्रे प्रथमसूत्र एव उद्दिष्टेषु षोडशपदार्थेषु तर्कः पठितो वर्तते । ज्ञानरूपोऽयं तर्कः प्रमेयेऽन्तर्भवन्नपि पृथगुपदिष्ट इत्यत्र कारणमेतदेव प्रतिभाति यद् आहार्यशङ्काया अप्यपनोदनं न तर्कमन्तरा सम्भाव्यते, शङ्कापनोदं विना च व्याप्तिनिश्चयासम्भवाद् अनुमानप्रामाण्यमेव पङ्कनिमग्नं भवेत् । अनुमानप्रामाण्य एव न्यायस्य परम उपयोगः । तस्यास्य तर्कस्य पृथगुपदिष्टत्वादेव नैयायिका वैशेषिका इव तार्किकपदेन व्यवह्रियन्ते इत्यपि वक्तुं शक्यम् । एवंविधस्यास्य तर्कस्य विषये केचन विचारा उपस्थाप्यन्ते । तत्र "अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" इत्यक्षपादसूत्रस्य भाष्यवार्त्तिकतात्पर्यटीकातत्परिशुद्धिन्यायमञ्जर्यादिव्याख्यानामालोचने क्रियमाणे सम्भावनाख्यं ज्ञानमेव तर्कपदेन विवक्षितमिति प्रतीयते ।

श्रीमदाचार्योदयनप्रभृतिनव्यनैयायिकास्तावद् आपत्तिः, प्रसङ्गः, ऊह इत्यादिपदेन व्यवह्रियमाणं ज्ञानविशेषमेव तर्कपदस्यार्थमाहुः । तत्र आदौ नव्यनैयायिकमतमनुसृत्य तर्कस्वरूपं तत्सामग्री तदवान्तरभेदास्तद्दोषास्तत्प्रयोजनञ्च निरूप्यते । तर्कस्तावद् अप्रमारूप एव भवति । तथा हि—धूमो यदि वह्निव्यभिचारी स्यात् तर्हि वह्निजन्यो न स्यात् ? इत्यादिस्थले धूमो वह्निजन्यो न स्यादित्येव तर्कस्याकारः । अत्र च ज्ञाने धूमो विशेष्यः, वह्निजन्यत्वाभावश्च प्रकार इति वह्निजन्यत्वाभावरूपस्य प्रकारस्य अभाववति धूमे वह्निजन्यत्वाभावप्रकारकत्वादस्य भ्रमत्वं सिद्धं भवति ।

## तर्कसामग्रीविचारः

आपत्तिनामकेऽस्मिन् ज्ञाने प्रायो बह्वंशेनानुमितेः साम्यं दृश्यते । तथा हि—यथा अनुमितौ पक्षः, साध्यम्, साधनम्, दृष्टान्तश्च भवति, एवमेव आपत्तावपि पक्षः, साध्यस्थाने च आपाद्यम्, साधनस्थाने आपादकम्, दृष्टान्तश्च भवति । अनुमितौ पक्षे साध्यव्याप्यहेतुमत्तानिश्चय-

रूपस्य परामर्शस्येव आपत्तावप्यापाद्यव्याप्यापादकवत्ताज्ञानस्य कारणत्वं स्वीक्रियते। इयांस्तु विशेषः—परामर्शनिष्ठायां कारणतायामनाहार्यत्वनिश्चयत्वयोरवच्छेदककोटौ सर्वांशेन निवेशो वर्तते। तर्के तु पक्षे आपादकवत्त्वांशेऽनाहार्यत्वनिश्चयत्वयोर्निवेशो नास्ति। व्याप्त्यंशे तु तयोर्निवेशोऽस्त्येव। एतावता अंशेन आपत्त्यनुमित्योः साम्यं वर्तते। वैषम्यं तावदेवमस्ति—अनुमितौ सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपायाः पक्षताया बाधनिश्चयाभावस्य चापेक्षा भवति। आपत्तौ पक्षताया नास्त्यावश्यकता नापि बाधनिश्चयाभावस्य, किन्त्वापाद्याभाववत्तानिश्चयरूपस्य बाधनिश्चयस्यैवास्ति तत्रावश्यकता। एवञ्च बाधनिश्चयाभावपक्षताभ्यां सहितः परामर्शोऽनुमितिं जनयति। आपाद्याभावनिश्चयात्मकबाधनिश्चयसहितञ्च आपाद्यव्याप्यापादकवत्ताज्ञानमापत्तिं जनयति।

## तर्कदोषाः

अनुमितौ हेतुदोषा यथा पञ्चप्रकारा उपवर्णिताः सन्ति, तथा तर्केऽपि पञ्च दोषा उपवर्णितास्तार्किकैः। तथा हि—

तत्रानुकूलत्वमिथोविरोधौ द्वौ मूलशैथिल्यमतस्तृतीयम्।
विपर्ययापर्यवसानमिष्टप्रसञ्जनं द्वे इति तर्कदोषाः॥

(१) अनुकूलत्वम्, (२) मिथोविरोधः, (३) मूलशैथिल्यम्, (४) विपर्ययापर्यवसानम्, (५) इष्टप्रसञ्जनं चेति। तत्रानुकूलत्वं यथा—पर्वतो यदि निर्वह्निः स्यात्तर्हि महानसभिन्नः स्यात्, अत्र महानसभिन्नत्वस्य पर्वते सिद्धतया अनुकूलत्वमेव। एतादृशस्थले आपाद्याभावनिश्चयरूपं तर्ककारणं नास्ति। मिथो विरोधो यथा—'वायुर्यदि बहिरिन्द्रियवेद्यद्रव्यं स्यात् तर्हि अरूपि द्रव्यं न स्यात्' इत्येकेनोक्तेऽपर आह—'वायुर्यदि बहिरिन्द्रियवेद्यद्रव्यं न स्यात् तर्हि प्रत्यक्षस्पर्शाश्रयो न स्यात्' इति। अत्र सत्प्रतिपक्षस्थल इव परस्परापत्तिप्रतिबन्धः फलम्। मूलशैथिल्यं यथा—पर्वतो यदि निर्वह्निः स्यात्तर्हि निर्वृक्षः स्यात्। अत्र वह्न्यभावरूपे आपादके वृक्षाभावरूपस्यापाद्यस्य व्याप्तिज्ञानं नास्तीत्यापाद्यव्याप्यापादकवत्ताज्ञानप्रतिबन्धः फलम्। विपर्ययापर्यवसानं यथा—केनचित् पर्वतो वह्न्यभाववान् भवत्वित्याशङ्कितेऽपरो यदि वदति पर्वतो यदि मृदभाववान् स्यात् तर्हि वृक्षाभाववान् स्यादिति। अयं तर्कः परस्याप्यनुकूल एव। अत्र आपादकवत्ताज्ञानं नास्ति। इष्टापादनं यथा—पर्वतो यदि निर्वह्निः स्यात् तर्हि निरालोकः स्यात्। अत्र पर्वते आलोकाभावरूपस्य आपाद्यस्याभावनिश्चयो नास्ति। इदमत्र बोध्यम्—यत्र पक्षे आपाद्या-

भावनिश्चय आपाद्यनिश्चयो वा नास्ति तत्रेष्टापादनम्, यत्र तु पक्षे आपाद्यनिश्चयस्तत्रानुकूलत्वमित्यनयोर्भेदो भवितुमर्हति।

कैश्चिदाश्रयासिद्धिरपि तर्कदोषोऽधिकः स्वीकृतो वर्तते। तथा हि—शशशृङ्गं यदि द्रव्यं न स्यात् तर्हि कठिनस्पर्शवन्न स्यात्। अत्र पक्षस्याप्रसिद्धत्वाद् आपाद्यव्याप्यापादकवत्तानिश्चयः पक्षतावच्छेदकविशिष्टे न भवितुमर्हति। अस्य परिगणनकारणं तु विपर्ययापर्यवसान एवास्यान्तर्भावः कर्तव्य इति प्रतिभाति। प्रसङ्गरूपस्यास्य तर्कस्य भेदात्तर्कभेदा आत्माश्रयान्योन्याश्रयचक्रकानवस्थातदन्यबाधितार्थप्रसङ्ग इतिरीत्या पञ्च प्रकारा उपवर्णिताः सन्ति न्यायशास्त्रे। तत्र स्वस्य स्वाश्रयत्वापादकस्तर्क आत्माश्रयः। तथा हि—अयं घटो यद्येतद्घटाश्रयः स्यात् तर्ह्येतद्घटभिन्नः स्यात्। एतद्बोधाधीनबोधाधीनबोधत्वापादकस्तर्कोऽन्योन्याश्रयः। तथा हि—अयं घटो यदि एतद्बोधाधीनबोधाधीनबोधः स्यात् तदा एतद्घटभिन्नः स्यात्। एवमेतद्बोधाधीनबोधाधीनबोधाधीनबोधविषयत्वापादकस्तर्कः चक्रकम्। अस्योदाहरणमपि पूर्ववदेवावगन्तव्यम्। अप्रामाणिकानन्तपदार्थकल्पनमनवस्था। अनवस्थास्थले तर्कस्य स्वरूपं तु सत्ता यदि सत्तावती स्यात् तर्हि अनन्तसत्ताप्रवाहान्तःपातिनी स्यादिति रीत्या बोध्यम्। तदन्यबाधितार्थप्रसङ्गो नाम एतच्चतुष्टयभिन्नस्तर्कः, स च धूमो यदि वह्निव्यभिचारी स्यात् तर्हि वह्निजन्यो न स्याद् इत्यादिरूपो बोध्यः। आत्माश्रयान्योयाश्रयादितर्काणामुत्पत्तिस्थितिज्ञप्तिभेदेन त्रिविधत्वमप्युपवर्णितमस्ति। विस्तरभयान्नात्रोदाहरामः।

## तर्कस्य प्रयोजनम्

पूर्वोपदर्शितस्य तर्कस्य प्रधान उपयोगो व्याप्तिग्रहार्थं भवति। यतो हि व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे कारणमिति नैयायिकानां सिद्धान्तः। तत्र च व्यभिचारग्रहो यदि संशयात्मको भवति कालान्तरीये देशान्तरीये वा धूमे, तदा तस्य संशयस्य निराकरणं विना व्याप्तिनिश्चयो न भवेत्। अतस्तन्निराकरणाय तर्क एव समर्थः। तत्रापि वादिन आहार्यं यदि व्यभिचारज्ञानं भवेत् तदा तर्कं विना अन्या गतिरेव नास्ति। "गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम्" इति न्यायेन तथाविधानामाहार्यशङ्काकलङ्कितानां शास्ता तर्क एव भवितुमर्हति। धूमो यदि वह्निव्यभिचारी स्यात् तर्हि वह्निजन्यो न स्यात्, एवंरूपस्तर्को व्यभिचारशङ्काया निरोधको भवति। तदापादकस्तर्कस्तच्छङ्कां प्रति प्रतिबन्धक इति रीत्या प्रतिबद्ध्यप्रतिबन्धकभावस्य सर्वजनानुभवसिद्धत्वात्।

इदमत्रालोचनीयम्—यस्तावद् धूमं पर्वते निश्चिन्वानः सन् पर्वते वह्न्यभावमाशङ्कते तस्य पुरतः पर्वतो यदि निर्वह्निः स्यात् तर्हि निर्धूमः स्यादित्येवं तर्के उपस्थापिते स एवं मन्यते मया पर्वते वह्निर्नास्तीति स्वीकृतं स्यात् तर्हि धूमोऽपि तत्र नास्तीति स्वीकर्तव्यं भविष्यति, नचैतत् स्वीकर्तुमुचितम्। तथा सति मम नेत्रे दुष्टे अहञ्च भ्रान्त इति स्वीकर्तव्यं भविष्यति, अहं खल्वभ्रान्त इति, इत्याकारकोऽभिमान एव धूमाभावस्वीकारस्यापत्तिरूपतां बोधयन् सा आपत्तिर्येन कारणेन समागता वह्न्यभावस्वीकारात्मकेन तत्कारणमेव स्वीकारात्मकं स निवारयति, इति रीत्या शङ्कानिवर्तकत्वमस्य भवति। यस्तु सर्वथा अभिमानशून्यस्तस्य तु इष्टापत्तिं ब्रुवाणस्य त्रैलोक्ये नास्ति दूषणमित्युक्तिविषयतैव भवति।

एवंरीत्या नव्यनैयायिकमतं संक्षेपत उपस्थापितम्। इदानीं प्राचीननैयायिकमतमुपस्थाप्यते—तत्र प्राचीनदार्शनिकग्रन्थानां समालोचने क्रियमाणे तर्कपदस्यान्योऽप्यर्थः स्वीकृत इति सिद्ध्यति। तत्र च प्राचीनन्यायमते तर्कः सम्भावनाज्ञानस्वरूप इति स्फुटं भवति। तथा हि न्यायमञ्जर्याम्—"तेनायं सूत्रार्थः—अविज्ञाततत्त्वे स्वरूपमात्रतो ज्ञाते धर्मिण्येकपक्षानुकूलकारणदर्शनात् तस्मिन् सम्भावनाप्रत्ययो भवितव्यावभासस्तदितरपक्षशैथिल्यादनेन तद्ग्राहकप्रमाणमनुगृह्य प्रवर्तयँस्तत्त्वज्ञानार्थमूहस्तर्कः" इति इति रीत्या सूत्रार्थं व्याख्याय संशयनिर्णयान्तरालवर्ती तर्कप्रत्ययः कश्चिन्नास्तीति पूर्वपक्षमुपन्यस्य "उच्यते न खलु स्वमतिपरिकल्पितविकल्पवितानेन प्रत्यात्मवेदनीयाः प्रतीतयो वारयितुं शक्याः। तथा हि—स्थाणुर्वा पुरुषो वेति प्रतीतिरेका, पुरुष एवायमित्यन्या, पुरुषेणानेन भवितव्यमिति मध्यवर्तिनी तृतीया सम्भावनाप्रतीतिः स्वहृदयसाक्षिकैव।

साम्येन हि समुल्लेखः संशये पक्षयोर्द्वयोः।<br>
निर्णये त्वितरः पक्षः स्पृश्यते न मनागपि॥<br>
तर्कस्त्वेकतरं पक्षं विभात्युत्थापयन्निव।"

इत्यादिग्रन्थेन सम्भावनाप्रत्ययस्तर्क इति स्वीकृतम्। भाष्यवार्त्तिकादावप्ययमेव पक्षः स्वीकृतः। तदेवंरीत्या नैयायिकमतसमालोचनं कृतम्।

प्रसङ्गरूपतामनाक्रान्तेष्वपि तर्कपदेन व्यवहारः केषुचिद् दृश्यते। तथा हि—अविनिगमः, उत्सर्गः, कल्पनागौरवलाघवे, अनौचित्यम्। तत्र वेदे त्वनादिमीमांसापरिशोधिततर्कैरर्थावधारणमित्याहुरित्यादिग्रन्थसमालोचनेन लाघवस्य तर्कपदेन ग्रहणं कृतं वर्तते। एवमेव "अनौचित्यापि तर्केण दुर्बाधैवाद्वयश्रुतिः" इति खण्डनखण्डखाद्यग्रन्थे अनौचिती तर्कपदेन व्यवहृता। परामर्शीय-

## तर्कस्वरूपविमर्शः

सर्वविषयतानां कारणतावच्छेदकत्वं यत् स्वीक्रियते तत्र विनिगमनाविरहस्तर्करूप एव। एवमुत्सर्गोऽपि तर्क एव, अयमेव सम्भावनारूप इति वक्तुं शक्यते। तत्राविनिगमो नाम विकल्पेनान्वययोग्येऽनेकस्मिन्नभ्युपगम्यमाने तदेकदेशान्वयनिराकरणाशक्यत्वम्। उत्सर्गस्तावद् बाहुल्यादृष्टमपेक्ष्य बाहुल्यदृष्टतया अदुर्बलस्योपगमार्हतारूपः। एनमेव तर्कमवलम्ब्योक्तम्—

तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते॥

इत्यादिना, लौकिकमप्युदाहरणमुत्सर्गतर्कस्योपस्थापयितुं शक्यते। तथा हि—द्वयोर्भ्रात्रोर्न्यायालये विवादे समुपस्थिते एको वदत्यहमनेनाविभक्तोऽस्मि, अपरेण च यदि विभक्तत्वमुच्यते तदा न्यायाधीशोऽविभक्तत्ववादिने स्वपक्षस्थापनाय हेतूपस्थापनं न निर्दिशति, अपि तु विभक्तत्ववादिन एव। तत्र कारणमुत्सर्गतर्केणैवाविभागः सिद्धो भवति, अविभागः खलु जन्मन आरभ्य स्वभावत एवास्ति। अतोऽयमुत्सर्गतर्कः। अस्योदाहरणानि व्यवहारे बहून्युपस्थापयितुं शक्यन्ते। सुगमासुगमयोरसुगमदुर्बलत्वं कल्पनागौरवम्। यथा—दृष्टजातीयमपेक्ष्य अदृष्टजातीयं दुःखेन प्रमीयते। एतेनैवाभिप्रायेण सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वमित्यादिकं निबन्धेषु दृश्यते। यत्र शरीरकृतमुपस्थितिकृतं सम्बन्धकृतं वा लाघवं स सुगमः, यत्र तन्नास्ति स असुगमः। असुगमस्य दुर्बलत्वं नाम प्रमाणापरिच्छेद्यत्वमेव। प्रामाणिकाव्यवहार्यत्वम् असमाधेयजातीयमनौचित्यम्। यथा—अवस्तुनि विधिनिषेधयोः किमिच्छसीति प्रश्नः सौगतस्य प्रामाणिकव्यवहारिणां पुरतोऽनुचित एव भवति। तदेवंरीत्या संक्षेपतोऽप्रसङ्गरूपास्तर्का निरूपिताः।

## मतान्तरसमालोचनम्

तत्रादौ तर्कविषये जैनमतं संक्षेपत उपस्थाप्यते। प्रमाणसंख्याविचारावसरेऽनुमानस्य प्रामाण्यं न सम्भवति। व्याप्तिग्रहणे पक्षधर्मतावगमे च सति खल्वनुमानं प्रवर्तते। न च व्याप्तिग्रहणं प्रत्यक्षतो भवितुमर्हति, प्रत्यक्षस्य सन्निहितमात्रार्थग्राहित्वेनाखिलपदार्थोपसंहारेण व्याप्तिग्रहणेऽसामर्थ्यात्। इत्याशङ्कायां "व्याप्तेः प्रत्यक्षानुपलम्भबलोद्भूतोहाख्यप्रमाणात् प्रसिद्धेः" इति समाहितम्। तेनेदं सिद्ध्यति व्याप्तिज्ञानम् ऊहाख्यप्रमाणाद्भवति। तथा च व्याप्तिग्राहकं प्रमाणमूहपदेन तर्कपदेन तैर्व्यवह्रियते। अस्य चोहापरनामधेयस्य तर्कस्य किं कारणमित्यपेक्षायां तैरुच्यते—"उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहः" (सूत्रम्) इति अत्र चोपलम्भानुपलम्भौ साध्यसाधनयोर्यथाक्षयोपशयं सकृत् पुनः पुनर्वा दृढतरं निश्चयानिश्चयाविति व्याख्यान-

दर्शनाद् नैयायिकोक्तौ सहचारग्रहव्यभिचाराग्रहावेव प्रतीयेते। तौ निमित्तं यस्य व्याप्तिज्ञानस्य तत्तथोक्तम्, साध्यसाधनयोरविनाभावस्तस्य ज्ञानमूह इति व्याख्यानं दृश्यते। अत्रेदमालोचनीयतामर्हति—पूर्वोक्तसूत्रानुसारेण व्याप्तिज्ञानमेव यद्यूहपदेनोच्यते, तत्कारणत्वं च यद्युपलम्भानुपलम्भयोः स्वीक्रियते, तदा नैयायिकमतादविशेषः। नैयायिकैरपि व्यभिचाराग्रहस्य सहचारग्रहस्य च व्याप्तिज्ञाने कारणत्वस्वीकारात्। यदि च व्याप्तिज्ञानपदं व्याप्तिज्ञापकपरम्, तदा इदं वक्तव्यं भवति यद् व्याप्तिज्ञानजनक ऊहः स्वीक्रियते, स चोह उपलम्भानुपलम्भनिमित्तो भवतीत्युच्यते, तदा तस्य किं स्वरूपमित्यप्यालोचनीयम्। तत्र च "इदमस्मिन् सत्येव सम्भवति, असति तु न भवति" इत्यग्रिमसूत्रस्य इदं साधनत्वेनाभिप्रेतं वस्त्वस्मिन् साध्यत्वेनाभिप्रेते वस्तुनि सत्येव सम्भवतीति तथोपपत्तिः। अन्यथा साध्यमन्तरेण न भवत्येवेत्यन्यथानुपपत्तिरिति व्याख्यानुसारेण धूमोऽग्निष्वेव सम्भवति, अग्न्यभावे न सम्भवति, इत्याकारकं ज्ञानं तर्करूपं स्वीकर्तव्यम्। अस्य च ज्ञानस्य पूर्वोक्तोपलम्भानुपलम्भौ कारणमित्यायाति। इदानीं व्याप्तिज्ञानस्य क आकार इति चेत्? सर्वे धूमवन्तो वह्निमन्त इत्येवाकार इति वक्तव्यमापतति। स चायं तर्कः प्रमाणम्, प्रमाणानुग्राहकत्वादिति च जैनैः स्वीकृतमस्ति।

अत्रेदं विचारयामः—पूर्वोक्तस्य धूमो वह्नौ सत्येव भवति, असति न भवतीत्याकारकस्य तर्कत्वेनाभिमतस्य ज्ञानस्यैव व्याप्तिज्ञानरूपत्वं स्वीक्रियताम्, किं सर्वे धूमवन्तो वह्निमन्त इत्याकारकेण तृतीयज्ञानेनेत्याक्षेपस्य समाधानं मृग्यम्।

## बौद्धमतविचारः

बौद्धास्तावत् प्रसङ्गस्वरूपविषये नैयायिकमतसमानतामेव भजन्ते। तथा हि—"प्रसङ्गो द्वयसन्बन्धादेकापायेऽन्यहानये" इति। अस्यार्थः—"व्याप्यव्यापकयोः सम्बन्धे सति यदि व्यापकं नेष्यते, तदा व्याप्यमपि नेष्यताम्। अथ व्याप्यमिष्यते, तदा व्यापकमपीष्यतामिति। तत्र कोऽयं प्रसङ्गो नाम प्रमाणसिद्धव्याप्तिकेन वाक्येन परस्यानिष्टस्यापादनाय प्रसञ्जनं प्रसङ्गः। यथा सामान्येऽनेकवृत्तित्वाभ्युपगमेऽनेकत्वप्रसञ्जनम्। तथा हि—यदनेकवृत्तिमत्तदनेकम्, यथा अनेकभाजनगतं तालफलम्। अनेकवृत्ति च सामान्यम्, तस्मादनेनाप्यनेकेन भवितव्यमिति प्रसङ्गः। ननु यद्येतत्प्रमाणं न भवति कथमस्योपन्यास इति व्याप्तिस्मरणार्थं व्याप्त्येकदेशकथनवत्" इति मोक्षाकरगुप्तविरचितस्य तर्कभाषाख्यस्यास्य ग्रन्थस्य समालोचने क्रियमाणे नव्यनैयायिकमतादस्याविशेषः प्रतिभाति। तदेवंरीत्या अस्मिन्निबन्धे तर्कविषये न्यायमतान्युपस्थापितानि॥



# समवायखण्डनखण्डनम्

आचार्यश्रीआनन्दझा, लखनऊविश्वविद्यालयः, लक्ष्मणपुरम् ।

कथं वेदान्तिनां समवायविद्वेषः ? इति हि प्रतिपादितं पूर्वं मया। अथेदानीं न्यायवैशेषिक-दृष्टिकोणाश्रयणेन प्रस्तूयते समवायखण्डनखण्डनम्। अणुभ्यां हि द्वाभ्यां समवायिकारणाभ्यां सर्वप्रथमं कार्यं ननु द्व्यणुकमुत्पद्यते प्रोक्ताभ्यामणुभ्यां स्वसमवायिकारणाभ्यामत्यन्तभिन्नमिति न्यायवैशेषिकाभिमतस्यारम्भवादस्य खण्डनावसरे ब्रह्मसूत्रकारेण बादरायणेन प्रोक्तं सूत्रमिदं "समवायाभ्युपगमाच्च साम्यादनवस्थितेः" इति। सूत्रस्यास्य भावार्थस्तावदयम्—यदारम्भवादिभ्यां हि न्यायवैशेषिकाभ्यां प्रोक्तमुत्पद्यमानं द्व्यणुकं स्वसमवायिकारणाभ्यां परमाणुभ्यामत्यन्तभिन्नमिति न ताभ्यां सह तस्य स्वरूपात्मकस्तादात्म्यरूपो वा सम्बन्धो वक्तुमर्हं इति समवाय एव सम्बन्धो मन्तव्यस्तैः। भूतलघटयोरिव तस्य ताभ्यां संयोगस्तु सम्बन्धो नैतस्माद्धेतोर्मान्यतामर्हति यत् तस्य द्व्यणुकसमवायिकारणयोः परमाण्वोः पारस्परिकसम्बन्धत्वम्। पूर्वं तयोर्भवति संयोगेऽव्यवहितोत्तरं भवति समुत्पत्तिर्द्व्यणुकस्येत्येवमादि मन्यते स्वाभिमतस्यारम्भवादस्य स्थापनाय नैयायिकवैशेषिकाभ्याम्। परन्तु न कथञ्चिदपि युज्यते तत्। यतो हि—द्व्यणुक इव तत्प्रतियोगिके समवायेऽपि परमाणुभिन्नत्वं वादिभ्यां प्रोक्ताभ्यां मन्तव्यमेव। अन्यथा स्वतन्त्रतयाभ्युपेतस्य तस्य परमाणुस्वरूपत्वापत्त्याऽपसिद्धान्तापातः। एवं च संसर्गसंसर्गिणोरुभयोर्हि समवायतत्प्रतियोगिद्व्यणुकयोः परमाणुभिन्नत्वसाम्यात् "पङ्क्तेर्विभेदो न भवेच्छिवाय" इति लोकनीत्या समवाये द्व्यणुकप्रतियोगिकत्वमिव समवायप्रतियोगिकत्वमपि मन्तव्यतामावहति, समवायप्रतियोगिकत्वमिव द्व्यणुकाप्रतियोगिकत्वमपि वा आवश्यकम्। परन्तु वादिभ्यां हि प्रोक्ताभ्यां नैकमप्यनयोः स्वीकार्यतया वक्तव्यतामर्हति। यतो हि—समवायस्य समवायाप्रतियोगिकत्वमिव यदि द्व्यणुकाप्रतियोगिकत्वमप्यभ्युपगम्यते, तर्हि परमाण्वोर्द्वयोर्द्व्यणुकसमवायिकारणत्वानुपपत्तिः। "यस्मिन् कारणे यत्कार्यं समवायेन सम्बन्धेनोत्पद्यते तत्कारणं तत्कार्यं प्रति समवायिकारणम्" इत्यस्यैव तयोर्मते समवायिकारणनिर्वचनत्वात्। परित्यक्तायां चाण्वोर्द्व्यणुकसमवायिकारणतायां सर्वथा परित्यज्यतामावहेत् तयोः सर्वस्वभूतो नन्वारम्भवादः। यदि च तद्भीत्या समवायस्य द्व्यणुकप्रतियोगिकत्वमिव समवायप्रतियोगिकत्वमपि स्वीक्रियते ताभ्याम्, तर्हि ध्रुवं समवायस्यैकस्य समवायान्तरप्रतियोगिकत्वमेव मन्तव्यं स्यान्न स्वप्रतियोगिकत्वम्। यतो हि स्वस्य स्वप्रतियोगिक-

सम्बन्धत्वाभ्युपगमे द्व्यणुकस्यैव द्व्यणुकसम्बन्धत्वापत्त्या समवायस्यासिद्धत्वेन तद्घटितस्य समवायिकारणत्वादेरपि दुर्निर्वचतया पुनरप्यारम्भवादमहाप्रासादस्याधारशिलैव भवेत् सर्वथा भग्ना। अतस्तस्यैव समवायस्य तत्प्रतियोगिकत्वस्वीकारसंकल्पं परिहाय स्वीक्रियमाणे ननु समवायस्यैकस्य समवायान्तरप्रतियोगिकत्वे प्रतियोगिभूतस्य द्वितीयस्यापि समवायस्य समवायत्वेन पूर्वसमवायाविशिष्टतया तृतीयसमवायान्तरप्रतियोगित्वं मान्यमेव स्यादगत्या आरम्भवादिनां तेषाम्। एवञ्चानेनैव क्रमेण चतुर्थपञ्चमाद्यतिरिक्तातिरिक्तसमवायाभ्युपगमापत्त्याऽनवस्थादौस्थ्येन कस्यापि समवायस्यामान्यतया पुनरप्यारम्भवादप्रासादमूलभङ्गो दुष्परिहरः। यदि चापन्नसमवायपरम्परान्तःपातिनः कस्यापि तस्य निष्प्रतियोगित्वं समवायाप्रतियोगित्वं वोपकल्प्य प्रोक्ताया अनवस्थाया वारणं कर्तुमिष्यते तैः, तर्हि "अन्ते रण्डाविवाहश्चेदादावेव कुतो नहि" इति लौकिकाभाणकानुसारं द्व्यणुकादीनामेव कुतो न स्वत एव परमाण्वादिसम्बद्धता समभ्युपगम्या? प्रोक्ताया अनवस्थाया निरासाय कोऽपि समवायः समवायान्तरमनन्तराकृत्यैव परमाण्वादिषु सम्बद्ध्यत इति यदि वक्तव्यम्, तर्हि तादृशो हि सम्बन्धमनन्तराकृत्यैव स्थितिस्वभावः कुतो न द्व्यणुकादिष्वेव स्वीकर्तव्यः? तथा स्वीकारे महतो लाघवात्। युक्तिभिराभिः खण्डिते तावदवयवावयव्यादिसंयोजनमण्डिते समवाये "परमाण्वोः समवायेन द्व्यणुकमुत्पद्यते" इत्यादेर्वक्तुमशक्यतया न वादिभ्यां प्रोक्ताभ्यां न्यायवैशेषिकाभ्यां स्थिरीकर्तुमिष्यमाणः खल्वारम्भवादः कथञ्चिदपि शक्यः स्थिरीकर्तुं तदनुयायिभिः कैश्चन।

किञ्च "घटवद् भूतलम्", "संयोगेन घटवद् भूतलम्" इत्यादिषु प्रतीतिषु यथा घटभूतलमाध्यस्थ्येन भवति संयोगस्य गुणस्य संसर्गताख्या विषयता, "घटो रूपवान्", "समवायेन घटो रूपवान्" इत्यादिषु प्रतीतिषु पदार्थान्तरतया स्वीकर्तुमिष्यमाणस्य समवायस्यापि तथा संसर्गताख्या विषयता नैयायिकैर्वैशेषिकैश्च तैः समवायसम्बन्धसिद्ध्यर्थं सर्वथा सन्नद्धैर्वक्तव्यैव। सत्याञ्च तथा तदुक्तौ तामेव संसर्गताख्यां विषयतामावहतः संयोगस्य यदि समवायप्रतियोगित्वम्? तर्हि तामेव संसर्गताख्यां विषयतामावहतः समवायस्य को नामापराधो यदसौ नेयात् समवायप्रतियोगित्वम्? सति च समवायस्यापि समवायप्रतियोगित्वे पूर्वोक्तयुक्त्या स्वस्य स्वप्रतियोगित्वासम्भवेन समवायस्यैकस्य समवायान्तरप्रतियोगित्वं स्यादभ्युपेयम्। अभ्युपगते च तस्यैकस्यापरसमवायप्रतियोगित्वे पुनः पूर्वोक्तयुक्त्या समवायपरम्परास्वीकारपातेनानवस्थापत्तिरित्यतोऽपि न स्वीकर्तुमर्हः समवायः संसर्गः। एवं हि विधीयमाने समवायसम्बन्धप्रतिक्षेपे स्वतो विशीर्यते नैयायिकवैशेषिककल्पितो नन्वारम्भवादमहाप्रासादः। न च संयोगस्य गुणत्वात् समवायस्यातथात्वात् सत्यपि

संयोगस्य समवायप्रतियोगित्वे न शक्यते समापादयितुं समवाये समवायप्रतियोगित्वम्। सत्यपि संसर्गताख्यया विषयतया तयोः साम्ये गुणत्वाऽगुणत्वाभ्यां संयोगसमवाययोर्वैषम्यस्य दुरपलपतया तन्मूलकस्य समवायप्रतियोगित्वतदप्रतियोगित्ववैषम्यस्य स्वीकर्तुं सर्वथैव शक्यत्वादित्यपि शक्यते वक्तुं न्यायवैशेषिकानुयायिभिः। यतो हि न तेषामिष्टं गुणत्वागुणत्वादिकं भजते श्रौतत्वम्, येन वेदान्तिभिरप्यस्माभिर्भजेत नन्ववश्यमान्यतां तत्। नहि स्वगृहमात्रसञ्चारितया कल्पिता काचन क्रीडापुत्तलिका शक्यते केनचित् कथञ्चिच्च महाराजप्रासादनिहितसिद्धान्तमाणिक्यमारणाय कृत्यात्वमानेतुम्। तस्मान्न स्वीकर्तुमर्हा कथञ्चित् परमाणुभ्यां द्व्यणुकसमवायिभ्यां समुत्पत्ति-र्द्व्यणुकस्य। न च स्वीकर्तुमर्हस्तामेवाश्रित्य प्रकल्प्यमानः खल्वारम्भवादो न्यायवैशेषिकानुमतः। अयमेवार्थो भाष्यकारेणाचार्यशङ्करेण भामतीकृता मिश्रवाचस्पतिना तदन्यैश्च साक्षात् परम्परया वा तद्व्याख्यातृभिस्तदनुयायिभिस्तैस्तैस्तत्र तत्र स्वकृतौ प्रपञ्चितः समाश्रित्य स्वीयां स्वीयां भणितिभङ्गीम्।

तत्रैवमिदं प्रतिवक्तव्यम्—

बादरायणीयेन प्रोक्तेन सूत्रेण शाङ्करेण तद्भाष्येण तट्टीकोपटीकादिभिश्च फलतो ननु द्व्यणुकसमवाययोः परमाणुभिन्नत्वेन संयोगसमवाययोश्च संसर्गत्वेन वक्ष्यमाणं साम्यं हेतूकृत्य ततश्च समवाये समवायप्रतियोगिकत्वसिद्धिरुद्भाविता खल्वनवस्थादौस्थ्यसम्पादिनी। न सा कथमपि क्रियमाणे सूक्ष्मेक्षिकया विवेचनेऽर्हति समवतारं युक्तिसहस्रांशुसन्दीपिते मनोराजमार्गे समालोच-कानां प्रौढतराणाम्। यतो हि वेदान्तिनां कथनं ननु पूर्वोक्तं नातिक्रामति जात्युत्तरतां स्वपक्ष-व्याघातकतया। कथं खलु तदीयं वचनं पूर्वोक्तं स्वपक्षव्याघातकमिति चेदित्थम्—

यदि द्व्यणुकसमवाययोरुभयोः परमाणुभिन्नत्वेन साम्याद् द्व्यणुकेऽपि समवायवत् स्वतः सम्बद्धत्वापत्तिः समवायेऽपि वा द्व्यणुकवत् समवायप्रतियोगित्वापत्तिर्दीयते वेदान्तिभिर्नैयायिकेभ्यो वैशेषिकेभ्यश्चारम्भवादिभ्यस्तर्हि सदनिर्वाच्ययोरुभयोर्हि ब्रह्मजगतोरसद्गगनकुसुमकूर्मरोमशश-विषाणादिभिन्नत्वेन साम्याद् ब्रह्मणोऽप्यनिर्वाच्यत्वापत्तिर्जगद्वत्। जगतो वा परमार्थसत्त्वापत्ति-र्ब्रह्मवत् सर्वथैव स्यादपरिहार्या गलेपादुकान्यायेन। अयं भावः—वेदान्तिभिः स्पष्टतया स्वमान्य-पदार्थविभाजनस्याकृतत्वेऽपि यावद्विचारं सदसत्तदनिर्वाच्यभेदेन पदार्थत्रैविध्यं मन्तव्यमेव। अन्यथा "सदसद्भिन्नत्वं मिथ्यात्वम्" इति तत्र तत्र तैरुच्यमानं मिथ्यालक्षणं नोपपत्तिमीयात् कथञ्चनाऽपि। सति चैवं परमार्थसत्तया तैर्मान्ये हि ब्रह्मणि यथाऽसद्भिन्नत्वम्, मिथ्यात्वेन तदभिप्रेतस्य जगतोऽपि तथाऽसद्भिन्नत्वं मन्तव्यमेव। एवं सति साम्यमात्रेण केनचिद्धर्मेण यदि

तद्गतधर्मान्तरापत्तिरपीष्टा वेदान्तिनाम्, तर्हि जगद्धर्मस्यासद्भिन्नत्वस्य ब्रह्मणि परमार्थसद्भूते विद्यमानतया ब्रह्मणोऽपि कुतो न स्याज्जगद्धर्ममिथ्यात्ववत्त्वम् ? आमित्युक्तौ च त्रिकालाबाध्यत्वरूपस्य सत्त्वस्य तत्राभावापत्त्या सर्वथा दुर्वारोऽपसिद्धान्तमहागर्त्तपातो वेदान्तिनां तेषां तथाभ्युपगन्तॄणाम्। इयमेवापत्तिपद्धतिः समवायस्य सम्बन्धत्वेन संयोगसाम्यात्तस्यापि संयोगवत् परतः सम्बद्धत्वं मान्यं स्यादनवस्थादौस्थ्यसम्पादकमित्युक्त्यव्यवहितोत्तरमपि शक्यते साधु सञ्चारयितुम्। तथा हि—समवायसंयोगयोः संसर्गत्वेन साम्यात् समवायस्यापि समवायान्तरेण सम्बद्धत्वं मान्यं स्यान्नैयायिकैर्वैशेषिकैश्चानवस्थादौस्थ्यकरमिति वदतां वेदान्तिनामपि सत्त्वमिथ्यात्वाभ्यामभ्युपगम्यमानयोर्ब्रह्मजगतोरुभयोरसद्भिन्नत्वेनाविशेषाद् ब्रह्मणोऽपि जगद्वन्मिथ्यात्वाभ्युपगमापातो दुरुद्धर एवापसिद्धान्तसुगभीरगर्त्तपातेन स्वपक्षव्याघातकः।

वस्तुतस्तु विषयताया विषयभेदेन भिन्नत्वमभ्युपगच्छतां नैयायिकानां मते नैकं संसर्गत्वं संयोगसमवाययोरुभयोः पर्याप्तम्, येन संसर्गत्वेन साम्यं तयोर्वेदान्तिभिरुच्यमानमुपपन्नं शक्नुयाद्भवितुं समवायस्यापि परतः सम्बद्धत्वापादकतयाऽनवस्थादौस्थ्यकरम्। अन्या हि संसर्गता संयोगे, अन्या च सा समवाये। नैतस्यां परिस्थितौ संयोगसमवाययोः संसर्गतया साम्यं शक्यं प्रवक्तुम्। तद्गतधर्मवत्त्वस्यैव साम्यलक्षणघटकत्वात्। न च समवायवत् संयोगोऽपि संसर्गः, संयोगवत् समवायोऽपि संसर्गः, प्रमितीनामेवंविधानां तयोः साम्यं विषयत्वेनादाय समुल्लसन्तीनामप्रमात्वं तर्हि दुर्वारमिति वाच्यम्, तदुभयगतयोः संसर्गतयोरेव साम्यस्य तत्र विषयतया समुल्लासाभ्युपगमात्। संयोगसमवायगतयोः संसर्गतयोः संसर्गतात्वस्य लाघवानुरोधादैक्याभ्युपगमेन तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपस्य साम्यस्य संयोगसमवायगतयोः संसर्गतयोरक्षुण्णत्वात्। भूयोधर्मत्वं तु नान्यदभिप्रेतधर्मत्वादिति प्रतिपादितं तत्र तत्र साम्यसमीक्षकैः। एवं चावकाश एव नास्ति साम्यमभ्याश्रयीकृत्य समवाये संयोगवत् परतः सम्बद्धत्वापत्त्युद्भावनस्य प्रोक्तस्य वेदान्तिकर्तृकस्य।

किञ्चान्यदेतदप्यत्र चिन्तनीयं यद् वेदान्तिमूर्द्धन्येन मिश्रवाचस्पतिना स्वयमेव हि तत्र तत्र समुद्घोषितं सडिण्डिमघोषमिदं यद् दृष्टान्तदृष्टसर्वधर्मानुरोधेन त्वनुमानमिच्छतः सर्वानुमानोच्छेदप्रसङ्ग इति। कथनेनैतेन तस्येदमेव स्पष्टीभवति यद् व्याप्यव्यापकभावापन्नयोर्द्वयोः कयोश्चिन्मध्ये व्याप्यं धर्ममुपादाय तद्वत्तयैव हि शक्यते प्रवर्तयितुं दृष्टान्तदार्ष्टान्तिकभावोऽनुमानस्थलीयो न सर्वमनभिप्रेतं वाऽव्याप्यभूतं धर्मं यं कञ्चिदुपादाय। एवञ्च संसर्गतायाः संसर्गभेदभिन्नत्वानभ्युपगमपक्षे संसर्गत्वस्य केवलान्वयितया स्वतो भूतलादिसम्बद्धत्वाभाववति घटादावपि सत्त्वेन, परतः सम्बद्धत्वाभाववतोः स्वरूपतादात्म्ययोरपि च सत्त्वेन, परतः सम्बद्धत्वसाध्यव्यभिचारितया

कथमनवस्थासम्पादनाय "समवायः परतः सम्बद्धः संसर्गत्वात् संयोगवत्" इति शक्यतेऽनुमानमुपस्थापयितुम् ? एतदनुमानानुपस्थितौ तु समवायस्य समवायप्रतियोगित्वासिद्ध्या समवायधारया असिद्धेः कथमनवस्थापातावकाशः ? न च समवायो यदि संसर्गः स्यात् संयोगवत् सोऽपि समवायप्रतियोगी स्यादित्यापत्तौ वेदान्तिनामभिप्राय इत्यपि शक्यं वक्तुम्, "साम्यादनवस्थितेः" इति सूत्रांशस्य, "समवायमभ्युपगच्छतः प्रसज्येतैवानवस्था" इति शाङ्करभाष्यांशस्य चासंगतेर्दुर्वारतापत्तेः। न च विपक्षयोर्न्यायवैशेषिकयोर्बाधकस्य तर्कस्याकारः स्यादसावित्यपि शक्यं वक्तुम्, स्वतः खल्वापत्तिभूतस्य तर्कस्य व्यभिचारशङ्कोन्मूलकतयैवोपयोगस्थस्य सर्ववादिसिद्धत्वेनानवस्थानुद्भावकतया पुनरुक्तसूत्रांशभाष्यांशयोरसंगत्यापत्तेर्दुर्वारतापातात्। न च संसर्गत्वप्रयुक्तस्य संयोगसाम्यस्य समवायस्य समवायप्रतियोगित्वे हेतुत्वं प्रतिपादितं सूत्रकारेण बादरायणेन "साम्यादनवस्थितेः" इति वदता, न संसर्गत्वस्यैवेति तदनभिप्रेतं संसर्गत्वं हेतुत्वेनोपादाय प्रोद्भावितो विचारोऽसङ्गत इति वाच्यम्, साम्यस्याभिप्रेततद्गतधर्मरूपतया संसर्गत्वेन साम्यस्य फलतः संसर्गत्वस्वरूपतायामेव विश्रान्तेः। किञ्च, यद्वि गुणत्वसमानाधिकरणस्यैव हि संसर्गत्वस्य संसर्गान्तरप्रतियोगित्वव्याप्यतया केवलस्य संसर्गत्वस्य समवाये सत्त्वेऽपि पदार्थान्तरतया मान्यतामुपेतस्य समवायस्य गुणत्वाभावेन गुणत्वसमानाधिकरणसंसर्गत्वाभावेन न ततः परतः सम्बद्धं संयोगं दृष्टान्तीकृत्य पक्षीकृते समवाये समवायान्तरप्रतियोगित्वरूपस्य परतः सम्बद्धत्वस्य सिद्धिः शक्यते समापादयितुं वेदान्तिभिरित्यस्य न्यायवैशेषिकपक्षादुपस्थापयितुमर्थस्य निरासाय "गुणपरिभाषायाश्चातन्त्रत्वात्" इत्युक्तं भाष्यकारेणाचार्यशङ्करेण, यच्च "यत्रसमवायेऽस्यागुणत्वं भवति, कामं भवतु, न नः काचित् क्षतिः" इति प्रोक्तं भामतीकृता, तदपि नार्हति मनोरमताम्। यतस्तत्तद्गृहकोणस्थिता हि गुणादिपरिभाषा न मान्याऽस्माभिर्वेदान्तिभिरित्यस्यैव तदभिप्रायतयाऽस्माभिरपि तर्हि जीवसाक्षीश्वरसाक्ष्यनिर्वाच्यादिपरिभाषा वेदान्तिगृहकोणमात्रगानमान्येत्येतत्कथनेनैव तत्तत्पदार्थविचारावसरे तेषामपि निर्वाहलाभाद्यत् तत्तद्वेदान्त्यभिमतसाक्ष्याद्यसिद्ध्या धत्ते स्वपक्षव्याघातकतां तत्तदीयं वचनं तत्तत्। "यदग्ने रोहितं रूपं तत्तेजसो यच्छुक्लं तदपां यत् कृष्णं यदन्नस्य" इति छान्दोग्यश्रुत्या गुणगुणिभावादेरपि श्रौततया गुणपरिभाषादेरतन्त्रत्वकथनमपि च नोपैति सामञ्जस्यम्। न च न्यायवैशेषिकमतयो रोहितस्यापि रूपस्य पार्थिवत्वाभ्युपगमेन प्रोक्तछान्दोग्यवाक्ये च तस्य तैजसत्वकथनेन कथं कर्तुं शक्या न्यायवैशेषिकपरिभाषापुष्टिः प्रोक्तछान्दोग्यश्रुत्येति वाच्यम् ? रोहितपदेन भास्वरशुक्लरूपस्याभिधानात् तस्य च न्यायवैशेषिकाभ्यामपि तेजोगुणताया एव स्वीकारात्।

ख्यापकम् । अत एव हि क्वचिदयुतसिद्धसम्बन्धः समवाय इत्यपि लभ्यत एव परिभाषा लघ्वी समवायीया । एवं चाकाशगतस्य नित्यत्वस्य ननु ध्वंसप्रतियोगित्वाभावरूपस्य नायुतसिद्धत्वमिति कृत्वा नायुतसिद्धसम्बन्धत्वपर्यवसन्नस्य नित्यसम्बन्धत्वस्य समवायलक्षणस्यातिव्याप्तिः शक्या समापादयितुं प्रोक्ते सम्बन्धे विशेष्यविशेषणभावे खल्वाकाशतन्नित्यत्वानुयोगिप्रतियोगिके । यदि चाकाशगतं नित्यत्वं तदेकत्वरूपं भावात्मकं मान्यम्, तदापि नोक्तातिव्याप्तिः शक्या वक्तुम् । यतस्तर्हि तत्रत्या हि विशेषणता नूनमाकाशत्वावच्छिन्नविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्नाधेयतारूपैव विवक्षिता भविष्यतीति समवायसिद्धौ ततः साहाय्यमेव स्यान्न बाधा काचित् । वस्तुतस्त्वाकाशनित्यत्वस्याकाशैकत्वरूपत्वे समभ्युपगम्यमाने समवायस्यैव तदुभयमध्यगततया प्रतीतिरिति प्रकृतलक्षणलक्ष्यतता तस्य, तत्र लक्षणसमन्वितिरेव भवति नातिव्याप्तिरिति ।

एतेन नन्वजेष्वाकाशकालसंयोगादिष्वतिव्याप्तिस्तेषामविभागपूर्वकतया नित्यत्वेन संयोगतया च सम्बन्धत्वेन नित्यसम्बन्धत्वस्य प्रकृतस्य समवायलक्षणस्य तत्राक्षतेत्युक्तिरपि पराहता वेदितव्या । यतो हि—प्रकृतलक्षणवाक्यगतस्य नित्यपदस्य यथाश्रुतार्थकत्वपक्षेऽप्राप्तिपूर्विकायाः प्राप्तेरेव संयोगत्वस्याभ्युपगमेनाकाशकालसंयोगादौ सर्वथा तदसम्भवेन नाभ्युपगन्तुमर्हो विभुद्वयसंयोगो यत्र दातुमिष्टा सम्भवेदतिव्याप्तिः । प्रकृतलक्षणघटकस्य नित्यपदस्यायुतसिद्धार्थकत्वपक्षे तु समभ्युपगम्यापि विभुद्वयसंयोगमितस्तत्र न शक्या आपादयितुमतिव्याप्तिर्यद् नाकाशकालाद्योर्विभ्वोः कयोश्चनायुतसिद्धत्वम्, अवयवावयविभावानाक्रान्तद्रव्यत्वात् । न खलु द्रव्यत्वं स्वव्याप्यस्यायुतसिद्धत्वस्य प्रयोजकमपि त्ववयवावयविभावाक्रान्तत्वम् । नावयवावयविभावाक्रान्तता विभ्वोः कयोश्चन, येन शक्नुयाद्भवितुं तयोरयुतसिद्धत्वमिति नैवापादयितुं शक्यते कथञ्चिदतिव्याप्तिर्विभुद्वयसंयोगेऽयुतसिद्धसम्बन्धत्वपर्यवसन्नस्य नित्यसम्बन्धत्वस्य समवायलक्षणस्य । एवञ्च सम्पत्तावेवं समवायलक्षणस्य सर्वथा निर्दोषस्य नैव भवितुमर्हतीति चित्तसन्तोषदं मुनेश्चित्सुखस्य समवायलक्षणाभावख्यापनम् ।

एवं समवाये प्रमाणाभावकथनमपि मुनेस्तस्य महतश्चिन्तनीयमेव । यतो हि—इह तन्तुषु पट इत्यादिषु प्रात्यक्षिकप्रतीतिषु पटादेस्तन्त्वादिसम्बद्धतया प्रतीतिविषयत्वेन तन्तुपटाद्योरिव प्रत्यक्षप्रमाणवेद्यता मन्तव्यैव तस्य । परिचितो हि सन्दंशन्यायः शास्त्रपरिचितानाम् । नहि समवायोभयपार्श्ववर्तिनोस्तन्तुपटयोरुभयोः प्रत्यक्षकुक्षीकृतयोरपि कुक्षिगतस्याकुक्षीकारः शक्यते वक्तुं यौक्तिकः कथमपि समवायस्य । यद्धि "इह तन्तुषु पटः" इत्यादिप्रात्यक्षिकप्रतीतिविषयता यदि

तन्तुपटयोरिव समवायेऽपि प्रोच्यते, तर्हि बौद्धसिद्धान्त इव न्यायसिद्धान्तेऽपि विषयस्य प्रत्यक्षं प्रति कारणताया मान्यतया प्रत्यक्षविषयत्वेनाभ्युपगम्यमानस्य समवायस्य तस्य तन्तुबुद्धिजनकता, पटबुद्धिजनकता, तदुभयबुद्धिजनकता वा स्यादेव मान्या। सत्यां च तस्यां समवायात्ततः पटेऽपि तन्तुबुद्धिः, तन्तुष्वपि वा पटबुद्धिः, प्रत्येकं तन्तुपटयोरपि वा तन्तुपटबुद्धिः स्यादापन्ना, या नानुभवसिद्धा कस्यापीत्यतः समवायो न प्रत्यक्षप्रमाणवेद्यो वक्तुमर्हः इत्यादि मुनेस्तस्य कथनम्, तदपि नावलोक्यते पर्याप्तं समवायस्य प्रत्यक्षप्रमाणवेद्यत्वखण्डनाय। यतो युक्त्यानया तन्तुपटाद्योरन्तर्गतस्य सम्बन्धमात्रस्य खण्डनं मुनेस्तस्य विवक्षितमाहोस्वित् समवायस्यैव सम्बन्धस्य विशेषतः ? समवायस्यैव खण्डनमेतया विवक्षितमिति न शक्यं कथमपि वक्तुं तेन, युक्तेरस्याः सम्बन्धान्तरसाधारणत्वात्। तन्तुपटाद्योः सम्बन्धसामान्यखण्डनं विवक्षितमित्यपि न वक्तुं शक्यम्, इह तन्तुषु पट इत्यादिकया हि प्रत्यक्षप्रमित्या तन्तुसम्बद्धतयैव पटस्य विषयीकरणात्। प्रदर्शितपूर्वा सन्दंशन्यायानुगतिरप्यत्र। नैतावदेव, तन्तुपटाद्योः सम्बन्धसामान्यखण्डनस्याभिप्रेतत्वपक्षे तत्र तत्र वेदान्तग्रन्थे पटरूपरूपत्वादिप्रत्यक्षफलकसन्निकर्षविचारविरोधेन सगोत्रकलहोऽपि स्यादेव दुर्वारो मुनेस्तस्य।

यच्च प्रसङ्गेऽस्मिन्नेव मुनिना तेन "समवायः प्रत्यक्षीक्रियते चेत् पटाद्याधेयवत् सम्बद्धतया तथा क्रियते आहोस्विदसम्बद्धया ? यदि सम्बद्धतया प्रत्यक्षीक्रियते तस्य सम्बद्धतायै समवायान्तरस्य, तस्यापि च सम्बद्धतायै ततोऽपि समवायान्तरस्यैवंक्रमेण निस्सीमसमवायधारास्वीकारापत्त्याऽनवस्थादुःस्थितिः। यद्यनवस्थाभियाऽसम्बद्धतयैव प्रत्यक्षीक्रियते समवाय इत्युच्यते, तर्हि पट एव न कथं विनैव समवायमसम्बद्धतया प्रत्यक्षीक्रियमाणः स्वीकर्तव्यः ? किं नाम प्रयोजनं समवायस्वीकारस्येति प्रोक्तं तेन, तदपि नैति सामञ्जस्यम्। यतो हि—"घटवद् भूतलम्", "भूतले घटः" इत्यादिप्रतीतिस्थले घटादिर्भूतलादिसम्बद्धतयैव प्रतीयत इति सर्वानुभवसिद्धम्। एवं सति कपाले घटस्तन्तुषु पट इत्यादिप्रतीतिस्थलेऽपि घटपटादिः सम्बद्धतयैव विषयो भवति नासम्बद्धतयेति मन्तव्यमेव। घटपटादौ सम्बद्धत्वं च तत्र सम्बन्धप्रतियोगित्वमेवेति तादृशप्रतियोगितानिरूपकतया समवायस्य प्रत्यक्षविषयभावो मन्तव्य एव। प्रोक्तानवस्थाभीतिर्नन्वितो हेतोर्नापतति यत् काष्ठादिद्वयमध्यवर्तिनस्तत्सन्धानकारिणो जत्वादेरिव स्वतः सम्बद्धतयैव समवायः प्रोक्तासु प्रतीतिषु भासते, नात्यन्तमसम्बद्धतया, न वा पटादिवत् समवायेन स्वभिन्नेन सम्बद्धतया। एवं स्वीकारे समवायान्तरानभ्युपगमेन न मुनिप्रोक्ताया ज्ञप्तिगताया अप्यनवस्थाया लेशतोऽपि तिष्ठति भीतिः।

तुष्यतु दुर्जनन्यायेनास्वीकृतायामपि समवायस्य प्रत्यक्षविषयतायां न शक्यो वक्तुं प्रमाणसामान्याभावः समवाये। यतो हि "विवादाध्यासित इहप्रत्ययः सम्बन्धपुरस्सरोऽबाधितेह-

प्रत्ययत्वाद् इह कुण्डे वदराणीति प्रत्ययवत्", "जात्यादिगोचरो विशिष्टव्यवहारः सम्बन्धनियतो भावमात्रविषयाबाधितविशिष्टव्यवहारत्वात् सघटं भूतलमिति व्यवहारवत्" इत्यादेरनुमानस्य प्रमाणस्य समवायसाधकस्य जागरूकत्वात्। न चैवंविधेनानुमानेनायुतसिद्धयोः सामान्यतः सम्बन्धमात्रस्य सिद्धिर्न विशेषतः समवायस्येति वाच्यम्, गौरवज्ञानेनेतरबाधनियन्त्रितया सामान्यसामग्र्यापि विशेषधर्मावच्छिन्नविधायिन्याः खल्वनुमितेरनुभवसिद्धतया वह्निव्याप्यधूमवान् पर्वत इति सामान्य-परामर्शस्थले सति महानसीयवह्नीतरवह्न्यभाववान् पर्वत इत्येवं महानसीयवह्नीतरबाधज्ञाने जायमानाया महानसीयवह्निमान् पर्वत इति वह्निविशेषानुमितेरिव विवादाध्यासित इहप्रत्ययः सम्बन्धपुरस्सरत्वव्याप्याबाधितेहप्रत्ययत्ववानिति परामर्शसत्त्वेऽपि विवादाध्यासित इहप्रत्ययो नान्यसम्बन्धपुरस्सर इतीतरबाधबलाद् विवादाध्यासित इहप्रत्ययः समवायसम्बन्धपुरस्सर इत्यनु-मितेः साधुतया भवितुं शक्यत्वात्। एवमेव जात्यादिगोचरो विशिष्टव्यवहारः समवायसम्बन्ध-नियत इति विशेषानुमाननिष्पत्तिरपि शक्यत एव वक्तुम्। तथा च न लक्षणप्रमाणयोरभावाभ्यां समवायासिद्धयुक्तिरप्युपैति युक्ततां प्रोक्ता मुनिना चित्सुखेन।

खण्डनमहापण्डितेन च तत्खण्डखाद्यनिर्मात्रा न विशेषतः स्ववाग्बाणलक्ष्यीकृतोऽसौ सम-वायः "कः सम्बन्धपदार्थः ? समवायादय इति चेत्, सत्यम्" इत्यादि वदता। सामान्यतः सम्बन्धत्वनिर्वचनखण्डनमपि विहाय पराभिमुखीभावं तत्पार्श्वतो गमनमादृत्यैव विहितं तेन। यतो हि "विशेष्यविशेषणभिन्नो विशिष्टबुद्धिविषयः संसर्गः" इत्येव हि संसर्गनिर्वचनं न्यायवैशेषिका-भिमतम्। न चैतदुद्धृत्य खण्डितं खण्डनमहापण्डितेन तेन। नव्यानां तु नैयायिकानां मते स्वतन्त्रपदार्थतयाऽभ्युपगता संसर्गतैव तल्लक्षणं निर्दोषं लघुभूतं च। तस्मान्न सामान्यतः सम्बन्ध-खण्डनमुखेनाऽपि समवायखण्डनं समवतरति युक्तिपथं तद्विहितम्। एवं विहिते प्रधानमल्लनिबर्हणे परमाणुपुञ्जादिवादिनां सर्वेषामन्येषां समवायविरोधिनां मुखमुद्रणं स्वाभाविकम्। समवायस्यास्य रहस्यभूतं स्वरूपमुद्घाटितं मया हिन्दीभाषानिबद्धस्य पदार्थशास्त्रस्य द्वितीये भागे। न्यायवैशेषिका-भ्युदयात् पूर्वं समवायोऽसौ भूताद्वैतवादिनश्चार्वाकदर्शनस्यासीत् सर्वस्वभूत इति प्रतिपादितं मया स्वकीये हिन्दीभाषानिबद्धे चार्वाकदर्शन इत्यास्तामिदानीमेतावदेव॥



# सविकल्पकप्रत्यक्षस्यापि प्रामाण्यम्

श्रीदुर्गाधरझा, अनुसन्धानसंस्थानम्, वा० सं वि० वि० वाराणसी।

जानन्त्येव शास्त्रविचक्षणाः सर्वानुमतस्य प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदेन द्वैविध्यम्। तत्र बौद्धा निर्विकल्पकस्यैव प्रत्यक्षस्य प्रामाण्यमभ्युपगच्छन्ति, कल्पयन्ति च तदनुसारेण कल्पनापोढमभ्रान्तमित्याकारकं प्रत्यक्षलक्षणम्। क्षुद्रकाये निबन्धेऽस्मिन् तन्मतमनूद्य सविकल्पकप्रत्यक्षस्यापि प्रत्यक्षप्रमाणत्वमित्येतन्नैयायिकमतस्थापनाय प्रयतिष्यते।

तेषामयमाशयः—कल्पनाज्ञानं वस्तुनिरपेक्षं वासनामात्रजन्यं च भवति। अतस्तन्नैव प्रमाणपदवीमारोढुमर्हति। सर्वाण्यपि सविकल्पकज्ञानानि कल्पनारूपाणीति न तेषां प्रामाण्यं सम्भवति। अभिलापसंसर्गविषयकं गुणक्रियादिविशेषणकं च सविकल्पकज्ञानम्। अतोऽखिलमेव सविकल्पकज्ञानं कल्पनारूपमेव।

अभिलापसंसर्गयोग्यार्थश्च शब्दव्यवहारविषयोऽर्थः, नहि शब्दार्थो नाम कश्चिद्वास्तविकः पदार्थोऽस्ति, सजातीयेतरव्यावृत्तं स्वलक्षणात्मकमेव वस्तु वास्तविकं भवितुमर्हति। तच्च न सङ्केतसम्बन्धस्मरणमूलकप्रवृत्तिशालिना शब्देन ज्ञातुं शक्यते। अभिलापसंसर्गयोग्यार्थविषयकमेव सविकल्पकं ज्ञानम्। तस्मात् सविकल्पकं ज्ञानं न प्रमा, असदर्थविषयकत्वात्, ईश्वरज्ञानवत्।

किञ्च, प्रत्यक्षप्रमायामिन्द्रियार्थसंनिकर्षजत्वमावश्यकम्। न च सविकल्पकं ज्ञानमिन्द्रियार्थसंनिकर्षजम्, कल्पनाज्ञानस्येन्द्रियार्थसंनिकर्षं विनाप्युत्पत्तेः, सत्त्वेऽपीन्द्रियार्थसंनिकर्षे सङ्केतस्मरणं विना तदनुत्पत्तेश्च। सविकल्पकप्रत्यक्षस्येन्द्रियार्थजन्यत्वे निर्विकल्पकप्रत्यक्षवत्तस्याप्युत्पत्तिरिन्द्रियापातमात्रेणैव भवेत्, न च तथा भवति। तस्मादिन्द्रियार्थसंनिकर्षानपेक्षं सविकल्पकं ज्ञानं नैव प्रमाणपदमारोढुमर्हति। इन्द्रियार्थसंनिकर्षरूपकरणजन्यमेव हि ज्ञानं प्रत्यक्षप्रमात्मकं भवति। करणञ्च तदेव भवति यस्मिन् सत्त्वे कार्योत्पादनाय नान्यत् किञ्चिदपेक्षते। अपेक्षते चेन्द्रियार्थसंनिकर्षानन्तरमपि सविकल्पकज्ञाने शब्दार्थयोः सङ्केतस्मरणम्। तदनन्तरमेव च सविकल्पकज्ञानमुत्पत्स्यते। अतो हेतोरिन्द्रियार्थयोः संनिकर्षः सविकल्पकज्ञानार्थमपेक्षितोऽपि तस्य करणं नैव भवितुमर्हति। तस्मादिन्द्रियार्थसंनिकर्षरूपकरणाजन्यत्वात् सविकल्पकज्ञानं प्रत्यक्षप्रमाणरूपं नैव भवितुमर्हति।

विषये चक्षुःसम्पातानन्तरं प्रथमतो विषयस्य निर्विकल्पात्मकमेव ज्ञानं भवतीति सविकल्पकप्रत्यक्षप्रामाण्यवादिभिरपि स्वीक्रियते। एवं स्थितौ निर्विकल्पकेनैव प्रत्यक्षेण विषयस्य सर्वात्मना परिच्छेदात् किमवशिष्यते यज्ज्ञापकतया सविकल्पकप्रत्यक्षस्य प्रामाण्यं स्वीकार्यं स्यात्। अगृहीतज्ञापकमेव प्रमाणं भवति। तस्माद् गृहीतग्राहित्वान्न सविकल्पकं प्रत्यक्षं प्रमाणमिति।

एतावति विचारे कृते सविकल्पकप्रत्यक्षस्याप्रामाण्ये एतानि चत्वारि प्रयोजकानि प्रतिपन्नानि भवन्ति—(१) सविकल्पप्रत्यक्षस्य कल्पनारूपत्वम्, (२) अभिलापसंसर्गयोग्यार्थविषयकत्वम्, (३) इन्द्रियार्थसंनिकर्षाजन्यत्वम्, (४) गृहीतग्राहित्वं च। एष्वेकैकं प्रयोजकं परीक्ष्य समाधीयते।

१—कल्पनास्तावत् तन्मते पञ्चविधाः—(१) जातिकल्पना, (२) गुणकल्पना, (३) कर्मकल्पना, (४) शब्दकल्पना, (५) द्रव्यकल्पना च।

'अयं घटः' इत्याद्याकारकसविकल्पकज्ञानरूपा प्रतीतिः 'जातिकल्पना'। इयं हि घटत्वाभिन्ने एव घटे घटत्वस्य भेदमारोप्यैव जायते। नहि घटघटत्वयोर्भेदो नाम कश्चिदप्यतिरिक्तः पदार्थः। 'अस्य घटस्येदं घटत्वम्' नैतादृशी काचित् प्रतीतिरस्ति। तेन 'अयं घटः' इत्याद्याकारकं सविकल्पकं प्रत्यक्षमतस्मिन् तत्प्रकारकत्वान्न प्रमाणम्।

२—'रूपवान् घटः' इत्याद्याकारिका सविकल्पकप्रत्यक्षरूपा प्रतीतिः 'गुणकल्पना'। रूपादिभ्यो भिन्नं न किमपि वस्तु घटाद्यात्मकं परमार्थतोऽस्ति। अतो रूपाभिन्ने घटे रूपभेदमारोप्यैवेयं प्रतीतिर्जायते। अत इयमपि प्रतीतिस्तद्वति तत्प्रकारकत्वाभावादप्रमैव।

३—'देवदत्तो गच्छति' इत्याद्याकारिका या प्रतीतिः सैव 'कर्मकल्पना'। इयमपि गुणकल्पनावत् कर्माभिन्ने एव देवदत्ते कर्मभेदमारोप्य जायते। उक्तप्रतीतौ च न देवदत्तादधिकं किमपि वस्तु भासते। अतः कर्मकल्पनात्मकमपि सविकल्पकप्रत्यक्षमप्रमाणमेव।

४—'चैत्रोऽयम्' इत्याद्याकारकविशिष्टज्ञानं संज्ञासंज्ञिविषयकं 'शब्दकल्पना'। चैत्र इत्ययं शब्दः, अयमित्यर्थः, अनयोरभेदानुपपत्त्या तदभेदप्रकारिकोक्तकल्पनाऽप्यप्रमैव।

५—'अयं दण्डी' इत्यादिरूपा कल्पना 'द्रव्यकल्पना'। सापि विभिन्नयोर्दण्डपुरुषयोरभेदं कल्पयित्वैव जायते। अतो भिन्नेऽभेदारोपजन्यत्वादियमप्यप्रमैव।

उक्तकल्पनासु तदभाववति तत्प्रकारकत्वमेवाप्रामाण्यस्य मूलं बौद्धाभिमतम्। कल्पनासु तदभावति तत्प्रकारकत्वे च जातिव्यक्त्योरभेदः, गुणगुणिनोरभेदः, कर्मद्रव्ययोरभेदः, संज्ञासंज्ञिनो-

रभेदः, इदंपदार्थदण्डादिपदार्थयोश्च भेदो मूलम्। किन्तु यथोक्तभेदानां विचारासहत्वात् संज्ञासंज्ञिनोः प्रत्ययस्य, इदंपदार्थदण्डपदार्थयोर्विशिष्टज्ञानस्य भेदसम्बन्धावगाहित्वाच्च उक्तानां कल्पनारूपाणां सविकल्पकप्रत्यक्षाणामप्रामाण्यं बौद्धाभिमतं न समीचीनम्।

तथा—हि 'घटः' इत्याद्याकारिका जातिप्रतीतिश्च घटे घटत्वं विषयीकरोति। घटश्च घटत्वाद्भिन्नः सन् तस्य आश्रयोऽपि। अत उक्तप्रतीतिर्घटत्ववति घटे घटत्वप्रकारिकैवेति घटत्ववति घटत्वप्रकारकत्वादुक्तप्रतीतिः प्रमैव। गुणकल्पनात्मिका रूपवान् घट इत्याद्याकारिका प्रतीतिरपि प्रमैव, गुणगुणिनोर्भिन्नत्वाद् गुणिनश्च गुणाश्रयत्वात्। उक्तकल्पनाया अपि तद्वति तत्प्रकारकत्वाद् न भ्रमरूपत्वं सम्भवति। देवदत्तो गच्छतीत्यादिप्रतीतिरपि क्रियाक्रियावतोर्भेदात् तद्वति तत्प्रकारिकैवेति साऽपि प्रमाणमेव। 'अयं चैत्रः' इत्याद्याकारिका शब्दकल्पनारूपा विशिष्टप्रतीतिरपि प्रमैव, यत उक्तप्रतीतौ भिन्नावेव शब्दार्थौ भिन्नत्वेनैव भासेते। तस्मात्तद्वति तत्प्रकारकत्वादुक्तं विशिष्टज्ञानमपि प्रमाणमेव। अयं दण्डीति प्रतीतिरपि देवदत्ते दण्डवद्भेदमवगाहयन्ती वस्तुतो देवदत्ते भेदेन दण्डमेवावगाहते, तस्मान्न साऽपि भिन्नेऽभेदावगाहिनी। नहि सा प्रतीतिर्देवदत्ते दण्डस्याभेदमवगाहते। तस्मादियमपि प्रतीतिर्नाप्रमा। तस्मात् सविकल्पकप्रत्यक्षस्य कल्पनात्वाभावान्न कल्पनात्वेनाप्रामाण्यम्।

शब्दार्थयोः पारमार्थिकत्वेन शब्दसंसर्गयोग्यार्थापरपर्यायाभिलापसंसर्गयोग्यार्थग्राहकत्वमपि न सविकल्पकप्रत्यक्षमात्रस्याप्रामाण्यसाधनायालम्।

सविकल्पकप्रत्यक्षे शब्दार्थयोः सङ्केतस्यापेक्षा भवतीत्येतावतेन्द्रियार्थसंनिकर्षजन्यत्वं तस्य न निवारयितुं शक्यते। तमसि चक्षुषा घटादेरग्रहणात् तत्रालोकोऽपेक्षत इति न तत्र चक्षुषः कारणता निवर्तते। तस्मात् शब्दार्थयोः सङ्केताधीनमपीन्द्रियार्थसंनिकर्षान्वयव्यतिरेकापन्नं सविकल्पकप्रत्यक्षं नाप्रामाण्यगर्त्ते निपातमर्हति। नैकस्मादेव कारणात् किञ्चित् कार्यमुत्पद्यते। तस्मादयमपि हेतुरहेतुरेव।

सविकल्पकप्रत्यक्षस्य निर्विकल्पकगृहीतवस्तुप्रकाशकत्वमपि फलतो गृहीतग्राहित्वमपि नाप्यप्रामाण्यसाधनाय मनागपि सामर्थ्यमावहति। तद्वति तत्प्रकारिकाया धारावाहिकबुद्धेः प्रामाण्यस्याव्याहतत्वात्। तस्माद् गृहीतग्राहित्वादपि नैव सविकल्पकप्रत्यक्षस्य प्रामाण्यं निवर्तत इति।

यथा तद्भावभावित्वादाद्यविज्ञानमक्षजम् ।
तथा तद्भावभावित्वादुत्तरं ज्ञानमक्षजम् ॥
जातिर्जातिमतो भिन्ना गुणी गुणगणात् पृथक् ।
तथैव तत्प्रतीतेश्च कल्पनोक्तिरवाधिका ॥
क्रिया हि तत्त्वतो भिन्ना भेदेनैव च गृह्यते ।
चलतीत्यादिबोधेषु तत्स्वरूपावभासनात् ॥
तेन क्रियागुणद्रव्यनामजात्युपरञ्जितम् ।
विषयं दर्शयन्नेति विकल्पो नाप्रमाणताम् ॥
क्वचिद् बाधकयोगेन यदि तस्याप्रमाणता ।
निर्विकल्पेऽपि तुल्यासौ द्विचन्द्राद्यवभासिनि ॥
मनोराज्यविकल्पानां काममस्त्वप्रमाणता ।
यथावस्तुप्रवृत्तानां न त्वसावक्षजन्मनाम् ॥

एतानि कतिचनोपसंहारपद्यान्याचार्यजयन्तभट्टोक्तान्युपायनीकृत्य क्षमां सम्प्रार्थ्य च विरमामि ॥

# न्यायेषु तर्कस्वरूपम्

श्रीकृष्णाचार्यवरखेडः, वे० व० सं० म० वि० हैदराबादनगरम् ।

तर्कविद्याप्रवक्तारं व्यासं दत्तमथो गुरून् ।
तत्त्वज्ञाचार्यपर्यन्तान् प्रणम्य प्रेरकान् मम ॥
आलक्ष्याकुलतां तर्के नैकतार्किकगोचराम् ।
कुर्वेऽविवाद्यां सत्तर्कपरीक्षां स्थिरनिर्णयाम् ॥
प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः ।
मानन्यायैश्च तत्सिद्धैर्मीमांसामेयशोधनम् ॥ इति ।

स्मृतेर्मीमांसायास्तर्कमूलत्वात्तत्वनिर्णायकतया तर्कशास्त्राश्रयणं सकलदार्शनिकैः शरणीकरणीयमेव भवतीति विभाव्य सत्तर्क एवाधुना तर्काभासादितो व्यावृत्ततया परीक्ष्यते ।

तर्कस्त्वप्रयोजकत्वशङ्कानिवर्तकः सन् प्रमाणानुग्राहको भवतीति सकलतार्किकसंमतो विषयः । अतश्चैतत्तर्कप्रयोजनादिकमत्र विचार्यते । तत्रायं क्रमेणाकाङ्क्षितो विषयः । यथा का नामाप्रयोजकत्वशङ्का ? कथं च तया प्रमाणपरिमर्दः ? कुतश्च सा तर्कनिवर्त्या ? तस्याश्च निवृत्तौ कीदृशं प्रमाणमनुगृहीतं भवतीति ।

अथ किंस्वरूपस्तर्कः ? कतिविधश्च सः ? स च किं प्रमारूपः, उताप्रमारूपः ? प्रमारूपत्वे हि तर्कस्य किं करणम् ? किं च फलम् ? इतीदमत्र सविस्तरं विवेचनीयतया समुद्दिष्टम् ।

"पक्षे हेतुरस्तु साध्यं मास्तु" इत्याकारिका अप्रयोजकत्वशङ्का प्रमाणपरिपुष्टा चेत् पक्षे साध्याभावकोटिमुन्नयति । सेयमाशङ्का पुनर्द्वेधा संभवति । पक्षतदितरसाधारण्येन सधूमोऽपि कश्चिन्निरग्निकोऽस्त्विति वा, समबलस्य प्रबलस्य वा साध्याभावप्रमाणस्याभिमानेन पक्ष एव सधूमो निरग्निकोऽस्त्विति वा । तत्राद्या व्यभिचारशङ्कारूपा अप्रयोजकत्वशङ्कालिङ्गपरामर्शात् प्राचीना । द्वितीया तु प्रतिप्रमाणशङ्कारूपा तस्मादर्वाचीना । अत्र यद्यपि द्वितीया हेतुमति साध्याभावशङ्का साध्याभाववति हेतुसत्त्वरूपव्यभिचारशङ्काकारतया फलति, तथाप्याद्या पार्थिवत्वलोहलेख्यत्वादौ भूयोदर्शनादिके सत्यपि व्यभिचारदर्शनात्तन्निमित्तिका स्वारसिकी व्यभिचारशङ्का पक्षतदितरसाधारणी च । द्वितीया पुनः परामर्शरूपविशेषदर्शनात् स्वरसवाहिन्या निरस्तत्वात् प्रतिप्रमाणशङ्कानिमित्तिका बलादुत्पाद्यत्वेनाधेया पक्षसाधारणी चेति भेदः ।

द्विविधापि तदाशङ्का तर्केण निवर्त्यते। केवलान्वयिसाध्यकस्थले साध्याभावाप्रसिद्धेरीदृश-शङ्काया एवानुदयात्तत्र तर्कस्योपयोगो न स्यादित्याशङ्कायां सर्वस्याप्यनुमानस्य व्यतिरेकिधर्मत्व-व्यवस्थापनद्वारा तर्कस्योपयोगित्वं तत्रापि विचार्यते। "ऊहापरपर्यायस्तर्कः स्वगतोहत्वाख्यया जात्यैवाप्रयोजकत्वशङ्कां निरस्यति" इति मणिकण्ठादयः कथयन्ति। वस्तुतस्तु विरोधिविषय-त्वेनैव तर्कः शङ्कानिवर्तको बोध्यः।

तथा हि—शङ्का अन्यथोपपत्तिरूपा। येन साध्येन विनापि हेतोः पक्षतदितरसाधारण्येन संभावनां विषयीकुरुते। तर्कस्तु पुनः पक्षतदितरसाधारण्येन वा पक्ष एव वा अन्यथानुपपत्ति-प्रमापक इति विषयकृतविरोधेन शङ्कानिवर्तको भवति। तर्कस्य व्याघातपर्यन्तत्वाच्छङ्काप्रतिप्रमाणा-भासाभ्यां प्राबल्यम्। "व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः" इत्युदयनोक्त्यापि तर्कस्य व्याघा-तावधिशङ्कावधित्वाद्व्याघातावधित्वं सिद्ध्यति।

निवर्त्यभेदान्निवर्तकस्तर्कोऽपि द्वेधा। तत्राद्यस्तर्को व्याप्तिविशिष्टलिङ्गज्ञानरूपस्य करणस्य, व्यभिचारशङ्कनिराकरणपूर्वकव्याप्तिनिश्चयोत्पादनेन संपादक इति बोध्यम्। द्वितीयस्तु निष्पन्नेन तर्केण करणेन प्रतिप्रमाणशङ्कानिरासार्थमपेक्षितत्वेन फलोपकारकत्वादनुमानानामनुग्राहकः। क्वचित् प्रत्यक्षादावनुग्राहको भवति, तत्र करणनिष्पादकत्वासंभवात्। एवं सर्वत्रैवानुग्राहको भवतीति नैव नियमः। तथा हि—यत्र पुनः सर्वथा शङ्काया अभावस्तत्र शङ्कानिवर्तकस्य तर्कस्य अभावादननुग्राहकोऽपि तर्कस्तादृशस्थले भवति। प्रतिप्रमाणस्य व्यभिचारस्य वा शङ्कायां करणनिष्पादनेनानुग्राहको निष्पन्नस्य करणस्य सहकारितया वोपकारको भवति।

क्वचित् साक्षात्तर्केण निषेधमुखेनैव साध्यसाधनं दृष्टम्, यथा च अद्रिरग्निमान्न वेति विप्रतिपत्तौ पर्वतो वह्निमान् धूमवत्त्वादिति विधिमुखेन असाधयित्वैव यदि निरग्निकः स्यात्तर्हि निर्धूमः स्यान्न चायं निर्धूमस्तस्मान्न निरग्निक इति विपर्ययपर्यवसायितर्कबलात् पर्वते निरग्निकत्वाभावः सिध्यति। क्वचिच्च तस्मान्न निरग्निक इति प्रमायामुद्दिष्टायां तर्कोऽयं शङ्कानिवर्तकतयाऽनुग्राहको भवति। निर्धूमत्वेन अङ्गीकर्तव्य इति प्रमायां व्याप्तिप्रमायां वा साध्यायां स्वतन्त्रः प्रमासाधकः प्रमाणरूपोऽपि भवतीति द्रष्टव्यम्। यथा हि प्रमाणसंप्लवे द्वितीयं प्रमाणभूतमेव ज्ञानं प्रथम-प्रमाणदार्ढ्यहेतुत्वेन प्रथमप्रमाणानुग्राहकम्, तथा तर्कोऽपि स्वयं प्रमाणं सन्नेव प्रमाणस्यानुग्राहकः। साधकं बाधकं वा प्रमाणमेव हि शङ्कानिवर्तकं भवति, न त्वप्रमाणम्। तर्कज्ञानस्य भ्रमत्वे हि प्रमाणानुग्राहकत्वं न स्यात्। व्याप्तिभ्रमजन्यानुमितेरपि भ्रमत्वमेव दृष्टम्। तथा योग्यताभ्रमजन्यस्य

शाब्दज्ञानस्यापि भ्रमत्वं सर्वाभिमतम्। एवं धारावाहिभ्रमस्थले द्वितीयानुगृहीतस्य प्रथमस्यापि भ्रमत्वमेव स्पष्टम्। तथैवाप्रमात्मकतर्कानुगृहीतस्यानुमानस्याप्यप्रमात्वमेव स्यात्।

प्रकारान्तरेण तर्कोपयोगं प्रदर्शयित्वा तर्कस्याप्रामाण्यमपि न दोषायेति मणिकारादयः कथयन्ति। "नापि परामर्शस्य तर्को व्यापारः, विषयपरिशोधकस्य व्याप्तिग्राहकस्य वा तस्य तदजन्यत्वात्" इति परामर्शवादान्ते मणिकारोक्तिमनुसृत्य विषयपरिशोधने व्याप्तिग्रहे च तर्कस्योपयोगः परीक्ष्यः।

अथ विषयपरिशोधने तर्कस्योपयोग इति पक्षे किमुदयनोक्तदिशा अनिष्टप्रसञ्जनत्वमात्रेण, यद्वा वर्धमानोपाध्यायोक्तदिशा साध्याभावसन्देहनिवर्तनेन, किं वा साध्याभावसन्देहजन्यसाध्याभावजिज्ञासानिवर्तनेन, अथवा साध्याभावसन्देहजन्यसाध्यजिज्ञासोज्जीवनेन विषयपरिशोधनं तर्कस्य साध्यम्। नाद्यः, अनिष्टप्रसञ्जनत्वमात्रेण तर्कस्योपयोगे शङ्काभावेऽपि तर्कप्रसङ्गः स्यात्। न द्वितीयः, साध्याभावसंदेहस्य सन्देहजन्यजिज्ञासयैव निवृत्तेः; एवं निर्धूमत्वज्ञानस्य तर्कस्य निरग्निकत्वसन्देहेन सह विषयकृतविरोधाभावेन तदनिवर्तकत्वात्। अथ निर्धूमत्वस्य साग्निकत्वनिरग्निकत्वरूपकोटिद्वयसाधारण्येन निधूर्मत्वज्ञानरूपस्य तर्कस्य साध्याभावसन्देहोपोद्बलकत्वमेव, तर्कस्य अन्यथाऽनुपपत्तिविषयकत्वेऽन्यथोपपत्तिविषयकस्य सन्देहस्य तर्केण निवृत्तिर्विषयकृतविरोधद्वारा संभवत्येवेति तत्पक्षे तर्कस्यान्यथानुपपत्तिविषयकत्वं समर्थनीयम्। तथाहि—एतन्मते धूमस्य वह्न्यन्यथोपपन्नत्वं विषयीकुर्वन्त्याः शङ्काया निर्धूमत्वापादनरूपेण तर्केण भिन्नविषयकस्य साध्यसंदेहस्य निवृत्तिस्तु संभाव्यत एव, अन्यथोपपत्तिशङ्कानिवृत्त्या ह्यन्यथोपपत्तिशङ्काहितः साध्यसंदेहोऽपि निवर्तत इति। तर्कस्य अन्यथानुपपत्त्यविषयकत्वे तर्कजन्यनिर्धूमत्वज्ञानं किं स्वारसिकसंदेहनिवर्तनेनोपयुज्यते, अथवा आहितसंदेहनिवर्तनेन ? नाद्यः, स्वारसिकसंदेहस्यैवानुदयात्तन्निवृत्तिः सुतरामप्रसक्ता। नापि द्वितीयः, आहितसंदेहस्य विरोधिविषयत्वाभावात्। तथा हि–वह्निव्याप्ये धूमे दृष्टे न स्वारसिको वह्न्यभावः सम्भवति। अतस्तन्निवर्तकत्वं तर्कजन्यनिर्धूमत्वज्ञानस्य न सम्भवति। एवं वह्निव्याप्यत्वरूपविशेषदर्शने सति स्वारसिकस्य वह्न्यभावसंदेहस्यासंभवेऽपि प्रतिप्रमाणाहिता साध्याभावशङ्का युक्तेत्यपि वक्तुमशक्यम्, प्रतिप्रमाणेऽनन्यथासिद्धे जाग्रति तर्कसहस्रेणापि तदाहितशङ्कानिवृत्त्यसंभवात्। प्रतिप्रमाणं साध्याभावविषयम्, तर्कज्ञानं तु निर्धूमत्वविषयमिति विरोधिविषयकत्वाभावात्तर्कादेव प्रतिप्रमाणस्यान्यथासिद्धिरित्यशक्यसम्भवम्।

अथ साध्याभावजिज्ञासानिवर्तनेन विषयपरिशोधनं तर्कसाध्यमिति तृतीयपक्षोऽप्ययुक्ततरः। तथा हि—जिज्ञासा हि ज्ञानेच्छा, तर्कस्तु निर्धूमत्वज्ञानम्। साध्याभावजिज्ञासायां निर्धूमत्व-

ज्ञाननिवर्त्यतावच्छेदकीभूतधर्माभावान्तसाध्याभावजिज्ञासानिवर्तकत्वं तर्कस्य। तथा च ज्ञानस्येच्छानिवर्तकत्वं त्वनिष्टतावच्छेदकधर्मप्रकारकतयैव संभवति। तत्र अनिष्टतावच्छेदकधर्मस्त्वहितत्वविघ्नत्वकण्टकत्वादिः। तदभावेऽपि ज्ञानस्येच्छानिवर्तकत्वे प्रमेयत्वादिप्रकारकमपि विषादिज्ञानं विषभक्षणेच्छानिवर्तकं स्यात्।

अथ तर्कस्य अप्रमात्वपक्षे निर्धूमत्वज्ञानं तर्कः। स च अनिष्टां निर्धूमतां तदापादकत्वेन अनिष्टां निरग्नितां वा अनिष्टतावच्छेदकधर्मवत्तया नोल्लिखति। येन पुनस्तर्कस्य वह्नित्वेन वह्न्यवगुल्लेखिज्ञानस्य प्रमात्वमेव स्यात्। अत एव च तर्कस्य अप्रमात्वपक्षे साध्याभावजिज्ञासानिवर्तकत्वं नैव संभवतीति बोध्यम्। अथ यदि तर्कस्य अनिष्टतावच्छेदकधर्मप्रकारकत्वमस्त्येवेत्युच्यते, तर्हि तर्कस्य वह्नित्वेन वह्न्यवगाहिज्ञानादेरिव प्रामाण्यमेव सिद्ध्यति। ततश्चानिष्टतावच्छेदकधर्मवत्तया अनुल्लिखितं निर्धूमत्वं पक्षनिष्ठतयैव तर्के समुल्लिख्यते। तेन निरग्निकत्वजिज्ञासानिवर्तकत्वं न स्यादेव तर्कस्य। निर्धूमत्वं विषयीकुर्वतस्तर्कस्य धूमवत्त्वावगाहिप्रत्यक्षविरुद्धत्वादेव अविद्यमाननिर्धूमत्वावगाहित्वे भ्रमात्मकत्वमेव दृश्यत इति तर्को न प्रमा। इत्याशङ्कायामुच्यते—

निर्धूमत्वज्ञानेन निरग्निकत्वेच्छैव निवर्त्या भवेन्न तु निरग्निकत्वजिज्ञासा निवर्त्या। प्रत्यक्षप्रमाणविरुद्धं यन्निर्धूमत्वं तदापादकत्वेनैव निरग्निकत्वमनिष्टम्। न तु निरग्निकत्वज्ञानमनिष्टम्, अनिष्टतावच्छेदकप्रकारकं हि ज्ञानमनिष्टविषयेच्छां निवर्तयति। तथा च निरग्निकत्वेच्छैव निवर्त्या, न तु निरग्निकत्वजिज्ञासा। जिज्ञास्यभूतस्य निरग्निकत्वज्ञानस्य आरोपरूपत्वेन नानिष्टत्वं संभवति।

अथ भ्रमात्मकत्वमेवास्तु तर्कस्य, अनिष्टत्वं पुनस्तस्य अनिष्टविषयकत्वप्रयुक्तमस्तु। येन चास्य तर्कस्य जिज्ञासानिवर्तकत्वे न काचित् क्षतिः। इति चेन्न, इच्छानिवर्तकमनिष्टत्वं दुःखतत्साधनान्यतररूपं न त्वप्रामाणिकत्वरूपं न वा अप्रमाणिकापादनरूपम्, येन निर्धूमत्वमप्रामाणिकं निरग्निकत्वं चाप्रामाणिकापादकमिति द्वयमप्यनिष्टं स्यात्। आप्तवाक्यादिना स्वस्य धनाभाववत्तारूपं दारिद्र्यं निश्चितवतः पुरुषस्य धनस्य स्वस्मिन्नप्रामाणिकत्वनिश्चय उदेति। ततश्च धनस्याप्यनिष्टत्वाभावादेवौत्सुक्यरूपेच्छाविषयत्वमव्याहतमित्यप्रमाणिकस्यापीष्टत्वमेव व्यवहारतः सिद्धम्। तथा चाप्रामाणिकनिर्धूमत्वापादके निरग्निकत्वेऽङ्गीकारानर्हत्वरूपशब्दव्यवहारसाम्यमात्रेणानिष्टत्वं वक्तुं नेष्टम्। यथा दुःखं दुःखसाधनं वा अनिष्टमङ्गीकारानर्हं च, तथाऽप्रामाणिकं तदापादकमप्य-

ङ्गीकारानर्हमिति व्यवहारेणाप्रामाणिके तदापादके च अङ्गीकारानर्हत्वमेव लभ्यते। तच्च अप्रामाणिकादौ भासमानमङ्गीकारानर्हत्वमिच्छानिवर्तकत्वविशिष्टानिष्टत्वापरपर्यायं न।

निर्धूमत्वादिज्ञानेन हि साध्यानुमितिप्रतिबन्धकं निरस्यम्। साध्याभावजिज्ञासा तु न साध्यानुमितिप्रतिबन्धिका। अतस्तादृशतर्कद्वारा साध्याभावजिज्ञासानिरासायासो व्यर्थ एव। साध्याभावजिज्ञासा हि साध्याभावविषयकज्ञानविषयिणी। नहि साध्याभावविषयिविषयकमपि साध्यज्ञानविरोधि। तथात्वे हि पक्षे साध्याभावज्ञानमिति ज्ञानेनाप्यनुमितिः प्रतिबध्येत, साध्याभावज्ञानविषयकज्ञानस्यापि स्वविषयद्वारा ज्ञानविषयत्वात्।

मणिकण्ठस्तु साध्याभावमात्रविषयकजिज्ञासा ह्यनुमितिप्रतिबन्धिका, न तु साध्यतदभावोभयविषया जिज्ञासेत्याह। तत्रोच्यते—संशयेन चोभयकोटिकैव जिज्ञासा जायते, न तु साध्याभावमात्रकोटिका जिज्ञासा, तस्मिन् काले साध्याभावमात्रजिज्ञासोत्पत्तौ कारणाभावात् किं तन्निवर्तकेन तर्केण। तत्र साध्याभावमात्रजिज्ञासाया अपि साध्याभावजिज्ञासाया इव प्रतिबन्धकत्वाभावो बोध्यः।

अथ साध्याभावसंशयजन्यसाध्यजिज्ञासोज्जीवकत्वेन तर्कस्योपयोग इति चतुर्थमपि मतमयुक्तम्, निर्धूमत्वविषयस्य तर्कस्य भिन्नविषयत्वेन अग्निविषयकजिज्ञासोज्जीवकत्वायोगात्। भ्रमात्मकत्वेन स्वीकृतस्य तर्कस्य विषयपरिशोधकत्वेनोपयोग इति निरस्तं वेदितव्यम्।

एतेन द्वितीयस्तर्कस्य व्याप्तिग्रहोपयोगित्वपक्षोऽपि तत एव निवृत्तो द्रष्टव्यः। यथा—धूमत्वज्ञानं धूमस्य निरग्निकत्वरूपसाध्याभावसामानाधिकरण्यरूपव्यभिचारज्ञाननिवृत्तिद्वारा (तु विरोधिविषयकत्वेनैव) अव्यभिचरितसामानाधिकरण्यरूपव्याप्तिग्रहोपयोगीति साधनीयम्। ज्ञानस्य व्यभिचारज्ञाननिवर्तकत्वं तु विरोधिविषयकत्वेनैव। न च निर्धूमत्वज्ञानं साध्याभावसामानाधिकरण्यविरोधिविषयकम्, येन व्याप्तिग्रहोपयोगि स्यात्। अतो निर्धूमत्वज्ञानस्य विषयकृतविरोधाभावादारोपत्वेन ज्ञातत्वाच्च निरग्निकोऽस्त्विति शङ्कां प्रत्यविरोधित्वात्।

अत एव तर्कस्य पूर्वोक्तदिशा विपरीतशङ्कानिरसनद्वारेणैवानुग्राहकत्वम्, न तूदयनरीत्या अनिष्टप्रसञ्जकत्वादिना, तन्मते विषयकृतविरोधाभावात्।

अथ किंस्वरूपो हि तर्कोऽप्रयोजकत्वशङ्कानिवर्तक इतीदं विचारयामः। तत्र हि न्यायसूत्रम्—"अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" इति। तेन हि तत्त्व-

ज्ञानहेतुभूता अविज्ञाततत्त्वविषयकार्थसंबन्धिनी कारणोपपत्तिरूहस्तर्क इत्यूहरूपत्वं तर्कस्य व्यवस्थाप्यते ।

अत्र न्यायमञ्जर्यां तत्त्वज्ञानार्थत्वोक्तिप्रयुक्तं तर्कस्य स्वरूपतो प्रमात्वं कल्प्यते । नहि प्रमात्मकस्य प्रमाणान्तरानुग्राहकत्वं न संभवतीति नियमः, प्रमाणपरम्परासु द्वितीयप्रमाणस्य प्रथमप्रमाणं प्रति दार्ढ्यसंपादनद्वारा अनुग्राहकत्वस्य दर्शनात् । स्मृतौ हि—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥

इत्युक्तदिशा तर्कस्यानुमानरूपत्वमेव ज्ञायते । अथ कापिलास्तर्कं बुद्धिधर्ममाहुः—"उक्त्या प्रयोगनिरूपणमूहः" इति । स च प्रमारूप एव । प्रमाणसंदेहान्तरालवर्ती तु तर्कोऽत्र न्यायसूत्रे गदित इति न्यायमञ्जर्यां तर्कस्य सांख्यमीमांसकाभिमतोहादतिरिक्तप्रमास्वरूपत्वमुक्तम् ।

वात्स्यायनभाष्ये हि यत्र कारणमनुपपद्यमानं पश्यति तन्नानुजानाति सोऽयमेवंलक्षण ऊहस्तर्क इति तर्कलक्षणमुपन्यस्तम् । तथा हि—तर्कोऽनवधारणस्वरूप इति न तत्त्वज्ञानरूप इति चोक्तम् ।

एतदनुरोधेनैव न्यायसूत्रवृत्तौ विश्वनाथः प्राह—कारणोपपत्तित ऊह इति तर्कलक्षणं सूत्रकाराभिमतम् । कारणं व्याप्यं तस्योपपत्तिरारोपः । तस्माद्य ऊह आरोपः, अर्थाद् व्यापकस्य । तथा च व्यापकाभाववत्त्वेन निर्णीते व्याप्यस्याहार्यारोपाद्यो व्यापकस्याहार्यारोपः स तर्क इति तर्कलक्षणं पर्यवसन्नम् । यथा निर्वह्नित्वारोपान्निर्धूमत्वारोपः । यदि निर्वह्निः स्यात्तर्हि निर्धूमः स्यादिति, न चायं निर्धूमः, तस्मान्न निर्वह्निरिति विपर्ययपर्यवसायी तर्कः । ह्रदो निर्वह्निः स्याद्यदि निर्धूमः स्यादित्यादेस्तर्कत्वव्यावृत्तये व्यापकाभाववत्त्वेन निर्णीत इति उद्देश्योल्लेखः । यदि निर्वह्निः स्यात्तर्ह्यद्रव्यं स्यादित्यादेर्वारणाय व्याप्यस्याहार्यारोप इत्युक्तम् । व्याप्यारोपाधीनो हि व्यापकारोप इति व्याप्यस्याहार्यारोपाद् व्यापकस्याहार्यारोप इत्युक्तम् । तत्र चाप्रयोजकत्वशङ्कानिवर्तकतया तर्कस्योपयोगः । यत्र पुनरप्रयोजकत्वशङ्कानुदयस्तत्र तर्कोऽनपेक्षित एव । अयं च व्यापकाहार्यारोपो यथा सर्वथाऽप्रयोजकत्वशङ्काया न निवर्तकः संभवति, तथा पूर्वमेव प्रदर्शितम् ।

केचित्तु ऊह इत्येव तर्कलक्षणम् । ऊहत्वं च बुद्धिगतो जातिविशेषस्तर्कयामीत्यनुभवसिद्ध इत्याहुः ।

## न्यायेषु तर्कस्वरूपम्

अथ वैशेषिकसूत्रेषु प्रशस्तपादीये भाष्ये बुद्धिविभागावसरे तर्कस्यानुल्लेखो न्यायकन्दलीकारादिभिरधिक्षिप्यते । तत्र तर्कस्य अनुमानान्तर्भूतत्वेन सूत्रकृता पृथगनुल्लिखितोऽपि स्यात् । तर्कस्य स्वत एव प्रमाबहिर्भूतत्वं परिकल्प्य अविद्यासु तर्कस्यापरिगणनमधिक्षेपानर्हमेव । आचार्यारूढस्य विपर्ययभेदमङ्गीकृत्यापि तर्कमनङ्गीकुर्वतां तार्किकाणां तुरगारूढस्य तुरगविस्मरणमिवायुक्ततर्कविस्मरणमिति भाष्यकारमधिचिक्षिपुरित्यादितार्किकवचनैरनङ्गीकारचिन्ता व्यज्यते ।

अथ मणिकण्ठोक्तदिशा षोढा विकल्पितं तर्कलक्षणं परीक्ष्यते । तथा हि—

(१) व्याप्यारोपेण व्यापकारोपस्तर्कः । स च प्रमाणानुग्राहक एव न तु प्रमाणम् । तदेतत् प्रथमं कैश्चित्तार्किकैः पुरस्कृतलक्षणमयुक्तमेव, बाष्पे धूमभ्रमजन्यभ्रमरूपानुमितावतिव्याप्तेः ।

(२) अथ यदि व्याप्यारोपेण व्यापकप्रसञ्जनं तर्क इत्युच्यते, तथापि प्रसञ्जनस्य तर्कत्वे आत्माश्रयः । आरोपत्वे पुनर्बाष्पाधिष्ठानकधूमभ्रमजन्यभ्रमरूपानुमितावतिव्याप्तिस्तदवस्था ।

(३) एवं तर्हि व्यापकाभाववत्तया ज्ञाते व्याप्यारोपाद् व्यापकारोप इति मतम् । ततश्च अनुमित्याभासे नातिव्याप्तिः । साध्याभाववत्तानिश्चयेऽनुमित्यनुदयस्य दृष्टत्वात् । तदेवं साध्यस्य व्यापकत्वाव्यापकाभाववत्तानिश्चयेऽनुमित्याभासस्याप्यसंभवो द्रष्टव्यः । तर्कस्तु व्यापकीभूतनिर्धूमत्वाभाववत्तया ज्ञात एव भवतीत्यप्यसमञ्जसम् । यत्राशङ्खं शङ्खतयाऽवगम्य पीतोऽयं शङ्खो न तु शुक्ल इति प्रत्यक्षभ्रमानन्तरं शङ्खत्वाच्छुक्ल इत्यनुमिनोति, तस्यामनुमितावतिव्याप्तेः ।

(४) अथ व्यापकाभाववत्तया ज्ञाते इत्यस्य व्यापकाभाववत्तया अवधृते व्याप्यारोपेण व्यापकारोपस्तर्क इति तर्कलक्षणं कैश्चित्तार्किकैः प्रस्तूयते । तदप्ययुक्तम्, पीतोऽयं शङ्खो न तु शुक्ल इति प्रत्यक्षभ्रमानन्तरं जायमानायां हि शुक्लत्वानुमितौ शुक्लत्वाभावस्यावधारणं नास्ति । अत्र शुक्लत्वाभावग्राहकप्रत्यक्षस्यान्यथासिद्धिमुपजीव्यैवानुमितिप्रवृत्तिरिति चेन्न, तर्केऽपि निर्धूमत्वरूपव्यापकाभावस्यावधृतत्वेन निर्धूमत्वारोपस्यासंभवात् ।

(५) आहार्योऽयमारोपः स च बाधितेऽपि भवतीति चेन्न, पुरुषत्वाभावनिश्चयानन्तरं प्रत्यक्षादाहार्यव्याप्यकरचरणाद्यारोपाजन्ये प्रत्यक्षे आहार्यपुरुषारोपेऽतिव्याप्तेः ।

(६) नापि वर्धमानोक्तदिशा अन्यवस्थिताभ्युपगम्यमानकोट्युपाधिकानिष्टसत्त्वप्रतिसन्धानं तर्कः । निरग्निकत्वस्य अन्यवस्थितत्वं हि संशयो विपर्ययो वा ? न द्वयमपि । यद्यर्थशिरस्कनिरग्निकत्वज्ञानं प्रमा इत्येवेह समर्थ्यते, ततश्च यद्यर्थशिरस्कं निरग्निकत्वज्ञानमन्यवस्थितं न भवति । एवं प्रतिसंधानमपि संशयो विपर्ययो वा ? न द्वयमपि । तर्हि स्यादित्यर्थशिरस्कनिर्धू-

मत्वज्ञानं प्रमेत्येव चाधुना समर्थ्यते । तथा हि—"व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः" इत्युक्तिमनुसृत्य "सधूमोऽपि पर्वतो निर्धूमोऽस्तु" इति शङ्का हि द्वेधा संभवति—

१—निरग्निकत्वं प्रति निर्धूमत्वे व्यापकत्वस्यैवाभावेन वा,

२—सत्यपि व्यापकत्वे पक्षे निर्धूमत्वस्यापि सत्त्वेन वा ।

तत्राद्या शङ्का निर्धूमत्वस्य व्यापकत्वप्रदर्शनेन तर्केण निरस्यते । यथा यदि निरग्निकस्तर्हि निर्धूम इति, यदि गवयो गोसदृशस्तर्हि गौरपि गवयसदृशी । यदि जीवन् गृहे नास्ति तर्हि बहिरस्ति । यदि धूमस्तर्हि वह्निरित्यादौ यदितर्ह्योः स्वसमभिव्याहृतपदार्थेऽन्यथानुपपत्तिरूपव्याप्ति-बोधकत्वस्य व्युत्पत्तिसिद्धत्वाद् यदितर्हिघटितेन तर्केण निर्धूमत्वस्य व्यापकत्वं समर्थितम् । यदियुक्तेन स्याच्छब्देन स्वसमभिव्याहृतपदबोध्यनिरग्निकत्वस्य पक्षे पराभ्युपगममात्रं बोध्यते । तथा तर्हियुक्तेनापि स्याच्छब्देन निर्धूमत्वस्य पक्षे वृत्तित्वं बोध्यते । विपर्ययपर्यवसायिनि तर्के ईदृश्येव व्युत्पत्तिः ।

"यद्यतिथिरागच्छेत्तर्हि भोजयितव्यम्" इति तु संभावनामात्रम्, न तु तर्क इति तु सर्वसम्मतम् । अत्र विपर्ययपर्यवसानस्यानुपलम्भान्नायं तर्कः ।

अथ तर्कस्य प्रमात्मकत्वमङ्गीकुर्वतां लक्षणमुपन्यस्यते—

( ७ ) आपाद्येनापादकस्यापादानं तर्कः । यथा—यदि निर्वह्निः स्यात्तर्हि निर्धूमः स्यादिति तर्कोऽनुमानमेव । अत्रापाद्यं साध्यम् । आपादकं साधनम् । नन्वापादकमेव लिङ्गम् । आपाद्यं लिङ्गी । इति चेद्धेतोरापादकस्य असिद्धिः । एवं साध्यस्य लिङ्गिनः पक्षवृत्तित्वं बाधितम् । साध्यस्य पक्षवृत्तित्वसिद्धौ च अपसिद्धान्तः । आपाद्याभावसिषाधयिषया हि तर्कप्रयोगप्रवृत्तिर्दृष्टा । इतीत्थं तर्कस्यानुमानत्वे दोषकलुषता स्यादिति चेन्न, साधनरूपस्यैव लिङ्गस्य असिद्धिर्दोषः, न त्वापादकरूपस्य लिङ्गस्य; आपादकत्वव्याघातात् । यद्ध्यापादकं तत्पराभ्युपगतमेव भवति । तेन ह्यापादकत्वं नाम । व्याप्यस्य पक्षनिष्ठत्वेन पराभ्युपगमनिमित्तकज्ञानविषयव्यतिरेक-ज्ञानभञ्जनीयत्वम्, कुलीरस्येवापादकस्य स्वप्रसूतयुक्त्या प्रतिहतत्वात् । भज्यते हि निरग्निकत्वं स्वाभ्युपगतनिमित्तज्ञानं प्रति विषयस्य निर्धूमत्वस्य व्यतिरेकरूपसधूमत्वज्ञानेन । एतदनङ्गीकारे च विपर्ययपर्यवसानं नोपपद्येत । विपर्ययपर्यवसानाभावे च सम्भावनामात्रत्वं स्यात्, न पुनस्तर्कत्वम् । तथाहि प्रकृते विपर्ययपर्यवसानम्—न चायं निर्धूमस्तस्मान्न निरग्निक इति ।

## न्यायेषु तर्कस्वरूपम्

तर्को हि पञ्चाङ्गविशिष्टः प्रसिद्धः । तथाहि—

> व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये ।
> अनिष्टाननुकूलत्वमिति तर्काङ्गपञ्चकम् ॥

व्याप्त्यादिरूपपञ्चान्यतमाङ्गविकलो हि तर्को भवति, तथा प्रकृतेऽपि प्रत्यङ्गसाकल्यं द्रष्टव्यम् । अत्र च निरग्निकत्वमापादकत्वेनोपन्यस्तम्, न तु साधनत्वेन साधनत्वेनोपन्यासे पुनरापादकस्याकारो यद्यद्यशिरस्को निरग्निकत्वादित्येव स्यात्, न पुनर्यदि निरग्निकः स्यादिति ।

एवं साध्यरूपस्यैव लिङ्गिनो बाधो दोषः, न त्वापाद्यरूपस्य लिङ्गिनः । आपाद्यं प्रति बाधस्य अदोषत्वं च स्वरूपत एवास्ति । आपाद्यमनिष्टमेव भवति । तत्र प्रमाणबाध एवानिष्टत्वम् । तथा च आपाद्यत्वं नाम आपादकाभिमतभङ्गकज्ञानविषयव्यतिरेकप्रतियोगित्वम् । न चात्र निर्धूमत्वं साध्यम् । तथात्वे हि तर्हीति स्यादिति च न स्यात्, किन्तु निर्धूमोऽयमिति स्यात् । न च निर्धूमोऽयमिति ज्ञानस्य यावान् विषयस्तावानेव तर्हि निर्धूमः स्यादित्यस्यापि विषयः, अधिकस्य तर्हि स्यादित्यर्थयोरप्युल्लेखात् ।

अत एव नापसिद्धान्तः । स हि सिद्धान्तविरुद्धसाधने भवति, न त्वापादने । तस्मात् प्रसङ्गरूपानुमानेऽसिद्धिबाधापसिद्धान्ता भूषणान्येव, न तु दूषणानि । अत एवोक्तं साधनानुमानवैधर्म्यादेवास्य प्रसङ्गानुमानत्वम् । दृश्यते हि साधनानुमानेष्वन्वयव्यतिरेक्यादिना अन्योन्यं वैधर्म्यम् । तेष्ववान्तरवैधर्म्येऽपि व्याप्तिबलेन गमकत्वादनुमानत्वं चेत्तर्केऽपि समानम् ।

नन्वेवं बाधादेरदोषत्वे कथं तस्य प्रामाण्यम्? इति चेदुच्यते—'पर्वतो निर्धूमः स्यान्निरग्निकश्चेत्' इत्येवमुक्तौ पर्वतो निर्धूम इति फलम् । तादृशफलस्य बाधितविषयकस्याप्रमात्वान्निरग्निकत्वज्ञानस्य च करणत्वादप्रमाजनकस्यासिद्धविषयस्य स्वयं भ्रमरूपस्य च प्रमाकरणत्वरूपं प्रामाण्यं कथमिति शङ्कायां चेदमुच्यते—नैवं फलकरणभावः, किन्त्वन्यथैव । तत्र फलीभूतं करणरूपं च ज्ञानमुभयं प्रमारूपमेव । अत्र निरग्निकत्वं प्रति निर्धूमत्वस्य व्यापकत्वं लिङ्गम् । तज्ज्ञानं करणम् । निरग्निकत्वाभावं प्रति निर्धूमत्वाभावस्य व्याप्यत्वं लिङ्गी । तज्ज्ञानं फलम् । तद्द्वयमपि प्रमारूपमेव, कारणाभावे कार्याभावनियमात्, व्यापकाभावस्य व्याप्याभावं प्रति व्याप्यत्वाच्च ।

तथा हि—लिङ्गज्ञानं निरग्निकत्वव्यापकं निर्धूमत्वमिति ज्ञानं करणम्, तज्जन्यं ज्ञानं निर्धूमत्वाभावव्याप्यनिर्वह्नित्वाभाववानित्याकारकं ज्ञानं फलम् । अत एव प्रसङ्गांशेनैव निर्धूमत्वाभावस्य

निरग्निकत्वाभावेन व्याप्तेः सिद्धत्वादेव विपर्यये पर्यवसानेनायं निर्धूम इत्यनेन तस्य पक्षधर्मतामात्रं प्रदर्श्य तस्मान्न निरग्निक इत्यनेन साध्यमुक्तम्। न तु पूर्वाशङ्कितं पक्षे निरग्निकत्वज्ञानं करणम्, नापि पक्षे निर्धूमत्वज्ञानं फलम्, येन द्वयोरप्यप्रमात्वं स्यात्।

असिध्याद्युक्तिस्तु निरग्निकत्वं प्रति निर्धूमत्वस्य व्यापकत्वप्रदर्शनार्थं तर्कवाक्येनोपात्ते ये निरग्निकत्वनिर्धूमत्वरूपे व्याप्यव्यापके, तदभिप्राया। तस्माद्यथर्थालिङ्गितस्यार्थस्याबाधान्न तर्कस्याप्रामाण्यम्। तदेवं प्रसङ्गरूपानुमाने साध्यवदापाद्यस्य प्रमाणविरोधादि न दूषणमिति बोध्यम्।

प्रसङ्गोऽनुग्राह्यानुमानाङ्गभूतान्वयव्याप्तिलिङ्गभूताया परानिष्टाया व्यतिरेकव्याप्तेः प्रदर्शनम्। तदर्थतया तत्प्रयोजनकतया ह्रदादिनिष्ठा निरग्निकत्वनिर्धूमत्वादयः प्रोक्ताः, न तु पक्षनिष्ठतया प्रोक्ताः,तस्मान्न सिद्धान्तस्य दूषकाः। यद्वा आपादकरूपलिङ्गस्य निरग्निकत्वस्य पक्षे पराभ्युपगतत्वमेव पक्षसंबन्ध इति नासिद्धिः। युक्तं चैतद्यक्षानुरूपबलिन्यायेन लिङ्गिनो निर्धूमत्वस्यापि पक्षेऽभ्युपगमनीयत्वस्यैव पक्षसम्बन्धत्वाद् धूमरसादेः पक्षे संयुक्तत्वसमवेतत्वादिना अग्निरूपादिसाधकतया तत्र संयोगसमवायादिरेव निरग्निकत्वस्यापि पक्षे पराभ्युपगतत्वेन ज्ञातस्यैवापादकतया अभ्युपगमस्यैव संबन्धतया उचितत्वात्। दृश्यते हि कृत्तिकोदयाऽधोदेशनदीपूरादिरूपसाधनानुमानस्यापि रोहिण्युदयोर्ध्वदेशादिरूपपक्षेऽभावेऽपि पक्षनिष्ठसाध्याभावसमकालिकत्वपक्षनिरूप्याधोदेशस्थत्वादिस्त्वन्मते ज्ञानत्वादिरूपप्रमेयत्वादेरपि पक्षीभूतशब्देन स्वरूपप्रत्यासन्नज्ञानसमवेतत्वादिश्च परम्परासंबन्धः।

अथैतन्मते तर्कस्य प्रामाण्यं निरग्निकत्वनिर्धूमत्वयोः पक्षेऽभ्युपगतत्वादभ्युपगमनीयत्वरूपेण सत्त्वात्तेन च रूपेण तद्विषययोर्निरग्निकत्वनिर्धूमत्वज्ञानरूपयोः करणफलयोः प्रमात्वं बोध्यम्।

अथवा यदिं निरग्निकः स्यादित्यस्य यदि निरग्निकत्वाङ्गीकारः स्यादित्यर्थः। तथाङ्गीकारश्च सिद्ध एव, अन्यथा तस्याप्यनुत्थानात्। एवं तर्हि निर्धूमः स्यादित्यस्य निर्धूमत्वेनाङ्गीकर्तव्य इत्यर्थः। आपादनं ह्यङ्गीकर्तव्यतया ज्ञापनम्, न पुनः सद्भावप्रतिपादनम्। यदि विषं भक्षयिष्यसि तर्हि मरिष्यसीत्यादिवत्। न चानङ्गीकारे स्वक्रियाविरोधादिरूपा अङ्गीकारयोग्यता बाधिता। एवं च पर्वतो निर्धूमत्वेनाङ्गीकर्तव्यो निरग्निकत्वेनाङ्गीकृतत्वाद् ह्रदवदित्यनुमानमेव तर्क इति साधनानुमान इव तर्केऽप्यसिद्ध्यादिकं दोष एवेति न तर्कस्य साधनानुमानाद्वैधर्म्यमपि।

अत्र च द्वितीयपक्षे निरग्निकत्वमेव लिङ्गम्, अभ्युपगमस्तु तस्य पक्षेण संबन्धः। तृतीये त्वभ्युपगम एव लिङ्गम्। अभ्युपगमस्तु तस्य पक्षेण संबन्धः। तृतीये त्वभ्युपगम एव लिङ्गमिति भेदः।

एवं च विपर्ययपर्यवसानरूपानुमाननिरपेक्षस्यैव तर्कस्य न प्रामाण्यमिति निबन्धादावुदयनाद्युक्तमपि निरस्तम्, विपर्ययपर्यवसानानुमाननिरपेक्षस्यैव प्रसङ्गस्य प्रामाण्योपपादनात्। या त्वनिष्टापादनं विपर्यये पर्यवसानं चोभयं मिलितमेवानुमितिसाधनं भवतीति तर्कस्य प्रामाण्यमित्युक्तिः, सा निर्धूमतया अङ्गीकर्तव्यतासाधनस्य सिद्धसाधनताशङ्कानिरासार्थम्। स्यादित्यनेन बोधनेन प्रमाणविरोधोपपादनार्थं च तर्कस्य अङ्गभूतविपर्ययपर्यवसानसापेक्षत्वमात्रेण वा धूमस्य वह्निव्याप्तिप्रमायामङ्गीकर्तव्यताप्रमायां च निरपेक्षत्वेऽपि तदुद्देश्यायां न निरग्निक इति प्रमायां पर्यवसानसापेक्षत्वादिति ध्येयम्।

किञ्च, तर्करूपं ज्ञानं न तावत् संशयः, एककोटिकत्वात्। नापि विपर्ययः, निरस्तत्वात्। तस्मात् प्रमाणमेव। अपरं च तर्कस्य अप्रमात्वे तर्कवाक्यमसदुत्तरं स्यात्। यदि विषं भक्षयिष्यसि तर्हि मरिष्यसीत्याद्याप्तवाक्यम्, यदि हरिश्चन्द्रोऽनृतं ब्रूयात्तर्ह्यग्निरपि शीतः स्यादिति स्मृतिश्चाप्रमाणं स्यात्, अनुभवविरोधश्च स्यात्। यथार्थशिरस्कस्य तर्कस्य बाधाद्यननुभवात्। अन्यच्च प्रमात्वेनानाशङ्किते धूमरूपविशेषस्य साक्षात्कारे सति कथं निर्धूमत्वस्यारोपः।

अथ तर्कस्य प्रतिभायां नारायणबुद्धिवदाहार्यारोपरूपत्वाद्विशेषदर्शनं न विरोधीति चेत्? न, फलानुसन्धानसापेक्षत्वाद् व्याप्तिज्ञाननिरपेक्षत्वाच्च नारायणानुध्यानस्याहार्यारोपस्य। तर्कस्य फलानुसन्धाननिरपेक्षत्वाद् व्याप्तिज्ञानसापेक्षत्वाच्च। प्रतिमायां नारायणस्येव पर्वते निर्धूमत्वध्यानस्याननुभवाच्च।

तदेवं यथार्थशिरस्के तर्के प्रामाण्यस्योपपादनात् तदप्रमात्वापादकाः पक्षाः सर्वेऽपि निरस्ताः। तथा च तर्कः संशयात् प्रच्युतो निर्णयं चाप्राप्त इत्युदयनोक्तिः, अव्यवस्थितनिरग्निकत्वाभ्युपगमोपाधिकानिष्टप्रतिसन्धानरूपत्वात्तर्कज्ञानस्याप्रामाण्यमिति वर्धमानाद्युक्तम्, तर्कः संदेहविपर्ययप्रमाविजातीयं ज्ञानान्तरम्, सा च जातिः 'तर्कयामि न तु निश्चिनोमि' इत्यनुव्यवसायसाक्षिकेति च मणिकण्ठोक्तिः; तदेतत्सर्वमपि निरस्तम्।

किञ्च, मणिकण्ठोक्तदिशा तर्कस्य जातित्वे तर्कस्य तदङ्गीकृतं संशयनिवर्तकत्वं न स्यात्। ज्ञानस्य विरोधिविषयत्वेनैव निवर्तकत्वाद् जात्यैव निवर्तकस्तर्कोऽनुमानानुग्राहकः सन्निरग्निकत्वानुमानस्य प्रतिबन्धिकामपि शङ्कां निवर्तयेत्, जातेः साधारण्यात्। नहि गौः किञ्चित् प्रेत्य गौर्भवति, नहि मण्यादिवत् प्रतिनियतप्रतिबन्धकत्वम्। तत्रोद्देश्यदाहत्वस्येवात्र शङ्कात्वस्यैव प्रतिबध्यतावच्छेदकत्वं चेदुक्तातिप्रसङ्गात्। तर्कविषयविरोधिविषयशङ्कात्वस्य प्रतिबध्यतावच्छेदकत्वे तर्क-

स्यापि क्लृप्तेन शङ्काविषयविरोधिविषयत्वेनैव प्रतिबन्धकताया न्याय्यत्वात्। अन्यथा घटज्ञानत्वादिकमपि जातिः स्यात्।

तस्मात्तर्कः प्रमाणमेव। तत्रापि व्याप्तिसापेक्षत्वेन शाब्दत्वप्रत्यक्षत्वयोरसंभवेन परिशेषादनुमानमेव। परार्थे तर्के वादिवाक्यापेक्षा तु परार्थानुमान इव व्याप्त्यादिस्मारकत्वेन न त्वागमत्वेनेति।

आपाद्यस्यानिष्टत्वमिति यत्तर्काङ्गं तत्प्रामाणिकहानाप्रामाणिककल्पनाभेदाद् द्विविधम्। तत्र दृष्टानुमितश्रुतहानभेदात् प्रामाणिकहानं त्रेधा। अप्रामाणिककल्पनमप्यदृष्टाननुमिताश्रुतभेदाद् त्रिविधम्। तदेव कल्प्यानेकत्वे कल्पनागौरवमित्युच्यते।

आत्माश्रयत्वाऽन्योन्याश्रयत्वानवस्थाचक्रकाश्रयत्वकेवलानिष्टभेदादापाद्यमनिष्टं पञ्चविधम्, तद्भेदात्तर्कोऽपि पञ्चविधः। तत्र—(१) तस्यैवोत्पत्तिज्ञप्त्यर्थं तदुत्पत्तिज्ञप्त्यपेक्षाङ्गीकारे स्वापेक्षया पूर्वभावित्वरूपमात्माश्रयत्वम्, (२) द्वयोरितरेतरकारणत्वाङ्गीकारे त्वन्योन्यापेक्षया पूर्वभावित्वरूपमन्योन्याश्रयत्वमापाद्यम्, (३) बहूनां चक्रवत् कार्यकारणभावाभ्युपगमे पूर्वभावित्वलक्षणं चक्रकाश्रयत्वम्, (४) अनवस्थितासिद्धकारणापेक्षायां मूलक्षयापरनामकप्रतीतकार्यविलोपलक्षणाऽनवस्था, (५) केवलानिष्टापादनमपि त्रेधा, दृष्टानुमितश्रुतहानभेदात्। तथा अदृष्टाननुमिताश्रुतभेदाच्च पुनस्त्रिविधम्। एतदेव कल्प्यानेकत्वे कल्पनागौरवमित्युच्यते। दृष्टहानं यथा यदि पर्वतो निरग्निकः स्यात्तर्हि निर्धूमः स्यादिति। एवमन्येषामप्युदाहरणानि शास्त्रे द्रष्टव्यानि।

तदेवं तर्कस्य प्रयोजनस्वरूपभेदादिविमर्शपूर्वकमनुमानान्तर्भावित्वं प्रमात्वं च व्यवस्थापितम्।

इति शास्त्रविमर्शसाधनं ननु सत्तर्कविवेचनं मया।
विशदीकृतमीशतुष्टये विदुषामस्तु मनोविनोदनम्॥



# अवयविनिराकरणपरीक्षा

श्रीरामपाण्डेयः, वा० सं० वि० वि० न्यायवैशेषिकदर्शनाध्यापकः ।

श्रीमद्वाराणसेयामरखरझरिणीवैखरीविश्वविद्या -
प्रासादन्यायशास्त्रप्रमुखपदसमासीनविद्वत्प्रपूज्यम् ।
तर्काकुण्ठप्रतिष्ठं गुरुवरबदरीनाथमन्तर्दधान-
स्तत्पादाब्जात्समीहेऽप्रतिभटविभवां भारतीं भासमानाम् ॥

जैनसांख्यबौद्धवैयाकरणप्रभृतयोऽवयविनिरासकास्तत्र तत्र परिस्फुरन्ति । प्रथमं तावद् वैयाकरणमतमुपस्थाप्यते ।

पस्पशाह्निके महाभाष्ये गौरित्यत्र कः शब्द इति विचिकित्सायां जात्यादीनां शब्दत्वमालोचितम्, तदतिरिक्तशब्दतत्त्वस्यानवगमात् ।

ननु गुणादीनां गोशब्दत्वाशङ्कनस्याविवेकविशेषाधायकत्वमेव, गोशब्देन गुणादीनां तादात्म्यासम्भवाद् एकस्मिन् फले पूर्वरूपनाशानन्तरं रूपान्तरोत्पत्तौ तदेवेदमिति प्रत्यभिज्ञादर्शनाद् गुणसमूहातिरिक्तस्यैव द्रव्यत्वेन परिगृहीतत्वाच्च यच्छक्यनिरूपिता शक्तिर्यस्मिन् शब्दे तच्छक्येनैव तस्य तादात्म्यम्, नहि गोगतगुणा गोशब्दशक्या गुणैः सह गोशब्दस्य तादात्म्यासम्भवादिति चेन्न, निरन्तरत्वरूपायुतसिद्धत्ववदवयवविशेषानुगतसामान्यविशेषरूपगुणसमूहस्यैव द्रव्यत्वेनाङ्गीकारात्, द्रव्यात्मकव्यक्तेश्च शब्दशक्यत्वात् ।

कस्य भवानेकं गुणं न्याय्यं मन्यते स्त्रीत्वं नाम ? द्रव्यस्य, द्रव्ये च भवतः कः प्रत्ययः ? गुणसमुदायो द्रव्यम् "स्त्रियाम्" इति सूत्रस्थभाष्यात् । कं च प्रत्ययवयवो गुणः ? समुदायं प्रति "संख्याया अवयवे" इति सूत्रस्थभाष्यात्, "अयुतसिद्धावयवविशेषानुगतः समूहो द्रव्यम्" इति पातञ्जलभाष्याच्च । गुणशब्देनावयवा धर्माश्च ग्राह्याः । अत एव व्रीहिषु प्रोक्षणजन्यसंस्कारस्यांशत्वावयवत्वादिना व्यवहारः समन्वयसूत्रे भामत्याम् ।

न च गुणसमूहस्यैव द्रव्यत्वाङ्गीकारे "तस्य भावस्त्वतलौ" इति सूत्रस्थभाष्यासङ्गतिः, तत्र किं पुनर्द्रव्यम् ? के पुनर्गुणाः ? शब्द-स्पर्श-रूप-रस-गन्धा गुणास्ततोऽन्यद् द्रव्यमित्युक्तत्वादिति वाच्यम्, तत्र समुदायसमुदायिकृतभेदमाश्रित्यैव द्रव्यगुणयोर्भेदव्यवहृतेर्व्यवस्थितत्वात् ।

शाब्दिकनये सामान्यविशेषरूपगुणसमूहातिरिक्तोऽवयवी नाभ्युपेयते, लोष्टसमुदायाश्रयीभूतस्य लोष्टानतिरिक्तत्ववत्। अवयवातिरिक्तावयविन्यङ्गीक्रियमाणे तु रूपगुरुत्वादेर्द्वैगुण्यस्य प्रसक्तस्य निरासोऽशक्यः स्यात्। ननु रूपगुरुत्वादिरहितस्यैवावयविनोऽतिरिक्तस्याङ्गीकारे नोक्तदोषाशङ्कावकाश इति चेन्न, रूपराहित्येऽवयविनोऽप्रत्यक्षत्वापत्तेः, चाक्षुषप्रत्यक्षे उद्भूतरूपवत्त्वस्य कारणत्वेन विवक्षितत्वात्। न च परमाणूनामवयवानामतीन्द्रियत्वेन तदाश्रितगुणानामप्रत्यक्षत्वे घटादीनामप्यप्रत्यक्षत्वापत्तिरिति वाच्यम्, शकटावयवानां प्रत्येकं कार्यासामर्थ्येऽपि विलक्षणसमुदायत्वे कार्य्यकारित्ववत्, एकस्यौदनस्य क्षुत्प्रतिघातासमर्थत्वेऽपि तत्समूहस्य समर्थत्ववत्, एकस्य वारिबिन्दोः पिपासाप्रतिघातासामर्थ्येऽपि तत्समूहस्य सामर्थ्यवच्च समुदायप्रत्यक्षोपपत्तेः। नन्ववयवस्यातीन्द्रियत्वेऽपि समुदायस्य प्रत्यक्षत्वे पिशाचसङ्घस्यापि प्रत्यक्षत्वापत्तिरिति चेन्न, तत्रानुभूतिबलादवयवापेक्षया विलक्षणसंयोगाभावात्। न च समुदायसमुदायिनोरभिन्नत्वे रूपरसादिपरावृत्तौ समूहस्यान्यत्वात् सोऽयं घट इति प्रत्यभिज्ञानुपपत्तिरिति वाच्यम्, अनुगतस्यापि कस्यचनावयवस्य सत्त्वेन तदुपपन्नत्वात्, प्रत्यभिज्ञाया आकृतिनिबन्धनत्वाद्वा, कौमारयौवनप्रभृतिभिन्नेषु तत्तत्तनुषु तत्प्रत्यभिज्ञानवत्।

ननु गुणसमूहस्य द्रव्यत्वे समूहसमूहिनोरभिन्नत्वेऽपि भाष्ये गुणादीनां शब्दत्वाशङ्कनस्यासमाहितत्वाद् "अन्यद् भुक्तमन्यद् वान्तम्" इति न्यायावसरप्रसङ्ग इति चेन्न, गुणसमूहस्य द्रव्यत्वेन संमूहसमूहिनोरभिन्नत्वे तदभिन्नाभिन्नस्य तदभिन्नत्वमित्याशयेन शब्दाभिन्नः समूहस्तदभिन्नः समूहीति शब्दस्य समूह्यभिन्नत्वेन शब्दत्वाशङ्कनस्य सुस्थत्वात्। ननु गुणसमूहस्यैव द्रव्यत्वे एकरूपमित्यत्र कर्मधारयो नोपपद्येताऽधिकरणपदस्य गुणसमुदायरूपद्रव्यवाचित्वेन एकत्वविशिष्टरूपस्य च द्रव्यत्वाभावेन सामानाधिकरण्यविरहादिति चेन्न, "लिङ्गसंख्याद्यन्वयि द्रव्यम्", "सर्वनामपरामर्शयोग्यं द्रव्यम्" इत्याद्युक्तदिशा गुणस्य क्रियायाश्च द्रव्यत्वसिद्धेः। अत एव स्त्रीत्वस्येदंशब्देन तच्छब्देन च परामृष्टत्वात् स्त्रीत्वस्यापि द्रव्यत्वेन स्त्रीत्वलिङ्गयोगात् स्त्रीतेत्यत्र टाप्प्रत्ययोपपत्तिरित्यादिविचित्रविविधवचोभङ्गिमया वाग्विन्यासविलासोल्लाससमुत्सुकचेतस्काः शाब्दिका अवयवातिरिक्तावयविनोऽस्तित्वं नाङ्गीकुर्वन्ति।

## सांख्यमतम्

हेतुमतो हेतुमात्रं प्रतीयतेऽस्य कार्यस्य कश्चन हेतुरिति, न त्वयमस्य कार्य्यस्य हेतुरिति विशेषः प्रतिभासते। सन्ति चात्र विविधा विकल्पा विपश्चितां धीमतां दार्शनिकानाम्—

शून्यता एव संसारस्य परमार्थत्वमिति वदतां बौद्धानामभिप्रेतमभावाद् भावेन भूयते। विनष्टाद् बीजादङ्कुरोत्पत्तिर्ध्वस्ताद् दुग्धाद् दधि विनाशं प्राप्ताच्च मृत्पिण्डाद् घटोत्पत्तिरित्येवं रूपेणाभावव्याप्तेभ्यो बीजादिभ्योऽङ्कुरादिकार्यकदम्बानामस्तित्वमभिप्रयन्ति ते। "निखिलकार्यभावा अभावकारणकाः कार्य्यत्वाद् बीजध्वंसोत्तरोत्पन्नाङ्कुरादिवत्।"

बौद्धमतानुवादिपूर्वपक्षोपस्थापकं वचस्तार्किकाणाम्—"अभावाद् भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात्" इति।

नानामणिकृपाणदर्पणजलकणकूटादिविशेषाद् विविधप्रतिबिम्बात्मना अनुभूयमानमेकमाननमिव, स्वगतसजातीयविजातीयभेदशून्यस्याद्वितीयस्यैकस्य नित्यस्य त्रैकालिकबाधविधुरस्य ब्रह्मणो विवर्तः शुक्तेरिव रजतम् अतात्त्विकान्यथाप्रथात्मकं दृश्यमात्रम्, न तु वस्तुसत् परमार्थसदिति शाङ्कराः।

भावभूतात् परमाणुतोऽविद्यमानं प्राग् द्व्यणुकादिकार्यं जन्यत इति सतोऽसज्जन्यत इति कणभक्षाक्षचरणानुयायिनो नैयायिकाः।

भावादव्यक्तात् सतोऽनागतावस्थया कारणे वर्तमानस्यैव कारणव्यापारेणाभिव्यक्तिरिति सतः सदुत्पद्यत इति सांख्याः।

असतः सज्जायत इति सौगतमतं स्वीकर्तव्यं भवेच्चेत्तर्हि अनिर्वचनीयमभावरूपं संसारकारणमभ्युपेयं स्यात्तथा च भावात्मकसुखादिस्वरूपशब्दाद्यात्मकमभावात्मकं कारणं कथं स्यात्, सदसतोस्तादात्म्यस्यासम्भवात्।

सौगतमतेऽसता कारणेन सह कार्य्यस्य सतो यथा तादात्म्यं न संघटते, तथैव शाङ्करमतेऽपि सता कारणेन सह भ्रान्तिमात्रतनुकस्यासतः कार्य्यस्य तादात्म्यं दुर्घटमेव।

सतः परमाणुतः कार्य्यस्यासत उत्पत्तिरिति तार्किकनयेऽपि कार्यात्मकं कारणं कथं स्यात्? सदसतोस्तादात्म्यानुपपत्तेरिति तन्मतमपि नानुकूलतां भजते।

कारणव्यापारात् पूर्वमुत्तरं च कार्य्यं सत्त्वोत्तरसमये कार्य्यसत्तायां नैयायिकानामपि न वैमत्यम्। तथा च केवलं कारणव्यारात्पूर्वमपि कारणे कार्य्यमस्तीत्येव सांख्यैः साधनीयमतस्तार्किकैः सिद्धसाधनं नोद्भावनीयम्।

बीजावयवा एव कस्माच्चिन्निमित्तादाविर्भूतकर्माणोऽवयवानां सन्निवेशविशेषं प्राक्कालिकं परित्यज्यावयवसन्निवेशविशेषं धारयन्तीति बीजावयवस्यैवाङ्कुरकारणता, न त्वभावस्य सौगताभिप्रेतस्य। तदुक्तं गोतमेन—"न विनष्टेभ्योऽनिष्पत्तेः" इति।

अभावाद् भावोत्पत्तौ सर्वत्र तस्य सुलभत्वात् सर्वत्र सर्वकार्योत्पादप्रसङ्गादिविविधदोष-ग्रस्तत्वादापातरमणीयं सौगतमतम् ।

दृढतरबाधकप्रमाणाप्रस्तुतौ प्रत्यक्षादिप्रमाणप्रमाणितशब्दादिनिखिलप्रपञ्चानुभूतेरपलापो मिथ्यात्वं वा न कैश्चिदपि कर्तुं शक्यत इति शाङ्कराणां मिथ्यात्वसंकलनमपि कण्टकाकीर्णमेव ।

यथा शिल्पिशतेनापि नीलं पीतं कर्तुं न पार्यते, तैलनिष्पादनकलाकुशलिनो वा सिकताभ्यस्तैलोत्पादनेऽसमर्थास्तथा कारणव्यापारात् पूर्वमसच्चेत् कार्यमस्य कार्य्यस्य सत्त्वं कैश्चिदपि कर्तुं न शक्यमिति नैयायिकमतमन्यत्र पेशलतां नार्हति । रक्तं सरोरुहमित्यादौ सरोरुहे धर्मिणि समवायादिसंसर्गेण रक्तधर्मस्य वर्तमानादाधाराधेयत्वप्रत्ययस्तार्किकनये, कापिलनये तु गुणगुणिनोरभिन्नत्वाद् गुणिस्वरूपमेव गुण इति तादात्म्येन तत्प्रत्ययः । वस्त्रस्य सदसत्त्वे धर्माविति चेत्तथाप्यसति धर्मिणि न तस्य धर्मोऽयमिति वक्तुं शक्य इति कार्यस्य सत्त्वं कारणव्यापारात् प्रागपि तदवस्थमेवेति तन्तुषु वस्त्रस्य नासत्त्वम् ।

रक्तं सरोजमित्यस्य रक्तगुणाश्रयः सरोजमित्यर्थस्तथा असद्वस्त्रमित्यस्याप्यसत्त्वधर्माश्रयो वस्त्रमित्यर्थो वक्तव्यः । स च नोपपद्यते, सरोजेन सह रक्तस्येवासता वस्त्रेण सहासत्त्वधर्मस्यासम्बद्धत्वात् । तस्मात् कारणव्यापारात् पश्चादिव ततः पूर्वमपि कार्य्यं सदेवेति ।

नन्वसदेव कार्यं कारणव्यापारात् कथं नाभिव्यज्यते ? यद्यभिव्यज्यते तदा तार्किकमतस्यैव समर्थनं सांख्यैरपि सम्पादितमिति चेन्न, तिलादिषु पीडनादिना तैलादिदर्शनेन सतोऽभिव्यक्तित्वस्यैवोपपन्नत्वात् । असतः कार्यस्य न कुत्राप्यभिव्यक्तिरुत्पत्तिर्वा दृष्टा ।

कारणव्यापारात् पूर्वमप्युदकानयनादिकार्यविशेषव्यवहारायोग्यसूक्ष्मरूपेण वर्तमानस्य कार्यस्य या व्यवहारयोग्यस्थूलरूपापादनरूपाभिव्यक्तिः सा कारणात् कुलालादिव्यापाराज्जायत इत्यभिव्यक्तिरेव सांख्यानां साध्या नोत्पत्तिरिति न नैयायिकानां गेहे प्रवेशः ।

कार्यनियामकतया प्रागभावोऽभिप्रेत इति न कुत्राप्यव्यवस्थेति तार्किकाणां यदभिमतं तदपि न पेशलम्, अभावे वैलक्षण्याभावेन कपाले पटादेरपि प्रागभावापत्तेर्दोषस्य दुर्वारत्वात् । न च घटप्रतियोगिको घटनिरूपको वा प्रागभावो घटोत्पत्तिनियामकत्वेनाभिप्रेत इति न पूर्वोक्तदोषप्रसरावकाश इति वाच्यम्, असतो घटादेः प्रतियोगित्वनिरूपकत्वादिधर्मस्य दुर्घटत्वात्, सदसतोः सम्बन्धस्यानुपपन्नत्वात् । किञ्च, कपालानुत्पाददशायां घटप्रागभावः क्व विद्यते ? कालेऽन्यत्र कुत्रापि वा ? उभयथाप्यभावे कर्माभावेन घटप्रागभावस्य कपाले गन्तुमनर्हत्वमेव प्रसक्तं स्यात् । नियामकाभावेऽपि तस्य कपाले गमनं चेत्तर्हि कुत्रचिदन्यत्रापि गमनं प्रसज्येत ।

किं बहुना, सर्वत्रैव तस्य गमनप्रसक्तौ कपालादेव घटोत्पत्तिः कथम्? सर्वस्मादन्यस्माद् घटोत्पत्तिः प्रसक्ता स्यादेवं बहुविप्लवाः स्युः। कस्यापि कारणता सुस्था न स्यादिति कार्यकारणभाव एव दुर्घटस्तार्किकमते। सांख्यनिकाये तु तन्तुपटयोर्नार्थान्तरत्वम्, उपादानोपादेयत्वाद् ययोरर्थान्तरत्वं गम्यमानं न तयोरुपादानोपादेयत्वं यथा घटपटयोर्नोपादानोपादेयत्वं तयोरर्थान्तरत्वात्। घटः कपालाभ्यां न भिन्नस्तदवस्थाविशेषात्मकत्वात्, यस्माद् यद् भिद्यते न तत्तस्य अवस्थाविशेषात्मकधर्मो भवति यथा पटो घटस्य। संयोगभावाद् विभागाभावाद् वा बीजवृक्षयोर्नार्थान्तरत्वम्, अर्थान्तरत्वे सति संयोगो वायुवनस्पत्योर्विभागो वा दक्षिणोत्तरशैल्योः। अवयवावयविनोः संयोगो विभागो वा न भवतीति नार्थान्तरत्वमनयोः।

साध्यसाधनयोरेवमभेदे निष्पादिते तेन तेनातानवितानरूपसंस्थानभेदेनावस्थान्तरं नीतास्तन्तव एव पटो नार्थान्तरमिति अनल्पकल्पनाकवलितमवयविनमवयवेभ्योऽतिरिक्तं नाङ्गीचक्रुः कापिलाः।

## जैनमतम्

कारणानां कर्मवशेन न कारणत्वम्, अपि तु यत्सत्त्वासत्त्वाभ्यां यस्य सत्त्वासत्त्वस्थितिस्तत् तस्य कार्य्यमन्यत् कारणमिति येन प्रलपितं तत्तुच्छम्, एवं स्थितौ यथा "तद्भावे न भवतीत्यत्र न कश्चिद् व्यापारः कारणगतस्तथा" तद्भावे भवतीत्यत्रापि कारणसद्भावमात्रं प्रोद्घोषितं जातम्, न कार्ये किञ्चित्करत्वं सम्पन्नम्। किञ्चैवंविधे कारणलक्षणेऽङ्गीक्रियमाणे गगनादेः कुत्रापि कारणता न स्यात्तस्य नित्यत्वव्यापित्वाभ्यां देशकालकृतव्यतिरेकासम्भवात्। किञ्च, तस्मिन् सति भवतीति तच्छब्देन यो निर्दिष्टः, स एव भवतिशब्देन च। तथा च तयोरुपकार्य्योपकारकभावाभावे संभवति सति, कार्ये कारणे च तच्छब्दनिर्देशेन तस्मिन् मृल्लक्षणेऽर्थे स भवतीति मृल्लक्षण एवार्थो भवति न घटो भवतीति। अथोच्येत पूर्वकालभावित्वमात्रं कारणत्वं न कश्चिद् व्यापारस्तदा निखिलानां प्राक्कालभाविनां संसारोदरवर्तिनां कारणत्वप्रसक्त्यातिप्रसक्तिर्दुर्वारा। न च नियमेन पूर्वकालभावित्वं कारणत्वम्, तथा च नाप्रसक्तिरतिप्रसक्तिर्वेति वाच्यम्, मेर्वादेरपि पटकारणतापत्तेस्तदविशेषात्। नन्वेवमपि मेर्वादिर्न पूर्वमेव भवति, अपि तु कार्योत्पत्त्युत्तरकालेऽपि तत्सत्त्वमिति नियमेन तस्य पूर्वकालभावित्वाभावान्नोक्तापत्तिरिति वाच्यम्, तन्तूनामपि पटोत्पत्त्युत्तरकालानुपातित्वात् पटकारणत्वानुपपत्तेः। किमधिकं कस्यापि कारणता सुस्था न स्यात्। यदि नियतकाल एव कार्यकारणभावोऽन्त्यतन्तुसंयोगोपलक्षितायाः सामग्र्या एव पटं

प्रति हेतुत्वात्, तदा पटस्यापि स्वसत्तास्तित्वसमय एव कार्यत्वमन्यथाऽविकलकारकसामग्रीसमवधाने पटान्तरोत्पत्तिः पुनः प्रसज्येत। किञ्चैवं पूर्वक्षणभाविनि कारणे उत्तरक्षणभाविनि च कार्ये स्वकालनियते सहभावस्याभावादन्योन्यसव्यपेक्षं कारणत्वं कार्यत्वं च समग्रं दुर्घटमेव। किञ्चासति कर्मणि नियमेन पूर्वकालभावित्वमात्रेण कारणत्वकल्पने बीजपूरकादिरूपोत्पत्तौ तदंशगतानां रसादीनामपि कारणत्वापत्त्या रसाद्युत्पत्तौ तदंशगतरूपस्यापि कारणत्वापत्त्या च रूपादीनां नियमेन सजात्यारम्भकत्वं भज्येत।

एवञ्च परमते कार्यकारणभावस्य विचारपथारूढस्याद्याप्यनुपपन्नत्वाद् द्व्यणुकाद्यवयविरूपाः पृथिव्यादयोऽनित्या उत्पत्तिमत्त्वाद् इत्यादिसर्वं मेकरसनायितमेव, साधनस्य स्वरूपासिद्धत्वात्। उत्पत्तिमत्त्वं हि कार्यत्वम्, तच्च परमते पूर्वोक्तप्रकारेण सर्वथाऽप्रसिद्धमाश्रयासिद्धञ्च, स्वावयवेभ्योऽत्यन्तविभिन्नस्य पृथिव्याद्यवयविनः कस्माच्चित् प्रमाणादसिद्धेः।

## बौद्धमतनिरासपूर्वकं न्यायमतम्

वृक्षस्येन्द्रियसन्निकृष्टभागमवलोकयन् वृक्षमवलोकयामीति व्यवहरति कश्चिदपि। एवञ्च वृक्षस्येन्द्रियसन्निकृष्टावयवगण एव न वृक्षस्तस्य सन्निकृष्टासन्निकृष्टोभयावयवव्याप्तत्वात्। तथा च धूमदर्शनेन वह्निज्ञानमिवैकदेशग्रहणेन वृक्ष इति ज्ञानमनुमानप्रमाणेनैव साध्यं न तु प्रत्यक्षप्रमाणेन।

ननु धूमादनुमातव्यो वह्निः पदार्थान्तरमेष वृक्ष इति प्रत्यक्षस्थले च वृक्षैकदेशाद् गृह्यमाणो वृक्षो न पदार्थान्तरमिति कथमनुमातव्यो भवेदिति चेन्न, सौगतमतेऽवयवपुञ्जस्यैवावयवित्वेनाङ्गीक्रियमाणतयेन्द्रियासम्बद्धावयवानां पदार्थान्तरत्वात्, अतिरिक्तावयविवादितार्किकमतेऽप्यवयविन इन्द्रियासम्बद्धावयवानां च पदार्थान्तरत्वस्यापि लपितुमशक्यत्वाच्च। न चेन्द्रियसम्बद्धो वृक्षैकदेशो यथा न वृक्षस्तथा वृक्षस्यासम्बद्धैकदेशान्तरमपि न वृक्ष एकदेशत्वादिति वृक्षस्यावयवसमूहरूपत्वे वृक्षबुद्धिरेव नोपपन्नेति सौगतैर्वृक्षोऽयमिति प्रत्यक्षमनुमानं वा वक्तुं कथं शक्येतेति वाच्यम्, एकदेशग्रहणादेकदेशान्तरस्यानुमाने जाते मिलितस्य समुदायस्यापि प्रतिसन्धानात् समुदायप्रतिसन्धानस्यैव वृक्षबुद्धिरूपत्वात्। नन्वेवं वृक्षबुद्धावुपपन्नायां वृक्षोऽयमिति ज्ञानमनुमितिरेव न प्रत्यक्षमिति चेन्न, अनुमितेरेकदेशान्तरविषयकत्वाद् वृक्षोऽयमिति ज्ञानस्य च समस्तावयवसमूहविषयकत्वात्। न चेन्द्रियसन्निकृष्टावयवमात्रसमवेतो वृक्षो न यथा, तथेन्द्रियासन्निकृष्टमात्रसमवेतोऽपि न वृक्ष इति वृक्षज्ञानमनुमानसाध्यमेव तस्येन्द्रियसन्निकृष्टोभयावयवसमवेतविषयकत्वादिति वाच्यम्, इन्द्रियसन्निकर्षजस्यानुमेयत्वाभावात्। चत्वरादौ

व्याप्यव्यापकसम्बन्धविशिष्टौ धूमवह्नी दृष्टवतः पुरुषस्य पर्वतादौ वह्निविषयिकानुमितिरिति। किन्तु तत्रापि लिङ्गादिज्ञानं नानुमानसाध्यमपि तु प्रत्यक्षमेवेन्द्रियार्थसन्निकर्षोत्पन्नत्वात्। एवं च प्रत्यक्षमूलकत्वादनुमानस्य यथा प्रत्यक्षे नान्तर्भावस्तथोपजीव्यस्य प्रत्यक्षस्याप्यनुमाने नान्तर्भावः।

किञ्च, पटज्ञाने जायमाने पटसमवेतगुणादीनामपि ज्ञानं जन्यत एव यथा, तथा वृक्षस्यैकदेशप्रत्यक्षे एकदेशसमवेतावयविनः प्रत्यक्षस्यापलपितुमशक्यत्वेन तस्यैकदेशस्य चावयविन एव सत्त्वेन च वृक्षैकदेशप्रत्यक्षे तत्समवेतावयविनोऽपि प्रत्यक्षत्वमवश्यमभ्युपेयम्, तथा च न केवलमेकदेशमात्रग्रहणं येनावयविप्रत्यक्षमनुमानसाध्यं स्यात्।

न चैवमपि कृत्स्नस्यावयवसमूहस्यावयवित्वमित्यवयवान्तरैर्व्यवधानात् कृत्स्नस्यावयवसमूहस्य ग्रहणासम्भवात् कृत्स्नावयवसमूहलक्षणस्यावयविनो ग्रहणं दुःशकमेवेति वाच्यम्, कृत्स्नाकृत्स्नग्रहणमवयवानां बाहुल्येऽव्यवधाने कृत्स्नग्रहणाद् व्यवधाने च कृत्स्नाग्रहणाद् अवयवी त्वेक एवेति न तस्य कृत्स्नाकृत्स्नग्रहणमपि त्वेकदेशप्रत्यक्षे सत्येकदेशसहचरितावयविनोऽपि प्रत्यक्षत्वमेवेत्यवयविप्रत्यक्षस्य सूपपादनीयत्वात्।

ननु येषामवयवानामिन्द्रियसन्निकर्षाद् ग्रहणं तैरवयवैः सहावयवी गृह्यते येषां चावयवानां व्यवधानादग्रहणं तैरवयवैः सह तादृशावयवसमवेतोऽवयवी न गृह्यत इति ग्रहणाग्रहणयोरेकत्वविशिष्टेऽनुपपन्नत्वादवयवसमूहातिरिक्त एकोऽवयवी नास्तीति न प्रमदितव्यम्, ग्रहणाग्रहणकृतोऽवयवानामेव भेदो न त्ववयविन इत्यवयविनोऽस्वीकारे वृक्षबुद्धेरभावप्रसङ्गात्।

समूहिनामवयवानां परस्परसम्बन्धो वृक्ष उत मूलादीनामवयवानां याऽशेषता (समुदायः) सा वृक्ष इति सौगतैर्वाच्यः, प्रथमकल्पेऽवयवानामशेषाणां व्यवधानादग्रहणे प्रसक्ते तेषां परस्परसम्बन्धस्याप्रसक्त्या वृक्षबुद्धेरभावप्रसङ्गः। द्वितीयकल्पे चेन्द्रियसन्निकृष्टैरवयवैरवयवान्तराणां व्यवधानादशेषावयवाग्रहणादशेषतारूपस्य समुदायस्याग्रहणात् समुदायभूतस्य वृक्षस्य सुतरामग्रहणप्रसक्तिः। एकदेशग्रहणेन सह जायमाना वृक्षबुद्धिरवयवसमूहातिरिक्तावयविद्रव्यान्तरोत्पत्तौ स्वीकृतायामेवोपपन्ना स्यादिति समुदायातिरिक्तोऽवयवी स्वीकर्तव्य एव। तथा च वृक्षोपलब्धिर्नैकदेशोपलब्धिरवयविसद्भावादित्यनुमानं प्रकल्पनीयम्।

नन्ववयविनः साध्यत्वे तस्य सिद्धत्वाभावादवयव्यस्ति न वेति संशयावसरेऽवयविसद्भावादिहेतोरसिद्धत्वात् पूर्वोक्तमनुमानं खपुष्पायमाणमेवेति चेन्न, परमाणूनामतीन्द्रियाणामिन्द्रियाग्राह्य-

त्वादवयविभूतस्थूलद्रव्योत्पत्त्यनङ्गीकारे स्थूलद्रव्यसमवेतानां द्रव्यगुणकर्मसामान्यविशेषसमवायानामग्रहणप्रसङ्गात्। कुम्भोऽयं कृष्ण एको महान् संयुक्तः स्पन्दतेऽस्ति मृण्मयश्चेति बुद्धौ एकाश्रया एते द्रव्यगुणकर्मसामान्यविशेषसमवाया गृह्यन्तेऽतोऽवयवातिरिक्तोऽवयवी सिद्ध एव न साध्य इत्यवयवी पृथङ्नास्तीति न भ्रमितव्यम्।

किञ्च, यद्यवयविनः पृथगस्तित्वं नाङ्गीक्रियेत तर्ह्यवयवावस्थायां परस्परमवयवानामसंयुक्तत्वात् सिकताराशिवत् कुम्भादीनां शिरसि धारणं स्वाभिमुखीकरणञ्च कथमपि नोपपद्येत, तदुपपत्त्यर्थं पृथगस्तित्वमवयविनोऽवयवेभ्योऽङ्गीकरणीयमेव। उक्तञ्च वात्स्यायने—"धारणकर्षणोपपत्तेश्च" इति। न च परमाणूनामतीन्द्रियत्वेऽपि परमाणुपुञ्जस्य प्रत्यक्षत्वे कुम्भादीनां प्रत्यक्षत्वं शिरसि धारणादिकत्वं चोपपन्नं दूरस्थस्यैककेशस्याप्रत्यक्षत्वेऽपि केशपुञ्जस्य प्रत्यक्षत्ववदिति पृथगवयवेभ्योऽवयविनोऽस्तित्वानभ्युपगमेऽपि न काचन क्षतिरिति वाच्यमेकत्वस्यानेकेष्वसमवायादेको घट इति बुद्धेरनुदयप्रसङ्गात्, केशस्यैकस्यापि सेन्द्रियत्वादुदाहरणस्य प्रतिकूलत्वाच्च।

नन्वेवमप्येका सेना, एकं वनमित्यादौ अवयवेष्वनेकेषु सत्स्वप्येकत्वग्रहणवदेको घट इत्येकत्वविशिष्टबुद्धेरुपपत्तिरिति चेन्न, सेनाङ्गानां वनाङ्गानाञ्च स्थूलत्वेनेन्द्रियग्राह्यतया तत्समूहविषयैकत्वविशिष्टबुद्धावुपपन्नायामपि प्रकृतावयवानामतीन्द्रियत्वेन परमाणुपुञ्जविषयाया एकत्वविशिष्टबुद्धेरनुपपन्नत्वात्।

किञ्चोदाहरणभूतानि सेनावनाङ्गानि बौद्धनये परमाणुपुञ्ज एव तन्मते पृथगवयविनोऽस्तित्वानङ्गीकारात्तथा च तत्राप्येकत्वप्रतीतिविषयत्वं परीक्ष्यमाणमेव न तु सिद्धमेवं च साध्यविकल्पस्य परीक्ष्यमाणकुक्षौ प्रविष्टस्योदाहरणत्वमनुपपन्नमेव सिद्धस्यैवोदाहरणत्वसंभवात्। यदि च सेनावनाङ्गानि स्थूलानि तदा स्थूलस्यावयवित्वात् पृथगेकत्वप्रतीतिविषयः स्थूलोऽवयवी स्वीकृतः सौगतेन।

ननु परमाणुष्वेकत्वविशिष्टं ज्ञानमतद्वति तज्ज्ञानं तथा चैकत्वाभाववति परमाणुपुञ्ज एकत्वविशिष्टज्ञानस्योदयादेका सेनेत्याद्युदाहरणानुरोधेनैको घट इति बुद्धेरप्युपपन्नत्वात् सौगतमतं सुस्थमिति चेन्न, अतस्मिंस्तदिति प्रत्ययस्तस्मिंस्तदिति प्रत्ययसापेक्षो यथा रजते रजतज्ञानमन्तरा शुक्तौ रजतज्ञानं भवितुं नार्हति, तथैकस्मिन्नेकत्वज्ञानमन्तराऽनेकेष्वप्येकत्वज्ञानं न संभवतीत्यनेकेष्वेकत्वज्ञानेनैकस्मिन्नेकत्वज्ञानं सिद्धम्, तत्र परमाणोरेकस्य प्रत्यक्षं न भवत्यतीन्द्रियत्वादिति प्रधानभूतैकत्वज्ञानस्यावयविविषयकस्याङ्गीक्रियमाणतया तार्किकमतस्यैव साधकत्वात्।

## अवयविनिराकरणपरीक्षा

किञ्चैकमिदमित्येकत्वप्रत्यक्षे नातस्मिंस्तदिति प्रत्ययः, अपि तु तस्मिंस्तदिति प्रत्यय एव, "एकमिदं महत्" इत्यादौ सामानाधिकरण्येनैकत्वप्रत्ययस्य महत्प्रत्ययस्य चैकविषयकत्वेनानुभूयमानत्वात्, परमाणुषु महत्त्वासंभवादवयविनि च संभवात् "एकं महत्" इति प्रत्ययस्य विषयोऽवयवी एव नावयवा इति ।

किञ्च, संयुक्तौ द्वाविति द्वित्वसमानाधिकरणस्य संयोगस्य ग्रहणेन द्वित्वं द्वयोरेव, तथा च परमाणुद्वयस्यातीन्द्रियत्वेनोपर्युक्तसंयोगप्रत्यक्षस्य दुर्घटत्वात्तादृशसंयोगप्रतीतिविषयत्वमवयविद्वयस्यैवेति न विस्मर्तव्यम् । ननु बहूनां परमाणूनां समूह एव समुदायस्तस्य संयोगाश्रयत्वे न किञ्चिद् बाधकमिति न पूर्वोक्तदोषावसर इति चेन्न, द्वित्वसमानाधिकरणस्य संयोगस्य प्रतीतिविषयत्वेन द्वित्वस्यानेकेषु परमाणुष्वसंभवात्तेषां बाहुल्यात् । न च परमाणुसमूहे द्वित्वं तस्य समूहस्यैकत्वात् । तस्मात् संयोगाश्रयीभूतावयविद्वयसत्तास्वीकारमन्तरा न निर्वाह इति ।

न च तार्किकाभिमतसंयोगोऽस्माभिर्नाश्रीयते येन स परमाणुपुञ्जे नोपपद्येत, अपि तु आघातनाश्या द्वैधीभावनाश्या वा प्रत्यासत्तिः (अव्यवहितसामीप्यम्) संयोगत्वेनाश्रीयते । तस्यश्च परमाणुपुञ्जेऽपि विद्यमानतया सकलेष्टसिद्धौ नातिरिक्तावयविद्वयसत्तास्वीकारापत्तिरिति वाच्यं भेरीदण्डसंयोगेन शब्दो जन्यते ।

पटरूपादिकमपि तन्तुसंयोगमन्तरा न संभवति, वृक्षस्पन्दे च वायुसंयोगो हेतुरिति तत्र तत्र संयोगमन्तरा शब्दाद्युत्पत्तेरसंभवेन पूर्वोक्तप्रत्यासत्त्यतिरिक्तस्य तार्किकाभिमतस्य गुणरूपस्य संयोगस्य स्वीकर्तव्यतया संयोगाश्रयस्यावयविनोऽतिरिक्तस्याङ्गीक्रियमाणत्वात् । अकमण्डलुश्छात्र इत्यादिप्रतिषेधस्य सप्रतियोगिकस्य संयोगसापेक्षतया तादृशसंयोगस्याङ्गीकर्तव्यत्वाच्च । किञ्च, गोत्वजातिमन्तरा गौरिति बुद्धिर्दुर्घटा गोत्वातिरिक्तस्य तद्व्यवस्थापकधर्मस्यानुपलम्भात् । उक्तञ्च—"गौर्न स्वरूपेण गौर्नाप्यगौर्गोत्वाभिसम्बन्धात्तु गौः" इति गोत्वजातेरवश्यमङ्गीकर्तव्यतया परमाणूनां प्रत्यक्षानर्हत्वाद् गोत्वाश्रयीभूतस्य कस्यचित् प्रत्यक्षार्हस्यावयविनः सत्ता स्वीकार्यैव । किञ्च, वृक्षत्वेनाभिमतपरमाणुपुञ्जस्य यत्र यत्र भागे इन्द्रियसन्निकृष्टे वृक्षत्वं गृहीतं भवति स स भागो वृक्ष इति वृक्षबहुत्वमेकस्मिन् वृक्षे स्यात्, तच्च सर्वथा व्यवहारविरुद्धमित्यकामेन सौगतेनोत्पन्नस्यावयविनोऽस्तित्वमङ्गीकरणीयमेव ।

## वैयाकरणमतालोचनम्

शाब्दिकशिरोमणिभिर्गुणसमूहो द्रव्यमिति प्रत्यपादि, तच्च सर्वथाऽसमीचीनमेवेति "वोतो गुणवचनात्" इति पाणिनिवचनविवृत्तिमनुसृत्य वक्तुं शक्यते । तत्र गुणपदार्थविवेचनावसरे

"अदेङ् गुणः" इति सूत्रोपस्थापितगुणा न ग्राह्या 'उतः' इति विशेषणाद् वचनग्रहणाच्च। न च विशेषणमात्रस्य गुणपदार्थत्वे न काचिद्धानिरिति वाच्यम्, इदमाखुर्द्रव्यमित्यादावतिव्याप्तेर्दुर्वारत्वात्। तथा च चतुष्टयी शब्दानां प्रवृत्तिरिति महाभाष्यकृत्प्रोद्घोषात् संज्ञाजातिक्रियावाचकेभ्यः शब्देभ्यो भिन्ना गुणवाचका ग्राह्याः। अत एव च सूत्रस्थगुणपदस्य आखुरित्यत्र प्रत्ययव्यावृत्तिफलं कौमुदीकृतोपन्यस्तम्। भाष्ये च—

सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥

सत्त्वं द्रव्यम्, सत्त्वे एव निविशत इति सावधारणं तेन द्रव्यगुणकर्मसु त्रिषु विद्यमानत्वात् सत्ताया व्यावृत्तिः।

नन्वेवमपि द्रव्यत्वस्य द्रव्य एव सत्त्वाद् द्रव्यत्वजातावतिव्याप्तिरिति चेन्न, अपैतीत्यस्योक्तत्वात्। अपैतीत्यस्य सत्त्वादेवापगच्छतीत्यर्थः, पीतत्वे जाते फलादेर्नीलत्वमपैति, न तथा द्रव्याद् द्रव्यत्वमपैति तस्य नित्यत्वात्। न चैवमपि घटत्वं घटे वर्तते पटादेश्चापैतीति घटत्वादावतिव्याप्तिरिति वाच्यम्, "पृथग्जातिषु दृश्यते" इत्यस्यापि लक्षणे निवेशात्। घटत्वं हि द्रव्यत्वावान्तरविविधजातिषु नानुभूयते गुणश्चानुभूयते। पयोमुचि दृष्टं नीलत्वं तृणादिष्वपि दृश्यते।

ननु द्रव्ये कर्म वर्तते ततोऽपैति पृथग्जातिषु च दृश्यते, तथा च कर्मण्यतिव्याप्तिरिति वाच्यम्, "आधेयश्चाक्रियाजश्च" इत्यादेरपि लक्षणे प्रविष्टत्वात्। तदर्थश्च "उत्पाद्योऽनुत्पाद्यश्च" उत्पाद्यो घटादेः पाकजो रूपादिः, अनुत्पाद्यो गगनादेर्महत्त्वादिः। कर्म तु निखिलमुत्पाद्यमेव न नित्यमिति तस्य द्वैविध्याभावाद् गुणत्वाभावः।

न चैवमप्यवयविद्रव्यमवयवद्रव्येषु निविशतेऽसमवायिकारणसंयोगनिवृत्तौ विनाशात्ततोऽपैति, भिन्नजातीयेषु च हस्तपादादिषु दृश्यते, निरवयवस्य परमाण्वादेर्नित्यत्वादवयविद्रव्यस्य घटादेरनित्यत्वाच्च तस्य द्वैविध्यमपि। तथा च द्रव्यस्य गुणत्वं प्रसज्यत इति वाच्यम्, "असत्त्वप्रकृतिः" इत्येतस्यापि लक्षणघटकत्वेनाङ्गीकारात्। अस्यार्थोऽद्रव्यस्वभावस्तथा च द्रव्यस्वभावादद्रव्ये नातिव्याप्तिः। गुणसमूहस्य द्रव्यत्वाङ्गीकारे तु सर्वं शङ्कासमाधानं सरीसृपश्रवणायितमेव स्यात्।

किञ्च, "व्यावृत्तिर्व्यवहारो वा लक्षणस्य द्वे प्रयोजने" इत्युक्तदिशा "सर्वनामपरामर्शयोग्यं द्रव्यम्", "लिङ्गसंख्याद्यन्वयि द्रव्यम्" इत्यादीनामपि द्रव्यलक्षणानां व्यवहारासम्पादकत्वाद्-

व्यावर्त्तकत्वात् "वोतो गुणवचनात्" इति सूत्रस्थगुणपदार्थालोचनात् "सत्त्वे निविशते" इत्यादि-भाष्यविरोधात् "स्त्रियाम्" इति सूत्रस्थगुणसमूहो द्रव्यमिति भाष्यविरोधाच्च नैरर्थक्यमेवेत्यलं शाब्दिकद्रव्यलक्षणनिरूपणेन। एवं सामान्यविशेषरूपगुणसमूहातिरिक्तो नावयवीति प्रतिज्ञापि तेषां विफलैव, गुणसमूहो द्रव्यमिति द्रव्यलक्षणस्यानुपपन्नत्वात् तदुपपत्तावपि परमाणूनामतीन्द्रियतया तदाश्रितगुणानामप्यतीन्द्रियत्वेन घटादीनामप्रत्यक्षत्वापत्तेर्दुर्वारत्वाच्च घटादीनां प्रत्यक्षत्वसाधकानि यान्युदाहरणानि शकटादीन्युपात्तानि तान्यपि न पेशलानि, तेषामपि प्रत्यक्षत्वस्य विचार्यमाणकोटावेव प्रविष्टत्वात्। अवयवातिरिक्तावयविसाधकानि यानि प्रमाणानि तार्किकैरुपस्थापितानि, तेषां विघटनस्याशक्यत्वाच्च गुणसमूहातिरिक्तो नावयवीति वैयाकरणानां विजृम्भणं गन्धर्वनगरोपममेव।

## सांख्यमतालोचनम्

पटो नार्थान्तरं तन्तुभ्योऽवयवेभ्य इति यत्सांख्यानामभिमतं तदप्यविचारितरमणीयमेव। तथा हि—एकत्र तैरुच्यते तन्तुषु पटः सूक्ष्मरूपेण कारणव्यापारात् प्रागप्यवतिष्ठते पुनश्चोच्यते नार्थान्तरं पट इति। तथा च भेदस्यैतस्यापलापः कर्तुं शक्यते केनापि किम्? मृत्पिण्डादतिरिक्तो घटो न चेत्तर्हि दधिमधूदकादीनां धारणं घटवद् मृत्पिण्डेऽपि संघटेत किम्? न च मृत्पिण्डाकारविशेष एव घटस्तदाऽयमाकारो मृत्पिण्डाद्भिन्नोऽभिन्नो वा? भिन्नश्चेत्तर्हि घटो भिन्नो मृत्पिण्डश्च भिन्न एव। न भिन्नश्चेत्तर्हि यानि कार्याण्यवयविनि घटे सम्पन्नानि तानि मृत्पिण्डेऽपि सम्पादनीयानि? किञ्च, पुष्करपलाशवन्निर्लेपत्वं पुरुषस्य साधयद्भिः कार्यस्य कारणानतिरिक्तत्वं च साधयद्भिरेभिः "पुत्रस्ते जातः", "कन्या ते गर्भिणी जाता" इत्यादौ सर्वसमर्थितयोर्हर्षप्रमादयोः सूपपन्नत्वं वक्तुं शक्येत किम्? पितृरूपत्वात् पुत्रस्य कन्यारूपत्वाद् गर्भस्य च कारणव्यापारात् प्रागप्यवस्थिततया हर्षप्रमादयोरेतन्मते दुर्घटत्वात्। कार्यभूतयोः पुण्यपापयोश्च कारणानतिरिक्तत्वाच्च। न च कार्यकारणयोरौपचारिको भेदो वक्तुं शक्यस्तथा सत्यपि "राहोः शिरः" इत्यादावौपचारिकभेदे सत्यपि विभिन्नकार्यकारित्वस्य तयोरभावात् कार्यकारणयोर्विभिन्नकार्यकारित्वस्यानुपपन्नत्वात्, संवित्पथारूढवन्ध्याबालकवत्। यत्रौपचारिकता आपतति तत्र कार्यस्य दुर्घटतैव घटते, न तु संघटता घटते, तटादावौपचारिके स्नानादिकर्मकलापवत्। किञ्च, कापिलनये कार्यकारणभावमूलकानि चतुर्विंशतितत्त्वानि भेदमन्तरा कथं संघटितानि स्युः? कथं वा तेषां विभिन्नकार्यकारित्वमुपपद्येत? अतः परमं सौहार्दं स्थापयद्भिः सांख्यैस्तार्किककुशलता नापनेतुं शक्या।

## जैनमतालोचनम्

आर्हतास्तु सप्तभङ्गिन्यायेनार्थानखिलानवस्थापयन्ति। सप्तभङ्गिन्यायस्वरूपं चेत्थम्—स्यादस्ति १, स्यान्नास्ति २, स्यादवक्तव्यः ३, स्यादस्ति च नास्ति च ४, स्यादस्ति चावक्तव्यश्च ५, स्यान्नास्ति चावक्तव्यश्च ६, स्यादस्ति च नास्ति चावक्तव्यश्चेति ७।

सत्त्वम् १ असत्त्वं २ सदसत्त्वं ३ सदसद्विलक्षणं ४ सत्त्वे सति तद्विलक्षणत्वम् ५ असत्त्वे

सति तद्विलक्षणत्वं ६ सदसत्त्वे सति तद्विलक्षणत्वम् ७ इति वादिभेदेन पदार्थविषयाः सप्त नियमाः सन्ति, तद्भङ्गार्थमयं न्यायः। तथा च तन्नयेऽवयवाः सन्ति न सन्ति च, पृथगवयविनः सन्ति न सन्ति चेत्यादिसप्तप्रकारा अत्रापि तैरुद्भावनीया भवेयुः, एवञ्चावयविनः सत्ता कस्मिंश्चित्पक्षे तैः स्वीकृतैव। अन्यथा सर्वस्मिन् पदार्थे तेषां सप्तप्रकाराः कथं समुल्लसिताः स्युः? किञ्च, स्वावयवेभ्योऽत्यन्तविभिन्नस्य पृथिव्याद्यवयविनः कस्माच्चित् प्रमाणात् सिद्धिरिति वदद्भिस्तैर्भेदस्तु स्वीकृत एव। केवलं भेदस्यात्यन्तिकत्वं विघट्यते तैः। तथा च नावयवा एवावयवीति सुस्पष्टं प्रतिभासते तत्र। किञ्चावयवा एवावयवी चेत्तर्हि परमाणूनामवयवानां नित्यत्वाद् घटस्य नित्यत्वं दुर्निवार्यं स्यात्।

ननु यद्यवयवानामप्यनित्यत्वमिष्टमेव तदा नोक्तदोषावसर इति चेन्न, एवं सति खण्डप्रलये तेषामपि विलये जाते खण्डप्रलयोत्तरसर्गानुपपत्तेः सामग्र्यभावात्। तदुपपत्तये परमाणूनां नित्यत्वं स्वीकरणीयम्, एवं सति फलादाववयविनि परिवर्तनं ह्रासं विकासं नाशं च पश्यद्भिः सर्वैरप्यनित्योऽवयव्यभिनव उत्पाद्यः स्वीकरणीय एव, यत्र सर्वे विकाराः सम्यक् संघटेरन्।

## उपसंहारः

अंशांशिनौ भिन्नौ भिन्नप्रतिभासत्वाद् दण्डदण्डिवत्। दण्डदण्डिनोर्नानाप्रतिभासत्वं भेदे सत्येव सम्प्रतिपन्नं भवति। न चांशांशिनोर्भिन्नप्रतिभासत्वस्यासिद्धिरिति वाच्यम्, घटाद्यंशिप्रतिभासस्य कपालाद्यंशप्रतिभासवैलक्षण्येन भेदप्रतिभासस्य सुप्रख्यातत्वात्। अंशांशिनोर्भेदो वारिहुतभुगिव विरुद्धधर्माध्यासात्। न चानयोर्विरुद्धधर्माध्यासत्वमनुपपन्नमिति वाच्यम्, पटत्वजातिसम्बन्धिनो विलक्षणार्थक्रियासम्पादकस्यातिशयमहत्त्वाक्रान्तस्य पटस्यानुभवपथारूढत्वेन तन्तुत्वजातिसम्बन्धिनामल्पपरिमाणादिधर्मोपेतानां तन्तूनामनुभवविषयत्वेन चानयोर्विरुद्धधर्माध्यासस्योपपन्नत्वात्। विभिन्नकर्तृकत्वाच्चानयोर्भेदः कुण्डलकर्पासवत्। प्रवेणी-रण्डाकरव्यापारात्तन्तव आत्मलाभं लभन्ते। तुरीतन्तुवेमशलाकातन्तुवायव्यापाराच्च पट आत्मलाभं लभते। विभिन्नशक्तिकत्वादनयोर्भेदो विषौषधिवत् प्रागुत्तरकालभावित्वात्पितापुत्रवद् विभिन्नपरिमाणाच्च बदराम्रवत्। विरुद्धधर्माध्यासादौ प्रतिभासभेदे च सत्यपि तयोरंशांशिनोरभेदे पदार्थसाङ्कर्यसत्त्वात् सर्वत्र भेदव्यवहारोच्छेदप्रसङ्गः। भेदव्यवहारोपपत्तये भेदोऽङ्गीकरणीय एव। अंशांशिनोस्तादात्म्याभ्युपगमे प्रतिभासभेदादिकं सर्वं सुदुर्लभं स्यात्। तादात्म्यं चैकत्वम्। एकत्वे सति प्रतिभासभेदो विरुद्धधर्माध्यासादिकं वा कथमपि न स्यात्तयोर्विभिन्नविषयकत्वात्।

किञ्च, कपालाद्यवयवेभ्यो घटाद्यवयवी न भिन्नश्चेत्तर्हि कपालादयोऽपि स्वावयवेभ्यो न भिन्नास्तेऽपि स्वावयवेभ्य इत्येवं क्रमेण निरंशपरमाणुभ्यो न भिन्नः कश्चनेति निखिलस्य कार्यकूटस्य कार्यकारित्वेनानुपलब्धिरेव प्रसक्ता स्यात्। तस्मादवयवी नूतनोऽभिनिष्पाद्यः सिद्ध इति सर्वैः सुहृद्भिर्भूत्वाऽवयवातिरिक्तावयविनोऽस्तित्वमस्त्येवेति तार्किकमतमेवानुमोदनीयं विचारचातुरीं सुमनोहरां मधुरां विचित्रविघ्नविघटकप्रकृष्टपद्धतिपरम्परां चाकलय्य तेषामिति शम्॥

***

# दर्शनपरिषदो विवरणम्

माननीया दार्शनिकप्रवराः सभापतिमहाभागाः, विद्यागोत्राणि विद्वांसः, कल्याणमित्राणि मित्राणि, प्रेयांसश्छात्राः !

अस्यां विद्यातपोभ्यां काशमानायां काश्यां वाराणसेयसंस्कृतविश्वविद्यालयस्य प्रज्ञाप्रतिष्ठायामस्यां महाशालायां विद्वद्भूयिष्ठाया अस्या दर्शनपरिषदो महिमा प्रज्ञानेतॄणां श्रीमतां विदुषां समवायेन विराजते । अनया परिषदा स सत्यधर्मो विजयताम्, योऽस्माकं पारेद्दश्वनां महर्षीणामाचार्याणां तपसश्च यः जीवतो रिक्थम् । अभयं तितीर्षतामाचार्याणामिदं धर्मक्षेत्रं भारतराष्ट्रम्, देवाधिदेवैरपि वन्दितोऽयं देवतात्मा हिमालयो विजयतेतराम्, स्तुतो यो विष्णुपुराणे महर्षिणा व्यासेन—

गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे ।

स्वर्गापवर्गास्पदहेतुभूते भवन्ति भूयः पुरुषाः सुरत्वात् ।। इत्यादिभिः ।

को न जानाति, यथा नद्यः स्यन्दमानाः समुद्रमापूरयन्ति, तथा श्रेयोवहैः सर्वैरेव विविधैर्भारतीयधर्मैरेकैवाचलप्रतिष्ठा संस्कृतिरापूर्यते । तत्रास्त्यस्माकं शाश्वतं समाराधनवचनम्—"सर्वदेवनमस्कारः केशवं प्रति गच्छति" इति । अपि च, आर्याणां जीवनयज्ञस्य तृतीये सवने नामरूपे विधूय प्रज्ञानघने स्वे महिम्नि प्रतिष्ठिताः सकला अप्येकमेव भूमानममृतत्वं च भजन्ते, अतो हार्दीयमत्रोपनिषद् भवति—"यो वै भूमा तदमृतम्, यदल्पं तन्मर्त्यम्" इति । आर्याणामयमेव परम्पराप्राप्तः सुमहान् धर्मस्कन्धः । अयञ्च धर्मस्कन्धो दर्शनशास्त्राणां प्रज्ञाप्रकर्षभूमौ समुद्गतः, तत्रैव च प्रतितिष्ठति । दर्शनानामिदं शासनम्, पुरा वाधुना वा श्रोत्रियैर्वा श्रमणैर्वा, स्वश्रवणमननसमेधमानयैव प्रज्ञपरिषदा सनातनीकृतम्, तपसा ब्रह्मचर्येण च सनाथीकृतम् । तस्यामेव प्रवहमानपरम्परायामद्याप्यग्रेऽपि कृपावतां विदुषां प्रज्ञाप्रसादवेगेनेयं परिषद् निरन्तरं प्रवर्ततामित्येष संस्कृतविश्वविद्यालयस्य मनोरथः ।

चिदचितोर्भोगमोक्षयोर्व्यवहारपरमार्थयोश्चाविरोधभूमिर्दर्शनशास्त्रमिति कृत्वेयं परिषदध्यात्मप्रधानदर्शनानां शोधं समीक्षां च यथोपबृंहयति, तथैव सामाजिकजीवनस्य आधारभूतानां दार्शनिकतत्त्वानामाकलनं तदुन्नयनं चापि समीहते । यद्यपि नाद्यावधि तत्र साफल्ययोगस्तथाप्ये-

तावताभिक्रमेणास्मिन् विघ्नस्थौल्यं तनूभवत्येव। नाविदितं विदुषां यत् प्रज्ञातपसोः क्षयवशाद्-तीतास्वनेकासु शताब्दीषु समालोचनप्रतिभाविरलत्वमनुप्राप्ता, अद्यत्वे पुनः सोज्जीवयितव्या। एतदालक्ष्यैव तदभिमुखीं स्मृतिं सुप्रसन्नां सुगमां च विधातुं पूर्ववदस्मिन्नपि हायने निदर्शनमात्रमेका निबन्धनामावली प्रकाश्य विदुषां सविधे प्रेषिता। एतां द्वयीं निबन्धनामावलीमनुरुध्य अद्य यावच्छतशो निबन्धाः कृपालुभिर्विद्वद्भिर्निबद्धाः प्रेषिताश्च। समेषां चैतन्निबन्धानां प्रकाशनमपि सारस्वतीसुषमाभिधानायां विश्वविद्यालयीयशोधपत्रिकायां सुसम्पन्नम्। एतेषां निबन्धानां विषया नैकविधाः, न चापि सामान्येन सुपरिचिताः। तत्र च शैव-शाक्ताद्यागमाः, रामानुज-निम्बार्क-मध्व-वल्लभ-गौडीयादिवैष्णवदर्शनानि, बौद्धन्याय-विज्ञानवाद-शून्यवादादिदर्शनानि, जैनन्यायो जैनानां च आर्हतं दर्शनम्, विविधाः प्रमाणचर्चाः, प्रामाण्यवादाश्च; वेदान्तेषु आभासवादः, अवच्छेदवादः, प्रतिबिम्बवादः, दृष्टिसृष्टिवादः, न्याये अपूर्वादृष्टवादौ परमाणु-अवयवि-समवाय-व्याप्ति-पाक-मनो-निरूपणानि, ज्ञानसाकारत्वनिराकारत्वे, नवीनदर्शनेषु मार्क्सवादः, गतिशास्त्रम्, पदार्थविज्ञानम्, समाजनिर्वाणयोः सम्बन्धः, नाथयोगदर्शनमित्यादिविषया निबन्धानां निदर्शनभूताः सन्ति।

प्रायः सर्वेष्वपि निबन्धेषु न्यूना वा अधिका वा समालोचनप्रणाली विकासमनुप्राप्ता। तेषु विद्वद्धौरेयाणामेवंविधा अपि निबन्धाः सन्त्येव, येषां माहात्म्यमवधाय तत्तद्विषयकाः सुविज्ञा अपि तद्विषये स्वज्ञानमितत्वमनुभविष्यन्ति। नाविदितं यद् विभिन्नविद्याप्रस्थानानि देशस्य विभिन्नेषु प्रदेशेषु सम्प्रदायेषु च समुद्भूतानि, तत्र तत्र च प्रसृतानि। अतः स्वभावत एवैतेषां निबन्धानां निबन्धारो न केवलमेकस्य द्वयोस्त्रयाणां वा भूभागानां भवन्ति, अपि तु द्रविण-कर्णाटक-केरल-आन्ध्र-सौवीर-सौराष्ट्र-महाराष्ट्र-कान्यकुब्ज-मध्यप्रदेश-मिथिला-अङ्ग-वङ्ग-कलिङ्गादिसर्वक्षेत्राणां च शैव-शाक्त-वैष्णव-बौद्ध-जैनादिविविधविद्यासम्प्रदायानां च भवन्ति। एतत्सकलमपि विद्या-सौभाग्यं सुविशालाया भारतीयसंस्कृतेः, विशालतमस्य च संस्कृतवाङ्मयस्य लेशमात्रम्। एतदपूर्व-वैभवलेशमावहन्त्या अस्याः परिषदः स्वरूपं गौरवं चानुदिनं वर्धते।

बलं संचित्य संचित्य शनैः शनैरेव विकासाय निर्बाधं पदक्रमो योजनीय इति मत्वा विगताधिवेशने समापादिता वेदान्त-बौद्ध- आगम-न्यायवैशेषिकविषयाणां चतस्रः परिषदोऽतिक्रम्य वर्तमानेऽधिवेशनेऽधिसंख्यं षट् परिषदो विधीयन्ते। मीमांसाविषयसंयोजनमपि शैव-शाक्त-वैष्णव-बौद्धादिधार्मिकसम्प्रदायानुरूपं पृथक् पृथग् नैव कृत्वा, शाङ्करवेदान्तस्थानेऽद्वैतदर्शन-मिति विधाय तत्रैकस्मिन्नेव सर्वेषां शैव-शाक्त-बौद्ध-शाङ्कर-शाब्दिकानामद्वैतवादानां संग्रहो विहितः,

तद्वदेव न्यायदर्शनविभागे सर्वानेव बाह्यवस्तुवादिनः काणाद-गौतम-वैभाषिक-सौत्रान्तिक-जैनादीन् समुच्चित्य संग्रहः कृतः। वस्तुतः पुरा विविधवादिनां परस्परं वादप्रतिवादाभ्यां विरोधस्वीकाराभ्यामेव च द्वैताद्वैतादितत्त्वज्ञानं विविधं च न्यायशास्त्रं संव्यकसत्, तस्मात् स एव ज्ञानविकासक्रमोऽद्यापि तत्त्वं समीक्षितुं परस्परं तुलनां च संविधातुं समर्थः स्वाभाविकश्च। अत एव स क्रमः क्रमशः पुनरावर्तनीयः। जानन्त्येव भवन्तो यत् तत्त्वज्ञानस्यायं विभागक्रमो न केवलं भारतीयदर्शनान्येवाधिकरोति, न वान्यत् प्राच्यम्, अपि तु सकलं पाश्चात्त्यतत्त्वज्ञानमपि शरीरीकरोति। अस्त्यस्याः परिषदोऽस्यां दिशि प्रसारक्रमः। एतत्प्रसङ्गेनास्याः परिषदः संस्थापकानां दार्शनिकप्रवराणां महामहिम-डा०-सम्पूर्णानन्दमहाभागानां निर्देशः सर्वथा संभावनीयः, यो हि तैरस्यैवाधिवेशनस्य निबन्धनामावलिं परिषदां विभागक्रमं चावलोक्य स्वपत्रेण समुद्भावितः—

"जिन विषयों पर विचारविमर्श होने वाला है, उनमें एक है—प्राच्यप्रतीच्यदर्शनसमीक्षा। इस विचार विनिमय का बड़ा महत्व है, जो इसी बात से स्पष्ट है कि आपने उसके लिए एक विशेष परिषद् रखना आवश्यक समझा है।·· ·····मेरी धारणा है कि न तो प्राच्यदर्शन नाम की कोई वस्तु है, न प्रतीच्य-दर्शन नाम की, न भारत या अन्य पूर्वी देशों में जन्म लेनेवाले सब दार्शनिकों का कोई एक मत है और न पश्चिम के देशों में जन्म लेनेवालों का। ईश्वरवादी अनीश्वरवादी, जड़वादी, अद्वैतवादी, विशिष्टाद्वैतवादी, द्वैतवादी, शून्यवादी आदि हर प्रकार के दार्शनिक विचारक दोनों ओर हुए हैं। यदि कुछ विषय ले लिए जाते और उनके सम्बन्ध में विभिन्न दार्शनिकों के मतों को एक जगह लाकर उसकी समीक्षा होती तो स्यात् अधिक उपयोगी होता।"

प्रतिनिधिसंघटनं नामान्यदपि वैशिष्ट्यमस्त्यस्याधिवेशनस्य। अद्य यावद् विगताधिवेशनेषु निबन्धारो विद्वांस एव समवेता अभूवन्, इदानीं पुनः परिषदो विकासाभिवृद्धिदृष्ट्या प्रतिनिधिसंघटनमप्यधिक्रियते। अस्ति च विद्याविकासे विदुषां समवायस्य विविधः सुमहांश्चोपयोगः, स च समागतप्रतिनिधिविद्वद्भ्यः क्रमशः सफलो जायते। यद्यपीदानीन्तनसंकटोपद्रववेगवशादिदं संघटनं यथाविधि न सम्पन्नम्, तथापि श्रेयसे स्वल्पारम्भं साधीयांसं मन्यामहे। अग्रे चाशास्महे चैतत्परिषन्मनोरथं संप्रपूरयितुं विद्वद्धौरेयाः कृपां विधास्यन्तीति।

प्रज्ञाप्रतिष्ठानां विदुषां हिताशंसयाऽनुदिनं संस्कारमेष्यन्ती परिषदियं विपुलकलेवरा स्यात्तथाऽस्माभिर्दर्शनानामन्तःसारभूतं तदध्यात्मं मानसं महः सततं ध्यानेन विभावनीयम्,

तपःपूतया प्रज्ञया परीक्षणीयम्, येन सर्वः प्राकृतोऽप्राकृतो लोकव्यवहारः प्रकृष्टं चेदं मानुष्यं विधृतं तिष्ठति। क्षणेनाक्षणेन वा सर्वो लोको यथा परिणाममनुभवति, तथानुदिनं प्रवर्धमानं जीवजगतोर्व्यक्तिगतं समाजगतञ्च नानात्वं वैषम्यं चाप्याकलयति। एताभ्यां नवनवाभ्यां वैषम्य-परिवर्तनाभ्यां धर्मनीतिव्यवहारेषु, राज्यसमाजविश्वसंधारणादिविधिषु नवं नवं सप्रमादं वैधर्म्यं सततमुज्जिजीविषति। एवं महामोहसम्मर्दे शममाहात्म्यमुत्तरोत्तरं क्षीयते, तत्र चास्माकमेवायं विजयोऽस्माकमेवायं महिमेति दौर्हृद्यं वर्धते। अस्त्यस्य अकुशलमहासंप्लवस्य स्रोतः जनानां मानसविप्लवः, येन लोकेषु सम्पन्नेषु विपन्नेषूपेक्षितेषु वा परोपद्रवकारिता, प्रवृत्तिलाम्पट्यम्, संकल्पोपासनम्, अतृप्तिः, भीतिश्च निरन्तरमनुवर्धन्ते। अकुशलानामेतेषां दारुणवेगं विमृश्या-भियुक्ता एवमपि संभावयन्ति यत्कदाचिद् भाविन्यनेहसि मानुष्यस्य मूर्धैव विपतेदिति। नूनमस्ति मनुष्याणां हृद्गुहाहिता भीषणा अविद्याग्रन्थिः, ययैषा महती विनष्टिः संभाविता। आत्मवञ्चनया मोहेन चैतज्जगदन्धं मा भूदित्येतद् दर्शनानां प्रमुखं प्रयोजनम्। एतत्प्रयोजनसिद्धयै दार्शनिकैः साम्प्रतिकजीवलोकस्य सर्वैः संकल्पविकल्पैः सर्वाभिर्जिज्ञासाभिराकाङ्क्षाभिश्च सुपरिचितैः भाव्यम्, तत्समाधातुमिदानीन्तनसमुद्भावितैरुपायैश्चापि सम्यगधिगतैः भाव्यम्, येन तैरधिमानसमधि-समाजं किमप्युपेयभूतमुपायभूतं च सत्यं पुरः स्थापनीयं स्यात्। नाविदितं विदुषां यत् प्रज्ञा च कृपा च सर्वान् धर्मानाचारांश्च अभिभवति। प्रज्ञानेतृक एव मानवलोकः। अतोऽस्माभि-रुपद्रवाणां प्रचलितो नवनवो हेतुर्ज्ञातव्यः, तत्प्रशमाय च नवनवोपायः सततं गवेषणीयः। तत्प्रसङ्गे मनसः संग्रन्थनविधिः पुनः पुनरपि परीक्षणीयः, दृढेन च प्रज्ञाशस्त्रेण अकुशलग्रन्थीं-श्छित्वा, कृपया च सत्त्वप्रसादवेगैश्च मानवमनो वासनीयम्, पुण्यैः तेषां स्वान्तं प्रपूरणीयम्। एतदर्थ-मिदानीन्तनमानवस्य सकलोऽपि समो विषमो वा विचारो भारतीयदार्शनिकैः समालोचनाय विवेक्तुं च संग्राह्यः। एतत्सर्वमुद्दिश्यैव प्राच्यपाश्चात्यदर्शनसमीक्षाऽपि परिषदोऽङ्गत्वेन स्वीकृता। प्राच्येष्वपि भारतीयान्यभारतीयानि विविधान्यवान्तरदर्शनानि भाविनि प्रसङ्गे परिषदाऽधि-करिष्यते।

अन्यदेशस्य दार्शनिकानामिवास्माकमपि भारतीयानां पुरतोऽनिमन्त्रितो निमन्त्रितो वा अतृप्ताशयः सोपद्रवः सप्रमादो मानवलोकस्तिष्ठति, यत्र प्रज्ञाशूरमानिनो वयमपि प्राधान्ये-नाङ्गीभूताः स्मः। अतोऽस्माभिरपि क्षणं ते वयं च विचारणीयाः।

अस्त्यस्माकं भारतीयानां शाश्वत इव सनातन इव सहस्रेभ्यो वर्षेभ्यः प्रवहमानो जीवन-विधिः, यो विविधैर्धर्मैर्विविधाभिर्देशविदेशजातिभिरुपष्टब्धः, अनेकैः संस्कारैर्विचारैश्च समुप-

वृंहितः । अत्रत्यानां सर्वेषामेव धर्माणां विचाराणां च साक्षात्परम्परया वा शाश्वतसत्यानामार्यसत्य-भूतानां साक्षात्कार एव तात्पर्यम् । आसीत् पुराकालत एवास्माकमभिलाषः "तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये" इत्यादिभिर्वाचा मनसा चाध्यप्राप्यं किमपि सत्यस्य सत्यं गवेषणीयमिति, श्रद्धामहे चेदानीमपि "सत्यमेव जयते नानृतम्" इति । एवं क्रमेण पराग्दर्शिमानवलोके वयमेव धीराः प्रत्यक्तत्त्वदर्शिन इत्यस्माकं जातं हार्दम् । भवतु तत्, पुरा इवेदानीमपि सत्यस्वरूपविषये नवेन प्रकारेण बहुजिज्ञास्यं मीमांस्यं च भवति, प्रस्तुताः कतिपयप्रश्ना एव कालप्रसूतास्तेष्विदानी-मवधेयाः ।

यद्येकमेव सत्, ततो वयं बहुधा जातास्तदा भारतीयानां सामाजिकजीवनमभेददृष्ट्यैक्यं कथं नावगाहते ? अस्ति चेदात्मौपम्यम्, कथं तर्हि परस्परं समत्वम्, तुल्याशयत्वं च न जागर्ति ? यदि संसारे वयमेव प्रकृष्टाः शूराः, वयमेव प्राज्ञास्तदा कथमन्यैर्दासीक्रियामहे, भृशं चापमन्यामहे, पदे पदे च जीवनमस्माकमन्येषां वशमापद्यते, अथवा शुभं सदा दुर्बलमेव भवति, सुघोरं च पापं बलवत् ? नास्ति चेत् शुभं दुर्बलम्, कथं न तद् विजयेनाविनाभूतम् ? यदि शुभं विजयवशात् सत्यं भवति, तर्हि विजयः सत्यसाधकैः कथमासव्यः ? स च कथं बलहीनेन लभ्यः ? सुखदुःखे लाभालाभौ जयाजयौ च समौ कृत्वा कथं विजय आलिङ्गनीयः । कथं च "अक्रोधेन जयेत् क्रोधमसाधुं साधुना जयेत्" एतादृशाः प्रश्ना अनेकशताब्दीतो भारतीयदार्शनिकानां पुरतः समाधानाय लोकानां प्रवर्तन्ते । इदानीं त्वनिमन्त्रित एव स दारुणो युगः समुपस्थितो यद्वशात् पराऽपरा वा विद्या, नष्टो नवीनो वा योग आविष्करणीयः प्रयोक्तव्यश्च; येन दैन्यदारिद्र्यश्रान्तस्य दुर्बलस्य भारतलोकस्य अध्यात्माविनाभूतोऽधिदैवोऽधि-भूतश्च पुरुषार्थो निर्बाधः सिद्ध्येत् । अवश्यमेवास्मिन् विषयेऽस्माकं प्रज्ञाप्रमादेन लोकस्तलेनापि तलं गमिष्यति ।

नासदीयादिश्रुतिभिरिदमपावृतमेव भवति यद् मानवशिष्टतायाः समुदयकालादेव भारतीय-ज्ञानगगने सत्यस्य सवितुर्ध्यानं समन्वारभ्यत । ततः प्रभृत्येव देवैरपि विचिकित्सितस्य परमे व्योम्न्यपि प्रतिष्ठितस्य सत्यस्य तपोनिष्ठैर्धीरैर्मानवैरनिशं सन्धानमक्रियत । अतो नूनमेव भारतीयैरेव, अस्यामेव च शुचिप्रतिमायामार्यभूमौ कदाचित् सत्यधर्मः सम्यग् आचितः स्यादिति विश्वासो जनानाम्, किन्तु न जाने कदाऽस्यां सन्धानतपःपरम्परायामन्तर्दारुणो मारः संवृत्तः, येनातिदीर्घा अन्धे तमसि मोहरात्रिः समापादिता, यत्र च हार्दी गुहाग्रन्थिर्नितरामपि सप्रमादं

निबद्धा। एतस्य ग्रन्थेरविकिरणे निदानं गाहमानैरस्माभिः समुदायवृत्तेरभावोऽन्यायप्रतीकारवृत्तेरभावश्चावधारणीयः।

समुदायवृत्तेरभावे मनुष्योनितरां स्वनिष्ठः स्वश्रद्धश्च भवति। एवंभूतो व्यक्तिश्रद्धो जनोऽमितं जगद्दारिद्र्यममितां जगदार्तिं चाप्यनवधाय स्वार्थमेव सर्वं व्यावहारिकं पारमार्थिकम् ऐहिकमामुष्मिकं च चेष्टते। एवं समुदायवृत्त्यभाववशादेव लोके सहानुभवो ह्रसति, अन्यायश्चाप्रतिहतो जीवति, वर्धते विजयते च। एतेन च सामूहिकी कर्तव्यनिष्ठा विलीयते, तदनु सर्वेऽपि लोकरञ्जका नीतिधर्मा एकैकशो दुर्बलायन्ते। एवमनुदिनमप्रतीकारभावः, भीरुता, कार्पण्यम्, पलायनं चाभिवर्धन्ते। समुदायवृत्त्यभावे सहजं स्वार्थमपहाय कथं जना लोकानां कल्याणायाप्रमेयं पुण्यमर्जयेयुः, पापनाशाय च सम्भूय समुत्थिताः स्युः? कल्याणमित्राणां सम्भूय समुत्थानमेव सर्वेषां कल्याणाय दुष्कृतां विनाशाय च समर्थम्। समुदायवृत्तिकः करुणाशयो लोकः सम्भूय समुत्थायैव लोकबाधां विरुणद्धि, मोक्षमपि रसहीनं मत्वा यावज्जीवनं लोकानामसम्भेदाय नीतिधर्माणां विजयाय चेष्टते। समुदायवृत्तेरुद्बोधे न्यायप्रतीकारे च भारतीयदर्शनानि नैव सम्यक् समर्थानीति इदानीन्तनानामभियुक्तानामप्यस्ति कश्चिद् गूढाशयः। स चाशयोऽस्माभिर्लोकहिताशंसया तत्त्वबुभुत्सया च सम्यक् परीक्षणीयः। दर्शनेषु नवीनेन पुरातनेन वा प्रकारेणासौ समुदायधर्मः पुनरपि समालोचनीयः।

एतत्सर्वमालोच्य दर्शनपरिषदा प्राचीनप्रस्थानामिव व्यवहारदर्शनानां प्रयोगप्रधानदर्शनानामपि विषया अङ्गीकरिष्यन्ते, यैरस्माकं सांस्कृतिकं सामाजिकं च जीवनं विधृतं भवति।

इदमधिवेशनम्, तत्र च भाविन्यः षट् परिषदः, तत्र षष्टितोऽप्यधिकनिबन्धानां पाठः, यात्रादिमहाक्लेशं सोढ्वाऽप्यनेकानेकप्रदेशेभ्यः समागत्य विदुषां सारस्वतसाधनायां योगलाभो महते प्रोत्साहनाय सौभाग्याय च कल्पन्ते।

नूनमेव प्रवर्धमानकृपावलम्बेन विद्वद्भूयिष्ठेयं परिषद् जगतः कल्याणाय, मानुष्यस्य समाराधनाय भवेदिति शम्॥

***:०:***

रजिस्टर्ड न्यूज पेपर्स एक्ट के नियम के अन्तर्गत

## विज्ञप्ति

| | |
|---|---|
| १. प्रकाशन का नाम | सारस्वती सुषमा |
| २. प्रकाशन की तिथि | त्रैमासिक |
| ३. मुद्रक का नाम | श्री बलदेवदास |
| राष्ट्रियता | भारतीय |
| पता | संसार प्रेस, संसार लिमिटेड, काशीपुरा, वाराणसी। |
| ४. प्रकाशक का नाम | श्रीक्षेत्रेशचन्द्रचट्टोपाध्याय |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी। |
| ५. सम्पादक का नाम | श्रीक्षेत्रेशचन्द्रचट्टोपाध्याय |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी। |
| ६. स्वामित्व | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी। |

मैं श्रीक्षेत्रेशचन्द्रचट्टोपाध्याय घोषित करता हूँ कि उपरि लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

श्रीक्षेत्रेशचन्द्रचट्टोपाध्याय
हस्ताक्षर

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसारा त्रैमासिकी संस्कृतपत्रिका ।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठभाद्रपदमार्गशीर्षफाल्गुनपूर्णिमासु भवति ।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति ।

४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्य विदुषां मौलिकविचारपूर्णा अनुसंधानप्रधाना निबन्धाः प्रकाश्यन्ते ।

५. लेखकेन प्रकाशितस्य निबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः ।

६. अस्य वार्षिकं मूल्यं सप्त रूप्यकाणि, प्रत्यङ्कं च रूप्यकद्वयं वर्तते ।

७. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी–२" इति संकेतेन विधेयः ।

---

प्रकाशक—श्री क्षेत्रेशचन्द्रचट्टोपाध्याय, संचालक—अनुसंधान संस्थान, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी ।

मुद्रक—श्री बलदेवदास, संसार प्रेस, संसार लिमिटेड, वाराणसी ।